# Sanskrit Studies in the East

**(Volume - I)**

**Editor**

**Dr. Subhrajit Sen**

Assistant Professor, Department of Sanskrit,
University of Gour Banga,
Malda, 732103
West Bengal



**SANSKRIT PUSTAK BHANDAR**

**38, Bidhan Sarani, Kolkata – 700 006**

This book is dedicated to my little love

daughter

***Shourishree***



भारतीय दार्शनिक अनुसंधान परिषद्

(शिक्षा मंत्रालय, भारत सरकार)

INDIAN COUNCIL OF PHILOPHICAL RESEARCH

(Ministry of Education, Government of India)




# शुभकामनासन्देशः

महदिदं प्रमोदस्थानं यच्छ्रीमान् डा. शुभ्रजित्सेनः विश्रुतयशस्कानां सुप्रसिद्धानां विदुषां प्रायशः ग्रन्थस्य प्रथमं भागं प्रकाशयति। कोलकातास्थ-संस्कृतपुस्तकभाण्डारतः प्रकाश्यमानोऽयं ग्रन्थः शोधार्थिनां विदुषाञ्च कृते सर्वथा सङ्ग्रहणीयो भविष्यतीत्यत्र नास्ति मे संशीतिलेशोऽपि। अस्मिन् सङ्ग्रहे विविधानां तादृशानां विदुषां परिचयो लप्स्यते येषां केषाञ्चिदेव ग्रन्थानां परिचयो विद्यते लोकानां सामान्यतः। केचन तु विद्वांसः प्रायशो विस्मृता एव विद्यन्ते। नूनमनेन ग्रन्थेन तेषामपि योगदानं विदुषां नवगवेषकाणाञ्च दृष्टिपथमागमिष्यति।

अत्र च ग्रन्थे प्रामुख्येन ऊनविशतिशताब्द्यां विंशतिशताब्द्याश्च पूर्वार्धे ये विद्वांसो जनिमलभन्त तेषां विषये लेखाः सन्ति सङ्कलिताः। विशेषतो ये नामोल्लेखमर्हन्ति तेषु तारानाथतर्कवाचस्पतिः ग्रन्थेऽस्मिन् सङ्कलितेषु प्रथमो विद्यते। ईश्वरचन्द्रविद्यासागरस्य सारल्यविषये तु बहव्यो घटनाः श्रूयन्ते परन्तु तेषां पाण्डित्यमधिकृत्य तथा न श्रूयते। तर्कसाहित्यव्याकरणादिकं विषयमधिकृत्य तस्यावदानविषयेऽस्मिन् ग्रन्थे विवेचनं दृश्यते। तारानाथतर्कवाचस्पतित आरभ्य, ईश्वरचन्द्रविद्यासागर-बापूदेवशास्त्रि-दयानन्दसरस्वती-ईश्वरकौल-रामगोपालभण्डारकर-सत्यव्रतसामश्रमी-आनन्दरामवरुया-सुधाकरद्विवेदी-वामनशिवरामआप्टे-अम्बिकादत्त-व्यास-गणपतिशास्त्रि-स्वामिविवेकानन्द-मधुसूदनओझा-पञ्चाननतर्करत्नभट्टाचार्य-महर्ष्यरविन्दघोष-हरिदाससिद्धान्तवागीश-चिमनभाईदयाभाईदलाल-पण्डितक्षमाराव-कालीपदतर्काचार्य-क्षितीशचन्द्रचट्टोपाध्याय-यतिराजाचार्य-अनन्तनारायणत्रिपाठि-पी.के.नारायणपिल्लई-अनन्तलालठक्कुर-वसन्तत्र्यम्बकसेवडे-दुर्गादत्तशास्त्रि-रामप्रसादत्रिपाठि-के.राघवन्-तिरुमलपाड-के.कुञ्जुन्नीराजा-एस.ए.डांगे-चारुदेवशास्त्रि

रमारञ्जनमुखोपाध्याय-सत्यव्रतशास्त्रि-मुकुन्दमाधवशर्म-कृष्णचन्द्राचार्य-वीरभद्र रेवाप्रसादद्विवेदि-पी.वी.काणे-वाचस्पत्युपाध्याय-भट्टमथुरानाथशास्त्रि-हरिरामाचार्य-शुकदेवशास्त्रि-रङ्गनाथशर्म-ताताचार्य-पट्टाभिरामशास्त्रिप्रभृत्याचार्याणां वैदुष्यकृतित्वविषये परिचयं ददती कृतिरियं नूनं विदुषां प्रमोदाय शोधार्थिनामुपकाराय च भविष्यतीति मे विश्वासः। ग्रन्थेऽस्मिन् विख्यातकीर्तयो राधावल्लभत्रिपाठि-रमाकान्तपाण्डेय-सरोजकौशलसदृशाः कश्मीरत आरभ्य सुदूरदक्षिणभारतादपि लेखका सन्तीति ग्रन्थस्य नूनं वर्धितं भवति।

केचन तु स्वल्पां प्रसिद्धिं गता अपि विद्वांसः सङ्कलिताः सन्ति। केषाञ्चन विदुषां कृतिभिस्तु वयं परिचिताः परन्तु न तेषां विषयेऽधिकं जानीमः। यथा वाचस्पत्याभिधानस्य ग्रन्थस्य प्रणेतुः तारानाथतर्कवाचस्पतेः विषये नाधिकं वयं जानीमः, परन्तु तस्य ग्रन्थं वाचस्पत्याभिधं सर्वथा पश्यामः। तथैव च विद्यन्ते तादृशा अन्येऽप्यनेके विद्वांसो येषां विषये सामान्यतो लोकानां परिज्ञानं स्वल्पमेव विद्यते। अत्र च ग्रन्थे विदुषामेतादृशानां विषये विशिष्टानां विदुषां विद्यन्त आलेखाः। तथा चानेन लोका विद्वद्भिः सुपरिचिता अपि भविष्यन्ति। अहमस्य ग्रन्थस्य सम्पादकान् शुभ्रजित्सेनमहोदयान् स्वकीयया शुभाशंसया युनज्मि, प्रार्थये च भगवन्तं विश्वनाथं यत् त एवमेवाग्रेऽपि ग्रन्थैर्देववाण्याः सेवां कुर्वन्त्विति।

विदुषां वशंवदः

सच्चिदानन्दमिश्रः
सदस्यसचिवः
भारतीयदार्शनिकानुसन्धानपरिषत्, नवदेहली




**राष्ट्रियसंस्कृतविश्वविद्यालयः,तिरुपतिः**

National Sanskrit University, Tirupati

(A Central University established by an Acy of Parlament)

**Mahamahopadhaya Prof. G.S.R Krishna Murty**

Dean, Academic Affairs

Dean School of Sahitya and Samskruti Studies

Director of CDOE, Ex Academic Coordinator

Ex Finance officer, Ex Registrar(i/c)

National Sanskrit University, Tirupati

Ex Registrar, Sri Venktswara Vedic University, Tirupati

**Email: gsrk.murty@gmail.com Mobile No: 9475243372**


## मुखकथनम्

विदितचरमेव विपश्चितामिदं सुभाषितम्

अमन्त्रमरक्षं नास्ति नास्ति मूलमनौषधम्।
अयोग्यः पुरुषो नास्ति योजकस्तत्रदुर्लभः॥ इति

वाचस्पतिसहस्राणां सहस्रैरपि यत्नतः निबद्धाऽपि क्षयं नयति प्रकृतिः जगतामेव इति आनन्दवर्धनकथनं सर्वथा सर्वदा सर्वतः अन्वर्थमेव। वाङ्गमयस्य द्वैविध्ये शास्त्रे कविकर्मणि च अनेके लेखकाः शास्त्रेषु पारङ्गताः काव्येषु रससिद्धाः कवयः आवाल्मीकि साम्प्रतिककविसमवायम् आव्यासदेव साम्प्रतिकशास्त्रकारं स्वकीयं रचनाकौशलं शास्त्रपाण्डितीं च विस्तारयाञ्चक्रुः विस्तारयन्ति विस्तारयिष्यन्ति च।

संस्कृतवाङ्गमयेतिहासविषये समग्रतया समसामयिकानां लेखकानाम् इतिहाससमुत्टङ्कणं तेषां जीवनपरिचयावगमने महान्तं साहाय्यमाचरति। तत्र अवधानं देयम्। परं प्राचीनलेखकानां प्रायः शतकत्रयात् पूर्ववर्तिनां लेखकानां यावत् इतिहासो नोपलभ्यते। पाश्चात्यानाम् अनुसरणं कुर्वद्भिः अस्माकं विमर्शकैः पि.वि. काणेप्रमुखैः काव्यशास्त्रीयलेखकानामैतिहासिकं तत्त्वं प्रकाशितम्। तत्र तेषां कालिदासादीनां जीवनविषये कालविषये महान् श्रमः अनुभूतः। तदनु अद्य यावत् कालिदासस्य

समयविषये देशविषये इदमित्थमिति निर्णेतुं न पार्यते इति तेषां समसामयिकेतिहासस्य अलाभः एव महती त्रुटिः।

वस्तुतः समसामयिकाः समसामयिकान् लेखकान् नानुमन्यन्ते। भवभूतिश्लोकोऽयम् अत्र प्रमाणम्-

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान्प्रति नैष यत्नः।
उत्पत्स्यते तु मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी॥

तथा चोक्तं शूद्रकेण-

नागुणी गुणिनं वेत्ति गुणी गुणिषु मत्सरी ।
गुणी च गुणरागी च विरलः सरलो जनः ॥

एवं भर्तृहरेरपि –

बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः।
अबोधोपहताश्चान्ये जीर्णमंगे सुभाषितम्॥

इत्यपि पूर्वोक्ते प्रामाणिकम्।

तेनैव कारणेन अस्माकं ग्रन्थानां प्रमेयांशानां प्राधान्येन तेषां प्रचारो जातः। ग्रन्थलेखकानां प्रचारविषये नैव ज्ञायते। फलतः अज्ञातकर्तृकाः अनेके ग्रन्थाः प्रचारे समागताः। लेखकानामितिहासो न ज्ञायते।

एतां त्रुटिं पूरयितुं समसामयिककवीनां काव्यानाञ्च परिचयप्रदानाय एस्.रङ्गनाथप्रभृतिभिः महान् प्रयासः चेक्रियते। किन्तु तेषां प्रयासः काव्यमात्रपरिमितो भवति। शास्त्रविषये संस्कृतसाहित्यस्य बृहदितिहास इति सङ्कलनं कर्तुं प्रयासः कृतः क्रियते च। संस्कृतसाहित्यकालः त्रिधा विभज्यते आदिकालः, मध्यकालः, आधुनिककालः इति। आदिमध्यमकालयोः शास्त्रकाव्यानामेतिहासविषये पुनः आरम्भः क्रियेत् यदि चर्वितचर्वणं जायते। तत्रापि विमर्शकानाम् अभिप्रायानुसारं वादाः एव अवशिष्यन्ते। वादो वादाय केवलं भवति। तर्काप्रतिष्ठानात् इति व्यासस्य ब्रह्मसूत्रमपि अन्वर्थमेव जायते। अधुना आवश्यकः भवति समसामयिककृतिलेखकानाम् इतिहासजीवनवृत्तानुरूपपरिचयसमीक्षात्मकस्य अध्ययनस्य। तस्मिन्नेव मार्गे प्रस्तुतोऽयं Sanskrit Studies in The East इति सङ्कलनग्रन्थः मणिप्रभायते। आभारतं

शास्त्रकाव्यलेखकानाम् अचिरादेव कीर्तिकायानां जीवनग्रन्थपरिचयादिकं न तथा सुकरं भवति। अतः तेषां परिचितानाम् अन्तेवासिनां माध्यमेन परस्परसहकारेणैव इदं सुसाध्यं भवति इति इयं योजना अस्य ग्रन्थस्य परामर्शदातृमण्डल्याः सङ्कलनसमितिसदस्यानां च शिवसङ्कल्पः। तत्तत् पत्रलेखकानां चयनेन शुद्धसङ्कल्पः समजनि। शुद्धसङ्कल्पस्यास्य कारणीभूतः आयुष्मान् डां शुभ्रजित् सेन इति धन्यनाम। युवा स्यात् साधु युवाध्यायकः। आशिष्ठो द्रढिष्ठो बलिष्ठः॥ इति औपनिषदवचनानुसारम् अयं सिद्धसङ्कल्पो जातः इति मोदः।

ईश्वरचन्द्रसागरमारभ्य सत्यव्रतशास्त्रीपर्यन्तं काव्यशास्त्रलेखकानां पञ्चचत्वारिंशत् संग्रहे भारतस्य प्राच्यभागात् रमारञ्जनमुखर्जी, आवाच्यात् रामानुजताताचार्यैः, प्रतीच्यात् वामनशिवरामआप्टे, उदीच्यात् रेवाप्रसादद्विवेदी इत्यादीनां विषये संग्रहः तत्तत् लेखकैः सम्पादितः सम्पादकेन शुभ्रजिता। नाम्ना औज्ज्वलेन अनेन न केवलं लेखकानां, क्षमारावप्रभृतीनां लेखिकानां जीवनवृत्तं संगृहीतमिति अहो प्रमोदः।

संस्कृतेतिहाससङ्कलनकाराणाम् अयमेकः महान् भागीरथप्रयत्नो भवति यत् एतत् संग्रहस्य कस्याः भाषायाः माध्यमेन सङ्कलयितव्यः इति। आङ्गलं तु सर्वमान्यं सर्वविदितं भवत्येव। किन्तु संस्कृतसङ्कलनमाङ्गलभाषामाध्यमेन क्रियेत् यदि संस्कृतस्य अनादरो भवति इति धिया संस्कृतलेखानामेव आधिक्यं दर्शयित्वा इयं प्रथमा सम्पादनसरणिः इति महान् आनन्दः।

एतेन मोदतां ग्रन्थसम्पादनसदस्यानामन्तरङ्गम् प्रमदतां शोधपत्रलेखकानां मानसगङ्गाप्रवाहः। आनन्दतु पाठकजनमनोरथः।

एतत्सङ्कलसूत्रधारस्य शुभ्रजित् सेनस्य उत्साहशक्तिः वर्धतां, प्रेरकेषु अभिराजराजेन्द्रमिश्रप्रमुखानां प्रभावः प्रवर्धतां, पाठकसुधीलोकस्य मन्त्रशक्तिः समेधतामिति शिवम्।

सरस्वती श्रुतिमहती महीयताम्।
जयतु संस्कृतं जयतु भारतम्।

# सम्पादकीयम्

**"ऋषीणाञ्चरितैः पुण्ये भारते भातु भारती।**
**अमृतत्वाय धर्माय विद्यानाञ्चाभिवृद्धये।।"**

विश्वेऽस्मिन् विश्वेऽतिमारिपरिस्थितौ विद्याचर्चायां विघ्नितायामपि वाग्देव्या परमाशिषा 'Sanskrit Studies in the East' (प्राच्ये संस्कृतचर्चा) इति विषयमादाय परीक्षितगवेषणाप्रबन्धरत्नान्येकत्र सज्जीकृत्य ग्रथितमिदं त्रिभाषामयं शोधग्रन्थप्रसूनं शास्त्रानन्दपिपासूनां समक्षं प्रकाशतामाप्नोतीति कस्य चित्तं नाकर्षेत्?

भारतभूः संस्कृतशास्त्राणां चर्चास्थलीति चिराय विदितम्। अपि चेयं पवित्रतमा भूमिः देवभाषाविदुषां प्रसवस्थलीति निश्चप्रचम्। अस्माकं भारतीया संस्कृतिरनुत्तमा अलौकिकी च वर्तते। इयञ्च संस्कृतिः सुरभारतीविभूषिता। आवैदिकाज्जगन्नाथान्तः संस्कृतशास्त्रसन्तानो निरवच्छिन्नत्वेन तोयधौ वहमानो विलसति। मानवमनीषायाः विकाशशीलायां सहस्रदिग्गामिन्यां संस्कृतधारायां महनीयस्यास्य भारतवर्षस्य प्रत्येकं प्रदेशानाम् अवदानं गौरवास्पदम्। संस्कृतसाहित्यस्य विविधेषु विद्यास्थानेषु भारतीयसाधकानां प्रतिभाया गौरवमयी क्रियाशीलता सुदूरातीतकालादेव इदानीन्तनकालं यावदम्लानेनैवावतिष्ठते।

आधुनिकसंस्कृतसाहित्यस्याध्येतृत्वेन मया भारतवर्षस्य शताब्दीद्वयव्यापिनी सुविपुला संस्कृतसाहित्यसर्जनात्मिका गौरवमयी क्रियाशीलता समीक्षिता यथामति। शोधकर्मत्वेन 'अर्वाचीनंसस्कृतवाङ्मये कवित्रयम्' (कालीपदतर्काचार्य-पळसुले-सीतानाथकवीनां काव्यकृतिसमीक्षणम्) इति शोधविषयो मयाचितः। तस्मात्प्रभृति आधुनिकसंस्कृतसाहित्यस्य अर्थात् ऊनविंश-विंशशताब्द्योः विरचितस्य साहित्यवाङ्मयस्य सर्जनकर्तृविषये ममानुसन्धित्सा जागरितेति 'भारतवर्षे आधुनिकसंस्कृतसाहित्यम् : विहङ्गमदृष्ट्या परिशीलनमिति' ग्रन्थो मया प्रकाशितः 2019 ईशवीयाब्दे। ग्रन्थेऽस्मिन् भारतवर्षस्य त्रयोविंशतिराज्यानाम् अर्वाचीनसंस्कृतसाहित्यं तथा छन्दःशास्त्रम् अलंकारशास्त्रञ्चोपजीव्य

सार्धपञ्चशतपृष्टात्मको ग्रन्थः प्रकाशितः। प्रसङ्गतः उल्लेख्यं यत् विगतशतकद्वयं व्याप्य ये च संस्कृतकोविदकवयः शास्त्रकाराश्च स्वकारयितृप्रतिभया भावयितृप्रतिभया दार्शनिकप्रज्ञया च काव्यनाटकादीनि शास्त्रीयग्रन्थान् च रचयन्ति स्म, तेषां विमर्शान् संस्कृतेतरभाषाज्ञाः प्रायो न जानन्तीति महद्दौर्भाग्यम्। अपि च, वर्तमानप्रजन्मगताः संस्कृतविद्यार्थिनोऽपि न विदन्ति यत् ते कस्यैतिह्यस्य धारकाः वाहकाश्चेति दुःखास्पदम्। तथाहि मया अस्मिन् करोणातिमारिसमये ऊनविंश-विंशशताब्द्योः शतसंख्यकानां प्रचारालोकविवर्जितानां स्वदेशीयानां भारतविद्यासाधकानां सारस्वत-साधनायाः समीक्षणं विधातुं सत्संकल्पः गृहीतः। अयञ्च संकल्पः संस्कृतमातुः सेवकरूपेणास्माकं सर्वेषामुत्तरदायित्वमिति मामकीनो नयः। वङ्गदेशाधिवासित्वेन मम कृते केवलं पश्चिमवङ्गप्रदेशस्य विगतशतकद्वयव्यापिन्याः सारस्वतसाधनायाः किञ्चिदेव परिशीलनं सम्भवपरम्, किन्तु प्रदेशान्तराणां विषये नास्ति मे सकाशे किमप्युपादानं तथ्यं वेति। क्व चास्माकं संकल्पग्रहणं क्व च तस्य वास्तवरूपप्रदानम्। तदा वङ्गप्रदेशाद् बहिः राधावल्लभत्रिपाठि-राजेन्द्रमिश्र-हर्षदेवमाधव-रमाकान्तपाण्डेय-भागीरथिनन्दादिभिः कैश्चिद् विद्वद्भिः समं पर्यालोचितम् अस्मिन् सन्दर्भे। तेषामुत्साहेन परामर्शेन च भारतवर्षस्य प्रतिप्रदेशं लब्धप्रतिष्ठैः अध्यापकैरध्यापिकाभिश्च सह वार्तायन्त्रेण सम्पर्कसूत्रं संस्थाप्य मम संकल्पविषये तेभ्यो विज्ञापितवान् अहम्। आश्चर्यवहमेतत् तथ्यं यत् पश्चिमवङ्गापेक्षया अन्यप्रदेशस्थितेभ्यः विद्वद्भ्यः आशाव्यञ्जिका प्रतिक्रिया मया संप्राप्ता। तेषां विदुषामाशीर्वादो हि मे केवला शक्तिः। तेभ्यः सर्वेभ्यो विद्वद्वरिष्ठेभ्यः अहमनुरुद्धवान् यत् विगतशतकयोः यस्य कस्यचिदेकस्य विदुषः कृतित्वविषये समीक्षात्मकं प्रबन्धं विरचयितुम्। निर्दिष्टसमयेनैव ते बहिःप्रदेशस्थिताः प्राध्यापकाः प्राध्यापिकाश्च शतशः कर्मव्यस्ततायामपि प्रबन्धं विरच्य प्रेषितवन्तः प्रेषितवत्यश्च। ग्रन्थरूपेण प्रकाशावसरे वर्तमानग्रन्थस्थाः बन्धाः परिमार्जिताः परिवर्धिताः संशोधिताश्च निरक्षीरविवेकिभिः समीक्षकैः।

अस्य 'Sanskrit Studies in the East' इति शीर्षकस्य ग्रन्थस्य प्रथमे खण्डे प्रायः द्वादशमितराज्यस्थितानां (जम्मू-काश्मीर-दिल्ली-महाराष्ट्र-अन्ध्रप्रदेश-केराला-राजस्थान-गुजराट-आसाम-पश्चिमवङ्ग-उत्कल-अन्ध्रप्रदेश-वास्तव्यानाम्) चतुःपञ्चाशत्संख्यकानां शेमुषीजूषां तत्त्वबुभुत्सुकानां संस्कृतविदुषां कृतित्वम् आलोचितं वरीवर्ति।

ग्रन्थशीर्षकम् अन्वर्थवाचीति। ग्रन्थशीर्षकस्थं 'East' इति पदम् आसमुद्रं भारतवर्षार्थद्योतकम्। 'East' इति पदार्थः प्राच्य इति 'प्राच्यां दिशि, यस्यां दिशि येषां सूर्य्यस्य प्रथमदृष्टिः तेषां सा दिक्प्राची। तज्ज्ञानोपायश्च।' इति वाचस्पत्यवचनप्रामाण्यात्। अर्थात् साधारणदृष्ट्या प्राच्ये देशे नाम भारतवर्षे संस्कृतचर्चा इत्यर्थो भवति 'Sanskrit Studies in the East' इत्यर्थो भवति ग्रन्थरत्नाभिधानस्य। अपि च, विश्वेऽस्मिन् विश्वे ज्ञानराज्यस्य प्रथमं स्फुरणं प्राथम्येन जातम् अस्माकं देशे नाम भारतभूमाविति। वाचस्पत्यकारस्याशयानुसारं सूर्यो ज्ञानप्रतीक इति कृत्वा ज्ञानस्य प्रथमा दृष्टिः नाम ज्ञानस्य प्रथमप्रकाशः प्रपतितो भूमावस्यां नाम प्राच्यभूमौ (भारतभूमौ) इति। ननु 'भारतवर्षे संस्कृतचर्चा' इत्यत्र केयं चर्चा 'चर्चा संख्या विचारणा' ('विमर्षो भावना सैव वासना च निगद्यते') इत्यमरकोषाभिहितत्वात्। विचारश्चात्र शास्त्रीय इष्यते। अर्थात् भारतवर्षवास्तव्यानां विद्यापथिकानां शास्त्रीयकृतिसमीक्षणं हि ग्रन्थशीर्षकाशयः।

भट्टतौतेनोक्तम्,

'द्वे वर्त्मनि गिरां देव्याः शास्त्रं च कविकर्म च।
तत्र प्रज्ञोद्भवं शास्त्रं प्रतिभोद्भवमन्तिमम्'।। इति।

अर्थात् वाग्देव्याः साधनमार्गः खलु द्विविधः शास्त्रं काव्यञ्चेति। तयोः शास्त्रस्योद्भवः प्रज्ञायास्तथा च काव्यं तावत् प्रतिभासञ्जातमिति। अस्मिन् साधनमार्गद्वितये एव समभावेन ऊनविंश-विंशशताब्द्योः भारतविद्यासाधकानाम् अबाधं विचरणं वरीवर्तीति निश्चप्रचम्। किञ्च, केषुचित् साधकेषु प्रज्ञा-प्रतिभयोर्विरलं सम्मेलनमलक्षीति आश्चर्यजनकम्। इह ग्रन्थे न केवलम् आधुनिकसंकृतकवीनामपि तु प्रदेशान्तरस्थितानां वेद-व्याकरण-दर्शन-धर्मशास्त्र-ज्योतिषायुर्वेदादिशास्त्रपारङ्गतानां विद्वत्प्रकाण्डानां मौलिककृतीनां समीक्षणं विहितम्। एतदपि भाव्यं यत् ग्रन्थरत्नमिदं न हि विदुषां जीवनीमूलकम्, परं कृतिततिसमीक्षापरम्। केवलानां दिवंगतानां विदुषामेव शोधचर्चैव ग्रन्थमूलम्। द्वितीये खण्डे अपरेषाम् उपेक्षितानाम् अज्ञातप्रायाणां स्वल्पज्ञातानाञ्च पञ्चाशत्संख्यकानां विदुषां संस्कृतशास्त्राब्धौ अवदानम् आलोचनीयं भवेदिति मे संकल्पः।

इह ग्रन्थरत्ने चतुःपञ्चाशन्मितानां भारतीयज्ञानतापसानां जीवनकर्मसाधनयोः परिचयो लिपिबद्धो वर्तते। सारस्वतविद्याचर्चायां तेषां विदुषां प्रतिभा-व्युत्पत्त्यभ्यास-निष्ठा-ध्यानानि प्रत्येकं भारतवास्तव्यानां सकाशे चिराय अविस्मरणीयानि। ग्रन्थोऽयं अस्माकं प्रायोऽवलुप्तविद्याचर्चायाः धारां नूतनरूपेणोन्मीलयिष्यतीति मे विश्वासः। तथाहि प्रत्येकं ज्ञानभिक्षुकाणां सविधे तेषां ज्ञानतीर्थयात्रायामयं ग्रन्थः आरात्रिकदीपकल्पः।

भारतविद्यापथिकानां सारस्वतजीवनोद्धृतामृतं सहृदयानां पाठकानां च मनसि अमन्दानन्दं जनयिष्यतीति मे विश्वासः।

भारतविद्यायाः विपुलवैभवं तथा च भारतविद्यासाधकानां पण्डितानां ज्ञानं निष्ठाम् अध्यवसायं देशप्रेम च प्रति अस्मद्देशीयानां विद्यार्थिनाञ्च दृष्टिसमाकर्षणं खलु मे ग्रन्थसर्जनसंकल्पः। संस्कृतशास्त्रसंसदि ये च सारस्वतसाधकाः स्वस्वप्रतिभाद्युत्या संस्कृतमातरं प्रतिनियतं सेवमानाः, तेषां तपोव्रतं नवप्रजन्मनः समक्षम् उपायनीकर्तुम् अयं प्रयासो मे। अस्माकं देशे बहवः भारततत्त्वसाधकाः जनिं लेभिरे, ये आजीवनं लोकचक्षुषोरन्तरालेन 'आत्मश्लाघा परगर्हामेव वर्जयेदि'ति शास्त्रवाक्यं शिरसि निधाय संस्कृतशास्त्रादीनामनुध्यानेन व्ययीचक्रुः निरलसम् अध्यवसायेन निष्ठया च। परं तेषु केचित् प्रभूतयशोभाजः, चान्ये विस्मृतप्रायाः इतरेऽज्ञातप्रायाः आसन्। 'कस्तान् साधकान् कार्त्स्न्येन वक्ष्यति'। पाश्चात्त्यकविवरेण Thomas Gray-महोदयेन 'Elegy' इति ग्रन्थे सुष्ठूक्तम् –

'Full many a gem of purest ray serene.
The dark unfathom'd caves of ocean bear
Full many a flower is born blushed unseen
And waste its sweetness on the desert air''.

प्रसङ्गत उल्लेख्यं यत् अस्मिन् ग्रन्थरत्ने न केवलं संस्कृतं प्रति कवीनां शिक्षाव्रतिनां शास्त्रज्ञानां योगदानम्, चापि विवेकानन्द-अरविन्दादिदृशानां महापुरुषाणां संस्कृतसम्बन्धश्चर्चाविषयतां नीतम्।

संस्कृताध्ययनाध्यापनशास्त्रसर्जनादिप्रवीणा एते विद्वांसः तथा च सुराभारतीसमुपासका तथा महापुरुषा संस्कृतभारत्या सुरक्षायै प्रहरीव अहर्निशं यतन्ते।

वैदुष्यवैदूर्यविभासितविग्रहाणां वैशिष्ट्येणोल्लेखार्हाणाम् महार्हहारमण्डितानां प्रो.राधावल्लभत्रिपाठि-मृणालकान्तिगङ्गोपाध्याय-रमाकान्तपाण्डेय-सत्यभामा-राजदान-सरोजकौशल-सुषमादेवीगुप्ता-महाराजदीनपाण्डेय-अन्नदाशङ्करपाहाडी-श्वेताप्रजापति-वीरनारापाण्डुरङ्गि-रामकृष्णपाण्डेयादिविद्वद्वरेण्यानां निबन्धैः समृद्धस्तथा च तरुणप्रजन्मपक्षतः भरतभूषणरथ-प्रवीणपण्ड्या-सञ्जयकुमार-प्रीतिपूजारा-मञ्जूषा-नारायणदाश-उदयनहेगडे-सन्तुसिंह-दिलीपपण्डा-चिरश्रीमुखोपाध्यायप्रमुखानामध्यापकानां तथा च भारतवर्षस्य नैकेषां विश्वविद्यालयीयानां शोधच्छात्राणां विद्यार्थिनाञ्च शोधपत्रैर्विभूषितो मदीयोऽयं संकलनात्मको ग्रन्थः। प्रसङ्गत उल्लेख्यं यत् श्रुतिधराचक्रवर्ती-भावना-आचार्याख्ये द्वे प्राबन्धिके स्वकपितृचरणयोः संस्कृतशास्त्रेषु महदवदानमुपजीव्य प्रबन्धौ विरचयतः। पितृचरणान् प्रति तयोः आधमर्ण्यं ग्रन्थकुसुमस्यास्य विशिष्टमेकं वैशिष्ट्यम्।

शतशः कर्मव्यस्ततायामपि विश्वभारतीति केन्द्रियविश्वविद्यालयस्य संस्कृत-पालि-प्राकृतविभागस्य वरिष्ठानामध्यापकानां तथा चोत्तराधुनिक-संस्कृतकवीनां श्रीमताम् अरुणरञ्जनमिश्रवर्याणां 'A refreshing approach to the savants of sanskrit studies' इति शीर्षकेण अग्रलेखेन ग्रन्थस्यास्य क्षतिपूर्तिः साधिता। अग्रलेखे मिश्रवर्येण अर्वाचीनसंस्कृतसाहित्यम् उपरि सुदीर्घो मनोज्ञः प्रबन्धो व्यरचि। तेषाञ्चरणकमलयोर्भक्तिपुष्पाञ्जलिं समर्पयामो वयम्। अन्ध्रप्रदेशगतस्य तिरुपतिस्थस्य राष्ट्रियसंस्कृत-विश्वविद्यालयस्य संकायप्रमुखाध्यक्षाणां साहित्यशास्त्रधुरन्धराणां जि. एस्. आर्. कृष्णमूर्तिवर्याणाम् 'मुखकथनेन' विभूषितोऽस्मद्ग्रन्थः। अपि च, भारतसर्वकारस्य शिक्षामन्त्रालयाधीनस्य भारतीयदार्शनिकानुसन्धानपरिषदः सदस्यसचिवाः प्रो.सच्चिदानन्दमिश्रमहाभागाः शुभकामनासन्देशेन 'स्वस्ति'वचनेन ग्रन्थस्यास्य ऋद्धिं समासादितवन्तः। एतेषामाचार्यवराणामानृण्यं शिरसा प्रवहन्तः प्रणतिततिभिर्वयं प्रह्वीभवामः।

प्रसङ्गतः उल्लेख्यं यत् सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतिचराः महाकवयस्तथा पद्मश्रीसम्मानेन सभाजिताः राजेन्द्रमिश्रास्तथा च राष्ट्रियसंस्कृतसंस्थानस्य (अधुना केन्द्रियसंस्कृतविश्वविद्यालयः) कुलपतिचराः

महाकवयस्तथा समालोचकाः राधावल्लभत्रिपाठिनः छात्रवात्सल्येन ग्रन्थविरचने सत्परामर्शप्रदाने च सौविध्यमकल्पयन्। कविकुलगुरुकालिदास-संस्कृतविश्व-विद्यालयस्य उपाचार्यपदम् अलंकुर्वतां प्रो. मधुसूदनपेन्नामहाभागानां नाम प्रसङ्गेऽस्मिन् संस्मरणीयम्। तेषामृणं शिरसा वहन् प्रणतिततिभिः प्रह्वीभवामि। अपि च, प्रकल्पस्यास्य निर्माणक्रमे येषां धीमतां गुरुकल्पानाम् अनितरसामान्यं साहाय्यमवाप्य विषयस्यास्य परिवर्तनं परिवर्धनं च मया विहितं, तेषु प्रामुख्यमभजन्त प्रो. अरुणरञ्जनमिश्राः। किञ्च, तथ्यपरामर्शदानेन केन्द्रियसंस्कृतविश्वविद्यालयस्य जयपुरपरिसरस्य साहित्यविभागाध्यक्षाः कवयः प्रो.रमाकान्तपाण्डेयवर्य्याः सौविध्यमकल्पयन्तः।

ग्रन्थस्यास्य अरुणरञ्जनमिश्र-तारापदचक्रवर्ति-सदाशिवद्विवेदि-रमाकान्तपाण्डेय-सुषमादेवीगुप्ता-जि.एस्.आर्-कृष्णमूर्ति-सेखसाविर-सन्तुसिंहादिभ्यो मान्यमान्येभ्यः समीक्षकेभ्यः प्रणतिं वितरामः। प्रसङ्गतः उल्लेख्यं यत् प्रकाश्यमानाः प्रायः सर्व एव शोधप्रबन्धा एतैर्निरीक्षकैर्द्विर्निरीक्षिताः समीक्षकैश्च सूक्ष्मेक्षिकया परीक्षिताश्चेति।

भाविनि काले ये तावत् विद्वांसः गवेषकाश्च विषयस्यास्य कृत्स्नं चित्रम् उपस्थापयिष्यन्ति तेषां सविधे सोपानतां व्रजेच्चेदयं ग्रन्थस्तर्हि वयं कृतार्था भवामः। भारतभुवि संस्कृतमातुर्गौरवमयी ऐतिह्यधारा अस्माभिर्विशेषतः संस्कृतस्य तरुणैर्विद्यार्थिभिस्तरुणीभिर्गवेषिकाभिश्च परिपालनीये परिवर्धनीया चेति। तेन च विश्वसाहित्यसंस्कृतिः परिपोषं प्राप्नुवन्ति विश्वकल्याणं साधयेदिति।

मुद्रणप्रमादसंशोधनाय तथा च टङ्कनकार्ये अक्षरपरिष्कारादिकर्मणि साहाय्यमाचरितद्भ्यो तिरुपतिस्थराष्ट्रियसंस्कृतविश्वविद्यालयस्य शोधच्छात्रेभ्यो विवेकानन्दलक्ष्मणेभ्यः सविनयं धन्यवादान् वितरामि। तेषां निरामयं दीर्घजीवनमुत्तमा सारस्वती संसिद्धिश्च प्रार्थ्यते भगवतश्चरणकमले। तेभ्योऽन्येभ्योश्चोल्लिखिता-नुल्लिखितनिर्विशेषं ससाधुवादं कार्तज्ञं च विज्ञापयामि।

ग्रन्थसम्पादने सहधर्मिन्याः शम्पायाः भूमिका संस्मरणीया। अपि च, शौरिश्रीनामिकायाः मदीयायाः नवजातकायाः कन्यायाः स्नेहस्पर्शादहं प्राणशक्तिं सञ्चिनोमि सारस्वतकर्मयज्ञमिदं सुष्ठुतया संसाधयितुम्। तस्यै समर्प्यते ग्रन्थप्रसूनमिदम्।

संस्कृतपुस्तकभाण्डारस्य सत्त्वाधिकारिभिः श्रीमद्भिः देवाशिसभट्टाचार्यैः स्नेहाशिषभट्टाचार्यैश्च ग्रन्थस्य सुन्दरं मुद्रणं यथासमयं प्रस्तुतमिति तेऽप्यस्माकं प्रणयपरिधिमधिकुर्वन्तीति।

'मर्त्यैरसर्वविदुरैर्विरचिते क्व नाम ग्रन्थेऽस्मिन् दोषविरहः सुचिरन्तनेऽपि' इति न्यायात्प्रमादस्य स्वाभाविकत्वात् कण्टकाक्षरदोषाद्वा यदत्र स्खलंन सञ्जातं तत् क्षमासारा विद्वद्वरादयोदयमधुरदृशा निरीक्षमाणाः सन्तः क्षमिष्यन्ते मामिति सप्रश्रयं निवेदयति। संस्कृतानुरागिणां गवेषकाणामध्येतॄणामुत्कर्षः साफल्यं चेद् ग्रन्थेनैतेन संपाद्यते, तर्हि श्रमो मे फलेग्रहिः।

विदुषां वशंवदस्य

शुभ्रजितः

## FOREWORD

**Professor Aruna Ranjan Mishra**
**Professor & Ex-Head**
**Department of Sanskrit, Pali & Prakrit**

### A Refreshing Approach to the Savants of Sanskrit Studies

The present voluminous book entitled 'Sanskrit Studies in the East' (Vol. I), edited by Dr. Subhrajit Sen, an uprising scholar of the Eastern India is a significant addition to the total gamut of studies in Indology and modern Sanskrit. Dr. Sen has collected enlightening research writeups from towering scholars of Sanskrit. Prof. Mrinalkanti Gangopadhyay (on Pandit Visvabandhu Bhattacharyya), Professor Radhavallav Tripathi (on Prof. Charudev Shastri), Prof. Saroj Kaushal (on Bhatta Mathuranath Shastri), Prof. Ramakant Pandeya (on Pt. Ramprasad Tripathi), Prof. Bhavana Acharya (on Prof. Hariram Acharya), Prof. Sushma Devi Gupta (on Shukdev Shastri), Dr. Bharat Bhushan Rath (on Prof. Vachaspati Upadhyay), Dr. Udayana Hegde (on Pt. Ranganath Sharma), Dr. Sugyan Kr. Mohanty (on Pt. Durgadutta Shastri), Prof. P.K. Dutta (on Pt. Khitish Chandra Chattopadhyay), Dr. S. Ranganath (on Prof. Satyavrat Shastri), Prof. Shrutidhara Chakravarti (on Prof. Mukunda Madhav Sharma), Dr. Paramba Shree Yogamaya (on Prof. K. C. Acharya) are some of the prominent contributors seated in different places of India.

The some the scholars, philosophers and creative writers of the 19th and 20th century are the subjects of discussions here in the Vol. I. No doubt, many other thinkers and writers would also be discussed by scholars in the next volume. But the greatest of the Indologists and writers that are focused here make the present volume a valuable research knowhow at the hands of the new researchers and a basic handy reference book for the veterans. Many great personalities are crisply studied here. It was surely not easy to put together the academic cultural and creative contributions of the souls like Pt. Ishwar Chandra Vidyasagar, Dayanand Saraswati, Ramgopal Bhandarkar, Anandram Barua, V.S. Apte, Ambikadutta Vyas, Ganapati Shastri, Swami Vivekananda, Madhusudan Ojha, Sri Aurobindo, Haridasa Siddhantavagisa, P.V. Kane, Mm. Kalipada Tarkacharyya, Kshama Rao, P.K. Narayan Pillai, Yatirajaacharya, Anant Tripathi Sharma, Basant Tryambak Shevde, Mm. Anantalal Thakur, J.B. Chaudhary, Ramaranjan Mukherje and of Revaprasad Dwivedi.

Our country is extremely rich with talent of great scholars and writers. If a systematic and continuous study on their contributions is made then there would be an inspiring academic and creative chronicle for the posterity. Great scholars like Baladev Upadhyaya, S. K. De, K. K. Handique, Kapali Shastri, Govind Chandra Pandey, Gourinath Shastri, S.D. Joshi, H.R. Divakar, Vasudev Saran Agrawal, P. Ramachandradu, R.V. Tripathi and many others have established high bench marks in the field of Indology and Sanskritic Studies. We have no scope here to elaborate their works. Nor have we space to utter the names of all the important scholars.

There are great writers in the 19th and 20th centuries who may be discussed later in the future Volumes of Dr. Sen. Moolasankar M.Yajnik, Batuknath Shastri Khiste, Y.Mahalinga Shastry, Vrajnandan Tripathi, Jaggu Vakulabhushan, V.Raghavan, Leela Rau Dayalu, Vanamala Bhawalkar, S.B.Velankar, Janakivallabh Shastry, Virendra Kumar Bhattacharya, S.B. Varnekar, Prabodh Kumar Mishra, G.B. Palsule, Umasankar Sarma Tripathi, Paramanand Shastri, Ramkaran Sharma, Digambar Mahapatra, Satyavrat Shastri, Srinivas Rath, Jagannath Pathak, Bhaskaracharya Tripathi, Rajendra Mishra, Haridutt Sharma, R.V.Tripathi, Harshdev Madhav, Keshab Chandra Dash etc are some prominent Sanskrit authors.

## II

The 19th and 20th Century Sanskrit literature was marked with a trend of writing on characters found in Ramayana, Mahabharata and in Purāṇas, on great spiritual personalities and finally on the freedom fighters and also on the freedom struggle of our India. But beyond this, we find the trends of translations into Sanskrit, children's literature, Sanskrit travelogues, Sonnets, Gazhals and Haiku, novels, short stories and historical poetry. We also find in this period clear trend of Auto-biography and biography, Dance Ballet, Humour, Parody, Detective or Humour stories, write-ups on terrorism, Elegy, Radio Poetry, Political Poetry and folk literature.

In this period, many literary works were translated in to Sanskrit. In fact modernity in Sanskrit appeared more

through translation because translations from other literature into Sanskrit not only widened the sphere of Sanskrit literature but also gradually modernized the ways of creativity of the Sanskrit writers.

Sanskrit translations of non-Indian writings effected a modernist approach to Sanskrit creativity. Umashankar Sharma Tripathi (1922) translated the Rubaiyats of Omar Khayam in Mandākranta entitled 'उमरखयामभारती'. Virendra Kumar Bhattacharya (1917-82) published his rendering of the Rubaiyats of the same author entitled 'ओमरखैयामम्'. Dr. Subhrajit Sen finds some more translators of Omar Khayyam. They are Rajgopal Iyengar, Haricharan Sharma, Sadashiv Dange and Adibhatta Narayan Dash etc.[(1)] Satyadeb Berma translated Koran entitled 'कुरणम्'[(2).] . Lakshan Shastri Tailang (1910) translated into Sanskrit the dramas of Shakespeare. [(3)] Sukhamay Mukhopadhyay translated Hamlet entitled 'दीनार्कराजकुमारहेमलेकम्'[(4).] Ananta Tripathy Sharma (1904-1988) also translated many dramas of Shakespeare. Some of them are 'द्वादशी रात्रिः' (Twelfth Night), 'बह्वारम्भे लघुक्रिया' (Much Ado About Nothing), 'वेणीशसार्थवाहः' (The Merchant of Venice), 'यथा ते रोचते' (As You like It) and 'हेमलातः' (Hamlet). Pt. Tripathy Sharma has creatively translated the names of many characters of these dramas into Sanskrit [(5)]. This shows how the translations give new kind of exercises for Sanskritists.

Sanskrit translation of the western literary forms like novels, short stories, sonnets and elegy etc. have also expanded the modernist creativity in Sanskrit. Nineteenth Century saw the ostensible entry of the western novel form in

the languages of India. Many of them got translated into Sanskrit leadingly also to the production of original novel in Sanskrit especially in the post-independent era. 'शिवराजविजयम्' (1870) of Pt. Ambikadutta Vyas is a translation from the 'महाराष्ट्रजीवनप्रभात' of Ramesh Chandra Dutta. Appa Shastri translated 'लावण्यमयी' of Bankim Chandra in 1906. Kumar Tatariya translated 'मेनका', the Tamil original of Doraswamy. V.A. Latker translated 'बलिदानम्', the Marathi original novel of N.C. Kelkar. Renu Devi's Sanskrit translation of the novels 'इन्दिरा' (1903), 'देवी कुमुद्वती' (1903), 'लावण्यमयी' (1906) and 'कृष्णकान्तीयस्य निर्वाणः' (1907) from the Bengali original of Bankim Chandra were published in the Sanskrit Magazine 'संस्कृतचन्द्रिका'. Biharilal Mishra translated stories of Saratchandra and published 'शरत्सप्तकम्' (1996)[(6)]. This translated novels showed path to the original novels in Sanskrit. They also inspired for writing in other western forms.

Sanskrit translations of the writings of great Socio-religious thinkers and activists also led to modernity in Sanskrit. J.P.Acharya (1911) translated the Marathi 'मानदेयम्' of Samarth Ramdas. E.P. Bharatha Pishorody (1917) translated from Hindi 'कवीरसूक्तिमौक्तिकम्'. G.B. Palsule (1921) translated 'अग्निजा' and 'कमला' from the original Marathi poem collection of Veer Savarkar. He also translated from Tukaram's Marathi Abhangs entitled 'तुकाभक्तिः'. Umashankar Sharma Tripathi (1922) translated 500 sayings of Mahatma Gandhi entitled 'सूक्तामृतम्'. Baneshwar Pathak (1922) made a poetic translation of New Testament entitled 'यिशुचरितम्'. P.

Mallikarjuna (1940) translated from Kabir's dohās 'कवीरदासशतकम्'. All these prepared a thoughtful depth to the later modern writings, where the experimented meanings of life flowed spontaneously in right hands.

Sanskrit translations of the writings on Social themes also encouraged similar writings in original Sanskrit. Dr. G.B. Palsule (1921-2004) translated some Marathi social plays like 'धन्येयं गायनी कला', 'अथातो ज्ञानदेवोऽभावात्' and 'भ्रातृकलहः' etc. H.V. Nagaraja Rao (1942) translated the social story '*Namma manye Dīpa'* (Kannada) of Hama Nayak as. 'अस्माकं गृहस्य दीपः'. He also translated 'Sārtha' (Kannada) of S.L. Bhyrappa as 'सार्थः'. He also translated five social stories (Hindi) of Premchand as 'विपञ्चिका'. Dr. Narayan Dash enlists sixteen Bengali dramas on social themes translated into Sanskrit by Nityannada Mukhopadhyaya Smṛiti Tīrtha (1923-2010)[7]. They are 'गुप्तधनम्', 'सम्पत्तिसमर्पणम्', 'मुकुटम्', 'व्यवधानम्', 'सोपानवचनम्', 'रासमणिपुत्रम्', 'रहमतखानवृत्तान्तम्', 'श्रीनलिनपराभवम्', 'पुत्रयज्ञम्', 'पुत्रप्रत्यावर्तनम्', 'वार्तागृहाध्यक्षवचः', 'रोगिबान्धवम्', 'आनन्दमठम्', 'प्रतिशोधपरिग्रहम्', 'सुमतिलाभम्' and 'चिकित्सासङ्कटम्'. Dr. Dash has translated the Odia Poetry like 'वाजिराउतम्' and 'वेदुइनगीतम्' from the poetry of the legendary Odia poet and Jñānapeeth awardee Sachidananda Routray and Dr. Vivekananda Panigrahi respectively. He also translated two social short story collections 'सृष्टिः' and 'वात्यासारः' of famous Odia novelist and story writer Chandrasekhar Dasbarma. Sankardev Jha's Maithili collection of Social stories 'सप्तपदी' was also translated by him. These translations might have inspired Sanskrit writers to deviate from Purāṇic stories, themes and personalities of Indian freedom struggle and to experiment social themes in their original writings.

Translated literature of Rabindranath Tagore had also very positive impact on their act, craft and theme. V. Raghavan (1908) prepared a collection of such translations by many scholars.[8] He himself also translated two Dramas – 'Vālmīkipratibhā' and 'Natipūjā'. K. T. Pandurangi (1718-2017) also translated four Bengali plays of Tagore under the title 'रवीन्द्ररूपकाणि'। Pullela Sriramachandradu (1927-2015) translated 'Gītāñjali in Mandrākrāntā'. KalipadaTarkacharya (1888-1972) translated the same books (1960-66, 2011) and also Tagore's poem 'गान्धारीर आवेदन' under the title 'गान्धार्यावेदनम्' (1961). Dipak Ghosh (1940-2002) translated 25 lyrics of Tagore under the title 'संस्कृतरवीन्द्रसङ्गीतम्' (1995) published by Sahitya Academy. Tanmay Kumar Bhattacharya (1971) translated 6 stories of Tagore, Narayan Dash translated 11 and Rakesh Das translated 14 stories of Tagore. All these 31 stories were published by 'संस्कृतभारती' under the title 'कवीन्द्रकथाकल्लोलिनी' (2011). Tagore's play 'अभ्यर्थना' was translated into Sanskrit by Ashoke Chatterjee (1929-1996). D. N. Chakraborty (1930-2012) translated Tagore's two plays under the titles 'वार्तागृहम्' and 'मुक्तधारा'[9]. Tagore's 'कालेर यात्रा' was translated by B.K. Matilal (1935-91) under the title 'रथरज्जुनाटकम्' (1962). Ramjiban Acharya (1937) translated a play of Tagore under the title 'मुकुटम्'. 'रवीन्द्रकुसुमाञ्जलिः' (1975) in two parts was translation by Fatiklal Das.

There were many translations of Tagore and of other Bengali writers whom we did not mention here. However, by showing some Sanskrit translations of Tagore's as tokens we let open feeling that such profuse translations of Bengali literature shaped the modern Sanskrit literature in the post-independence era of India.

Twentieth century witnessed a new stream of literature in Sanskrit. That is children's literature which almost became a part of modernity in Sanskrit. We cannot accept 'पञ्चतन्त्र' of Vishnusharma (4th or 5th century A.D.), 'वेतालपञ्चविंशतिः' of Shivadasa, 'हितोपदेश' of Narayana, 'विक्रमचरित' or 'सिंहासनद्वात्रिंशिका', 'शुकसप्तति' and 'दशकुमारचरित' as children's literature. The very style and many incidents in these texts do not seem compatible to child psychology. Digambar Mahapatra (1928-2010) has two poem collections for children – 'रङ्गरुचिरम्' (1983) and 'ललितलवङ्गम्' (2001) where in the introductions he has tried to make out what a children's literature should be. In 'रङ्गरुचिरम्', he writes –

'वयोऽनुसारि साहित्यं न हेयं काव्यकोविदैः।
अन्यथा बालकास्तस्माद् वर्जिता स्युः पदे पदे॥
प्रपाणकरसो नैव प्रौढानामिह केवलम्।
बालानामप्यसौ पेयो मधुरो मृदुचेतसाम्'॥

And in 'ललितलवङ्गम्', he says – ''सरला सुबोध्या भाषा, ललितमधुराणां पदानां प्रयोगः, वारं वारं पठनाय अभ्यासाय सरलं छन्दः हर्षखेलोपयोगी च हृदयावर्जको भावसम्भारः सर्वोपरि चेतश्चमत्कारि प्रयोगकौशलं च……''.

All these fix the criteria for children's literature which assert a very modern idea of the rights of children to be happy. In the 20th century this stream flourished in Sanskrit literature and became a mark of its modernity. We just wish to mention some books of this branch for further investigation into it. We remember the contribution of S. B. Velankar (1915) to this field. He gifted 'बालगीतम्' (Part – I : 1977 ; and Part – II : 1983), 'बालकथाकुञ्जः' (1987) and

‘बालशारदा’, Ramachandra Shandilya (1927) introduced a new form. i.e. radio-plays for children in ‘नाटकावलिः’. Omprakash Thakur (1934) wrote ‘नीतिकथामकरन्दः’ (1995), ‘प्रेरणापारिजातम्’ and ‘इन्द्रधनुः’ (collection of 75 poems). Ram Kishor Mishra wrote ‘किशोरकथावलिः’ (1988) and ‘बालनाट्यसौरभम्’ (1998). Bhaskaracharya Tripathi (1942) has a collection of stories for children entitled ‘अजाशती’ (2002). The famous lyrical poet Haridatt Sharma (1948) wrote ‘बालगीताली’ (1991). S. Jagannath (1956) published a collection of his 25 stories for children entitled ‘रुजु-रोहितम्’. His ‘टुप्कविताः’ is also a beautiful collection of poems for children. Iccharam Dwivedi (1961) wrote a collection of 20 poems for children entitled ‘बालगीताञ्जलिः’ (1995). Ganesh Gangaram Pendharkar wrote 140 verses for children in ‘शिशुलीलालाघवम्’. Banamali Biswal (1961) has ‘बालवाटिका’ (14 poems). Subhas Vedalankar (1940) wrote ‘संस्कृतशिशुगीतम्’। ‘शिशुगीतिका’ (19 verses) of Gaurikumar Brahma is enrapturing enough for children. Equally attractive and picturesque are ‘सचित्र-संस्कृत-बालगीतानि’ of Rajendra Pandya. Rudradev Tripathi has ‘विनोदकाव्यत्रयी’. Keshab Chandra Das (1954) has a novel or long story entitled ‘एकदा’ for children. Dashrath Jani has ‘कथातरङ्गिणी’ and ‘भारतदेशविधाता’ for children. Pramila Parekh wrote ‘बालसाहित्यसरिता’. Vaidya Ramswarup Shastri wrote ‘बालनीतिकथा’. Kamala Abhyankar has ‘रञ्जनकथामाला’. T. D. Mandalik has a Collection of 20 stories entitled ‘सुबोधकथासंग्रहः’, Veena Godabole has ‘बालकथामाला’. S. Venkatrama Shastri wrote 80 stories for children in

‘कथाकुसुममञ्जरी’ (2 parts). Pujalal Dolbari (1901) has a book ‘बालनाटकानि’. Sukanta Kumar Senapati wrote ‘सुकान्तकथासप्ततिः’ for children.

And Rajendra Mishra wrote ‘अभिनवपञ्चतन्त्रम्’ and ‘अभिनवशुकशारिका’. We also have seen the collection of Sanskrit stories by Harshdev Madhav entitled ‘बुभूक्षितः काकः’ (2020) and by Rishiraj Jani entitled ‘चमत्कारिकः चलदूरभाषः’ (2013). Jani has also a collection of Sanskrit poems for children entitled ‘कपिः कूर्दते शाखायाम्’ (2016). All this drive to create a prosperous field for children’s literature marked a significant progress of Sanskrit literature in the post-independence era.

Another most significant stream of Sanskrit literature after independence is Ghazal. Rajendra Mishra defines Ghazal as-

श्रावं श्रावञ्च गीतार्थं नयने वारिवर्षतः।
ध्रुवं हर्षविषादाभ्यां सचेता यदि पाठकाः॥
तत एव मया गीतिराख्यातेयं गलज्जला।
गलन्नेत्रज्जलत्वाद्वा सा गलज्जलिका पुनः॥(10)

In this way, Rajendra Mishra defines Ghazal in terms of high emotions and lyricality. This form was pioneered in Sanskrit by Bhatta Mathurarath Shastri (1869-1964). In the Part- II of the Volume -1 of his collection ‘साहित्यवैभवम्’, we get his new poetry called Ghazal which shows many of the features of Urdu Ghazal like rhyming of the end of the pādas, repetitions of lines or part of them , double line verses and agony of heart. For example-

सन्ततं सन्तापितानां हीयते रजनी न किम् ?
यापितैर्यामैरपीयं क्षीयते रजनी न किम् ? (11)

'प्रतानिनी' of Bacchulal Avasti (1918-2001) is also a famous collection of Ghazals, edited by Rajendra Mishra. Jagannath Pathak (1934-2017) has many collections of Ghazals or Ghazal - like Sanskrit verses like 'कापिशायनी' (1980), 'मृद्वीका' (1983), 'पिपासा' (1987), 'विच्छित्तिवातायनी' (1991) etc. Rajendra Mishra is the most prolific writer of Ghazals. He has six such collections like 'मत्तवारणी' (2001), 'शालभञ्जिका' (2007), 'कनीनिका'' (2008) 'हर्विधानी' (2009) and 'औदुम्बरी' (2015). His Ghazals are widely appreciated by readers because of their deep and refreshing meanings-

हृदयं मया सम्प्रेरितं पठितं त्वया वाक्याक्षरम्।
उभयोरनर्हत्वं ततः स्वयमेव सिद्धं भूतले।।
यदखण्डपुण्यफलं मया त्वद् दर्शनैरुपकल्पितम्।
तत्साम्प्रतं विक्रीयते मूल्यैर्निशासु शिखावले।।
इयमेव हन्त विडम्बना प्रीतेर्धरित्र्याकाशयोः।
नन्वन्तिकस्थावत्युभौ निभृतं न सम्मिलतो गले।।

(पठितं त्वया वाक्याक्षरम्, औदुम्बरी)

In the poetry collection, 'सम्प्लवः' (2000), of R.V. Tripathi (1949), we get eleven beautiful Ghazals. While describing sunrise, the poet discovers a lump of darkness still lurking in the present time. His suggested meanings are wavy, elongated and far-reaching -

'प्रकाशो लम्बते दूरात् तदीया दृश्यते रेखा।
तमः सञ्चीयमानं तत्तु नद्धं वर्तमानेऽस्मिन्'।।

Harshdev Madhav (1954) is also taking the post independence Sanskrit literature ahead with his exquisite ghazals spread in many of his more than two dozen books of poetry-

कार्मुके कामस्य कृत्वा, भूलते। /कं निषादं हन्ति हरिणाक्षी प्रिया।।
कुत्रचित् रिक्तोष्ठ इव मधुपो गतः। / वञ्जुकुञ्जे भ्रमति मदिराक्षी प्रिया।।
हा ! कथं मन्ये गता रात्रिः ? मया / नैव दृष्टा नैव कमलाक्षी प्रिया ।।
सैकतोऽस्मि निर्जन सरितस्तटः। / विरहजाले शिसिति मीनाक्षी प्रिया।।
वारिदैश्छन्नं नभोऽस्ति मे व्यथा।/ संगता नैवासि चपलाक्षी प्रिया।।[12]

Maharaj Deen Pandeya (1956) wrote two collections of ghazals ertitled 'मौनवेधः;' and 'काक्षेण वीक्षितम्' which also gave strength to the stream of Sanskrit ghazals in the independent India.

In the 75 years of Indian independence, we have seen many Sanskrit Mahākāvyas, khaṇḍakāvyas, Gītikāvyas, Śatakas, and drama etc. But they progressed ahead only when they left behind the themes form Rāmāyaṇa, Mahābhārata and Purāṇa etc and successfully discovered their poetic objects and objectives in common man. From that angle, stories, novels and new forms of literature brought in clear modernity to Sanskrit. Rajendra Mishra's enlightening experiments in Bhāṇas and Prahasanas gave a new edge to Sanskrit dramas. 'गीतगोविन्द' of Jayadeva was a Rāgakāvya. But R. V. Tripathi turned its architecture and undertone to a post-modern psychological poetry in his famous 'गीतधीवरम्'. Panditraja popularised the form of emotional लहरीs. But but R. V. Tripathi experimented the form with very humane pieces

like ‘धरित्रीलहरी’, ‘जनतालहरी’ and. ‘रोटिकालहरी’. We may have found a deep influence of Kalidasa in his ‘लहरीदशकम्’. However everywhere he has his own visions and modernist look. Nobody has written previously so many (74) Śatakas as Rajendra Mishra has done and has taken this ancient form to a modern parlance. However, three persons are very much visible in Modernising Sanskrit poetry. They are R.V. Tripathi, Keshab Chandra Dash and Harshdev Madhav. Rajendra Mishra gave a broad spectrum to the literature through his wide variety of forms and qualitative profuseness. His spread in the Sanskrit academia and in the society of common Sanskrit lovers is incredible. However, the above-said trio has a commendable tilt towards the modernist experimentation. Their poetry always registered a step toward. K.C.Dash attained a unique position of being the author of 13 Sanskrit novels. His poetry gave a mysterious depth to Sanskrit poems. Madhav is the most prolific author in Sanskrit poetry – mostly in free verse. His poetry ranged from the Upanisadic poems to parody and haiku etc which brought a fresh wind in the age-old garden of Sanskrit literature.

Another variety which assured modernity to Sanskrit literature is the travelogue writing. Scholars have many reasons to believe that the period of Parditaraj Jagannath heralded modernism in Sanskrit literature. We personally believe in two reasons – (1). Death of Aurangzeb facilitating the inroads for the British hegemony, culture and literature and (2) the earliest travelogue in Sanskrit named ‘आसफविलासम्’ written by Panditaraj who made a literary record, in prose, of his travel to Kashmir with Shahjahan and of his meeting the

Nawab of Kashmir Asaf Khan. This book of travel experiences vibrated the initial symptoms of modernism in Sanskrit. Travelogue then rolled on as a recognised branch of modern Sanskrit. Many wrote in this stream and made it a post- Independence identity of Sanskrit writing. We can see travelogue also started with a spiritual or religious tour. 'तीर्थाटनम्' by M. Rajagopal Chakraborty (1882-?), 'शवरीगिरितीर्थाटनम्' by P.K. Narayan Pillai (1910-?), 'यात्राविलासम्' by Naval Kishor Konkar (1910-), 'सागरप्रवासः' and 'अजन्तादर्शनम्' of Rudradev Tripathi (1925-?), 'थाइदेशविलसितम्' (1979) by Satyavrat Shastri (1930-2022), 'मदीया तीर्थयात्रा' (1990) of Padma Shastri (1935), 'पाश्चात्यसंस्कृतम्' (2003) and 'ऋषियाशतकम्' (2003) of Pt. Digambar Mohapatra (1928-2009), 'धरित्रदर्शनलहरी' (1991) of R.V. Tripathi, 'अमेरिका' (2008) of Revaprasad Dwivedi (1935-2021), the philosophical travelogue 'अयि नीलनदि' (2009) of Revaprasad Dwivedi, 'बालीद्वीपे भारतीया संस्कृतिः' (2009) by Abhiraj Rajendra Mishra are some significant creations in this field.

However there are three outstanding authors in the field of Sanskrit travelogues. Gauri kumar Brahma (1919-2006) of Bhubaneswar wrote 'नवदिल्लीदर्शनम्', 'काल्कातादर्शनम्', 'भारतगौरवम्' and 'भारतस्य देवमन्दिरमाला'. Subhash Vedalankar (Jaipur, Rajasthan) wrote 'अमरेश्वर-यात्राविलासम्', 'दक्षिणावर्त्त-विलासम्', 'वाराणसीविलासम्', 'काश्मीरवर्णनम्', 'उत्तराञ्चलचरितम्'. These two authors are the most prolific ones in this field.

Only one author who wrote an astounding and impressive travelogue Mahākāvya entitled 'वैदेशिकाटनम्' (2017)

of 21 cantos is Haridatt Sharma (1948), who is reputed for his artistic hand in writing lyrical poems in Sanskrit. This Mahākāvya is a step forward by the Sanskrit literature and it depicts his academic travels and sojoums at 16 foreign countries.

Describing his rail journey to meet his friend Professor Michael Hanh Bonn in West Germany, the Poet H.D. Sharma Says –

शनैः रेलयानं ह्यभूत् मन्दयानं / गतिश्चावरुद्धा कृतश्चावतारः।
स हानो मदीयातिथेयो मनीषी मम स्वागतं कर्तुमायात् सुतूर्णम्।
इदं मेलनं नावभूत् स्नेहसिक्तं / ह्ययं सङ्गमो भिन्नभूम्योस्तटिन्योः।।
प्रयागायितं सुस्थलं साम्प्रतं तत् / अहो ! देववाण्याः प्रभूतः प्रमाणः।।

('वैदेशिकाटनम्', Canto – 3, Verses – 21-22)

Another pleasant experiment in Sanskrit literature is that of Haiku, Sijo and Tanka done by the celebrated poet Harshdev Madhav. Tanka is a mini-lyric of 31 letters in five lines. It was popular in the medieval Japan. The letter distributions in line are 5+7+5+7+7. Such a structure in Tanka expresses feelings of heart and description of nature But the very subtlety of expression gives rise to imposing suggestions. For Example –

भातिः युवतिः / दीपावली–दीपानां / द्युति–मण्डिता। /
प्रज्वलिते च नेत्रे / प्रियतम-स्नेहेन।।

('शिरीषपुष्पेषु वृष्टिबिन्दवः',
Harshdev Madhav, P – 60)

Tanka is a very ancient Japanese form popularized in the Courts of the Mediaval kings of Japan. Towards the 7th

Century A.D., poets omitted the last two lines and made a new form called Haiku of three lines and 17 letters (5+7+5). Madhav experimented it in his Sanskrit poetry. For Example

समुद्रः शान्तः / विस्मृत्य डमरुकं / समाधौ शिवः।

(ibid, P. – 54)

There are three forms of Korean Sijo that developed in around 6th Century A.D. They are Pyongsijo, Chungsijo and Changsijo. However, the first one is the most popular one famous as Sijo in brief. It has three sentences and 45 letters. Madhav uses 15 letters in each sentence –

कुम्भस्नाने मग्ना सर्वे / क्लिन्नशरीरा जाताः।
धावन्ति गायन्ति स्नान्ति / किं स्नाताः खलु जाताः?
मयि मृत्तिका गर्भे / गङ्गाया धारा जाताः।।

(ibid, p - 74)

Nineteenth and Twentieth Century witnessed a surge of Sanskrit novels and short stories too. Viśveśvara Pandeya (1800-1850) wrote 'मन्दारमञ्जरी'. Haridasa Siddhāntavāgīśa (1876-1961) wrote a novel entitled 'सरला'. Bhatta Mathuranatha Shastri (1889-1964) wrote 'आदर्शरमणी'. C. M. Gole Wrote 'मदनलतिका' (Bombay, 1911). K. Krishnamacharya wrote two historical novels (1908-09) entitled 'वररुचिः' and 'चन्द्रगुप्तः'। However, his three novels on social themes – 'पतिव्रता', 'पाणिग्रहणम्' and 'सुशीला' – also became equally famous. Appa Shastri Rasīwadekar (1873-1913) wrote 'देवी कुमुद्वती' (1903), 'कृष्णकान्तस्य निर्वाणः' (1909) and 'इन्दिरा' (1904). 'इन्दिरा' was in the style of autobiography.

However, the Sanskritists saw the greatest Sanskrit novelist in Keshab Chandra Dash (1955) who has by now published 13 novels in Sanskrit. They are – ‘आवर्त्तम्’, ‘अञ्जलिः’, ‘अरुणा’, ‘मधुयानम्’, ‘निकषा’, ‘ओम् शान्तिः’, ‘प्रतिपत्’, ‘ऋतम्’, ‘शशिरेखा’, ‘शिखा’, ‘शीतलतृष्णा’, ‘तिलोत्तमा’ and ‘विसर्गः’।

The tradition of Sanskrit Novels is not very old. But it gave a vast space in prose for Sanskrit Writers. They openly experimented psychological, social and historical themes like the writers in other languages. Their departure from the prose style of Subandhu, Bāṇabhaṭṭa and Daṇḍin made the Sanskrit literature clearly modern. When Sanskrit poetry was still lingering with metres and ornaments, Sanskrit novelists stuck to beautiful plots and projections of human situations, temperaments and relationship.

However, Sanskit stories written in the same line became more popular and more in number. Sanskrit story collections like ‘कथाकुसुमम्’ (Kashi, 1898) of Ambikadutta Vyas, ‘कथाकल्पद्रुमः’ (Kolhapur, 1900) of Appashastri Rasīwadekar, ‘पादुकासहस्रावतारः’ (A.P., 1900) of M. M. Rangacarya, ‘कथामञ्जरी’ (Madras, 1901) of Anantacarya, ‘कथासप्ततिः’ (Mysore, 1904) of M. Ramashastri, ‘वासवदत्ता’ (Sriranganagar, 1906) of Krishnamachariyar, ‘कथारत्नाकरः’ (Mysore, 1910) of M. K. Tirunarayan, ‘चारुचरितावलिः’ (Bijanaur, 1921) of Siddhagopal, ‘कथापञ्चकम्’ (Karnataka, 1933) of Kṣamā Rao and ‘कथाकुञ्जः’ (Jaipur) of Mathuranath Shastri are some pre-independence instances.

In the post-independence era Sanskrit stories blossomed in large number and made Sanskrit Literature

closer to man and life. It is the impact of stories that pulled Sanskrit Poetry out of its classical and ornate demeanor. 'धर्मक्षेत्रे' (Jaipur, 1948) of Kalanath Shastri, 'परित्यक्ता' (Karnatak, 1953) of Kṣamā Rao, 'स्त्री-हृदयम्' (Jaipur, 1960) of Narayan Shastri, 'आत्मवेदना' (Rajasthan, 1980) of Prabhakar Shastri, 'मरुन्यग्रोधः' (Prayag, 2007) of Rajendra Mishra, 'भद्राकुण्डलकेशा' (Allahabad, 2006) of Jagannath Pathak, 'अनपेक्षितम्' (Bangalore, 2005) of Prashasyamitra Shastri, 'पथिकानुभूतिः' (Brahmapur, 2005) of R. V. Tripathi, 'अपरा यशोधरा' (Bangalore, 2005) of Gopabandhu Mishra, 'धूमायितं कैशोरम्' (Berhampur, 2005) of Banamali Biswal, 'प्रेमात्मनः प्रतिशोधः' (Berhampur, 2005) of Narayan Dash, 'किंवदन्ति' (Odisha, 2006) of Harshdev Madhav, 'श्यामली' (Kolkata, 2008-09) of Tarapada Bhattacharya, 'सुखं हि मिलिते तन्त्रे' (Delhi, 2016) of Pramod Kumar Nayek, 'पुटककारस्य पुत्रः', 'अज्ञात-वन-वैश्वानरः', 'अस्ताचलस्य चन्द्रिका' and 'ग्रामस्य नाम घटग्रामः' of Arun Ranjan Mishra are same stories that generated new ripples in Sanskrit literature. The progress of modernity became more visible with profuse publication of the collections of Sanskrit short stories like 'कथामुक्तावली' (Bombay, 1955) of Kshama Rao, 'इक्षुगन्धा' (Allahabad, 1986), 'राङ्गडा' (1992), 'चित्रपर्णी' (1999), 'पुनर्नवा' (2008), 'अभिनवपञ्चतन्त्रम्' (2009), 'कान्तारकथा' (2009) and 'छिन्नमस्ता' (2010) etc. of Rajendra Mishra, 'कथानकवल्ली' (Jaipur, 1987) and 'आख्यानवल्लरी' (Jaipur, 2002) of Kalanath shastri, 'दिशाविदिशा' (Puri, 1988), 'पताका' (1990), 'महान्' (1991), 'एकदा' (1991), 'ऊर्मिचूडा' (1995), 'शून्यनाभिः' (2000), and 'निम्नपृथिवी' (2001) of Keshab Chandra Dash, 'लघ्वी' (Bihar, 1994) of Mithilesh Kumar Mishra, 'अनाघ्रातपुष्पम्' (U.P., 1994), 'आषाढस्य प्रथमदिवसे' (2001), 'अनभिप्सितम्' (2007) and 'मामकीनं गृहम्' (2016) of Prashasyamitra Shastri, 'कथाकौमुदी' (Varanasi, 1988), 'श्वेतदूर्वा' (1997), 'अन्तर्धानी' (2005),

'कनकलोचनः' (2012) and 'शालिवीथी' (2019) etc. of Prabhunath Dwivedi, 'नीरवस्वनः' (Allahabad, 1998), 'बुभुक्षा' (2001) and 'जिजीविषा' (2006), etc. of Banamali Biswal, 'स्वर्गादपि गरीयसी' (Odisha, 1998), 'उवाच कण्डुकल्याणः' (1998) and 'कथासप्ततिः' (2003) etc. of Pramod kumar Nayek, 'स्मितरेखा' (2011), of Radhaballav Tripathi, 'गङ्गे च यमुने चैव' (W.B. 2001), 'हत्याकारी कः' (2003), 'लज्जा' (2009) 'नरेन्द्रपुरस्य रेलस्थानकम्' (2015) of Narayan Dash, 'छिन्नच्छाया' (Vadodara, 2005) of Rabindra Kumar Panda in the post– independence period.

However, Sanskrit literature entered into the era of post – modernism very clearly in 2018 when 'तव जवाधरमन्मयरेखासु' (Kolkata) of Arun Ranjan Mishra was published. This author also wrote 'नेत्रप्रान्ते निस्पन्दसमयः' (Kolkata, 2019), 'शून्ये मेघगानम्' (Delhi, 2021) and 'कज्जलसूर्येऽर्धदृश्या' (Delhi, 2022). With the rise of electronic media and gadgets, the world became one and different. Fancy and fantasy became friends to reality. As the first post-modernist writer of these collections of poems, Mishra pointed the reality of life and relationship in virtual colors and gave the readers a poetic delight which, they feel, can't fully grasp in the alphabets of the real world. Post-modernism declared that too much weightage to denotation (वाच्यार्थ), metres (छन्दः) and heavy embellishments (अलंकार) divert the creative ethos and dilute the creative imaginations. The promises of Mishra's post-modernist poems are not in creating outer 'camatkāra' but in being closer to the truth of human relationships, social conditions, decadence, everyday experiences and existential predicament, maladies and ironies"[13]. Dr. Sashibhusan Mishra says about the poems of A. R. Mishra – "Any poem

read randomly can fetch an introduction to a higher poetic sensibility enriched with a rare artistic finesse."[14] He again says – "The poet intertwins similes and metaphors in order to give vent to the overwhelming emotions of heart. Beauty of his diction of words in such cases makes the hearts of readers captive of their own parallel feelings."[15] The poet employs his chosen fancies which are very new in contemporary poetry. They take the connoisseurs to novel dimensions of fancying and composing'[16] Dr. Sukanya Bhattacharjee writes about Mishra – "His poetry is replete with the excellence of the semantic crafts and numerous enlightening images of the human subconscious afflicted with the pangs and joys of love. He uses his love theme in the quest of the self-identity of man and more than that he uses aesthetic enjoyment as a means of spiritual unfoldment. The verbal sculptures in his poems are far different from the traditional use of words. Rather he easily takes his readers to the very essence of their existence and their divine goals"[17]

Professor Jayanti Tripathy says about the post-modernistic nature of the poems of A. R. Mishra – "A reader has to understand the death of signs or the words completely directed to new meanings. With such diversions of meanings, a surprising and yet pleasing beauty in his poems can be easily discovered. His words are not signs or signifiers. Rather his words in any poem are honey and even wine."[18]

Since dhvani or the suggestive beauty of meaning is the main characteristics of the post-modernism, the poems of Mishra led the Sanskrit Literature of the 21st Century to a new height. Professor Jayanti Tripathy says - "Out and out, A.R. Mishra is an impeccable poet of dhvani. He hardly

depends on the strength of denotative level of meaning, because he knows he is going to write new poetry. But this endeavour does not seem to be a conscious effort of him. Dhvani is the inseparable trait in his poetry.”[19]

Professor Subash Chandra Dash articulates the beginning of postmodernism in Sanskrit Literature by flooding light on A.R. Mishra’s poems - “His mellifluous diction builds the very foundation of the semantic depth and beauty of his poems. The mesmeric stretch of his emotionally refreshing stanzas are empowered with his economy of words with impeccable poetic sensibility and with a complete sense of what is poetry in the postmodern society. The poetic turn of phrases newly woven word to word compatibility, meaningfully generated pause, silence and rhythms – all these vindicate poet’s long penance, cultivation and self-refinement. Surely, he is a new generation product of the experimental school of Abhiraj Rajendra Mishra, Radhavallbh Tripathi, Keshab Chandra Dash and of Harshdev Madhav.”[20]

Thus, the penance of the great literatures in the $19^{th}$ and $20^{th}$ Century has shown sweet fruits in Sanskrit Literature of the $21^{st}$ Century.

## Notes and References


1. *भारतवर्षे आधुनिकसंस्कृतसाहित्यम्*, Subhrajit Sen, Sanskrit Pustak Bhandar, Kolkata – 700006, 2019, p. – 47.
2. ibid.
3. ibid.
4. ibid.
5. For more p.s. my book 'Contemporary Sanskrit Writings in Orissa', Pratibha Prakashan, Delhi, 2006.
6. Subhrajit Sen, op.cit, p. – 48.
7. *संस्कृतसाहित्ये पश्चिमवङ्गस्यावदानम्*, Narayan Dash, Katha Bharati, Kolkata – 700047, 2013, P – 246.
8. *संस्कृतरवीन्द्रम्*, Ed. V. Raghavan, Sahitya Academy, New Delhi, 1966. This book has around 29 works including a long list of translations of Tagore.
9. *मुक्तधारा-वार्तागृहम्*, D. N. Chakraborty, pub. by Ramesh Chandra Mitra, Calcutta, 1988.
10. *अभिराजयशोभूषणम्*, वैयन्तप्रकाशनम्, एलाहवादम्, 2006, p. – 270.
11. *साहित्यवैभवम्*, प्रथमभागे द्वितीयखण्डः, ed. R.V. Tripathi, Rashtriya Sanskrit Sansthan, 2010.
12. '*प्रिया', 'निष्क्रान्ता सर्वे*', Harshdev Madhav, Sanskrit Sahitya Academy, Gandhi Nagar, 1997, p. – 246.
13. Sashibhusan Mishra, in the Postscript to the collections '*तव जवाधरमन्मयरेखासु'*, A. R. Mishra, Banaras Marcantiles, Kolkata, 2018, P. – 131.
14. ibid. P. – 136
15. ibid. P – 139.
16. ibid. P – 140.
17. Sukanya Bhattacharjee, in the Postscript to the collection '*नेत्रप्रान्ते निष्पन्दसमयः'*, A. R. Mishra, Banaras Mercantiles, Kokata, 2019, p. – 125.
18. Jayanti Tripathi in the Postscript to '*शून्ये मेघगानम्',* A. R. Mishra, Pankaj Pustak Mandir, Delhi, 2021, p. – 140.
19. ibid. p. 142.
20. Subash Chandra Dash in the Postscript to *'कज्जलसूर्येऽर्धदृश्या*', A. R. Mishra, Pankaj Pustak Mandir, Delhi, 2022, pp 164-65.

# Contents

# संस्कृतजगति तारानाथतर्कवाचस्पतेः अवदानम्

डा. सुदीप-मण्डलः

## उपोद्घातः

पाणिनीयव्याकरणेन यथा असाधुशब्देभ्यः साधुशब्दाः पृथक्क्रियन्ते तथैव भाषायाः दार्शनिकं तत्त्वमपि प्रतिपाद्यते। मानवबुद्ध्या सम्पन्नेषु आश्चर्यप्रदायकेषु बृहत्स्मृतिस्तम्भेष्वेका अष्टाध्यायी इत्यत्र नास्ति सन्देहः[1]। वङ्गप्रदेशे सप्तदशशतके अष्टादशशतके वा पाणिनीयव्याकरणस्य चर्चा तथा नासीत्। तस्मिन् काले तु कातन्त्रम्, मुग्धबोधः, सारस्वतं चेत्यादीनां व्याकरणशास्त्राणां चर्चा अधिकतया आसीत्। परन्तु ऊनविंशशतकस्य प्रारम्भे पण्डितवर्गैः शोधच्छात्रैः वा पाणिनीयव्याकरणमाश्रित्य सम्यक् कार्यमारब्धम्। तेषु आचार्यः तारानाथतर्क-वाचस्पतिः अन्यतमः। स ईश्वरचन्द्रविद्यासागरस्य सुहृदपि आसीत्। तस्य प्रतिभा बहुमुखी आसीत्। संस्कृतभाषायां विविधशास्त्रेषु च तस्य अद्भुतं पाण्डित्यम् आसीत्। सिद्धान्तकौमुद्याः व्याख्यया साकं पाण्डित्यपूर्णानि कानिचन कार्याणि व्याकरणमाधारीकृत्य तेन सम्पादितानि। बहवः ग्रन्थाः, टीकाग्रन्थाश्च तेन स्वयं रचिताः। छात्राणाम् अन्येषां वा अध्ययनसौकर्याय कानिचन पुस्तकानि तेन मुद्रितान्यपि। तेषां विवरणमधः प्रस्तूयते।

## १. तारानाथतर्कवाचस्पतेः देशकालौ

पूर्ववङ्गीयस्य वरिशाल इत्याख्यस्य मण्डलस्य वैचण्डीनामके ग्रामे शास्त्रान्तरेषु कृतभूरिपरिश्रमः पण्डितवर्यः रामरामतर्कसिद्धान्तमहाभागः निवसति स्म। तस्य पूर्वजाः तु यशोहर इत्याख्यस्य मण्डलस्य सारलाभिधेये ग्रामे विद्यादानकर्मणि नियुक्ताः आसन्। एकदा वर्धमानाधिपतिना तिलकचन्द्र-वाहादुरेण कालनानामके स्थाने दीर्घिकायाः प्रतिष्ठामुपलक्ष्य देशान्तरात् पण्डितान् आहूय काचित् पण्डितसभा आयोजिता। तत्र सभास्थस्य रामरामतर्कसिद्धान्तस्य

षड्दर्शनविचारेण सर्वे पण्डिताः पराजिताः। तस्य पाण्डित्येन मुग्धः सन् वर्धमानाधिपतिः तिलकचन्द्र-वाहादुरः महता अनुरोधेन रामरामतर्कसिद्धान्तं कालनावासयोग्यं चकार। स रामरामतर्कसिद्धान्तमहाभागः वारद्वयं विवाहम् अकरोत्। प्रथमपत्न्याः गर्भात् शिवदासः इति नाम्ना एकः पुत्रः जातः, द्वे कन्ये च जाते। द्वितीयपत्न्याः गर्भात् दुर्गादासः कालिदासः इत्याख्यौ द्वौ पुत्रौ जातौ। कनिष्ठः कालिदासः शास्त्रादिषु सम्यक् ज्ञानं प्राप्य सार्वभौमः इत्याख्यां ख्यातिं लब्धवान्। यौवनारम्भे स सार्वभौमकालिदासः मेमारीरेलस्थानस्य निकटे घोषपाँचका इति ग्रामस्थस्य हलधरपाठकमहाभागस्य सुलक्षणया कन्यया माहेश्वरीदेव्या साकं विवाहमकरोत्। ततः कालक्रमेण १८१२ ईशवीयवर्षस्य नवम्बरमासे माहेश्वरीदेव्याः गर्भात् कालना इत्याख्ये स्थाने महात्मा शब्दार्थरत्नकारः तारानाथतर्कवाचस्पतिः जनिं लेभे।

तारानाथतर्कवाचस्पतिः वारद्वयं मृत्युमुखात् रक्षितः आसीत्। आदौ तारानाथः वंशेषु विविधेषु शास्त्रेषु अद्वितीयः पण्डितः जातः इति श्रुत्वा काचित् स्वसम्पर्कीया नारी तस्य भोजने विषं स्थापितवती। परन्तु काचित् प्राचीना विश्वस्था दासी तद्गूढाभिप्रायं ज्ञात्वा तारानाथं सूचितवती। ततः मृत्युमुखात् स रक्षितः। तदनन्तरं १८३८ ईशवीयवर्षस्य भाद्रमासस्य अन्तिमे कलिकातातः नौकया कालनाभिमुखं गच्छन् आसीत्। तदा सातगेछेनामकस्य ग्रामस्य समीपे नौका जलमग्ना जाता। ततः जलप्रवाहात् जयघोषनामकस्य भृत्यस्य साहाय्येन कथञ्चित् स रक्षितः। एवम्प्रकारेण वारद्वयं मृत्युमुखात् रक्षितः तारानाथतर्कवाचस्पतिः १८८५ ईशवीयवर्षस्य आषाढमासस्य सप्तमदिनाङ्के दिवा द्विवादने स्वपुत्रस्य जीवानन्दविद्यासागरस्य समक्षे पार्थिवं शरीरं त्यक्तवान्।

## २. शिक्षाजीवनम्

मातृवियोगानन्तरं पित्रा कालिदासेन पुनः दारपरिग्रहणात् आचार्यः तारानाथः मातुलालये घोषपाँचकानामके ग्रागे निवसति स्म। ततः पिता कालिदासः पञ्चवर्षीयं तारानाथं कालनामानीय खोँडाकृष्णमोहननामकस्य आचार्यस्य पाठशालायां विद्याशिक्षायै प्रेषितवान्। तस्यां पाठशालायां प्रचलिताः

पाठाः वर्षद्वयेन एव तारानाथतर्कवाचस्पतिना अधिगताः। गणितशास्त्रेऽपि तारानाथस्य तादृशी प्रतिभा आसीत् यया मुखेनैव सदुत्तरमलभत। तस्य पाण्डित्यं वीक्ष्य अधिकाः पण्डिताः अचिन्तयन् यत् बालकोऽयं भविष्यत्काले अद्वितीयः पण्डितः भविष्यतीति[2]। ततः नूतनशिक्षादाने गुरोः सामर्थ्याभावं दृष्ट्वा पित्रा कालिदासेन अष्टमवर्षीयबालः संस्कृतव्याकरणज्ञानार्जने प्रवर्तितः। कतिपयेषु वत्सरेषु पितुः ज्येष्ठतातपुत्रात् तारिणीप्रसादन्यायरत्नाच्च मुग्धबोधः, व्याकरणम्, भट्टिकाव्यम्, कुमारसम्भवम्, अमरकोषः, शिशुपालवधमित्यादिषु विषयेषु सम्यक् ज्ञानं लब्धम्। व्याकरणशास्त्रे तादृश्याः दृढायाः व्युत्पत्तेः कारणं भवति ज्येष्ठतात्पुत्रः तारिणीप्रसादन्यायरत्नः।

रामरामतर्कसिद्धान्तेन सह कलिकातासंस्कृतमहाविद्यालस्य अध्यक्ष-पदम् अलंकुर्व्वतः रामकमलसेनमहाभागस्य मित्रता आसीत्। एकदा रामकमल-महाभागेन यदा रामरामसिद्धान्तमहाभागस्य वाटी आगता आसीत् तदा तारानाथताराकान्तयोः शास्त्रार्थविचारं दृष्ट्वा अवदत् यत् “एइ दुइटि छेले लक्ष टाकार आसामी”[3] इति। लक्षार्थपरिमितौ पुरस्कारार्हौ इत्यर्थः। ततः तारानाथं कलिकातायामानीय रामकमलमहाभागः १८३० ईशवीयवर्षस्य मेमासस्य दशमदिनाङ्के अलंकारश्रेण्यां प्रावेशयत्। तदा तस्य वयः अष्टादशवर्षात् किञ्चित् न्यूनम् आसीत्। अलंकारश्रेण्यां विद्यार्जनकाले अवशिष्टेषु समयेषु प्रतिदिनं काव्यवेदान्तादिश्रेणीष्वपि ज्ञानमर्जितम्। वाचस्पतिमहाभागः काव्यशास्त्रस्याध्यापकात् जयगोपालतर्कालङ्कारमहाभागात् कतिपयेभ्यः मासेभ्यः काव्यनाटकादिषु व्युत्पत्तिं लभ्य कण्ठस्थं कृतवान् आसीत्। तस्मिन् काले पुस्तकानि अमुद्रितानि एवासन्। अतः तारानाथेन तेषां पुस्तकानां प्रतिलिपिः सम्पादिता।

तदा अलंकारश्रेण्यां विद्यार्जनकाले ज्योतिषगणितादिविषयेषु अपि अध्ययनमनिवार्यम् आसीत्। अतः तारानाथेन लीलावती, बीजगणितम्, ग्रहलाघवम्, गणिताध्यायः, सूर्य्यसिद्धान्तः, गोलाध्यायः, खगोलम् इत्यादिषु विषयेषु ज्ञानमर्जितम्। तारानाथेन वेदान्तज्ञानं तु कलिकातासंस्कृतमहा-

विद्यालयस्य वेदान्तविभागस्य अध्यापकात् नाथुरामशास्त्रिमहाभागात् लब्धम्। वेदान्तज्ञानार्जनकाले नाथुरामशास्त्रिमहाभागः तारानाथमुद्दिश्य आह "यत्र यत्र मत्सन्देहो विद्यते तत्रैव तारा पृच्छति, तारा अग्रे धावति"[4] इति। ततः १८३१ ईशवीयवर्षस्य मे-मासस्य दशमदिनाङ्गे तारानाथः न्यायवर्गं प्रविष्टवान् आसीत्। वर्षचतुष्टयाभ्यन्तरे तारानाथेन श्रेष्ठनैयायिकात् निमचाँदशिरोमणिमहाभागात् न्यायशास्त्रे व्युत्पत्तिः लब्धा। १८३५ ईशवीयवर्षस्य जनवरीमासस्य पञ्चदशदिनाङ्के महाविद्यालयस्य परित्यागकाले शिक्षापरिषदः सदस्यगणाः तारानाथाय तर्कवाचस्पति इत्याख्यामुपाधिं दत्तवन्तः। ततः काशीं गत्वा आचार्येण तारानाथेन परमहंसात् मासत्रयेण श्रीहर्षकृतं खण्डनखण्डनखाद्यम् अधितम्। पुनश्च तत्रैव अन्येभ्यः आचार्येभ्यः महाभाष्यान्तं पाणिनीयव्याकरणम्, सभाष्यं वेदान्तः, मीमांसादर्शनम्, साङ्ख्यशास्त्रम्, पातञ्जलयोगदर्शनम्, गणितम्, फलितज्योतिषं चेत्यादिषु विषयेषु व्युत्पत्तिः लब्धा। ततः शास्त्रचर्चायां काशीस्थान् पण्डितान् पराजित्य कालनामागम्य च विद्यादाने नियुक्तः अभवत्।

## ३. कृतयः

शिक्षाग्रहणादनन्तरमादौ कालनायां स्वगृहे विद्यादानकर्मणि स्वात्मानं नियोजितवान्। ततः १८४५ ईशवीयवर्षे संस्कृतमहाविद्यालये अध्यापकरूपेण तस्य नियोगः जातः। तदनन्तरं वाचस्पत्याचार्येण संस्कृतव्याकरणम्, काव्यम्, नाटकम्, अलङ्कारः, न्यायः, साङ्ख्यम्, वेदान्तः, पातञ्जलमहाभाष्यम्, मीमांसा, उपनिषद्, स्मृतिः, ज्योतिषं चेत्यादीनि दुष्प्राप्याणि बहूनि शास्त्राणि सम्पादितानि रचितानि च। केषाञ्चन पुस्तकानां वृत्तिः अपि तेन रचिता। ततः रचिताः सम्पादिताः वा ग्रन्थाः टीकाग्रन्थाः च तेन मुद्रिताः। तेषां सर्वेषां विस्तरेण संकलनं यद्यप्यशक्यं तथापि किञ्चित् विवरणं प्रदर्श्यते। तथाहि–

संस्कृतमहाविद्यालये विद्याप्रदानकाले किराताज्र्जुनीयम् शिशुपालवधम् चेति महाकाव्यौ अमुद्रितावस्थायाम् आस्ताम्। अतः छात्राणाम् अन्येषाञ्च अध्ययनसौकर्याय आचार्येण तारानाथतर्कवाचस्पतिना १८४७

ईशवीये वर्षे ग्रन्थद्वयं मुद्रितम्। तदानीं कलिकातायां काव्यद्वयस्य कविवल्लभचक्रवर्तिकृता टीका लभ्यते स्म। परन्तु तया टीकया उपकारविशेषस्य अदर्शनात् काशीतः मल्लिनाथकृतां टीकाम् आनीय वाचस्पत्याचार्येण द्वौ ग्रन्थौ मुद्रितौ। पुनश्च तदा लीलावतीबीजगणितौ अपि अमुद्रितावस्थायामासीत्। अतः छात्राणाम् अध्ययनसौकर्याय तौ ग्रन्थौ अपि मुद्रितौ। ततः १८४९ ईशवीयवर्षे वैयाकरणभूषणसारोऽपि तेन मुद्रितः।

१८५१ ईशवीये वर्षे आचार्येण तारानाथतर्कवाचस्पतिना मल्लिनाथकृत-टीकासहितं रघुवंशं कुमारसम्भवञ्च प्रकाशितम्। १८६६ ईशवीयवर्षे एतद्ग्रन्थद्वयं मल्लिनाथकृतटीकया सह पाणिनीयसूत्राद्यंशं विशेषरूपेण विचार्य द्वितीयवारं प्रकाशितम्। १८६६ ईशवीयवर्षे एव अष्टमसर्गात् सप्तदशसर्गपर्यन्तस्य कुमारसम्भवस्य मुद्रणं विहितम्।

तस्मिन्नेव वर्षे शब्देन्दुशेखरशब्दकौस्तुभवैयाकरणभूषणसारादीनां व्याकरणशास्त्राणां दुरुहविषयान् आश्रित्य सरलसंस्कृतेन शब्दार्थरत्नमिति व्याकरणग्रन्थः आचार्येण तारानाथतर्कवाचस्पतिना रचितः। ग्रन्थोऽयं पाणिनीय-सिद्धान्तैः सुगठितस्य संस्कृतव्याकरणस्य दार्शनिकं भागं प्रतिपादयति। वाक्यपदभेदेनास्य शब्दार्थरत्नग्रन्थस्य काण्डद्वयं वर्तते। तत्र वाक्यकाण्डे वाक्यसम्बन्धिविचाराः, पदकाण्डे पदसम्बन्धिविचाराः विद्यन्ते।

पुनश्च १८५१ ईशवीये वर्षे संस्कृतवाक्यरचनायाः कौशलं ज्ञातुं वङ्गभाषया वाक्यमञ्जरी इति नाम्ना पुस्तकमेकं तेन मुद्रितम्।

१८५६ ईशवीये वर्षे आचार्येण तारानाथतर्कवाचस्पतिना महावीर-चरितनामकः ग्रन्थः मुद्रितः। १८५७ ईशवीये वर्षे धनञ्जयविजयव्यायोगस्य टीकां प्रस्तूय तेन मुद्रितम्। १८५८ ईशवीये वर्षे तेन छन्दोमञ्जरी प्रकाशिता।

१८६१ ईशवीयवर्षे वाचस्पत्याचार्यः वङ्गानुवादसहितं गयामाहात्म्यं गयाश्राद्धादिपद्धतिञ्च मुद्रितवान्। ग्रन्थेऽस्मिन् पुत्रकर्तृकश्राद्धकरणम्, किं प्रयोजनञ्च हिन्दूनाम्, तद्विषया शास्त्रीययुक्तिः इत्यादयः विषयाः प्रतिपादिताः।

१८६२ ईशवीयवर्षे पाणिनिविरचितायाः सिद्धान्तकौमुद्याः सरला नाम्नी एका टीका तेन प्रस्तुता। सा च टीका भारतवर्षे योरोपखण्डे अमेरिकाप्रदेशे च अतिशयेन समादृता। तया टीकया एव वाचस्पत्याचार्यस्य माहात्म्यं वर्धितम्। एतस्याः टीकायाः सम्पादनादनन्तरं हिमालयात् सेतुबन्धरामेश्वरपर्यन्तं सर्वदेशीयाः पण्डिताः व्याकरणशास्त्रस्य अद्वितीयपण्डितरूपेण तारानाथतर्कवाचस्पति-महाभागं स्वीकुर्वन्ति स्म। पाणिनिव्याकरणाध्ययने एतेन पुस्तकेन यावत् साहाय्यं लभ्यते तावत्साहाय्यम् अन्येन केनापि पुस्तकेन नैव लभ्यते।

१८६४ ईशवीयवर्षे तेन रत्नावली मुद्रिता। १८६५ ईशवीयवर्षे ढेङ्कानलाधिपतेः आदेशानुसारेण मधुसूदनसरस्वतीप्रणीतस्य सिद्धान्तविन्दु-नामकस्य ग्रन्थस्य प्रतिपाद्यं विषयमाश्रित्य संक्षेपेण सरलसंस्कृतेन च दशदिवसाभ्यन्तरे तेन सिद्धान्तविन्दुसारनाम्नी एका टीका रचिता। तां टीकामवलोक्य पूज्यपादः तर्कपञ्चाननमहाभागः कथयति यत् वाचस्पतिः ऐशिकशक्तिसम्पन्नः महापुरुषः, अधुना भारतवर्षे वेदान्तशास्त्रेषु वाचस्पति-समतुल्यः कोऽपि पण्डितः नैव विद्यते इति[5]। पुनश्च भगवता शङ्कराचार्येण विरचिते ब्रह्मस्तोमनामके शास्त्रे विद्यमानान् दश श्लोकान् आश्रित्य आचार्यः तारानाथतर्कवाचस्पतिः स्वयं टीकामेकां रचितवान्। तत्र ब्रह्मस्तोत्रव्याख्याग्रन्थे विशुद्धस्य ब्रह्मस्तोत्रस्य व्याख्यया वेदान्तमतानि सरलसंस्कृतेन प्रतिपादितानि।

देशेऽस्मिन् वैदिकमन्त्राणां विलोपं प्रत्यक्षीकृत्य चतुर्वेदसम्बन्धिमन्त्रान् उद्धृत्य च वाचस्पत्याचार्यः पञ्चवत्सरं यावत् कठोर-परिश्रमेण कर्म्मकाण्डपद्धतेः संस्कारहेतौ तुलादानादिपद्धतिः इत्याख्यं ग्रन्थं रचितवान्। ग्रन्थोऽयं १८६६ ईशवीयवर्षे प्रकाशितः। तस्मिन्नेव वर्षे वाचस्पत्याचार्यः वेणीसंहारः इति नाटकस्य टीकां रचितवान्।

१८६७ ईशवीयवर्षे आशुबोधनामकं नवीनमेकं व्याकरणशास्त्रं रचितम्। ग्रन्थकारस्य जीवद्दशायामस्य द्वितीयं संस्करणं जातम्।

१८६९ ईशवीयवर्षात् आरभ्य १८७० ईशवीयवर्षपर्यन्तम् अकारादि-क्रमेण शब्दस्तोममहानिधिनामकः संस्कृताभिधानग्रन्थः पञ्चखण्डेषु प्रकाशितः।

जनसनमहोदयः आङ्गलभाषया यया रीत्या अकारादिक्रमेण अभिधानग्रन्थं रचितवान्, तया रीत्या एव तारानाथतर्कवाचस्पतिमहाभागेन अकारादिक्रमेण प्रत्येकस्य शब्दस्य व्युत्पत्या सह अभिधानं रचितम्। इतः पूर्वमेतादृशम् अभिधानं न केनापि रचितम्। सम्प्रति ये भाक्ताः महात्मनः स्वकीये अभिधाने शब्दानां व्युत्पत्तीः प्रदर्शितवन्तः, ते तारानाथतर्कवाचस्पतेः पदसाधनं दृष्ट्वा तदपहृत्य च लिखितवन्तः इत्युच्यते।

१८६९ ईशवीयवर्षे अकारादिक्रमेण धातुरूपादर्शनामकः ग्रन्थोऽपि मुद्रितः। तत्र धातुरूपाणां साधनप्रक्रिया विस्तरेण सुन्दररीत्या च प्रदर्शिता। १८७० ईशवीयवर्षे स्ववृत्त्या सह मुद्राराक्षसमालविकाग्निमित्रे वृत्तरत्नाकरश्चेत्यादयः ग्रन्थाः मुद्रिताः। तस्मिन्नेव वर्षे पाणिनिना विरचितायाः अष्टाध्याय्याः सूत्राण्यपि प्रकाशितानि। १८७१ ईशवीयवर्षे स्वविरचितया टीकया सह साङ्ख्यतत्त्व-कौमुदीहितोपदेशौ, मुक्तावल्याख्यया टीकया सह भाषापरिच्छेदश्च प्रकाशिताः।

१८७२ ईशवीयवर्षे भामिनीविलासनामकं खण्डकाव्यं स्ववृत्या सह मुद्रितम्। तदनन्तरं दण्डिना विरचितस्य दशकुमारचरितस्य, बाणभट्टेन विरचितस्य कादम्बरी इति ग्रन्थस्य च टीकां विरच्य १८७२ ईशवीये वर्षे मुद्रितम्। तस्मिन्नेव वर्षे आचार्येण तारानाथतर्कवाचस्पतिना सर्व्वदर्शनसंग्रहः, कविकल्पद्रुमः, परिभाषेन्दुशेखरः, बहुविवाहवादः, गायत्रीमन्त्राणां व्याख्या च प्रकाशिताः।

ततश्च वाचस्पत्याचार्येण कठोरपरिश्रमेण अष्टादशवर्षैः वाचस्पत्याभिधानं प्रस्तुतम्। अस्य प्रथमखण्डस्य प्रकाशनं १८७३ ईशवीयवर्षे जातम्। सम्पूर्णस्य ग्रन्थस्य मुद्राङ्कणकार्यं १८८४ ईशवीये वर्षे समापितमासीत्। ५६०० पृष्ठात्मकम् तदभिधानं चारि-पेजी-फरमार-लंप्राइमार इत्यक्षरे लिखितमासीत्। अस्य मुद्रणव्ययः आसीत् अशीतिसहस्रम्। ग्रन्थेऽस्मिन् पाणिनीयप्रत्ययपरिनिष्ठितानि रूपाणि वर्तन्ते। लौकिकानां वैदिकानाञ्च शब्दानां विभिन्नार्थे प्रयोगस्थलानि सप्रमाणं लिखितानि। चार्वाकः, माध्यमिकः, योगाचारः, वैभाषिकः, सौत्रान्तिकः, आर्हतः, रामानुजः, माध्वः, पाशुपतः, शैवः, प्रत्यभिज्ञः, रासेश्वरः, पाणिनिः, न्यायः, वैशेषिकः, मीमांसा, साङ्ख्यः,

पातञ्जलः, वेदान्तः इत्यादिषु दर्शनेषु विद्यमानाः पारिभाषिकशब्दाः, केषु केषु अर्थेषु क्व च ते प्रयुक्ताः इत्यादयः विषयाः सोदाहरणं लिखिताः। श्रौतगृह्यसूत्रयोः पारिभाषिकशब्दाः अपि व्याख्याताः। अष्टादशानां पूराणानां प्रतिपाद्यविषयाः संक्षेपेण वर्णिताः। पुरा विद्यमानानां भारतीयनृपतिगणानाम् इतिहासः अपि संक्षेपेण वर्णितः। आर्यानां मतानुसारेण भूगोलः खगोलश्च वर्णितौ। तान्त्रिकाणां वैद्यानाञ्च शास्त्रसम्बन्धीयाः शब्दाः औषधप्रणयनव्यावस्था च सङ्कलिताः। ज्योतिषशास्त्रविषये आर्यादीनां प्रधानानां ज्योतिर्व्वेत्तादीनां मतान्यपि सङ्कलितानि। फलितज्योतिषम्, गणितज्योतिषम्, राजनीतिशास्त्रम्, अलङ्कारशास्त्रम्, छन्दःशास्त्रम्, सङ्गीतशास्त्रम्, धनुर्वेदशास्त्रम्, पाकशास्त्रम्, शिक्षाशास्त्रम्, कल्पशास्त्रम्, निरुक्तशास्त्रम्, अश्वशास्त्रम्, हठयोगशास्त्रम्, वास्तुशास्त्रम् इत्यादिषु शास्त्रेषु विद्यमानाः पारिभाषिकशब्दाः अप्यत्र वर्णिताः। अनेन ग्रन्थेन एव वाचस्पत्याचार्यस्य सर्वेषु शास्त्रेषु सम्यक् अधिकारः आसीदित्येतत् ज्ञायते। ततः १८७३ ईशवीये वर्षे लिङ्गानुशासनं प्रस्तूय मुद्रितम्।

### ४. उपसंहारः

वाचस्पत्याचार्यस्य शिक्षाजीवनं कृतीः च पर्यालोच्य एतदेव ज्ञायते यत् सर्वेषु शास्त्रेषु तस्य सम्यक् अधिकारः आसीदिति। शास्त्ररचनायाम्, टीकारचनायाम्, मुद्रणकार्ये च तस्य महत् सामर्थ्यम् आसीत्। न केवलं शास्त्रादिरचनायां मुद्रणकार्ये वा अपि तु पाककर्मादिष्वपि तस्य पटुता आसीत्। रन्धनकार्ये तस्य तादृशी अलौकिकी क्षमता आसीत् यया बह्वीषु चुल्लिषु होराचतुष्टयेन स्वयं द्वाविंशतिप्रकाराणां व्याञ्जनानां पाकं सम्पादयति स्म। गणितज्योतिषे, मानसिकगणनायाम्, ज्योतिषगणनायामपि स अद्वितीयः पण्डितः आसीत्। गणनया उक्तस्य वचनस्य सत्यतायां सिद्धायां सति तद्गणनायां सर्वेषां विश्वासः अपि आसीत्। वक्तृतायामपि तस्य अद्भुतं पटुत्वम् आसीत्। शास्त्रेण अखण्डया युक्त्या वा तारानाथतर्कवाचस्पतिः संस्कृतभाषया, हिन्दीभाषया, वङ्गभाषया वा सभास्थानां सहस्रजनानाम् अन्तकरणम् आकर्ष्य स्वमतानुवर्तिनं करोति स्म। कदाचित् वक्तृताप्रभावेन उच्चन्यायालये अपि जयं लब्धवान्।

तारानाथतर्कवाचस्पतिः कालनायां यदा स्वगृहे छात्रान् संस्थाप्य पाठयन् आसीत् तदा अन्येभ्यः अर्थग्रहणापेक्षया बाणिज्येन अर्थोपार्जनं श्रेयः इत्येवं विचिन्त्य विद्यादानकर्मणा साकं तन्तोः, काष्ठस्य, धान्यात् तण्डुलान् प्रस्तूय तद्विक्रयणस्य च बाणिज्यं कृतवान्। तदनन्तरं १८४५ ईशवीयवर्षात् आरभ्य प्रतिमासं ९० रूप्यकात्मकवेतनेन संस्कृतमहाविद्यालये अध्यापनकर्मणि नियुक्तः जातः। एवञ्च सर्वेषु शास्त्रेषु, रन्धनादिक्रियासु, तन्त्वादिबाणिज्यकर्मसु, नारीशिक्षादिषु, अध्यापनकर्मणि च तस्य सम्यक् अवदानम् आसीत् इत्येतत्सर्वं संक्षेपेण सरलतया समासेन च वर्णितमिति शम्।

## सहायकग्रन्थपञ्जी


1. तर्कवाचस्पतिः, तारानाथः; *शब्दार्थरत्नम्*; कलिकाता– काव्यप्रकाशयन्त्र; १८७२।
2. तर्कवाचस्पतिः, तारानाथः; *शब्दार्थरत्नम्*; शर्मा, उमाशङ्करः (सम्पादकः); वाराणसी– चौखम्बा भारती अकादमी; २०१५।
3. भर्तृहरिः; *वाक्यपदीयं प्रकीर्णकप्रकाश-नारायणहिन्दीव्याख्योपेतम्*; तिवारी, हरिनारायणः (सम्पादकः); वाराणसी – चौखम्बा संस्कृत सीरीज आफिस; २०१५।
4. भर्तृहरिः; *वाक्यपदीयं प्रतिभाव्याख्योपेतम्*; खण्डूड़ी, सत्यनारायणः (सम्पादकः); वाराणसी– चौखम्बा कृष्णदास अकादमी; २०१४।
5. Liebich, Bruno; *Reviewed Work: Konkordanz Panini-Candra vol. 5 No. 4* (English); America– Linguistic Society of America; 1929.
6. Vidyāratna, Śrīśambhucandra; *Tārānātha Tarkavācaspatira Jīvanacarita (Hindi)*; Kalikātā– Iṃrājisaṃskṛta yantra.
7.

## तथ्यसूत्राणि

---

[1] The descriptive grammar of Sanskrit, which Panini brought to its highest perfection, is one of the greatest monuments of human intelligence and (What concerns us more) an indispensable model for the description of languages. - Reviewed Work: *Konkordanz Panini-Candra* by Bruno Liebich, Page No- 268.

[2] *तर्कवाचस्पतिर जीवनचरित* इति ग्रन्थे पत्रसंख्या - ६

[3] तत्रैव पत्रसंख्या - ७

[4] तत्रैव, पत्रसंख्या - ९

[5] तत्रैव, पत्रसंख्या - ३०

# संस्कृतशास्त्रचर्चायाम् ईश्वरचन्द्रविद्यासागरस्य अवदानम्

**शङ्कर-मण्डलः**

ऊनविंशशताब्द्यां बङ्गमातुर्ये वीरसुता अखिलविश्वे स्वकर्मणा ख्यातिं लेभिरे तेषां मध्येऽन्यतमः अग्रगण्यश्च दार्शनिकप्रतिमः साहित्यरसिकः वैयाकरणप्रवरः समाजसंस्कारकः दयासागरः ईश्वरचन्द्रविद्यासागरः। संस्कृतशास्त्रस्य प्रायः सर्वेषु क्षेत्रेषु तस्य अवदानं वरीवर्तते। ननु संस्कृतव्याकरणशास्त्रस्य संस्कृतशास्त्रेष्वेव अन्तर्भावसत्त्वेऽपि कथमत्र शीर्षके तस्य पृथगुल्लेखः इति चेन्न ब्राह्मणवशिष्ठन्यायेनैतत् इत्यवधेयम्। तत्र यद्यपि वशिष्ठस्यापि ब्राह्मणेषु एव अन्तर्भावः तथापि तस्य प्राधान्यद्योतनाय पृथगुपादानम्। तथैवात्र व्याकरणशास्त्रे विद्यासागरमहोदयस्य यदवदानं तस्य प्राधान्यप्रतिपादनाय पृथगुल्लेखः। सत्यं हि तत्, यद्यपि व्याकरणशास्त्रविषये विद्यासागरमहोदयेन ग्रन्थद्वयमेव लिखितं तथापि तेन ग्रन्थद्वयेनैव बङ्गे व्याकरणचर्चाया आमूलपरिवर्तनं जातमिति कृत्वा व्याकरणशास्त्रेऽवदानं प्रधानम्। किं बहुना, तत्कृता व्याकरणकौमुदी अद्यावधि उच्चमाध्यमिकस्तरे पाठ्यत्वेन विराजते।

सोऽयम् ईश्वरचन्द्र-वन्द्योपाध्यायः १८२० ईशवीयाब्दे सेप्टेम्बरमासस्य २६तमेऽहनि मेदिनीपुरमण्डलान्तर्गते वीरसिंहग्रामे जनिं लेभे। तस्य मातुर्नाम भगवती देवी, पिता च ठाकुरदासवन्द्योपाध्यायः। रामजयतर्कभूषणो हि तस्य पितामहः। बाल्ये वयसि ईश्वरः ग्रामीणपाठशालायां तदानीन्तनबङ्गभाषायाः पाठं लब्धवान्। बाल्यादेवासीत् स कुशाग्रधीः। अत एव नवमवत्सरवयसि यदा स पाठार्थं कोलकातानगरीं प्रति पद्भ्यामेव गच्छन्नासीत् तदा पथि अवरुद्धं माइल-फलकं दर्शं दर्शं तस्य आंगलभाषासंख्यायाः ज्ञानं जातम्। स हि ईश्वरः अत्यन्तं दरिद्रः आसीत्। अतः गृहे आलोकाभावात् कदाचित् सः मार्गे मार्गालोकसाहाय्येन पाठमकरोत्। यावन्तो वा विघ्ना भवन्तु पाठविषये स सर्वदा सश्रद्धं यत्नशील आसीत्। कोलकातायाम् आगत्य १८२९ खृष्टाब्दे संस्कृतमहाविद्यालये (संस्कृत-

कलेजियेट-स्कुल) व्याकरणविभागस्य तृतीयश्रेण्यां प्रवेशं कृतवान्। तत्र तस्य सहपाठी आसीत् मदनमोहनतर्कालङ्कारः। तस्मिन्नवसरे स आंगलभाषा-प्रशिक्षणवर्गेऽपि पाठं गृहीतवान्। वार्षिकपरीक्षायां स्वकृतेः पुरस्काररूपेण वृत्तिमपि लब्धवान्। वर्षत्रयं यावत् व्याकरणपाठानन्तरं द्वादशवर्षवयसि स काव्यश्रेण्यां प्रवेशं कृतवान्। तत्र शिक्षक आसीत् पण्डितप्रवरः जयगोपाल-तर्कालङ्कारः। तत्र प्रथमे वत्सरे रघुवंश-कुमारसम्भव-राघवपाण्डवीय-प्रभृतिग्रन्थानां परीक्षायां सर्वप्रधानं स्थानमधिकृतवान्। द्वितीये वत्सरे स माघ-भारवि-अभिज्ञानशाकुन्तल-मेघदूत-उत्तरचरित-विक्रमोर्वशीय-मुद्राराक्षस-कादम्बरी-दशकुमारचरित-प्रभृति-ग्रन्थान् अपठत्। एता ग्रन्थाः प्रायः तस्य कण्ठस्था एव आसन्। अनुवादकर्मणिऽद्वितीय आसीत् सः। तस्मिन्नेव वयसि पुस्तकं न दृष्ट्वैव संस्कृतनाटकस्य आवृत्तिं करोति स्म। अनायासमेव संस्कृतभाषया प्राकृतभाषया च वाक्यालापं करोति स्म। तस्यैतादृशधीशक्तिं दर्शं दर्शं तस्य शिक्षका आहुः – "*ए बालक पृथिवीते अद्वितीय पण्डित हइबे*"[1] (अयं बालकः पृथिव्याम् अद्वितीयः पण्डितो भविष्यति इति)

इत्थं च अल्पे एव वयसि स व्याकरणकाव्यशास्त्रयोः व्युत्पत्तिं लब्धवान्। किञ्च तस्मिन्नेव वयसि संस्कृतकवितां लिखति स्म। बालः विद्यासागरः श्राद्धसभायां समागत-पण्डितैः साकं संस्कृतभाषया व्याकरणसिद्धान्तानां विचारं करोति स्म। पञ्चदशवर्षवयसि सः अलंकारश्रेण्यां प्राविशत्। एकेनैव वत्सरेण स साहित्यदर्पण-काव्यप्रकाश-रसगङ्गाधर-प्रभृतिग्रन्थान् अधीतवान्। पण्डितप्रवर-तारानाथचक्रवर्तिमहोदयस्य गृहे साहित्यदर्पणस्य आवृत्तिं क्रियमाणं तं दृष्ट्वा तत्कालीनदार्शनिकमूर्धन्यः जयनारायणतर्कपञ्चाननमहोदयः अवदत् – "*एत छोट छेले साहित्यदर्पणेर एमन सुन्दर आवृत्ति करिते पारे, इहा वड आश्चर्येर विषय।*"।[2] (अत्यन्तम् आश्चर्यकरमिदं यद् ईदृशः स्वल्पवयो बालः साहित्यदर्पणस्य इत्थमावृत्तिं करोति)

अस्मिन् समये ईश्वरचन्द्रः प्रतिमासम् अष्टरूप्यकाणि वृत्तिरूपेण प्राप्नुवन्नासीत्। बाल्यादेव स दयाया मूर्तिः आसीत्। छात्रावस्थायामेव स आत्मानं जीवसेवायां नियुक्तम् अकरोत्। वृत्तेः अंशं सञ्चित्य स दरिद्रबन्धूनां साहाय्यं

करोति स्म। अत एव स तस्य ग्रामे दयासागरनाम्ना विभूषितोऽभवत्। इयं दया न केवलं मनुष्येषु मनुष्येतरप्राणिष्वपि आसीत्।

काव्यशिक्षां समाप्य स स्मृतिकक्ष्यायां प्राविशत्। तत्र षण्मासाभ्यन्तरे स्मृतिग्रन्थानधीत्य "Law committee"- परीक्षायामुत्तीर्णोऽभवत्। ततश्च त्रिपुरामण्डले 'जज-पण्डित'-रूपेण स चितः, किन्तु पितृनिषेधानुसारं स तां वृत्तिं न स्वीकृतवान्। परन्तु दर्शनशास्त्रकक्ष्यायां पाठारम्भं कृतवान्। तत्रापि तस्य धीः पूर्ववदेव सञ्जाता। इत्थं पाठं समाप्य शंसापत्रग्रहणवेलायां सर्वे एव पण्डिताः तं "विद्यासागर" इत्याख्यया विभूषितमकुर्वन्। तस्य संस्कृतमहाविद्यालयाध्यक्ष-रसमयदत्त-स्वाक्षरितं शंसापत्रम् ईदृशमासीत्-

*"अस्माभिः श्री-ईश्वरचन्द्रविद्यासागराय प्रशंसापत्रं दीयते। असौ कलिकातायां श्रीयुतकोम्पानीसंस्थापितविद्यामन्दिरे द्वादश वत्सरान् पञ्च मासांश्चोपस्थायाधोलिखितशास्त्राण्यधीतवान्।*

| | |
|---|---|
| *व्याकरणम्* | *श्रीगङ्गाधरशर्मभिः* |
| *काव्यशास्त्रम्* | *श्रीजयगोपालशर्मभिः* |
| *अलङ्कारशास्त्रम्* | *श्रीप्रेमचन्द्रशर्मभिः* |
| *वेदान्तशास्त्रम्* | *श्रीशम्भुचन्द्रशर्मभिः* |
| *ज्योतिःशास्त्रम्* | *श्रीयोगध्यानशर्मभिः* |
| *धर्मशास्त्रम्* | *श्रीशम्भुचन्द्रशर्मभिः* |

*सुशीलतयोपस्थितस्यैतस्यैतेषु शास्त्रेषु समीचीना व्युत्पत्तिरजनिष्ट। १७६३एतच्छकाब्दीय सौरमार्गशीर्षम् विंशतिदिवसीयम्"* इति।

संस्कृतमहाविद्यालये पाठसमाप्त्यनन्तरं फोर्ट-उइलियम महाविद्यालयस्य मुख्यसचिवः मार्सेल-महोदयः विद्यासागरमहोदयं तस्य महाविद्यालयस्य प्रधानपण्डितरूपेण अभिषिक्तमकरोत्। अनन्तरं १८६४ ईशवीयाब्दे राममाणिक्यविद्यालंकारस्य परलोकगमनानन्तरं संस्कृतमहाविद्यालये सहकारिसम्पादकपदमलंकृतवान् विद्यासागरः। तत्र महाविद्यालयस्य पाठ्यविषयेषु

विविधसंस्कारम् आनीतं तेन। किन्तु केषुचिद्विषयेषु अध्यक्षेण सह मतवैषम्यात् विद्यासागरमहोदयः ततः पदत्यागं कृत्वा पुनः फोर्ट उइलियम-महाविद्यालये प्रधानलेखकः तथा कोषाध्यक्षो बभूव। तदनन्तरं पुनः संस्कृतमहाविद्यालये साहित्यशास्त्रस्य अध्यापकपदे नियुक्तोऽभवत्। अनन्तरं तदीयमहाविद्यालयस्यैव अध्यक्षपदवीमलञ्चकार। अस्मिन् समये स संस्कृतमहाविद्यालये कानिचन परिवर्तनानि कृतवान्। इतःपूर्वमं संस्कृतमहाविद्यालये ब्राह्मणाद् व्यतिरिच्य अन्येषां छात्राणां प्रवेशाधिकारो नासीत्। किन्तु विद्यासागरमहोदयः सर्वेषां वर्णानां कृते तत्र प्रवेशाधिकारं प्रदातुमचेष्टत सफलतां च अवाप। यद्यपि अस्मिन्विषये अन्यैः अध्यापकैः सह मतविरोधः सञ्जातः तथापि विद्यासागरमहोदयः प्रवलाभिः युक्तिभिः स्वपक्षं स्थापयामास। अस्मिन् महाविद्यालये ब्राह्मणभिन्नानां वर्णानां प्रवेशः भवेन्न वा इति विषये प्रतिवेदने तेन लिखितं –*"यखन वैद्य कलेजे पडिते पारे, तखन कायस्थ पडिवे ना केन? वैद्य शूद्र जाति। आर यखन शोभावाजारेर राधाकान्तदेवेर जामाता हिन्दु स्कुलेर छात्र अमृतलाल मित्र संस्कृत कलेजे पडिवार अधिकार पाइयाछे, तखन अन्यान्य कायस्थ पडिते पारिवे ना केन? कायस्थ क्षत्रिय, आन्दुलेर राजा राजनारायण बाहादुर ताहार प्रमाण करिते प्रयास पाइयाछेन। कायस्थेरा अधुना बाङ्गालार सम्भ्रान्त जाति। आपाततः कायस्थदिगके संस्कृत कलेजे लओया उचित।"*[3] इति। (वङ्गभाषायाम् ईश्वरेण यदुक्तं, तस्य संस्कृतायितरूपं तावत् - यदि वैद्यः महाविद्यालये पठितुं शक्नोति तत्कथं कायस्थोऽपि न? वैद्यस्तु शूद्र एव। अपि च यदि शोभावाजारस्थस्य राधाकान्तदेवस्य जामाता हिन्दु-विद्यालयस्य छात्रः अमृतलाल-मित्रः संस्कृतमहाविद्यालये पाठाधिकारं लब्धवान् तर्हि अन्ये कायस्थाः कथं न प्राप्नुवन्ति? कायस्थः क्षत्रियः इत्येतत् प्रमाणयितुं आन्दुलस्य राजा राजनारायणः अयतत। सम्प्रति कायस्थाः बङ्गप्रदेशे उच्चवर्णा एव। अतः आपाततः कायस्थानां संस्कृतमहाविद्यालये प्रवेशः भवतु)।

इत्थं च तदानीन्तनशिक्षाव्यवस्थायां विविधसंस्कारेण समं विविधाः बङ्गीयग्रन्थाः संस्कृतग्रन्थाश्च विद्यासागरमहोदयेन रचिता अनूदिताः सम्पादिताश्च। अस्माकं प्रबन्धस्य विषयो वर्तते – "संस्कृतशास्त्रव्याकरणचर्चायाम् ईश्वरचन्द्रविद्यासागरस्यावदानम्" इति। तत्र विद्यासागरमहोदयस्य यथा

मौलिकग्रन्था वर्तन्ते तथा अनूदिता अपि ग्रन्थाः सम्पादिताश्च केचन वर्तन्ते। अत्रेदं वक्तव्यं यत् संस्कृतशास्त्रस्य प्रचाराय प्रसाराय च तस्य साहित्यस्य आधुनिकभाषायाम् अनुवादोऽपि क्रियते चेत् तदपि संस्कृतशास्त्रेऽवदानमिति मन्यते। एवं च संस्कृतशास्त्रे विद्यासागरमहोदयस्य अवदानम् अनवद्यम् अविस्मरणीयं च। तस्यैव दिग्दर्शनम् अधस्तात् कारयिष्यते।

**संस्कृतव्याकरणशास्त्रेऽवदानम्**

"प्रथमे हि विद्वांसो वैयाकरणाः"[4] इति अभियुक्तवचनात् संस्कृतजगति वैयाकरणानां शिरसि स्थानं वर्तते। वेदाङ्गेषु व्याकरणं मुखेनोपमितं – "मुखं व्याकरणं स्मृतम्"[5] इति। वस्तुतः संस्कृतभाषाशिक्षार्थं व्याकरणस्य ज्ञानम् अत्यावश्यकम्। किन्तु संस्कृतव्याकरणस्य बहवः शाखाः विद्यन्ते। प्रत्येकमपि शाखा अतिविस्तृता गहना च। विशेषतः बालकानां कृते तु तेऽत्यन्तं दुर्बोध्या इति कृत्वा बालका यथा संस्कृतव्याकरणस्य सारं गृहीतुं शक्नुयात् इति तदर्थम् ईश्वरचन्द्रविद्यासागरमहोदयः "उपक्रमणिका", "व्याकरणकौमुदी" चेति ग्रन्थद्वयं विरचितवान्।

## 1. उपक्रमणिका

हृयदरामवन्द्योपाध्यायस्य पौत्रो राजकृष्णवन्द्योपाध्यायः हिन्दुमहा-विद्यालये आंगलभाषां पठित्वा पठनं तत्याज। तदानीं तस्य वयः पञ्चदशवर्षम्। अस्मिन् वयसि स विद्यासागरसमीपे संस्कृतं पठितुमभिलाषं कृतवान्। विद्यासागरमहोदयश्च सम्मतोऽभवत्। किन्तु सोऽचिन्तयत् यत् एतावति वयसि मुग्धबोधं पठित्वा संस्कृतं शिक्षणीयं चेत् दुष्करं तत् कर्म स्यात्। अतः स राजकृष्णमवदत् – "*देख, आमि यखन मुग्धबोध मुखस्थ करि, तखन इहार एक बर्णओ बुझिते पारि नाइ। परे यखन संस्कृतसाहित्ये अग्रसर हइलाम तखन इहार अर्थ ग्रहण करिते समर्थ हइ। तोमाके मुग्धबोध मुखस्थ कराइया संस्कृत शिखाइते हइले ए वयसे संस्कृत शिखा दाइ हइबे। अतएव तोमाके एकटा सहज उपाये व्याकरण शिखाइते हइबे।*"[6] इति। (वङ्गभाषायाम् ईश्वरेण यदुक्तं, तस्य

संस्कृतायितरूपं तावत् -शृणु, अहं यदा मुग्धबोधं कण्ठस्थमकरवम् तदास्य एकमपि वर्णं बोद्धुं नाशक्नोम्। अनन्तरं संस्कृतसाहित्यपठनसमये अस्य अर्थबोधः क्रमशः जातः। तव कृते अस्मिन् वयसि मुग्धबोधं कण्ठस्थीकृत्य संस्कृतं पठनीयं चेत् तद् दुष्करमेव स्यात्। अतः त्वां सहजोपायेन व्याकरणं पाठयितव्यम् इति)

अतः विद्यासागरमहोदयः तत्कृते सहजभाषया बङ्गलिप्यां वर्णमालाया आरभ्य धातु-प्रकृति-प्रत्ययान् यावत् मुग्धबोधस्य सारांशमलिखत्। अयमेव हि उपक्रमणिकाया बीजम्। 1851 खृष्टाब्दस्य नवेम्बर मासस्य 16 तमे दिने विद्यासागरमहोदयः उपक्रमणिकाव्याकरणं मुद्रितं प्रकाशितं चाकरोत्। अस्मिन् ग्रन्थे तेन समग्रा व्याकरणप्रक्रिया केषुचित् प्रकरणेषु विभक्ता। यथा –

- वर्णनिर्णय
- वर्णेर उच्चारणस्थान
- सन्धिप्रकरण
- णत्वविधान
- षत्वविधान
- सुबन्तप्रकरण
- विभक्तिर आकृति
- स्वरान्त शब्द
- व्यञ्जनान्त शब्द
- सर्वनाम
- संख्यावाचक
- अव्ययशब्द
- स्त्रीलिङ्गप्रत्यय
- कारक
- अर्थविशेष ओ शब्दविशेषयोगे विभक्तिनिर्णय
- विशेष्य विशेषण
- तिङन्तप्रकरण
- अकर्मकक्रिया
- सकर्मकक्रिया
- धातुरूप
- कर्तृवाच्य
- कर्मवाच्य
- भाववाच्य
- कृदन्त
- समास
- तद्धितप्रत्यय
- देवनागरवर्णपरिचय

संस्कृतपाठअस्य ग्रन्थस्य प्रस्तावनायां विद्यासागरमहोदयेनोक्तं – "*इहा पाठ करिया संस्कृत व्याकरणे व्युत्पत्ति जन्मिबेक ना, यथार्थ बटे, किन्तु उपदेश सापक्ष हइया, सहज संस्कृत ग्रन्थ सकल सहजे अध्ययन करिबार क्षमता जन्मिबेक, सन्देह नाइ*"[7] इति। (वङ्गभाषायाम् ईश्वरेण यदुक्तं, तस्य संस्कृतायितरूपं तावत् - एतत्पठित्वा संस्कृतव्याकरणे व्युत्पत्तिः आगमिष्यति इति सत्यं, किन्तु यथार्थतया उपदिषटं चेत् सहजसंस्कृतग्रन्थानाम् अध्ययनशक्तिः निःसन्देहम् जनिष्यति इति)। अत्यन्तं सरलभाषयात्र तेन व्याकरणस्य प्रायः सर्वमेवोपनिबद्धं यद्धि प्राथमिकस्तरीयाणां बङ्गीयच्छात्राणां कृते संस्कृतव्याकरणप्रवेशाय महदुपकारकमस्ति।

## 2. व्याकरणकौमुदी

सरलभाषया सहजोपायेन संस्कृतव्याकरणशिक्षाप्रदानार्थं विद्यासागर-महोदयस्य अपरा कृतिः व्याकरणकौमुदी। उपक्रमणिकाया एव उच्चतरं सोपानं हि व्याकरणकौमुदी। इयं चतुर्षु खण्डेषु विभक्ता। तत्र प्रथमं खण्डद्वयं १८५३ खृष्टाब्दे प्रकाशितं, परस्मिन्नेव वत्सरे तृतीयः खण्डः प्रकाशितः। तत्र प्रत्येकं भागे विषयानुक्रमणी इत्थं –

<u>प्रथमभागे</u>

- वर्णनिर्णय
- परिभाषा
- सन्धिप्रकरण
- णत्वविधान
- षत्वविधान
- लिङ्गप्रकरण
- विशेष्य ओ विशेषण
- सुबन्तप्रकरण

<u>द्वितीयभागे</u>

- तिङन्तप्रकरण

<u>तृतीयभागे</u>

- णिजन्तप्रकरण
- सनन्तप्रकरण
- यङन्तप्रकरण
- नामधातु

- परस्मैपदविधान
- आत्मनेपदविधान
- वाच्यपरिवर्तन
- लकारार्थनिर्णय
- कृत्प्रकरण

चतुर्थभागे

- कारक ओ विभक्ति
- तद्धित
- स्त्री-प्रत्यय
- समास

इत्थं चात्र दृश्यते यत् पाणिनीयाष्टाध्यायीमाधारीकृत्य भट्टोजिदीक्षितेन या वैयाकरणसिद्धान्तकौमुदी प्रणीतासीत् तस्याः सर्वमेव तत्त्वमत्र प्रकरणविभागं कृत्वा ईश्वरचन्द्रविद्यासागरमहोदयेन सरलया भाषया उपनिबद्धम्। यद्यपीयं पाणिनीयव्याकरणम् अनुसृत्यैव विरचिता तथापि क्वचित् बालानां सौकर्यार्थं पाणिनिविरचितदीर्घसूत्राणां संक्षिप्तरूपं प्रदत्तं, यथा – "प्रातिपदिकार्थलिङ्ग-परिमाणवचनमात्रे प्रथमा" इत्यस्य स्थाने "अभिधेयमात्रे प्रथमा" इत्युक्तम्। कदाचिद् दुर्बोध्यसूत्राणाम् अर्थं सरलीकृत्य सरलं सूत्रं रचितं, यथा – "पञ्चमी विभक्ते" इत्यस्य स्थले "निकृष्टादेकोत्कर्षे" इति। कुत्रचित् तेन संज्ञाविधायकानि स्वतन्त्रसूत्राणि प्रणीतानि। यथा – "क्रियान्वयि कारकम्", "एकपदीभावः समासः" चेत्यादिः।

इत्थं चानेन ग्रन्थेनैव विद्यासागरमहोदयस्य संस्कृतव्याकरणशास्त्रविषये अगाधं पाण्डित्यं यथानुमीयते, तथैव बङ्गीयच्छात्राणां कृते अस्य ग्रन्थस्य गुरुत्वमपि ज्ञायते। तदानीन्तनसंस्कृतमहाविद्यालये प्राथमिकव्याकरणविभागे मुग्धबोधादिदुरूहव्याकरण-ग्रन्थस्थले उपक्रमणिकायास्तथा व्याकरणकौमुद्याः पाठः समारब्धोऽभवत्। अनेन च सुकुमारमतीनामपि छात्राणां व्याकरणस्य प्राथमिकं ज्ञानम् अनायासमेव भवति।

**दर्शनशास्त्रेऽवदानम्**

ईश्वरचन्द्रविद्यासागरः यथा व्याकरणशास्त्रनिष्णातः तथा साहित्यिकमूर्धन्य आसीत्तथैव दर्शनशास्त्रेष्वपि तदीयो विक्रमोऽवलोक्यते। किञ्च स ऊनविंशशताब्द्या आधुनिकदार्शनिकरूपेणाभिधीयते चेत नैतद् दोषाय। स हि

भारतीयदार्शनिकतत्त्वानां पाश्चात्त्यदार्शनिकतत्त्वानां वा अन्धानुसरणम् अन्धानुकरणं वा न कृतवान्। यद्यपि बहुव्युत्पत्त्या साकं तेन संस्कृतमहाविद्यालये दर्शनशास्त्राणां पाठः गृहीतः तथापि दर्शनानां प्रत्येकस्मिन्नपि क्षेत्रे तस्य श्रद्धा नासीत्। केन मधुमक्षिकावत् सर्वस्माद् आहत्य नैतिकमूल्यबोधस्य दर्शनं तेन कृतं यद्धि प्रतिफलितं तद्विरचितेषु ग्रन्थेषु। यद्वा भवतु तस्य स्वकीया चिन्ता, भारतीयदर्शनसाहित्ये तस्य अवदानं तु अनस्वीकार्यम्। अद्यत्वे माधवाचार्यस्य "सर्वदर्शनसंग्रहः" कस्य न विदितः । प्रायः षोडश दर्शनसम्प्रदायाः अत्र समासेन वर्णिताः। दार्शनिकानां दर्शनपाठार्थिनां समीपेऽयं ग्रन्थः मणिरिव भाति। किन्तु अस्य ग्रन्थस्य सम्पादितं रूपं नोपलब्धमासीत् इति कृत्वा विद्यासागरमहोदयेन महता श्रमेण अयं ग्रन्थः सम्पादितः। यतो ह्यस्य पाण्डुलिपिः अत्यन्तं दुर्लभासीत्,पण्डिताः अस्य ग्रन्थस्य अस्तित्वविषये प्रायः अनभिज्ञा एवासन्। यदि हि विद्यासागरमहोदयेन अयं ग्रन्थः सम्पादितः न स्यात् तर्हि सम्भवतः अयमपि बहवः दुर्लभा ग्रन्था इव कालगहने निहितोऽभविष्यत्। यद्वा भवतु, विद्यसागरमहोदयस्य हस्तगतेऽभवताम् अस्य द्वे पाण्डुलिपी। एका आसीत् संस्कृतमहाविद्यालयस्य ग्रन्थागारे, अपरा च एशियाटिक- सोसाइटि-संस्थाने। तयोः पाठोद्धरणवेलायाम् उभयोः मध्ये बहुधा असंगतयः दृष्टाः। अतः अन्यामपि पाण्डुलिपिं विहाय अस्य सम्पादना दुष्करा स्यात् इति चिन्तयित्वा तेन इतोऽपि पाण्डुलिप्यनुसन्धानं समारब्धं, भाग्यवशात् वाराणसीतः पाण्डुलिपिः प्राप्ता। तदर्थं स ग्रन्थस्य प्रस्तावनायां कार्तज्ञ्यं विज्ञापितवान् – "I feel it my duty here to express my great obligations to Mr. Edward Hall, late of the Benares College, through whose kind exertions the Benares manuscripts were received. Without his timely aid it would have been impossible for me to execute the task I had undertaken with the accuracy requisite."[8] इति।

इत्थं च १८५८ खृष्टाब्दे बङ्गीय- एशियाटिक- सोसाइटि-तत्त्वावधानेन अयं ग्रन्थः "सर्वदर्शनसंग्रहः" प्रकाशितः विद्यासागरमहोदयेन। वक्तुं शक्यते यद् अस्य ग्रन्थस्य प्रकाशनानन्तरं बङ्गेषु तथा समग्रविश्वेषु जनाः वेदविरुद्धदर्शनानां

सम्यक् परिचयं ज्ञातवन्तः। इतः पूर्वं तु तेषां विक्षिप्ततया ईषदीषदेव प्रचारः आसीत्। तथाहि – "After the publication of his edited Sarvadarshan Sangraha the main idea of Charvak philosophy and materialist philosophy was revealed in Bengal and India as well as abroad. It was from this book that the people at home and abroad came to know about the uncompromising atheistic anti-vedic and materialist philosophy of ancient India"[9] इति। इत्थं च भारतीयदर्शनशास्त्रेऽपि ईश्वरचन्द्रविद्यासागरमहोदयस्य अवदानम् अविस्मरणीयं वर्तते।

## साहित्येऽवदानम्

व्याकरणदर्शनशास्त्रवद् संस्कृतसाहित्येऽपि ईश्वरचन्द्रविद्यासागर-महोदयस्य महदवदानं वर्तते। अत्रेदम् अवधेयं यत् केवलं संस्कृतभाषया साहित्यविरचने एव संस्कृतसाहित्येऽवदानं स्यादिति न, अपि तु तस्या भाषायाः साहित्यानां प्रचाराय प्रसाराय अनायासेन बोधाय च यदि प्रान्तीयभाषायाम् अनुवादोऽपि क्रियते, तर्हि सोऽपि संस्कृतसाहित्येऽवदानमिति गीयते। अद्यतने विश्वे कालिदासविरचितम् अभिज्ञानशकुन्तलम् कस्य न विदितम्। तत्र कारणं हि एतत् विश्वस्य सर्वासु भाषासु अनूदितम्। अत एव अनुवादोऽपि साहित्यस्य उपकारक एव। एवं संस्कृतसाहित्यस्य उपरि यदि समालोचना विधीयते, दुर्लभग्रन्थानां सम्पादना यदि क्रियते तर्हि तेऽपि साहित्येऽवदानमेव। अत्रोल्लिखितानि सर्वाणि एव कार्याणि विद्यासागरमहोदयेन कृतानि। संस्कृतसाहित्ये तस्य अवदानं केषुचिद् भागेषु विभक्तुं शक्यते-

- मौलिकग्रन्थरूपेण
- संकलितग्रन्थरूपेण
- अनूदितग्रन्थरूपेण
- सम्पादितग्रन्थरूपेण
- विक्षिप्तरचनारूपेण

## ❖ मौलिकग्रन्थाः

विद्यासागरमहोदयेन संस्कृतसाहित्यविषये संस्कृतभाषायां बङ्गभाषायां वा ये मौलिकग्रन्था विरचिताः तेषु "भूगोलखलोलवर्णनम्" प्राधान्यं भजते। १८३८ खृष्टाब्दे जन-मियर-साहेवस्य प्रस्तावेन ईश्वरचन्द्रविद्यासागरः पुराण-सूर्यसिद्धान्त-यूरोपीयमतानुसारं भूगोलखगोलविषये एकशतं श्लोकान् रचयित्वा एकशतं रूप्यकाणि पारितोषिकरूपेण प्राप्तवान्। अनन्तरं तत्रैव इतोऽपि त्रिशतं श्लोकान् संयोजयित्वा भूगोग-खगोलविषये वर्णना तेन कृता। स एव ग्रन्थः भूगोलखगोलवर्णनम् इति नाम्ना प्रसिद्धिमवाप। अयं ग्रन्थः विद्यासागरमहोदयस्य मरणोत्तरं १८९१ खृष्टाब्दे प्रकाशितः। तत्र ४०८ श्लोकाः दृश्यन्ते। अस्य ग्रन्थस्यादौ विद्यासागरमहोदयः आस्तिकतायाः गुरुभक्तेः तथा विनयस्य पराकाष्टां प्रदर्शितवान्। तथाहि –

यत्क्रीडाताण्डवाद्भाति ब्रह्माण्डमिदमद्भुतम्।
असीममहिमानं तं प्रणमामि महेश्वरम्।।[10]
जगद्वर्णनकर्मेदं शर्मणे किमु मादृशाम्।
खद्योतानां तमोनाशोद्यमो हास्याय कस्य न।।[11]
तथापि शरणीकृत्य गुरूणां चरणं परम्।
किञ्चिद्वक्ष्यामि संक्षेपात् सुधियः शोधयन्तु तत्।।[12]

अत्र प्रथमं पुराणमतानुसारं सप्तभिः परिच्छेदैः पृथक् पृथग् द्वीपवर्णनम्, अष्टमे द्वीपातिरिक्त-सत्त्वयुतभूमिभागस्य वर्णनं, भूमण्डलपरिमाणं, नवमे च खगोलवृत्तान्तवर्णनं कृतम्। तदनन्तरं सूर्यसिद्धानानुसारेण एकेन परिच्छेदेन भूगोलखगोलयोः संक्षिप्तवर्णना कृता। पुराण-सूर्यसिद्धान्तमतयोः आदौ भूगोलः अनन्तरं खगोलः। तदनन्तरम् आयाति यूरोपीयमतम्। तदनुसारं प्रथमं खगोलः तदनन्तरं भूगोलः। अस्मिन् परिच्छेदे भूगोलखगोलविषयकं यूरोपीयमतं प्राञ्जलभाषया वर्णितम्। तस्य कानिचन उदहरणानि यथा –

आधारभूतं सर्वेषां धात्रा निर्मितमम्बरम्।
तदन्तरालसंलीनो वर्तते तपतांपतिः।।[13]
नास्त्यस्य प्राणसञ्चारो नायं चलति दूरतः।
तेजोमयः पृथुर्भूमेदृशलक्षगुणेन सः।।[14]
भ्रमतो ग्रहचक्रस्य सदा मध्यस्थलस्थितः।
उष्णतातेजसी तेभ्यो ददात्येष निस्तरम्।।[15]

इत्यादीनि। एषां श्लोकानां पाठेन विद्यासागरमहोदयस्य पुराण-ज्योतिष-आधुनिकभूगोलविषये अपरिसीमं ज्ञानमनुमीयते। भूगोलविषयकोऽयं ग्रन्थः संस्कृतसाहित्यस्य अमूल्यं सम्पत्।

ईश्वरचन्द्रविद्यासागरस्य अपरा एका मौलिकरचना "संस्कृतभाषा ओ संस्कृतसाहित्य विषयक प्रस्ताव" इति। बङ्गभाषायां लिखितेऽस्मिन् ग्रन्थे तेन आदौ संस्कृतभाषाविषयकः तदनन्तरं संस्कृतसाहित्यविषयकः प्रस्तावः प्रस्तुतः। तत्र प्रथमभागे भाषाप्रस्तावे संस्कृतभाषाया रचनापद्धति-प्रत्ययसंयोजना-प्रभृतिविषये यथालोचितं तथैव तस्या महत्त्वमपि उद्घोषितम्। तथाहि – "*एरूप अभिप्रायइ नाइ ये एइ भाषाते अति विशदरूपे व्यक्त करिते पारा याय ना, एवं एरूप विषयइ नइ ये एइ भाषाते सुचारु रूपे सङ्कलित हइते पारे ना।*"[16] इति। (वङ्गभाषायाम् ईश्वरेण यदुक्तं, तस्य संस्कृतायितरूपं तावत् - नास्ति तथा कोऽपि अभिप्रायः यः अस्यां भाषायां वैशद्येन व्यक्तीकर्तुं न शक्यते, तथा च कोऽपि विषयोऽपि नास्ति यः अनया भाषया सुष्ठुरूपेण संकलितो भवितुं नार्हति इति)।

ततस्तेन सन्धिसमासादिवर्णनानन्तरं संस्कृतभाषायां शब्दप्रयोगनैपुण्यस्य यमकादिप्रयोगस्य च उदाहरणं शिशुपालवध-किरातार्जुनीय-रघुवंशप्रभृतिग्रन्थेभ्य उद्धृतम्। ततः स्वल्पेन वचसा तेन संस्कृतभाषायाः भाषातात्त्विकं विश्लेषणमपि कृतम्।

तदनन्तरं भवति संस्कृतसाहित्यविषयकः प्रस्तावः। ग्रन्थस्य अस्मिन् भागे तेन संस्कृतसाहित्यस्य प्रायः सर्वमेव समासेन आलोचितम्। तत्र

आलंकारिकाणां विभागानुसारं प्रथमं महाकाव्यानां समालोचना। महाकाव्येषु तेन रघुवंश-कुमारसम्भव-किरातार्जुनीय-शिशुपालवध-नैषधचरित-भट्टिकाव्य-राघवपाण्डवीय-गीतगोविन्द-काव्यानां समालोचना विहिता। ततः खण्डकाव्यम्। खण्डकाव्येषु मेघदूत-ऋतुसंहार-नलोदय-सूर्यशतक-काव्यानां समासतः समालोचनं कृतम्। तदनन्तरं कोषकाव्येषु अमरुशतक-शान्तिशतक-नीतिशतक-शृङ्गारशतक-वैराग्यशतक-आर्यासप्तशती-काव्यानां समालोचनं विहितम्। पश्चाद् गद्यकाव्येषु कादम्बरी-दशकुमारचरित-वासवदत्तानां समालोचनं, चम्पूकाव्यस्य वर्णनम् इत्येवं श्रव्यकाव्यप्रस्तावो विहितः। तदनन्तरं दृश्यकाव्यप्रस्तावः। तत्र अभिज्ञानशकुन्तल-विक्रमोर्वशीय-मालविकाग्निमित्र-वीरचरित-उत्तरचरित-मालतीमाधव-रत्नावली-नागानन्द-मृच्छकटिक-मुद्राराक्षस-वेणीसंहाराणां दृश्यकाव्यानां समालोचना समक्षेपतो विहिता। ततः उपाख्यानसाहित्येषु पञ्चतन्त्र-हितोपदेश-कथासरित्सागराणां समालोचनं च विहितमस्ति। अन्ततः उपसंहृतौ तेन संस्कृतभाषासाहित्यानुशीलनस्य फलोपधायकत्वं निरूपितम्। कथितं च तेन – "*इउरोपे शब्दबिद्यार ये इयती श्रीबृद्धि हइयाछे, संस्कृत भाषार अनुशीलन ताहार मूल*"[17] इति। (वङ्गभाषायाम् ईश्वरेण यदुक्तं, तस्य संस्कृतायितरूपं तावत् - इउरोपमहादेशे शब्दबिद्यायाः बिस्तारस्य श्रीवृद्धेश्च बीजं संस्कृतभाषाया अनुशीलनम् इति)।

ग्रन्थस्यास्य विज्ञापनांशे विद्यासागरमहोदयेनोक्तं – "*बस्तुतः एइ प्रस्तावे बहुबिस्तृत संस्कृत साहित्य शास्त्रेर अन्तर्गत कतिपय सुप्रसिद्ध ग्रन्थेर नामोल्लेख मात्र हइयाछे।*"[18] इति। (वङ्गभाषायाम् ईश्वरेण यदुक्तं, तस्य संस्कृतायितरूपं तावत् - वस्तुतः अस्मिन् प्रस्तावे बहुविस्तृतसंस्कृतशास्त्रान्तर्गतानां केषाञ्चन अत्यन्तं प्रसिद्धानां ग्रन्थानां नामोल्लेखमात्रं कृतं वर्तते इति)।

### ❖ संकलितग्रन्थाः

ईश्वरचन्द्रविद्यासागरमहोदयेन ये संकलितग्रन्थाः प्रकाशिताः तेषु "ऋजुपाठः" अन्यतमः। संस्कृतस्य प्रथमपाठार्थिनां कृतेऽयं ग्रन्थः

अत्यन्तमुपयोगी। तस्य ग्रन्थस्य त्रयः भागाः। तत्र पञ्चतन्त्रात् तथा महाभारतात् कानिचन उपाख्यनानि संकलय्य प्रथमो भागः लिखितः। अत्रेदं द्रष्टव्यं यत् क्वचित्तेषाम् उपाख्यानानां कश्चिदंशः परित्यक्तः क्वचित् परिवर्तितश्च। तथाह्युक्तं तेन – "*अल्पबयस्क बालकदिगेर अध्ययनोपयोगी करिबार निमित्त ऐ कयेकटि उपाख्यानेर कोनो कोनो अंश परिबर्जित ओ कोन अंश परिबर्तित हइल*"[19] इति। (वङ्गभाषायाम् ईश्वरेण यदुक्तं, तस्य संस्कृतायितरूपं तावत् - स्वल्पवस्कानां बालकानां पठनोपयोगितया क्वापि उपाख्यानानां केचन भागाः परित्यक्ताः परिवर्तिता वा इति)।

ततः रामायणस्य अयोध्याकाण्डात् कानिचन उपाख्यानानि आकलय्य ऋजुपाठस्य द्वितीयो भागः प्रकाशितः। ऋजुपाठस्य तृतीयो भागस्तु हितोपदेश-विष्णुपुराण-महाभारत-भट्टिकाव्य-ऋतुसंहार-वेणीसंहार-ग्रन्थेभ्यः संगृह्य प्रकाशितः।

### ❖ अनूदितग्रन्थाः

अनुवादकर्मणि आसीद् विद्यासागरमहोदयः सिद्धहस्तः इति तस्य अनूदितग्रन्थेभ्यः स्पष्टमनुमीयते। तेन नैकेषां संस्कृतकाव्यानां नाटकानां च बङ्गभाषया अनुवादः कृतः। संस्कृतानभिज्ञानामपि सविधे परिचयार्थं तेन कालिदासस्य "अभिज्ञानशकुन्तलम्" "शकुन्तला" इति शीर्षकेण अनूदितम्। ततः भवभूतिनः उत्तररामचरितम् तथा वाल्मीकिरामायणस्य उत्तरकाण्डमवलम्ब्य "सीतार वनवास" इति बङ्गीयोऽनूदितो ग्रन्थः प्रकाशितः। पुनः व्यासकृत-महाभारतस्य उपक्रमणिकाभागम् बङ्गभाषायाम् अनूद्य "महाभारत-उपक्रमणिकाभाग" इति ग्रन्थो विरचितः। अपि च मधुसूदनतर्कपञ्चानन-विरचितान् ११७ श्लोकान् बङ्गभाषायाम् अनूद्य तेन १८७३ खृष्टाब्दे "वामनाख्यानम्" प्रकाशितम्।

### ❖ सम्पादितग्रन्थाः

ईश्वरचन्द्रविद्यासागरमहोदयेन संस्कृतसाहित्यस्य ये ग्रन्थाः सम्पादिताः ते हि –

- किरातार्जुनीयम् (1853)
- शिशुपालवधः (1853)
- कुमारसम्भवम् (1862)
- कादम्बरी (1862)
- वाल्मीकिरामायणम् (1862)
- रघुवंशम् (1853)
- मेघदूतम् (1869)
- उत्तरचरितम् (1872)
- अभिज्ञानशकुन्तलम् (1871)
- हर्षचरितम् (1882)

एतेषु ग्रन्थेषु विद्यासागरमहोदयस्य प्रथमसम्पादितो ग्रन्थो हि रघुवंशम् इति। अत्रेदं वक्तव्यं यत् एषु ग्रन्थेषु छात्राणां कृते यद् अध्ययनायोग्यं तदत्र परित्यक्तम्। उक्तं च तेन रघुवंशस्य विज्ञापनांशे – "*यदिओ एइ संस्कृतभाषार सर्वप्रधान महाकाव्येर आदि अबधि अन्त पर्यन्त सर्वांशइ सर्वाङ्गसुन्दर तथापि कोन अंश ओ कोन कोन श्लोक एरूप आछे ये छात्रदिगेर अध्ययनयोग्य नहे। एइ निमित्त सेइ समस्त वर्जनीय अंश ओ वर्जनीय श्लोक परित्यक्त हइयाछे। रघुवंश ये प्रणालीते मुद्रित हइल कुमारसम्भव, किरातार्जुनीय, शिशुपालबध, नैषधचरित, प्रभृतिओ सेइ प्रणालीते मुद्रित हइबेक।*"[20] इति। (वङ्गभाषायाम् ईश्वरेण यदुक्तं, तस्य संस्कृतायितरूपं तावत् - यद्यपि संस्कृतभाषायाः सर्वप्रधानमहाकाव्यानाम् आरम्भान्तं सर्वाङ्गसुन्दरं तथापि केचन अंशाः तथा केचन श्लोकाः एवंरूपा विद्यन्ते ये छात्राणां पठनयोग्या न। अत एव ते वर्जनीयाः अंशाः श्लोकाश्च परित्यक्ताः। रघुवंशः यस्यां रीतौ मुद्रिता तस्यामेव रीतौ कुमारसम्भवम्, किरातार्जुनीयम्, शिशुपालवधम्, नैषधीयचरितम् इत्यादयः ग्रन्थाः मुद्रापयिष्यन्ते।)

संस्कृतमहाविद्यालयस्य दरिद्रछात्राणामपि अल्पव्ययेन सुलभार्थमेव एषां ग्रन्थानां सम्पादनमिति विद्यासागरमहोदयेन अङ्गीकृतम्। अत्रेदं द्रष्टव्यं यत् विद्यासागरमहोदयेन यावन्तः संस्कृतग्रन्थाः सम्पादिताः तेषां मुखबन्धः बङ्गभाषायामेव लिखितः। अस्य किं कारणमिति जिज्ञासायां तेन कथितं – "संस्कृत भाषाय व्युत्पत्ति थाकिलेओ बिशुद्ध संस्कृत रुचना दुरूह बलिया आमार

बिश्वास।"[21] इति। (संस्कृतभाषायां व्युत्पत्तिसत्त्वेऽपि विशुद्धसंस्कृतरचना दुरूहा एव इति मम विश्वासः इति)।

### ❖ विक्षिप्तरचनाः

विद्यासागरमहोदयः छात्रावस्थायामेव कदापि परीक्षानुरोधेन कदचिद्वा स्वेच्छया विविधान् प्रबन्धान् कवितांश्च रराच ये हि अद्यत्वे संस्कृतसाहित्ये सम्पद्रूपेण गण्यन्ते। तेषां कानिचन उदाहरणानि यथा – "सत्यकथनेर महिमा" (यद्यपि शीर्षकः बङ्गभाषायां तथापि प्रबन्धः संस्कृतेन), "विद्या" (अष्टश्लोकात्मिका विद्याविषयिणी एका कविता), "अग्नीध्र राजार उपाख्यान" – अत्र दशभिः श्लोकैः अग्नीध्रनाम्नः राज्ञः उपाख्यानं वर्णित्। पुनश्च स्वेच्छया तेन मेघविषयिणी दशश्लोकात्मिका एका कविता विरचिता। यद्यपि विद्यासागरः कविः इत्याख्यया न विभूषितः तथापि अस्या एकस्या एव कवितायाः पठनेन स्थिरीकर्तुं शक्यते यत् विद्यासागरः स्वभावकविः इति।

### उपसंहृतिः

न केवलं ग्रन्थकाररूपेणापि तु शिक्षासंस्कारकरूपेणापि पण्डित-ईश्वरचन्द्रविद्यासागरमहोदयस्य महदवदानमविस्मरणीयम्। संस्कृतमहा-विद्यालयस्य अध्यक्षावस्थायां तत्रत्यपाठ्यव्यवस्थायाम् भूयः परिवर्तनानि साधितवान् सः। दरिद्रा अपि छात्राः यथा पुस्तकानि क्रेतुं शक्नुवन्ति इति तदर्थं स्वल्पेन व्ययेन पुस्तकं मुद्रितुं संस्कृतमुद्रणयन्त्रस्य व्यवस्थापि तेन कृता। किं बहुना, स्त्रीणां बाल्यविवाहरोधार्थं, विधवाविवाहप्रचलनार्थं, पुरुषाणां बहुविवाहरोधार्थं च तदीयप्रबन्धेषु श्रुति-स्मृति-पुराणादिशास्त्रेभ्यो ये युक्तयः उपस्थापिताः ताभिः शास्त्रस्य समाजस्य च पुनर्जागरणं जातमिति शिवम्।

## सहायकग्रन्थपञ्जी

Sarkar, Biharilal. ***Vidyāsāgara***. Kolkata: Pashupati Jantra, 1329 (Bengali Year)

Basu, Devkumar. ***Vidyāsāgara Racanāvalī (vol i)***. Kolkata: Mondal Book House, 1966

Bandyopadhyaya, Haralal. ***Samagra Vyākaraṇakaumudī.*** Kolkata: Chattopadhyaya Brothers, 1962

Vidyasagara, Iswarachandra. ***Upakramaṇikā.*** Kolkata: Sanskrita Press, 1891

Vidyasagara, Iswarachandra. ***Saṃskṛta Bhāṣā o Saṃskṛta Sāhitya Biṣayak Prastāv,*** Kolkata: Sanskrit Press, 1879

Vidyaratna, Shambhuchandra. ***Vidyāsāgara-Jīvanacarita***, Kolkata: Siddheswar Press Depository, 1321 (Bengali year)

Vidyasagara, Iswarachandra. ***Ṛjupāthaṃ (vol ii).***

*Wikisource.org* – Ishwar Chandra Vidyasagar

## तथ्यसूत्राणि

[1] *विद्यासागर*, विहारीलाल सरकार, पृ.68

[2] तत्रैव, पृ.83

[3] *विद्यासागर* (पादटीका), विहारीलाल सरकार, पृ.252

[4] *ध्वन्यालोकः*, प्रथमोद्योतः

[5] *पाणिनीयशिक्षा*

[6] *विद्यासागर*, विहारीलाल सरकार, पृ.133

[7] *उपक्रमणिका* (विज्ञापनभागे), ईश्वरचन्द्र विद्यासागरः, पृ. 6-7

[8] *Preface of Savadarsanaangraha*, Iswarachandra Vidyasagara

[9] *Versatile Vidyasagar*: Ujjwal Mahato & Dilip Kumar Murmu, P.3

[10] *भूगोलखगोलवर्णनम्*, 1

[11] तत्रैव, 4

[12] तत्रैव, 5

[13] तत्रैव, 231

[14] तत्रैव, 232

[15] तत्रैव, 233

[16] *संस्कृत भाषा ओ संस्कृतसाहित्य विषयक प्रस्ताव*, ईश्वरचन्द्र विद्यासागर, पृ.5

[17] तत्रैव, पृ.86

[18] तत्रैव, पृ.3

[19] *ऋजुपाठ* (प्रथम भाग), ईश्वरचन्द्र विद्यासागर, (विज्ञापनांश)

[20] *रघुवंशम्*, ईश्वरचन्द्र विद्यासागर, (विज्ञापनांश)

[21] *विद्यासागर*, विहारीलाल सरकार,पृ.97

## महामहोपाध्यायः बापूदेवशास्त्री

**विवेकानन्द-लक्ष्मणः**

आधुनिकतायाः सर्वेषु क्षेत्रेषु सर्वेषु च सभ्यतास्तम्भेषु नितान्तमावश्यकं भवति गणितशास्त्रम्। आधुनिकं विज्ञानप्रयुक्त्यादिशास्त्रं खलु (Technology) तर्क-गणित-भौतविज्ञानादिभिर्भेदैः प्रभिन्नं वर्तते। अद्यत्वे पाश्चात्त्यदेशीया यद्यपि एतेषु विषयेषु पुरस्सराः सन्ति, तथापि प्राचीनभारतीयाः आधुनिकाश्च केचन विद्यापारंगताः गूढतत्त्वानि आविष्कुर्वन्तः स्वेषां प्रतिपत्त्या अद्यापि सरस्वत्याः कीरीटे मणिरूपाः भान्ति।

गणितशास्त्रमस्ति विज्ञानस्योन्नत्यै ध्रुवकं कञ्चित्खलु शास्त्रम्। विना गणितं विज्ञानस्याभिधानं न भवितुमर्हति, न वाधुनिकता आधुनिकतेति नाम। गणितस्य व्यवहार आविष्कारश्च भारतीयशास्त्रेषु इतस्ततः ग्रथितौ दृश्येते। यज्ञे, युद्धे, कल्पे, ज्यौतिषे, सौध-नगरादिनिर्माणे चेति नैकेषु स्थलेषु गणितस्य सुव्यवस्थितः प्रयोगः अस्मान् अद्यापि चकितचकितान् कुर्वन्ति। अद्यत्वेऽपि भारतीयवैज्ञानिकानाम् अमरकृतिरूपाः मन्दिरसौधादयः इतरवैज्ञानिकान् विमूढान् कर्तुमलम्।

एतादृशेषु वैज्ञानिकेषु गणितज्ञेषु च बहवः संस्कृतज्ञा बभूवुः। तेषां प्रमाणं कल्पज्यौतिषादिशास्त्रेषु दरीदृश्यते। परन्तु एतान् प्राचीनान् विहाय अद्यापि दृश्यते चेन्नैकान् सुप्रसिद्धान् संस्कृतज्ञान् गणितज्ञान् वयं लभामहे। एतेषु अन्यतमस्तावत् – महामहोपाध्यायः बापूदेवशास्त्री। वस्तुतः आङ्गलीयानाम् आगमनान्तरं पाश्चात्त्यगणितस्य प्रचारः समेधमानो दृश्यते स्म। एवंस्थितौ भारतीयगणित-सिद्धान्तानां पाश्चात्त्यसिद्धान्तैः सह समन्वयं साधयितुं तथा च भारतीयगणितस्य भित्तिं दृढीकर्तुं बापूदेवशास्त्रिणो महती भूमिका अद्यापि फलदायिनी वर्तते। स्वप्रतिभाबलेन भारतीयज्यौतिषस्य कश्चन दिगन्तोऽनेन उद्घाटितस्तथास्य संकीर्णतामपाकृत्य ज्यौतिषं विश्वाङ्गने प्रतिष्ठापितः अनेनैव। यद्यपि पण्डितानां

सुधाकरद्विवेदि-महाभागानां भूमिकात्र महनीयास्ति, तथापि अस्य महतः कर्मणः आरम्भः बापूदेवशास्त्रिमहोदयैरेव कृतो वर्तत इति निश्चप्रचम्।

**जन्मवृत्तान्तः**

महाराष्ट्रस्य पश्चिमे समुद्रतटे रत्नागिरिरित्याख्ये जनपदे बेलणेश्वर-देवेणालङ्कृतः वेलणेश्वराख्यो ग्रामो वर्तते। तत्रैव 'देव-पराजपे' इत्युपाधिना भूषितः दाक्षिणात्यमार्गानुगामी वेदनिष्ठो चिन्तामणि-पराजपे इत्याख्यो ब्राह्मणो निवसति स्म। चिन्तामणिपुत्रस्य सदाशिवस्यात्मजः सीतारामशास्त्री कश्चन प्रसिद्धो वेदशास्त्रज्ञो बभूव। अस्यैव सीतारामशास्त्रिणः आत्मजो भारतस्य महान् गणितज्ञः आचार्यः बापूदेवशास्त्री 1819 ईशवीयाब्दे अक्टूबर-मासस्य द्वाचत्वारिंशद्दिनाङ्के अहमदनगरमण्डलान्तर्गते काय गॉव टोका इत्याख्ये ग्रामे जनिं लेभे।

अस्य माता आसीत् सत्यभामा। बापूदेवः सत्यभामायाः प्रथमः पुत्रो नासीत्। अस्य जन्मनः प्राक् सत्यभामाया नैके पुत्राः कालकवलिता जाताः। द्विवर्षीयस्यापरस्य पुत्रस्यापि रुग्णतां दृष्ट्वा खिन्ना माता सत्यभामा कुलदेवतां नृसिंहदेवं प्रार्थयामास। नृसिंहदेवस्याशिर्वाग्भिः मातुः सत्यभामायाः क्रोडे अस्य जन्माभूदिति कृत्वा नवजातकस्य नृसिंहदेव इत्यभिधानं दत्तं परिजनैः। प्रियशब्दार्थैः वापुः इति नाम आत्मीयैरभिहितमिति कृत्वा भाविनि काले बालोऽयं बापूदेवनाम्नैव प्रसिद्धिमवाप।

**अध्ययनम्**

बापूदेवशास्त्रिणः पाठारम्भस्तावत् पुणानगर्यां जातः। प्राथमिकस्तरीयां शिक्षां माराठीभाषायां लब्ध्वा प्राचीनदाक्षिणात्यपरम्परानुसारम् अनेन अष्टाध्यायी, शिक्षाशास्त्राणि, पिङ्गलसूत्राणि, अमरकोषः, माधवनिदानं चेत्यादीनां ग्रन्थानामध्ययनं कृतम्। अनन्तरं केनापि व्याधिना पीडितस्य अस्य स्मृतिभ्रंशात् पुरातना बहवो विषयाः विस्मृताः। ततश्च उद्योगनिमित्तं पित्रा सह नागपुरं जगाम। तत्रैव रघुवंशस्य तथा लघुसिद्धान्तकौमुद्याः पाठः कृतः। ततश्च पित्रा सह पुणानगरमाजगाम। तत्र गत्वैव पाण्डुरङ्गतात्यादिवेकरमहोदयस्य

शालायां गणितशास्त्रस्याध्ययनं प्रारब्धम्। अत्रैव गणिताध्ययनेनास्य बुद्धिविकाशो जातः। किञ्चित्कालं पुणानगर्यां स्थित्वा पुनः नागपुरम् आजगाम। तत्र गणितस्य प्रौढग्रन्थान् तथा ज्योतिर्विदः पण्डितढुण्ढिराजमिश्रमहोदयात् विशेषरूपेण भास्कराचार्यरचितस्य सिद्धान्तशिरोमणिः इति गणितग्रन्थस्य लीलावती इत्यंशं तथा बीजगणितादिग्रन्थान् पपाठ। ढुण्ढिराजस्याध्यापनेन स्वल्पेषु कालेषु हिन्दुगणिते बापूदेवः सविशेषं दक्षतामर्जयामास। इतःपूर्वं तेन स्वचेष्टया यूरोपीयगणिते दक्षता समार्जिता।

बापूदेवस्य नागपुरे हिन्दुगणितशास्त्राध्ययनं कुर्वतो दैवक्रमेण मध्यभारतीयराज्याणां राजप्रतिनिधिना लान्सेलट् एट्किन्सन्महोदयेन सह परिचयोऽभूत्। संस्कृतानुरागिणोऽस्य महोदयस्य हिन्दुगणितेऽपि महान् अनुरागो बभूव। तरुणबालकस्य बापूदेवस्य गणितशास्त्रं प्रति महान्तमनुरागं व्युत्पत्तिञ्च दृष्ट्वा गणितप्रेमिकः एट्किन्सन् अपि विस्मितो जातः। विद्यानुरागिणः एट्किन्सन्महोदयस्य मनसि भावनेयं समुदिता यत् उत्कृष्टशिक्षयैव दरिद्रोऽयं बालको भारतवर्षस्य श्रेष्ठो गणितविद् भविष्यतीति। अयञ्च हिन्दुगणितस्य हृतगौरवं पुनरुद्धारयिष्यतीति।

तदानीम् एट्किन्सन्महोदयस्य कर्मस्थले सिहोरप्रदेशे कश्चन संस्कृतमहा-विद्यालयः आसीत्। तस्यैव सहयोगेन बापूदेवः सिहोरस्य संस्कृतमहाविद्यालये लब्धप्रवेशो वर्षद्वयं यावत् रेखा-बीजगणितयोः गूढाध्ययनेन शास्त्रीत्युपाधिं लेभे। सिहोरमहाविद्यालयस्य पाठागारे बह्व्यो दुर्लभा गणितशास्त्रीयाः पाण्डुलिपयः आसन्। आहारनिद्रादिकञ्च परित्यज्य बापूदेवः एतान् ग्रन्थान् निष्ठया अधीत्य हिन्दुगणिते प्रभूतं ज्ञानमर्जयामास। मध्याह्नकाले तत्र स कस्मिन्नपि विद्यालये हिन्दीभाषया बीज-रेखागणितशास्त्रे (ज्यामितेः) अध्याप्य साधारणजीवनं यापितवान्।

**अध्यापनं कृतयश्च**

१८४२ख्रीष्टाब्दस्य फेब्रुयारीमाससस्य पञ्चदशदिनाङ्के एकविंशति-वर्षात्मकोऽयं बापूदेवः एट्किन्सन्महोदयस्य साहाय्येन काशीसंस्कृतमहा-

विद्यालये रेखागणित-ज्योतिषशास्त्रयोश्च सहायकाध्यापकरूपेण नियुक्तोऽभूत्। तस्मिन् काले छात्रोपयोगिनां पुस्तकानां नितान्तमभाव आसीत्। महोमहोपाध्यायेन महता प्रयत्नेन छात्राणां कृते गणितशास्त्रीय-ग्रन्थानां रचनां सम्पादनाञ्च कृत्वा छात्राणां महान् उपकारो विहितः।

अध्यापनस्य अष्टमवर्षे व्यतीते महोदयस्य विद्वत्तालेखनशैल्यादिभिः सन्तुष्टः मेकलोड्-महोदयः 1850 ईशवीयाब्दे गणितसम्बद्धानां ग्रन्थानां रचनायै अन्वरुन्ध। तदा महोदयेन बीजगणिताख्यं हिन्दीग्रन्थं विलिख्य बम्बई-नगरात् प्राकाशयत्।

ख्रीष्टियपञ्चमशताब्द्यां वराहमिहिरेण वैज्ञानिकरीत्या विरचितः सूर्यसिद्धान्ताख्यो ज्योतिषग्रन्थोऽतीव प्रसिद्धः। ग्रन्थस्यास्य प्राचीनत्वं प्रामाणिकत्वञ्च सर्वजनविदितम्। लान् मिलट् विल्किन्सन् इत्यनेन महोदयेन कृतः ग्रन्थस्यास्याङ्गलानुवादः एसियाटिक् सोसाइटि इति प्रतिष्ठानस्य प्रयत्नेन "बिब्लिओथेका इण्डिका" इति ग्रन्थमालिकायां 1861 ख्रीष्टाब्दे द्वात्रिंशत्तम-ग्रन्थत्वेन प्राकाशि। इतःपूर्वम् एसियाटिक् सोसाइटि इत्यस्यार्थानुकूल्येन अस्याः ग्रन्थमालायाः पञ्चविंशतितमः संस्कृतग्रन्थः "सूर्यसिद्धान्तः" फिट्जेराल्ड-हल्-महोदयेन (Fitzerald Hall) सम्पादितस्ततः 1859 ख्रीष्टाब्दे प्रकाशितः। संस्करणस्यास्य सम्पादनायामपि बापूदेवस्य भूमिका अनस्वीकरणीयेति। बापूदेवस्य परममित्रेण उत्साहदात्रा तथा हितकारिणा लान्सेलट्-एट्किन्सन् महोदयेन कृतानुवादोऽपि बापूदेवेन संशोधितः सम्पादितश्चेति। 1867 ख्रीष्टाब्दे बापूदेवो भास्कराचार्यरचितस्य सिद्धान्तशिरोमणेः गणित-गोलाध्याययोः भास्कराचार्यकृतस्य व्यासभाष्यस्य स्वकृतटिप्पन्याश्च आङ्लभूमिकया सह सम्पादयन् वाराणसीतः प्राकाशयत्। "सिद्धान्तशिरोमणिरि"ति हिन्दुज्योतिष-ग्रन्थेषु अन्यतमेन प्रामाण्यग्रन्थत्वेन विदितः। ग्रन्थस्यास्य समालोचनात्मकं संस्करणं (Critical Edition) नासीत्। अमुद्रितानां बहूनां पाण्डुलिपीनां पाठपर्यालोचनेन प्रचलितेषु मुद्रितग्रन्थेषु विद्यमानान् भ्रमान् संशोध्य कठोरपरिश्रमेण बापूदेवो ग्रन्थमिमं सम्पादितवान्। 1929 ख्रीष्टाब्दे ग्रन्थोऽयं चौखाम्बाग्रन्थमालिकायां काशीतः पुनर्मुद्रितोऽभूत्।

अस्य विदुषः अनन्या कृतिस्तावत् सरलत्रिकोणमितिरित्याख्यो ग्रन्थः। पाश्चात्त्यगाणितिक-तत्त्वानि सरलतया देवभाषायाम् अभिव्यज्य ग्रन्थोऽयं ग्रथितः। अयं ग्रन्थः अद्यापि लभ्यमानस्तथा स्वरीत्या गरिममण्डितो विश्वविद्यालयेषु पाठ्यत्वेन राराज्यते। त्रिकोणमितिः इति संस्कृतगणितग्रन्थः पञ्चाध्याय-समन्वितः। बनारसस्थात् गुप्त-बुक्-डिपोतः प्रकाशितस्य ग्रन्थस्य ख्याति-ख्यापनाय भूमिकायां श्रीमुरलीधरझामैथिलमहोदयेनोक्तम् – "यद्यपि सूर्यसिद्धान्तभटसिद्धान्तपञ्जसिद्धान्तिका-ब्रह्मस्फुटसिद्धान्तादिष्वपि जीवाकोटि-ज्योत्क्रमज्यातो धर्णतत्तज्जनितसंस्काराद्यवलोकनेन रेखागणितज्ञानम् इवास्यापि ज्ञानं प्राचीनसमयाद् एवास्त्येवाऽतोऽपि पाश्चात्यगणतवित्संकलितां नानाभिनव-गणितवैचित्र्यचित्रितां बृहतीं तामेव सर्वां संकलय्य प्रकाशयितुमुत्कण्ठितोऽपि गुरुजनकृतिसमुद्धरणव्रतलिप्सयाऽन्तरायित एतामेव सरलत्रिकोणमितिं संशोधयितुमारभेयम्" इति।

महोदयस्यैव प्रेरणया महद्भिः गणितज्ञैः नीलाम्बरझा-महोदयैः संस्कृत-भाषायां गोलप्रकाशः इति ग्रन्थस्य रचना कृता, यस्य प्रकाशनं काशीतः 1871 ईशवीयाब्दे महोदयस्य तत्त्वावधानेनैव जातम्। चापि अयं त्रिकोणमितिः इति ग्रन्थः पूर्वोक्तग्रन्थस्य द्वितीयो भागोऽपि भाविकाले प्रकाशितो बभूव।

हिन्दीभाषाया जनोपयोगितां पश्यता आचार्येण बापूदेवेन हिन्दीभाषायां बीजगणितम्, व्यक्तगणितम्, फलितविचारः, सायणवादानुवाद-पञ्चाङ्गो-पपादनम्[1] चेति गणितशास्त्रीया ग्रन्थाः विरचिताः। उत्तरपश्चिमाञ्चलीय-सर्वकारयोः (Govt. of North-Western Province) इच्छानुसारं बापूदेवेन हिन्दीभाषिणां विद्यार्थिनां कृते व्यक्त-बीजगणितयोः प्रथमद्वितीयखण्डौ विरचितौ। हिन्दीभाषायां बीजगणितस्य प्रथमभागस्य रचनार्थम् उत्तरपश्चिमाञ्चलयोः प्रशासकेन टमासन्-महोदयेन 1853ईशवीयाब्दे सर्वेषां सकाशे संसदि बापूदेवाय द्विसहस्रं स्वर्णमुद्राः पारितोषिकरूपेण प्रदत्ताः। पुनः बीजगणितस्य द्वितीयभागस्य रचनानन्तरं बापूदेवः मुइर-महोदयस्य सकाशात् सहस्रं स्वर्णमुद्राभिः सह शीतवस्त्रं

पारितोषिकत्वेनालभत। 1890 ख्रीष्टाब्दपर्यन्तं बापूदेवः काशीसंस्कृत-महाविद्यालये सेवारत आसीत्।

### नुतनपञ्चाङ्गस्य सूचना

भारतीय-पञ्चाङ्ग-निर्माणे बापुदेवशास्त्रिमहोदयस्य अवदानं नितरां प्रशंसनीयं स्मरणीयं चास्ति। दृक्-सिद्ध-पञ्चाङ्गम् इति अनेन कृतस्य पञ्चाङ्गस्य नाम। काशिराजस्य ईश्वरीयप्रसादनारायणस्य अनुमत्या 1838 ईशवीयाब्दे पञ्चाङ्गोऽयम् आधुनिकपर्यवेक्षणशालायाः तथा पाश्चात्त्यज्यौतिषगणनाया साहाय्येन निर्मितः। निर्माणादनन्तरं प्रकाशितोऽयं पञ्चाङ्गः तस्मिन् दिवंगतेऽपि तच्छिष्यैः श्रीचन्द्रदेवशास्त्रि-श्रीविनायकशास्त्रि-श्रीमहादेवशास्त्रि-प्रभृतिभिः 1923 ईशवीयाब्दं यावत् प्रतिवर्षमस्य प्रकाशनं विहितम्। परवर्तिनि काले बापूदेवशास्त्रिणः पुत्रेण गणपतिदेवशास्त्रिणा ग्रन्थस्यास्य किञ्चित् परिवर्तनं कृत्वा प्रकाशनमारब्धम्।

सुदीर्घकालं यावत् काश्याम् अध्यपनावसरे बापूदेवो गणितचर्चायां तथा पुस्तकरचनायाञ्च व्यापृतः कृतभूरिपरिश्रमः सन् संस्कृतहिन्दीभाषयोः बहून् गणितग्रन्थान् विरचितवान्। तस्य कृतिषु अन्यतमास्तावत्–

| **संस्कृतग्रन्थाः** | **प्रकाशकालः** |
|---|---|
| 1. सरलत्रिकोणमितिः | ----- |
| 2. सूर्यसिद्धांतः- सोपपत्तिकः | 1861 |
| 3. फलितविचारः | 1862 |
| 4. सायणवादः | 1862 |
| 5. मानमंदिरवर्णनम् | 182 |
| 6. प्राचीन-ज्योतिषाचार्याशय-वर्णनम् | 1862 |
| 7. तत्त्वविवेक-परीक्षा | 1862 |
| 8. विचित्र-प्रश्नसंग्रह: सोत्तर: | 1862 |
| 9. अतुलयन्त्रम् | 1865 |
| 10. पञ्चक्रोशियात्रानिर्णय: | 1872 |

11. नूतनपञ्चाङ्गनिर्माणम् 1875
12. पञ्चाङ्गोपपादनम् 1875
13. सिद्धांतशिरोमणि ग्रंथे चलगणितम् 1858

**हिंदीभाषायां कृताः ग्रन्थाः**

14. बीजगणित 1858
15. व्यक्तगणित 1850
16. भूगोलवर्णन 1850
17. खगोलसार 1850

**आङ्गलभाषायां सम्पादिताः ग्रन्थाः**

18. एलिमेंट्स ऑफ अरिथमेटिक (भागद्वयम्) 1875
19. एलिमेंटस् ऑफ अलजिब्रा 1875

**सुयोग्यशिष्याः**

बापूदेवशास्त्रिणो बहुषु शिष्येषु पण्डितविनायकशास्त्रिवेतालमहोदयस्य मान्यता समधिका वर्तते। तस्य शिष्येष्वयमग्रगण्य इति स्वीक्रियते। अयं ज्योतिषशास्त्रस्य प्रवीणो विद्वान् आसीत् तथा ज्योतिषस्य गणितफलितयोः उभयोरपि भागयोर्व्युत्पन्नः समासीत्। अस्य पुत्रौ तावत् श्रीनाथशास्त्री वेतालः तथा अनन्तरामशास्त्री वेतालः चास्ताम्। तत्र ज्येष्ठपुत्रः उदयान्वय-वर्णनम् इत्याख्यम् ऐतिहासिकं काव्यं तथा कनिष्ठः सज्जनेन्द्र-प्रयोग-कल्पद्रुमः इत्याख्यं ग्रन्थं जग्रन्थ। सज्जनेन्द्राख्यो ग्रन्थः व्याकरणसम्बन्धी आसीत्, येन पाणिनीयव्याकरणे प्रवेशः सुगमो भवति।

चन्द्रदेवपाण्ड्या इत्याख्योऽपि तस्यापरः खलु शिष्यः प्रकाण्डो मेधावी आसीत्।

बापूदेवशास्त्रिणः पुत्रयोः ज्येष्ठस्तावद् गणपतिदेवशास्त्री आसीत्। अनेन वाराणसीस्थे संस्कृतविश्वविद्यालये ज्योतिषविभागेऽयं गणिते पारङ्गतः अध्यापनकार्यं कुर्वन् दृक्-सिद्ध-पञ्चाङ्गस्य बहुवर्षाणि यावत् सम्पादनञ्चकार।

## विरुतानि

१८५८ ख्रीष्टाब्दे कलिकाताया एशियाटिक् सोसाइटि इत्यस्य मुखपत्रे (J.A.S.B., Vol.- 28) प्रबन्धमेकं विलिख्य बापूदेवेनेदं प्रत्यपादि यत् एकदशशताब्द्याम् उज्जयिनीवास्तव्यो भारतीयगणितज्ञो भास्कराचार्यः "विभेदकान्तरकलनविद्या" इत्यस्या आसीत् परिज्ञाता। तेन स्वकीये गणितानुसन्धानकार्ये विद्यामिमां सम्यग्रूपेण व्यवहृतवान्। बापूदेवो न केवलं गणित-शास्त्रे धुरी, चापि यूरोपीयगणितविद्यायां तस्य गभीरं ज्ञानमनस्वीकार्यम्। यूरोपीयविद्वांसो बापूदेवस्य प्रबन्धपाठेन ऋद्धा बभूवुः। अष्टादशशताब्द्यां यूरोपीयगणितज्ञानां युगान्तकारिण आविष्कारस्य फलमिति अन्तरकलनविद्या आसीदिति तेषां विश्वासोऽभूत्। गभीरपाण्डित्यपूरितस्य बापूदेवस्य मतं युरोपीयगणितज्ञैरप्यखण्डनीयमासीत्। इंलण्डस्थितस्य एशियाटिक् सोसाइटि इत्यस्य पक्षतः अध्यक्षेण भारततत्त्वविदा होरेस्-हेमान्-उइल्सन्महोदयेन एतद्विषये प्रसिद्धस्याङ्गलगणितज्ञस्य उइलियम्-स्पटिस्-ओयोड्-महोदयस्य दृष्ट्याकर्षणं कृतम्। तदा तेनोक्तं यत् बापूदेवस्याभिमतं सम्पूर्णतया भ्रान्तमिति नैव शक्यवचम्। यतो हि भास्कराचार्यस्य ज्योतिषगणनारीत्या समम् आधुनिक-यूरोपीयगणनारीत्याः सादृश्यं वरीवर्ति। आङ्गलगणितज्ञस्येदमभिमतं लण्डनस्थितायाः एशियाटि सोसाइटि इति संस्थायाः पत्रिकायां[2] प्रकाशितमभूत्। भास्कराचार्यसम्बन्धीयस्य बहुतथ्योपेतस्यास्य बापूदेवकृतस्य प्रबन्धस्य प्रकाशनं तस्य मृत्योरनन्तरं कलिकातायाम् एशियाटिक् सोसाइटि इत्यस्य पत्रिकायां जातमासीत्[3]।

बापूदेवः खलु यूरोपीयपद्धत्या परिगणनां कृत्वा संस्कृतपञ्चाङ्गं विरचयितुमासीत् सिद्धहस्त आसीत्। यूरोपीयपद्धत्या चन्द्रग्रहणस्य त्रुटिरहितां बापूदेवकृतां गणनां दृष्ट्वा विमुग्धः सन् जम्मुकाश्मीरप्रदेशयोरधिपतिः महाराजो रणवीरसिंहः तस्मै सहस्रमितमुद्राः पारितोषिकरूपेण प्रददौ।

स्वल्पे वयस्येव गणितज्ञरूपेण बापूदेवस्य यशो न केवलं देशे चापि विदेशे विस्तृतमभूत्। प्राचीनगणितज्ञेषु हिन्दुगणितस्य गौरवं प्रचारयितुं बापूदेव एवाग्रणीः

आसीदिति। सूर्यसिद्धान्तस्य आङ्गलानुवादेन तथा सिद्धान्तशिरोमणेः सम्यक्सम्पादनेन स यूरोपीयभारतविदां सकाशे नितरामादरणीयो बभूव। 1864 ख्रीष्टाब्दे ग्रेट्-ब्रिटेन्-आयारल्याण्डदेशयोः रयाल्-एशियाटिक्-सोसाइटि (Royal Asiatic Society) इति संस्थया बापूदेवोऽभूत् संस्थाया अस्या मनोनीतसदस्यः। 1868 ख्रीष्टाब्दे कलिकातास्थेन (Asiatic Society) एशियाटिक् सोसाइटि इति प्रतिष्ठानेन बापूदेवोऽनुरूपतया सभाजितः।

1869 ख्रीष्टाब्दे बापूदेवः कलिकाताविश्वविद्यालयस्य तथा एलाहवादविश्वविद्यालयस्य पारिषद्रूपेण साम्मानिकं सदस्यपदमलभत। अयमेव पण्डिताग्रगण्यः प्राच्यस्यैव पाश्चात्त्यस्यापि भूगोलस्याध्यापकत्वेन नियुक्तोऽभवत्। काशीसंस्कृतमहाविद्यालयस्य अध्यक्षचरणाः (1863-1865 ख्रीः) सुप्रसिद्धा भारतविदस्तथा संस्कृतज्ञाः डा. हेण्डरीक्-कार्नमहोदयेन (भट्ट कन्व, 1833-1917 ख्रीः) असाधारणगाणितिकप्रतिभायै गणनादक्षतायै च बापूदेवः **भारतभूषणम्** इत्युपाधिना सम्मानितः। 1878 ख्रीष्टाब्दे भारतसर्वकारो बापूदेवाय 'C.I.E. इत्युपाधिं प्रददौ। 1887 ख्रीष्टाब्दे असाधारणपाण्डित्यस्य स्वीकृतिरूपेण भारतसर्वकारेण बापूदेवः **महामहोपाध्याय** इत्युपाधिना भूषितः।

1890 ख्रीष्टाब्दस्य एप्रिलमासे बापूदेवः स्वेच्छया काशीसंस्कृतमहाविद्यालयस्य प्रधानगणिताध्यापकपदात् सेवानिवृत्तो जातः। तस्य प्रियशिष्यो महामहोपाध्यायः सुधाकरद्विवेदी (1860-1910 ख्रीः) गुरोः पदाङ्कम् अनुसृत्य तत्स्थलाभिषिक्तोऽभूत्। भाविनि काले द्विवेदी अपि देशे विदेशे च गणितज्ञरूपेण ख्यातिं लेभे। गणितशास्त्रं विहाय अन्यासु विद्यास्वपि तस्य महत्पाण्डित्यं सर्वजनविदितम्।

महोदयोऽयं दिव्यया दृष्ट्या पाश्चात्त्यगणितस्य महत्त्वमाकलय्य भारतीयज्योतिष-शास्त्रेण सह सुसम्बद्धतयान्वयञ्चकार। अत्रान्वितिस्तेनैवंरूपेण विहितः यत् कथमपि पार्थक्यमनुभवितुं न शक्यते। एवंरीत्या तदनुगामी पण्डितः सुधाकरद्विवेदी महान्तं कार्यञ्चकार। अन्ततोगत्वा 1892 ख्रीष्टाब्दस्य मध्यभागे

काश्यां बापूदेवोऽनन्तलोकं गतः। पितृपरम्परानुसारं तस्य पुत्रो गणपतिदेवशास्त्री अपि गणितज्ञरूपेण सुख्यातिमर्जयामासेति शिवम्।

**सहायकग्रन्थपञ्जी**


उपाध्यायः, बलदेवः - *काशी की पाण्डित्य परम्परा*, विश्वविद्यालय प्रकाशन, वाराणसी।

सेनगुप्त, गौराङ्गगोपाल - *स्वदेशीय भारत विद्यापथिक*, कलकाता रूप एण्ड कोम्पानी, कलकाता, 1972.

Hall, Fitzedward & Bapu Deva Sastri etal - *The Sūrya siddhānta, or, An ancient system of Hindu astronomy*, Philo Press, Amsterdam, 1974.

*Joseph W. Dauben & Christoph J. Scriba - Writing the History of Mathematics – Its Historical Development. Springer*


**तथ्यसूत्राणि**

---

[1] *पञ्जिकारचनापद्धतिः।*

[2] *Journal of Research in Ayurvedic Sciences*, 1890 ख्रीः

[3] *The journal of the Asiatic Society of Bengal* (J.A.S.B.) (Vol. 62), 1893

# स्वामी दयानन्दसरस्वती

**डा. दिलीप-पण्डा**

"विश्वानि देव सवितर्दुरितानि परासुव।
यद्भद्रं तन्न आ सुव॥" (*यजुर्वेदः*-३०/३)

पुण्यभूप्रदेशेऽस्मिन् भारतवर्षे ऊनविंशशताब्दी आसीत् नवजागरणस्य पवित्रः कालः। पवित्रेऽस्मिन् काले महान्तो नैके महापुरुषाः आविर्भूताः अभवन्। ते तु प्रातःस्मरणीयाः, नमस्याः, प्रणम्याश्च आसन्। तेषां पवित्रचिन्तनेन, सता कर्मणा भारतीयानां जीवनेषु यथा अभूतपूर्वं परिवर्तनमभवत्, तथा भारतभूप्रदेशस्य पवित्रता सम्पादिता अभवत्। महापुरुषेषु तेषु स्वामी दयानन्दसरस्वती आसीत् अन्यतमः। स्वामिनः दयानन्दस्य व्यक्तित्वं, तस्य कृतित्वं, देशसेवा, धर्मनिष्ठा, नूत्नतया वेदोद्धारः प्रभृतयो विषयाः चिरं स्मरणीयत्वेन प्रतिभान्ति। योगिवरेण ऋषिणा अरविन्दघोषमहोदयेन उक्तं "सर्वे महापुरुषाः पर्वतशिखरवत् आत्मप्रकाशमात्मदीप्तिमात्मसौन्दर्यं च पृथक्पृथग्रूपेण प्रकटयन्ति। सर्वे एव परस्परेभ्यः भिन्नरूपेण, मनोरमतया, दर्शनीयत्वेन च प्रतीता भवन्ति। परन्तु एतेषु उत्तुङ्गशृङ्गेषु सर्वापेक्षया समुन्नतः, गौरीशंकरसदृशः, अप्रतिमः, अद्भूतः, अपूर्वः महर्षिः स्वामी दयानन्दसरस्वती आसीत् बह्वायासी, तेषां बहुविधव्यक्तित्वञ्च नयनपथमायाति।"[1] तस्य जीवनमासीदद्भूतं, विचित्रमद्वितीयं, ब्रह्मचर्य्योद्दीप्तं, तपस्यावलेन कन्दितम्, आर्यज्ञानेन प्राञ्जलं, स्वर्णाभिरामं वर्णातीतं च।

स्वामिनो दयानन्दस्य जन्म फाल्गुनमासस्य कृष्णपक्षस्य दशमदिवसे, १८८१ विक्रमानुसारं १८२५ ईशवीयवर्षस्य फेब्रुयारीमासस्य द्वादशदिवसे गुर्जरप्रदेशे अभवत्। स्वामिपादानां पितुः नाम कर्षणजी तिओयारीति। स्वामिचरणः औदीच्यकूलस्य सामवेदीयः ब्राह्मणः आसीत्। पिता गुर्जरसर्वकारस्य धनादानकर्मणि नियुक्त आसीत्। तस्मात् तस्मिन् प्रदेशे स्वामिचरणानां पिता धनी, मानी, प्रतिष्ठितश्च आसीत्। तस्य कर्मपदानुसारं

सर्वकारपक्षतः तस्य सुरक्षायै सैन्याः लिपिकाश्च नियुक्ताः आसन्। कर्षणजी श्रद्धालुः, परमशिवभक्तश्च आसीत्। भक्तभाववशीभूतः स मूलशंकरः इति पुत्रस्य नामकरणमकरोत्। तस्मात् स्वामिनो दयानन्दस्य पितृप्रदत्तं नाम आसीत् मूलशंकर इति। "अष्टवर्षं ब्राह्मणमुपनयेत्"[2] इति वैदिकविध्यनुसारं मूलशंकरस्य उपनयनं वेदारम्भादिसंस्कारजातं च अष्टमे वर्षे एव सुसम्पन्नमभवत्। पितुः आदेशानुसारं च मूलशंकरः सर्वविधेषु ब्राह्मणकृत्येषु अधिकारी अभवत्। पिता निष्ठावान्, श्रद्धावान् शैव आसीत्। मूलशंकरः वैदमन्त्राणां कण्ठस्थीकरणे कृतप्रयत्नोऽभवत्। यद्यपि जन्मवंशानुसारं ते सामवेदान्तर्गता ब्राह्मणा आसन्, परन्तु शिवभक्तिवलात् मूलशंकरः प्रथमतः यजुर्वेदस्य रुद्राध्यायस्य अध्ययनं कण्ठस्थीकरणं च कृतवान्। किं बहुना, गृहे एव तेन सम्पूर्णस्य यजुर्वेदस्य कण्ठस्थीकरणं कृतम्। तस्मिन् समये तेन संस्कृतव्याकरणस्य केचन ग्रन्था अपि अधीताः। पितुः इच्छानुसारं भूतभावनस्य भूतेशस्य महादेवस्य महिमाविज्ञानार्थं मूलशंकरस्य शिवपुराणानामपि अध्ययनमभवत्। एतेन पित्रा अभीष्टं फलमपि सम्प्राप्तम्। मूलशंकरस्य श्रद्धा महादेवं प्रति क्रमेण वर्द्धमाना आसीत्। कुमारस्य निर्मलचित्ते शिवस्य महिमा विस्तारं प्राप्नोति। शिवमहिम्ना च वालकोऽभिभूत आसीत्। एवञ्च मूलशंकरः पितुः मार्गमनुगच्छन् कठोरो निष्ठावान् शिवभक्तश्चाभवत्। मूलशंकरस्तु त्रयोदशवर्षीयः वालकः। तस्मिन् समये मूलशंकरस्य पिता शिवरात्रिव्रतपालनार्थं पुत्राय आदेशं दत्तवान्। शिवरात्रिव्रते समग्रं दिवसं रात्रिकालं च व्याप्योपवासः क्रियते। रात्रिजागरणं च विधीयते, प्रहरे प्रहरे च शिवपूजनं विधीयते। शैशवकाले एतादृशं व्रतपालनम् अत्यन्तं कष्टकरमिति चिन्तं चिन्तं ममतामय्याः मातुः हृदयं विचलितमभवत्। तदा जननी मूलशंकरस्य शिवरात्रिव्रतपालनविषये असहमतिं प्रकटितवती। परन्तु तस्मिन् विषये पितुः चिन्तनमासीत् निश्चयात्मकम्। पितृप्रचोदितः मूलशंकरोऽपि शिवमहिम्नि सम्पूर्णतया श्रद्धां प्रकटितवान्। तस्मात् त्रयोदश एव वर्षे मूलशंकरः शिवरात्रिव्रतपालनं कृतवान्। आनन्देन दिवसः अतिवाहितः। सन्ध्या समागता। शिवोपासकाः शिवोपासनार्थं पूजोपकरणान्यादाय ग्रामाद्बहिः शिवमन्दिरं गतवन्तः। मन्दिरं सम्पूर्णतया समुल्लासपूर्णम्, आनन्दस्य परिवेशः सञ्जातः। केनचित् मन्त्राः पठ्यन्ते, कैश्चित् स्तोत्राणि पठ्यन्ते। क्वचिद्घन्टाध्वनिः श्रूयते,

क्वचिच्च पुनः शङ्खध्वनिः। सर्वे श्रद्धया व्रतपालनं कुर्वन्ति। प्रथमप्रहरस्य पूजा श्रद्धया, भक्त्या, भजनकीर्तनादिभिश्च समाप्ता अभवत्। द्वितीयप्रहरस्य पूजापि तथैव परिपूर्तिं सम्प्राप्ता। एवञ्च नक्तमपि प्रभातं प्रति धावति। समग्रदिवसस्य क्षुधा, तृष्णा, व्रतोपवासस्य उल्लासजनिता क्लान्तिः, निद्रादेव्याः मोहिनीमाया, शिवोपासकानां भक्तिभाषितभावना च क्रमेण निद्रागूहिता भवति स्म। अथ निद्रां दूरीकर्तुमसमर्थाः शिवोपासकाः, भक्ताः, पूजकश्च सर्वे एव निद्रां गतवन्तः। का कथा मूलशंकरस्य पितुः। परन्तु मूलशंकरः व्रतं प्रति आसीत् दृढ़प्रतिज्ञः। सदा जागरुकः आसीत् मूलशंकरः। देवालयस्य दीपशिखा यथा प्रज्वलिता, निष्कम्पा एवं मूलशंकरस्य भक्तिभावितप्रज्ञादीपोऽपि सदैव प्रज्वलितो निष्कम्पश्चासीत्। शास्त्रेषु एतदेव वर्तते संयमिपुरुषस्य लक्षणम्। तदुक्तं श्रीमद्भगवद्गीतायां "या निशा सर्वभूतानां तस्यां जागर्ति संयमी" इति। सर्वे यदा निद्रानिमग्नाः आसन् व्रती संयमी मूलशंकरः सावधानेन जागरुकः सन् निर्विघ्नेन व्रतपालने दत्तचित्तः आसीत्। एतस्मिन्नेव रवशून्ये अवसरे केचन मूषिकाः विवरेभ्यो बहिरागम्य शिवसमर्पितं फलमिष्टान्नादिकं खादितुं प्रारब्धाः। मूषिकाः शिवसमर्पितं मिष्टान्नादिकं खादन्ति, शिवलिङ्गस्योपरि इतस्ततो गच्छन्ति, ततश्चावतरन्ति इत्येतत् सर्वं दर्शं दर्शं शिवभक्तस्य मूलशंकरस्य अचला श्रद्धा दोदुल्यमानाभवत्। तस्य भक्तप्रवरस्य मनसि प्रश्नः समुदेति यत्, किमियमेव मूर्तिः भूतभावनस्य, पिनाकपाणेः, त्रिशूलधारिणः रुद्रात्मकस्य शिवस्य? किं अयमेव शिवः यस्य अपवित्रता सम्पाद्यते क्षुद्राकारैः मूषिकैः। एवं प्रश्नस्योपरि प्रश्नः, संशयस्योपरि संशयः क्रमेण वर्धते। अनास्था, अश्रद्धापि क्रमेण वर्धते। पितुः निद्रां दूरीकृत्य सर्वं तत्समीपे निवेदितवान्। तदा पिता अवदत् नायं शंकरः, इयं तु शंकरस्य मूर्तिरिव। रात्रेः अन्धकारः यथा छिन्नो भवति, तथैव मूलशंकरस्य चेतसि समुत्पन्नस्य अन्धकारस्य अपि विनाशो जायते। शिवविग्रहतः मूलशंकरस्य श्रद्धा, विश्वासः, आस्था सम्पूर्णतया अपगता। सर्वं व्यर्थं जातम्। पितुः सकाशात् गृहप्रत्यावर्तनस्य अनुमतिः सम्प्राप्ता। किन्तु व्रतरक्षणस्यादेशोऽपि पित्रा प्रदत्तः। मूलशंकरः गृहं प्रत्यागतवान्। क्षुधा अत्यन्तं वर्धते। मातुः भोज्यमादाय क्षुन्निवृत्तिमकरोत्। व्रतभङ्गश्चाभवत्। पिता रुष्टोऽभवत्। परन्तु मूलशंकरस्य समीपे सत्यं

समुद्भाषितम्। असत्यत्यागं सत्याङ्गीकारं च कृत्वा तेन सम्पूर्णं जीवनमतिवाहितम्। "असतो मा सद्गमय, तमसो मा ज्योतिर्गमय" अयं मन्त्र एव आसीत् तस्य जीवनस्य सत्यानुसन्धानस्य शाश्वतं सूत्रम्। तदाश्रित्य एव मूलशंकरः परवर्तिनि काले दयानन्दः अभवत्। यश्च ऊनविंशशताब्द्यां महान् ऋषिः, संस्कारकः धर्मोद्धारकश्चाभवत्।

कस्मिंश्चित् दिवसे एकस्य सङ्गीतानुष्ठानस्य कार्यक्रमे मूलशंकरः पित्रा सह गतवान्। स मूलशंकरः सङ्गीतवाद्यभजनादीनां रसास्वादनं यदा करोति तदा तस्य गेहात् कश्चित् सेवकः आगम्य उक्तवान् यत् तस्य भगिनी दुरारोग्यव्याधिना समाक्रान्ता दिवं गतवतीति। सर्वे रोदनं कृतवन्तः, विलपितवन्तश्च। मूलशंकरस्तु स्तब्धः हतप्रभश्चासीत्। किमभवत्? भगिनी कुत्र गतवती? मूलशंकरः सर्वत्र अन्वेषणं कृतवान्, श्मशानेऽपि। न कुत्रापि सम्प्राप्ता भगिनी। तस्याः शाश्वतो वियोगः जातः। कोऽयं मृत्युः? मृत्योः अर्थावबोधाभ्यन्तरे एव मूलशंकरस्य तातस्य वियोगो जातः। अस्मिन् समये मूलशंकरः क्रन्दनं कृतवान्। को नाम मृत्योः रक्षोपायः? अमृतत्त्वमेव शरणम्। तदा तस्य मनसि चिरन्तनी प्रार्थना समुदिता "मृत्योर्मा अमृतंगमय" इति।

इतःपरं मूलशंकरस्य मनः सांसारिककार्येभ्यः क्रमेण निवृत्तिं लभते। संसारं परित्यज्य अमृतत्त्वस्य मार्गमङ्गीकर्तुं प्रयत्नमकरोत्। आध्यात्मिकी चर्चा क्रमेण वर्धते। अस्मिन् समये पितुः मनसि संशयः समुदेति। ग्रामस्य समीपे एव संस्कृतस्य अध्ययनार्थं कश्चित् विद्वान् पित्रा नियुक्तः। गुरोः समीपे गृहत्यागस्य इच्छा प्रकटीकृता मूलशंकरेण। गुरुरपि अन्तेवासिनः गृहत्यागविषयिणीमिच्छां तस्य पितुः समीपे निवेदितवान्। पित्रोश्चिन्तनं तु स्वाभाविकमेव। परन्तु एतदपि सत्यं यत् विवाहपरित्यागस्य सुचिन्तितं सूत्रं हि विवाहबन्धनम्। मूलशंकरस्य विवाहव्यवस्था परिकल्पिता। कन्यानिर्वाचनमपि सुसम्पन्नम्। इत्यवसरे एव मूलशंकरः १९०८ विक्रमाब्दे गृहत्यागं कृतवान्। तदा मूलशंकरस्तु द्वाविंशतिवर्षीयः आसीत्। अस्मिन् समये गृहसम्भोगसुखादिकं परित्यज्य मूलशंकरेण वैराग्यस्य कन्टकाकीर्णः मार्गः स्वेच्छया आनन्देन च अङ्गीकृतः। पथिमध्ये एव कस्माच्चित् नैष्ठिकब्रह्मचारिणः सकाशात् ब्रह्मचर्यदीक्षां

स्वीकृतवान्। तस्य शुभनाम आसीत् ब्रह्मचारी शुद्धचैतन्य इति। अमरत्वस्य अन्वेषणकार्यं प्रारब्धम्। शुद्धचैतन्यः साधुचरणेभ्यः ज्ञातवान् यत्, सिद्धपुरे एका मेला प्रचलति। तत्र योगिनां, महात्मनां, साधूनां च समावेशो भविष्यति। तेभ्यः अभीष्टसिद्ध्यर्थं, अमरत्वस्य मार्गलाभार्थं च दीक्षा प्राप्तुं शक्यते। शुद्धचैतन्यः सिद्धपुरं प्रति प्रस्थितवान्। पथि केनचित् सुपरिचितेन साधुचरणेन सह तस्य साक्षात्कारोऽभवत्। अपरतः शुद्धचैतन्यस्य गृहे अन्वेषणं चलति। साधुचरणेभ्यः मुखारविन्देभ्यः पिता ज्ञातवान् यत् पुत्रः ब्रह्मचारिवेशेन सिद्धपुरस्य मेलां प्रति प्रस्थितवान्। पितापि स्वकर्मिभिः सह पुत्रस्य अन्वेषणाय सिद्धपुरं प्रति गतवान्। तत्र काषायवस्त्रपरिहितं, कमण्डलुधारिणं पुत्रं दृष्ट्वा पिता अत्यन्तं क्रुद्धोऽभवत्। पुत्रं भर्त्सितवान्, तस्य काषायवस्त्रं च छिन्नवान्। शुद्धचैतन्योऽपि सामान्यतोऽनुतापं प्रदर्श्य गृहं प्रत्यागमनाय प्रतिश्रुतिं दत्तवान्। प्रत्यागमनात् परं तस्य रक्षायै दौवारिकाः सैनिकाश्च नियुक्ताः। अथ कस्यचिद्दिवसस्य महानिशायां यदा सैनिकाः दौवारिकाश्च निद्रामग्नास्तदा शुद्धचैतन्यः शौचार्थमिच्छां प्रकटीकृत्य एकं जलपूर्णं घटमादाय गृहात् बहिर्गतवान्। अस्मिन् समये तस्य गृहत्यागश्चिराय अभवत्।

नैष्ठिकब्रह्मचारिणः शुद्धचैतन्यस्य एकं गुरुकर्म आसीत् स्वपाकभोजनम्। अस्मिन् काले दाक्षिणात्यस्य दण्डिस्वामिनः पूर्णानन्दसरस्वतिचरणात् तस्य सन्न्यासदीक्षा अभवत्। तदा तस्य नामकरणमभवत् स्वामी दयानन्दसरस्वती इति। तेन परवर्तिनि काले द्वाभ्यां सन्न्यासिचरणाभ्यां सह सम्पर्कः जातः। स्वामी ज्वालानन्दपुरी, स्वामी शिवानन्दगिरिश्च। अथ सन्न्यासग्रहणात् अनन्तरं स्वामी दयानन्दसरस्वती १९१२ विक्रमाब्दे हरिद्वारे संघटितायां कुम्भमेलायां योगदानं कृतवान्। हरिद्वारतः स्वामिपादाः उत्तराखण्डं प्रति गतवन्तः। स्वामिपादाः यदा उखीमठं गतवन्तः तदा मठाध्यक्षः राओलजी तेषामुपरि मुग्धोऽभवत्। स्वामिपादाः यथा परिवर्तिनि काले तस्य मठस्य उत्तराधिकारिणः भवेयुः तदर्थमनुरोधं कृतवान्। परन्तु दयानन्दस्य उद्देश्यं यत आसीत् अमृतत्त्वस्य सन्धानं तस्मात् तस्मिन् विषये स्वामिपादानामभिमतं नासीत्। धनसम्पत्तिविषये का कथा? पितुः समीपे एव बहुधनादिकमासीत्। सर्वं परित्यज्य एव दयानन्दः गृहत्यागं

कृतवान्। अतः दयानन्देन राओलजिमहोदयस्य अनुरोधः प्रत्याख्यातः। ततश्च सिद्धानां, योगिनां, महात्मनां च अनुसन्धानार्थं स्वामिपादाः हिमाच्छादितपर्वतशिखरेषु नग्नचरणाः कटिमात्रवस्त्रपरिहिताः पद्भ्यां व्रजन्ति। वद्रिनारायणतः अलकानन्दां प्रति नदीवेगाभिमुखं व्रजन्ति। एवममृतत्त्वस्य लाभार्थं तस्य तपः क्रमेण वृद्धिमेति। अथ १९१३ विक्रमाब्दे स्वामिदयानन्दः उत्तराखण्डतः अवतरणं कृत्वा देशदर्शनार्थं, साधुसङ्गलाभार्थं च नर्मदापरिक्रमां प्रारब्धवान्। तथापि देशदर्शनातिरिक्तं अन्यत् किमपि नानुभूतम्। अथ १८६० ईशवीयाब्दे अध्ययनार्थं स्वामिदयानन्दः मथुराप्रदेशे विरजानन्दस्य श्रीचरणेषु उपस्थितोऽभवत्। यद्यपि दयानन्दस्य समीपे विरजानन्दस्य पत्रसंकेतादिकं सर्वमासीत् तथापि चतुर्भ्यः वर्षेभ्यः परं दयानन्दः स्वामी विरजानन्दस्य समीपे समुपस्थितवान्। ननु किमत्र कारणम्? वस्तुतस्तु विषयेऽस्मिन् स्पष्टतया किमपि ज्ञातुं न शक्यते। स्वामिना दयानन्देनापि विषयेऽस्मिन् विस्पष्टं किमपि नोक्तं, नापि लिखितं किमपि। वास्तविकतया कालोऽयमासीत् स्वाधीनतासंग्रामस्य प्रथमः कालः। कलिकातायां प्रवासकाले तेन किञ्चिल्लिखितम्। अज्ञातविषयरूपेण तस्य प्रकाशः यतोऽभवत्तस्मादत्र तस्मिन् विषये किमपि नोच्यते। परन्तु एतत्तु निश्चप्रचं वक्तुं शक्यते यत् १८५७ ईशवीयाब्दे प्रथमे स्वाधीनतासंग्रामे स्वामी दयानन्दसरस्वती प्रथमसन्न्यासिरूपेण भागग्रहणं कृतवान्। अस्मिन् विषये बहवो विद्वांसोऽपि अस्मिन्नेव राद्धान्ते स्वरसं प्रकटयन्ति। अत्रेदं वक्तव्यं यत्, अमृतत्त्वस्य अनुसन्धाने व्रतिनः दयनन्दस्य देशवासिनां शृङ्खलामोचनेऽपि प्रयासः आसीत्।

१८६० ईशवीयाब्दे स्वामी दयानन्दसरस्वती गुरुचरणानां विरजानन्दमहोदयानां समीपे उपस्थितवन्तः। व्याकरणमहाभाष्यस्य अध्ययनं तथा शास्त्रान्तराणामपि अध्ययनं तस्य समीपे एव अभवत्। तस्मिन् समये दयानन्देन आर्यज्ञानमुपलब्धम्। मनुष्यकृतग्रन्थेभ्यः ऋषिकृतग्रन्थानां पार्थक्यमपि अस्मिन् समये एव दयानन्देन उपलब्धम्। ऋषिकृताः ग्रन्थाः अभ्रान्ताः। अतः तेषां ग्रन्थानामुपदेश एव दयानन्देन कृतः। तस्य स्मृतिशक्तिः, बुद्धिशक्तिः, तर्कशक्तिश्च अत्यन्तं प्रखरा आसीत्। तस्मात् विरजानन्दस्य समीपे दयानन्दः कालजिह्वः इति

कुलक्करः इति नाम्ना अपि परिचीयते स्म। प्रतिपक्षी स्वामिनः दयानन्दस्य समीपे कदापि जेतुं न समर्थः आसीत्। एवं व्याकरणादिशास्त्राध्ययनात् अनन्तरं तेन वेदविद्यापि अधिगता आसीत्। अथ स्वामी दयानन्दः सरस्वती १८६० ईशवीयाब्दे वेदस्य प्रचारार्थं पाखण्डखण्डनार्थं च कार्य्यक्षेत्रेषु पदापर्णं कृतवान्। सः सन्न्यासी आसीत्। तस्य समीपे कोऽपि सहगामी नासीत्, नापि कश्चन गृही आसीत्। अतएव तस्य कृते भोजनादीनामायोजनं पाथेयादीनां व्यवस्थापनं च अत्यन्तं दुष्करमासीत्। परन्तु सदा सर्वत्रैव परमेश्वरस्य इच्छा एव बलवती भवति। हिन्दवः, मोहम्मदीयाः, ईशवीयाः सर्वे एव विरोधिनोऽभवन्। तथापि दयानन्दस्य व्याख्यानं शास्त्रार्थादिकं नित्यमेव प्रचलति। धर्मजगति नूत्नतया एकं जागरणमभवत्। १८६६ ईशवीयाब्दे हरिद्वारे कुम्भमेला अभवत्। तत्र लक्षलक्षपरिमिताः मानवाः सम्मिलिताः अभवन्। शास्त्रप्रचारस्य अयमेव महान् अवकाशः इति जानन् स्वामिना हरिद्वारे स्वकुटिरं संस्थापितम्। तत्रैव प्रचलति नित्यं पाखण्डखण्डनं वेदशास्त्रोपदेशश्च। विद्वांसः, साधवः, सन्तश्च तत्र समुपस्थिताः भवन्ति। मूर्तिपूजायाः वेदविरुद्धत्वं तेन प्रतिस्थापितम्। तिलकमाल्यादिधारणं, तीर्थस्नानमित्यादिकं सर्वमेव तेन वेदविरुद्धमिति प्रमाणीक्रियते। तेन तस्मिन् समये एतदपि प्रतिपादितं यत् भागवतपुराणादिकं महर्षिवेदव्यासेन न विरचितम्। कैश्चित् स्वार्थपराः विद्वांसः एव तानि पुराणानि रचितवन्त इति तेन उल्लिखितम्। एतदर्थं धर्मजगति तस्मिन् समये महान् क्षोभः दरीदृश्यते। स्वामिनो दयानन्दस्य मतं न केनापि प्रमाणरूपेण स्वीक्रियते। तथापि स्वामिना दयानन्देन पाखण्डिखण्डनं क्रियते, धर्ममध्ये विद्यमानानां समाजप्रचलितानां कुसंस्काराणां च अपसारणमपि क्रियते स्म। वाल्यविवाहस्य समर्थनं तेन कृतम्, वृद्धविवाहस्य विरोधस्तेन कृतः। एवञ्च नारीशिक्षायाः प्रचारः, अस्पृश्यतायाः विनाशोऽपि तेन साधितः। एवञ्च तेन काश्यां तत्रत्यैः पण्डितप्रवरैः शास्त्रार्थोऽपि कृतः।

अथ १८७२ ईशवीयाब्दे डिसेम्वरमासि स्वामी दयानन्दसरस्वती कलिकातायां पदापर्णं कृतवान्। तस्मिन् समये कलिकाता आसीत् भारतवर्षस्य एका महत्त्वपूर्णा नगरी। भारतवर्षस्य राजधानी। आङ्गलभाषायाः,

वङ्गभाषायाः, हिन्दीभाषायाः समाचारपत्रमपि अस्मात् स्थानादेव प्रचारितं भवति। ईश्वरचन्द्रः विद्यासागरः, केशवचन्द्रः सेनः, देवेन्द्रनाथः ठक्कुरः, रामकृष्णपरमहंसदेवः अत्रैव निवसन्ति स्म। एकस्मिन् दिवसे केशवचन्द्रसेनेन आमन्त्रितायां सभायां स्वामिना दयानन्देन शास्त्रव्याख्यानं प्रदीयते। स्वामिना संस्कृतेनैव उच्यते। कलिकातासंस्कृतमहाविद्यालयस्य अध्यक्षेण तस्य अनुवादः क्रियते। अनुवादकाले तेन यथार्थतया अनुवादः न क्रियते। तस्मात् केशवचन्द्रस्य अनुरोधेन स्वामी दयानन्दः हिन्दीभाषायां व्याख्यानं प्रारब्धवान्। तस्मादेव कालादारभ्य जनसम्पर्कस्थापनाय हिन्दीभाषापि स्वामिनः हृदये पदं कृतवती। किञ्च, इतःप्राक् केवलं कौपीनमेव दयानन्दस्य अवलम्बनमासीत्। अस्मिन् समये केशवचन्द्रस्य अनुरोधेन सम्पूर्णवस्त्रं तेन स्वीकृतम्। औचित्यमङ्गीकृत्य तेन सम्पूर्णवस्त्रं स्वाङ्गे विधृतम्। अस्मिन् समये कलिकातायां वेदस्य अध्ययनार्थमध्यापनार्थं च पाठशालास्थापनमसम्भवमासीत्। परन्तु कलिकातायामागमनस्य फलं किमासीत् तत्तु सर्वे एव जानन्ति। स्वामिनः प्रचारक्षेत्रं यथा वृद्धिमाप्नोति तद्वत् तस्य प्रभावोऽपि क्रमेण वृद्धिमाप्नोति। समग्रे उत्तरभारते संस्कारकार्यं वेदस्य प्रवाहगङ्गा च प्रवहति। अस्मिन्नेव समये स्वामिना अनुभूतं यत् प्रतिष्ठानं निर्माय कार्यं क्रियते चेत्तस्य प्रचारकार्यस्य गतिर्भवेत्। अतः १८७५ ईशवीयाब्दे मुम्वइनगरे प्रथमतः आर्यसमाजस्य प्रतिष्ठा अभवत्। ततः भारतवर्षस्य विविधेषु प्रदेशेषु आर्यसमाजस्य प्रतिष्ठा अभवत्।

कलिकातातः प्रत्यागमनात् परमेव दयानन्दस्वामिनः विधिपूर्वकं लेखनकार्यमारब्धमासीत्। सत्यार्थप्रकाशस्य प्रथमसंस्करणस्य प्रकाशः १८७५ ईशवीयाब्दे अभवत्। राज्ञः जयकिशनदासस्य अर्थानुकूल्येन अस्य संस्करणस्य लिखनं तथा प्रकाशः अभवत्। स्वामिनः दयानन्दस्य एतादृशं दाक्ष्यमासीत् यत्तस्य मुखतः ग्रन्थपङ्क्तयः निर्गच्छन्ति, लेखकाश्च तच्छ्रुत्वा लिखन्ति। अस्य संस्करणस्य लेखकोऽपि राज्ञा एव व्यवस्थापित आसीत्। सत्यार्थस्य प्रकाशो नाम उन्मेषः उद्घाटनं वा। स्वामिना दयानन्देन समग्रस्य विश्वस्य कल्याणार्थमेव सत्यार्थप्रकाशस्य प्रणयनं कृतम्। अस्य ग्रन्थस्य पाठेन स्वल्पशिक्षिताः मानवाः अपि वैदिकधर्मस्य आस्वादनं कर्तुं शक्नुवन्ति। ग्रन्थेऽस्मिन् अवैदिकानि मतानि,

वेदविरुद्धाः सिद्धान्ताश्च युक्त्या शास्त्रप्रमाणवलेन च ग्रन्थकृता खण्डिताः। स्वामिनः हृदये द्वेषस्य, हिंसायाः पक्षपातित्वस्य च विन्दुपरिमितं स्थानमपि नासीत्। तेन सर्वधर्माणां मानवानां समीपे सत्यमार्गः प्रदर्शितः। सत्यमाधारीकृत्य एव मिथ्यावर्जनं तेन कृतम्। सत्यज्योतिषा वैदिकधर्मः समुज्ज्वलो भवेदित्येवासीत्तेषां स्वामिपादानां मानसिकी इच्छा। वैदिकधर्मेण सह साधारणानां मानवानां यतः सम्पर्को न दृश्यते तस्मात् विविधैः कुसंस्कारैः समाजशरीरं व्याधिग्रस्तं भवति। तस्मादृषिहृदयं व्यथितमभवत्। एतादृशात् हृदयकन्दरादेव सत्यार्थप्रकाशस्य समुद्भासोऽभवत्। अनेन ग्रन्थविरचनेन समग्रा मानवजातिः संरक्षिता। अस्य ग्रन्थस्य विभागद्वयं दृश्यते, पूर्वार्धः उत्तरार्धश्च। अस्य ग्रन्थस्य अध्यायाः समुल्लासः इति नाम्ना परिचिताः। पूर्वार्धे दश समुल्लासाः विराजन्ते, उत्तरार्धे च चत्वारः समुल्लासाः सन्ति। साकल्येन ग्रन्थेऽस्मिन् चतुर्दश समुल्लासाः प्राप्यन्ते। ईश्वरनामविषये प्रथमे समुल्लासे ईश्वरस्य ओङ्कारादिनामव्याख्यानम्, वालशिक्षाविषये द्वितीये सन्तानानां शिक्षा, शिक्षाविषये तृतीये ब्रह्मचर्यनियमाः, अध्ययन-अध्यापनव्यवस्था, सत्यासत्यग्रन्थानां समुल्लेखश्चेत्यादयो विषयाः वर्णिताः सन्ति। चतुर्थे समावर्तनविवाहगृहाश्रमविषये समुल्लासे विवाहव्यवस्था यथा वर्णिता तद्वत् गृहस्थाश्रमस्य व्यवहारादिकमपि व्याख्यातं वर्तते। वाणप्रस्थसन्न्यासाश्रमनामके पञ्चमे समुल्लासे वाणप्रस्थाश्रमस्य तथा सन्न्यासाश्रमस्य विधयः ग्रन्थीकृताः सन्ति। राजधर्मविषये षष्ठे राजधर्मस्य व्याख्यानं प्राप्यते, ईश्वरवेदविषये सप्तमे वेदस्य तथा ईश्वरस्य प्रसङ्गः वर्णितः। सृष्ट्युत्पत्तिस्थितिप्रलयविषये अष्टमे समुल्लासे जगतः समुत्पत्तिः, स्थितिः, प्रलयश्चेति त्रयो विषयाः वर्णिताः सन्ति। विद्याविद्याबन्धमोक्षविषये समुल्लासे नवमे यथा विद्याविद्ययोः व्याख्या प्राप्यते, तद्वत् बन्धमोक्षयोः विचारोऽपि दृश्यते। भक्ष्याभक्ष्यविषये दशमे आचाराः अनाचाराः तथा भक्ष्याभक्ष्यविषयाः प्रतिपादिताः सन्ति। आर्यावर्तीयमतखण्डनविषये एकादशे आर्यावतीयमतमतान्तराणां खण्डनमन्डनादिविषयाः समुपलभ्यन्ते। चार्वाकबौद्धजैनमतखण्डनविषये द्वादशे समुल्लासे चार्वाकमतं, बौद्धमतं, जैनमतं चाश्रित्य बहुकिमपि तत्त्वं प्राप्यते।

ख्रीष्टीनमतविषये यवनमतविषये च त्रयोदशे चतुर्दशे च समुल्लासे क्रमेण ईशवीयमतं मोहम्मदीयमतं चाश्रित्य विमर्षादिकं प्राप्यते। अत्रेदं वक्तव्यं यद्, चतुर्दशसमुल्लासे स्वामिना दयानन्देन आल्लोपनिषदः व्याख्या कृता। केषाञ्चिन् मोहम्मदीयानां मतेन अथर्ववेदे तेषां धर्मस्य उल्लेखो वर्तते। मोहम्मदीयानां मतमिदं स्वामिना खण्डितम्। एवञ्च अथर्ववेदे आल्लोपनिषन्नास्ति इति मतमपि तेन दृढं समुल्लिखितम्। परवर्तिनि काले ग्रन्थस्यास्य द्वितीये संस्करणे प्रथमसंस्कणस्थानां भ्रमाणां संशोधनमभवत्। स्वामिनः जन्मभाषा यद्यपि गुर्जरभाषा आसीत्, तथापि तस्य अध्ययनाध्यापनयोः वार्तालापशास्त्रार्थयोः भाषा आसीत् संस्कृतभाषा। ततः हिन्दीभाषापि तेन अधिगता अभवत्। हिन्दीभाषायां प्रकाशिते सत्यार्थप्रकाशग्रन्थे ये प्रमादाः आसन् तस्य दूरीकरणं तेनैव स्वहस्ते साधितम्। अत्रेदं वक्तव्यं यत् स्वामिनः दयानन्दस्य जीवद्दशायां सत्यार्थप्रकाशस्य जनप्राप्तिः नाभवत्, तस्य देहत्यागादनन्तरमेव तस्य जनप्राप्तिः प्रसिद्धिश्च अभवत्। स्वामिना दयानन्देन ये ग्रन्थाः विरचिताः तेषु सत्यार्थप्रकाशः एव सर्वोत्तमग्रन्थ आसीत्। अस्मिन् ग्रन्थे मानवमन्तव्यं कर्तव्यं च सन्निविष्टं वर्तते। एतद्विहायापि ऋग्वेदादिभाष्यभूमिका, यजुर्वेदभाष्यम्, ऋग्वेदभाष्यं, संस्कारविधिः, पञ्चमहायज्ञविधिः, गोकरुणानिधिः, अष्टाध्यायीभाष्यं, वेदाङ्गप्रकाशः, संस्कृतवाक्यप्रबोधः, आर्योद्देश्यरत्नमाला, व्यावहारभानुः, आर्याभिविनयः चेत्यादयो ग्रन्थाः विरचिताः। वेदाङ्गप्रकाशे षोडशग्रन्थानां समाहारो दृश्यते। वर्णोच्चारणशिक्षा, संस्कृतवाक्यप्रबोधिनी, व्यवहारभानुः, सन्धिविषयः, नामिकः, कारकः, सामसिकः, तद्धितः, अव्ययार्थः, आख्यातिकः, सौभरः, पारिभाषिकः, धातुपाठः, गणपाठः, उणादिकोषः, निघन्टुश्च। वेदानाम् अवबोधाय, वेदार्थस्य च अवबोधाय सिद्धान्तात्मकोऽयं ग्रन्थः महदुपकारं साधयति। सम्पूर्णस्य यजुर्वेदस्य उपरि तेन यजुर्वेदभाष्यं विरचितं, यत्र बहूनि मतानि पूर्वाचार्यपेक्षया नूत्नतया परिवेशितानि। ऋग्वेदस्य सम्पूर्णतया भाष्यं तेन न व्यरचि। सप्तममण्डलस्य एकषष्ठितमसूक्तस्य द्वितीयं मन्त्रं यावत् तेन भाष्यं विरचितम्। त्रैवर्णिकस्य कृते ये षोडशसंस्काराः विहिताः वर्तन्ते, तेषां विधिः व्याख्यानं च ग्रन्थेऽस्मिन् प्राप्यते। केषाञ्चिन्नये षोडशसंस्कारविषये प्रथमोऽयं ग्रन्थः।

स्वामिनः दयानन्दस्य मते वेदस्य अर्थो हि ज्ञानम्। वेदेषु यतः मन्त्राणां संग्रहो वर्तते तस्मात् तत्संहिता इत्युच्यते। वेदव्याख्यायां स्वामिना दयानन्देन पूर्वाचार्यापेक्षया अभिनवं व्याख्यानं प्रदत्तम्। सायणाचार्यस्य तथा इउरोपीयव्याख्याकाराणां मतविरोधं कृत्वा तेन काचित् स्वतन्त्रव्याख्याधारा प्रवर्तिता। ऋग्वेदस्य काचित् दीर्घभाष्योपक्रमणिकापि तेन विरचिता। वेदस्य लक्षणप्रतिपादनकाले तेन लिखितं, अथ कोऽयं वेदो नाम मन्त्रसंहितेत्याह। अर्थात् वेद इत्युक्ते तेन केवलं मन्त्रभागः एव गृहीतः। ब्राह्मणभागस्तेन वेदरूपेण नाङ्गीकृतः। "मन्त्रब्राह्मणयोर्वेदनामधेयमि"ति[3] पूर्वाचार्यकृतलक्षणं तेन नाङ्गीकृतम्। तस्य विचारेण ब्राह्मणभागः वेदो भवितुं नार्हति। ब्राह्मणे पुराणस्य, इतिहासस्य विविधानामुपाख्यानानां तथा वृत्तानां संकलनं प्राप्यते। किञ्च ब्राह्मणं भवति वेदस्य व्याख्यानात्मको ग्रन्थः। अस्मिन् विषये तेन महाभाष्यकारस्य वचनमपि प्रमाणरूपेणाधारीकृतं - "चतुर्वेदविद्भिर्ब्राह्मभिर्ब्राह्माभिर्ब्राह्मणैर्महर्षिभिः प्रोक्तानि यानि वेदव्याख्यानानि तानि ब्राह्मणानीति"[4] इति। तस्मात्तेन उक्तं "न ब्राह्मणानां वेदसंज्ञा भवितुमर्हति, कुतः पुराणेतिहाससंज्ञकत्वाद् वेदव्याख्यानाद् ऋषिभिरुक्तत्वादनीश्वरोक्तत्वात् कात्यायनभिन्नैर्ऋषिभिर्वेदसंज्ञायाम् अस्वीकृतत्वान् मनुष्यबुद्धिविरचितत्वाच्चेति"[5] इति। एतस्मात् कारणादेव तन्नये ब्राह्मणस्य प्रामाण्यमपि नास्ति। वेदाध्ययनस्य अधिकारी कः स्यादित्यस्मिन् विषयेऽपि तेन उक्तं यत् स्त्रीशूद्रनिर्विशेषेण वेदस्य जिज्ञासव एव वेदस्य अधिकारिणः भवेयुः। वेदेषु प्रतिफलितानां केषाञ्चिद्विषयाणां सामाजिकानामपि व्याख्यानं तेन प्रस्तुतम्। विवाहः, नियोगप्रथा, वर्णव्यवस्था, गार्हस्थ्याश्रमः, वाणप्रस्थाश्रमः, अमात्यप्रजासम्बन्धश्चेत्यादीनां विषयाणां व्याख्यानमपि तेन प्रदत्तम्। वैदिकयुगत एव ऋषीणां समीपे वैज्ञानिकतत्त्वं सुविदितमासीदिति विश्वासः दयानन्दस्य आसीत्। यथा, "अयं गौः पृश्नीरक्रमीदसदन्मातरं पुरः। पितरं च प्रयन्तस्वः"[6], "या गौर्वर्तनिं पर्येति निष्कृतं पयो दुहाना व्रतनीरवारतः। सा प्रब्रुवाणा वरुणाय दाशुषे देवेभ्यो दाशद्धविषा विवस्वते॥"[7] इत्यादीनां मन्त्राणां व्याख्यायां तेन प्रदर्शितं यत् पृथिवी, सूर्यः, चन्द्रः स्वस्वपरिधिमध्ये भ्रमन्ति। आकर्षणविद्या ऋषीणां समीपे सुविदिता आसीत् इत्यपि तेन प्रदर्शितम्। तथाहि,

"यदा ते हर्यता हरी" इत्यादि मन्त्रत्रयमस्मिन् प्रसङ्गे तेन समुपस्थापितम्। एतेषु मन्त्रेषु समाम्नातं यत्, सवितारो, वायवः सूर्येण साकं परमेश्वरस्य आकर्षणशक्त्या संयुक्ताः सन्ति। वैदिकसाहित्ये तेन प्राचीनगणितशास्त्रस्य नैकानि मन्त्रात्मकानि सूत्राणि अपि समुपलव्धानि। तदुदाहरणं हि- "एका च मे तिस्रश्च मे तिस्रश्च मे पञ्च च मे पञ्च च मे सप्त च मे सप्त च मे नव च मे --- एकत्रिंशच्च मे एक त्रिंशच्च मे यज्ञेन कल्पन्ताम्"[8] इति। स्वामिनः दयानन्दस्य मन्त्रव्याख्यानवैशिष्ट्यं केनचिदुदाहरणमुखेन प्रदर्शयितुं शक्यते। तथाहि "अग्निमीले" इत्यादेः ऋग्वेदस्य प्रथममण्डलस्य प्रथममन्त्रस्य देवतायाः अग्नेः व्याख्यानप्रसङ्गे तेनोक्तम् "अथात्र प्रथमत ईश्वर एवार्थोऽग्निशब्देन गृह्यते"[9] इति। विविधैः मन्त्रैस्तथा श्रुतिवाक्यैः तेन स्वकीयं मतं दृढतया प्रतिष्ठापितम्। अभिनववचोभङ्ग्या तेन उक्तम्, "सर्वज्ञः सर्वशक्तिमान् न्यायकारीत्यादिविशेषणयुक्तः परमेश्वरोऽग्निः पितृवत् पुत्रान् प्रत्युपदिशति स्म। हे जीव मनुष्यदेहधारिन्! अहम् अग्निं परमात्मानम् ईले स्तौमीति वदेति पूर्वान्वयः। ततो जीवोभिवदति सर्वज्ञं शुद्धं सनातनमजमनाद्यनन्तं सर्वव्यापकं जगदादिकारणं स्वप्रकाशं परमेश्वरमग्निमहमीले स्तौमि"[10] इति। अत्र प्रत्येकं पदं परमात्मपक्षमाधारीकृत्य एव व्याख्यातम्। अस्मिन् व्याख्यानप्रसङ्गे अपरः कश्चित् व्याख्यानमार्गोऽपि तेन प्रदर्शितः। तत्र अग्निः भौतिकाग्निरूपेण व्याख्यातः। योऽग्निः विविधकलाकौशलस्य तथा विमानादीनां चालिका शक्तिः वर्तते। अयमेव अग्निः विविधानां शिल्पविद्यानां तथा क्रियात्मकज्ञानस्य प्रकाशकः धारकश्च वर्तते। तस्मादेव कारणात् अग्निः यज्ञस्य देवः, होता इत्युच्यते। एवञ्च स्वामिना दयानन्देन देवतासु क्वचित् परमात्मनः क्वचिच्च वैज्ञानिकतत्त्वस्य अनुसन्धानं कृतम्। एतादृशं तदीयं व्याख्यानं पूर्णत एव तस्य स्वकीयभावनाभावितम्। तस्मात् सायणादिप्राच्यव्याख्याकारेभ्यस्तथा ग्रिफिथप्रमुखपाश्चात्यव्याख्याकारेभ्यः तस्य मतानैक्यं भूयोऽवलोक्यते। स्वामिना दयानन्देन स्वजीवत्कालस्य अन्तिमे समये प्रायेण अष्टवर्षाणि नववर्षाणि वा व्याप्य बहूनि साहित्यानि विरचितानि। एतादृशस्य साहित्यसम्भारस्य प्रकाशनार्थं स्वामिपादेन १८८० ईशवीयाब्दे फेब्रुयारिमासि वैदिकयन्त्रालयस्य शुभोद्घाटनं कृतम्। स्वामिप्रणीतानां साहित्यानां प्रकाशः अस्मात् स्थानादेवाद्यापि प्रचलति।

स्वामी दयानन्दसरस्वती सन्न्यासी अद्वैतवासनावासितान्तःकरणः चासीत्। तस्य उत्तराधिकारी न कोऽपि आसीत्। न एकस्यापि मठस्य निर्माणमपि तेन कृतम्। केवलं वैदिकयन्त्रालयः, कानिचन पुस्तकानि, वस्त्रादिकं च तस्य सम्पत्तिरूपेण आसीत्। उत्तराधिकारिरूपेण केवलं परोपकारिणी सभायाः प्रतिष्ठा तेन कृता। इयं सभा एव स्वामिपादस्य उत्तराधिकारिणी सभा इत्युच्यते। स्वामिनो दयानन्दस्य एतदपि निश्चयात्मकं ज्ञानमासीद्यत्, भारतवर्षस्य समुन्नतेः मूलसोपानं हि गावः कृषिश्च। गोहत्यायाः दूरीकरणाय सः पूर्णतया प्रयत्नशील आसीत्। अस्मिन् प्रसङ्गे सर्वकारस्य समीपे आवेदनार्थं तेन लक्षलक्षसंख्याकानां मानवानां हस्ताक्षरसंग्रहोऽपि तेन कृतः। अत्रेदं वक्तव्यं यत् तेन प्रणीते गोकरुणानिधिनामके ग्रन्थे प्रमाणितं यत् अर्थनैतिकविचारेणापि गोवधस्य दूरीकरणवश्यमेव कर्तव्यम्। १८८०-८१ ईशवीयाब्दे दयानन्देन गोकृष्यादिरक्षिणीसभाप्रतिष्ठायाः प्रस्तावस्तेन कृतः। आङ्गलशासनात् पूर्वं भारतवर्षे ग्राम्योद्योगस्य बहुलतया प्रचारः प्रसारश्चासीत्। आङ्गलानां शासनकाले ग्राम्योद्गानां विनाशाय नीतिः समानीता। ग्राम्योद्यगानां विनाशात् निर्धनता यथा वर्धिता, तद्वत् कर्महीनानां संख्या अपि वर्धते। एतादृशं शङ्कटं दृष्ट्वा स्वामिनः मनसि चिन्ता समुद्भासिता। उद्योगानां समुद्धरणाय स्वामिनो मनसि विचारः दृढतया पदं कृतवान्। ततश्च जार्मानप्रदेशस्य अध्यक्षेण वीसमहाशयेन सह तस्य पत्रसमाचारस्य शुभारम्भोऽभवत्। स्वामी दयानन्दसरस्वती तस्य साहाय्येन भारतीयविद्यार्थिभ्यः उद्योगशिक्षादाने, तथा भारतवर्षे उद्योगविद्यालयप्रतिष्टायां कृतप्रयत्न आसीत्। परन्तु स्वामिनः दयानन्दस्य देहावसानकारणात् कार्यमिदमसम्पूर्णमासीत्। स्वामी दयानन्दसरस्वती दृढतया राष्ट्रवादी स्वदेशभक्तश्चासीत्। पराधीनतायाः स्थितिः तस्य समीपे चिन्तनस्य विषय आसीत्। तस्मात् स्वामिप्रणीतासु प्रार्थनासु, विरचितेषु पुस्तकेषु, वेदमन्त्रस्य भाष्येषु सर्वत्रैव सार्वभौमस्य चक्रवर्तिराज्यस्य प्रसङ्गः उत्थापितः। राष्ट्रे स्वराज्यस्य स्थापना एव तदीया प्रार्थनासीत्। सत्यरक्षायै सत्यप्रचाराय च स्वामी दयानन्दः प्राणविसर्जनेऽपि समुद्योगी आसीत्। एतदर्थं तस्योद्घोषः खलु "अद्यैव वा मरणमस्तु युगान्तरे वा न्यायात्पथः प्रविचलन्ति पदं

न धीराः"[11] इति। १८८३ ईशवीयाब्दे अक्टोवरमासस्य त्रिंशद्दिवसे स्वामिनो दयानन्दस्य जीवनदीपो निर्वापितोऽभवत्। स्वीकृतेऽपि मरणे तस्य कृत्यौषधं संप्राप्य म्रियमानाः संख्यातीताः मानवाः जीवनामृतं प्राप्तवन्त इति निश्चप्रचं वक्तुं शक्यते इत्यलं विस्तरेणेति शम्।

## सहायकग्रन्थसूची

त्रिवेदी पण्डित रामगोविन्दः, (अनुवादकः), *ऋग्वेद-संहिता* (सायणाचार्यकृत-भाष्यसंवलिता), पुनर्मुद्रितसंस्करणम्, २०११ खीष्टाब्दे चौखम्बा विद्याभवनम्, वाराणसी।

अनिर्वाणः, *वैदिकसाहित्यम्*, २०१५ खीष्टाब्दे, प्रथमप्रकाशः जानुयारीमासि, संस्कृत-वुक्-डिपो, २८/१, विधान-सरणी, कलिकाता – ७००००६।

उपाध्याय उमाकान्त (लेखकः), शास्त्री वासुदेव (अनुवादकः), *वेद ओ स्वामी दयानन्द*, प्रथम संस्करण, 1949, आर्य्य समाज, कोलकाता, 19 no. विधान-सरणी।

सरस्वती महर्षि दयानन्द, *ऋग्वेदभाष्यभूमिका*, प्रथमसंस्कृरण, 2100, आर्य्यसमाज, हाओडा, 38/3, क्षेत्रमोहन मित्र लेन, सालिकया, हाओडा – 711106।

चक्रवर्ती शम्भूनाथ (रचना ओ सम्पादना), *साम्प्रतिकतमकाले वाङालीर वेद-गवेषणा एवं प्रसङ्ग-अनुषङ्ग*, प्रथम प्रकाश, 2006, संस्कृत पुस्तक भाण्डार, 38 विधान-सरणी, कलकाता – 700006.

## तथ्यसूत्राणि

---

[1] *वेदः स्वामी दयानन्दश्च*, पृष्ठाङ्कः-७
[2] *पारस्करगृह्यसूत्रम्*-२/२/१
[3] *आपस्तम्बपरिभाषा*-१/३३
[4] *महाभाष्यम्*-५/१/१
[5] *ऋग्वेदादिभाष्यभूमिका*, अथ वेदसंज्ञाविचारः, पृष्ठाङ्कः- ८४
[6] तत्रैव, अथ पृथिव्यादिलोकभ्रमणविषयः, पृष्ठाङ्कः- १४४
[7] तदेव, पष्ठाङ्कः- १४५
[8] यजुर्वेदः- १८/२४-२५, *ऋग्वेदादिभाष्यभूमिका*, अथ गणितविद्याविषयः, पृष्ठाङ्कः- १५४
[9] *साम्प्रतिकतम काले बाङ्गालीर वेद-गवेषणा एवं प्रसङ्ग-अनुषङ्ग*, पृ.- 139
[10] *तत्रैव।*
[11] *नीतिशतकम्*, श्लोकांकः- १०

# Īśvar Kaul's Description of Kashmiri Vocative Terms[1]

**Professor Satyabhama Razdan**

Grammar is a framework within which the language is written and spoken. Therefore, centrality of grammar to language is undeniable. This is equally true of Kashmiri language regardless of the fact that there has been an occasional and uninformed debate about its origin. Considering the importance of grammar for a language it is necessary and long overdue to accord due recognition and treatment to *KaśmīraśabdāmRtam* (काश्मीरशब्दामृतम्)of Īśvar Kaul[2], awork of great importance in its own right. It is the first and the only grammar of Kashmiri language written in Sanskrit about two centuries ago. The author has followed the pattern of Pāṇini, the greatest grammarian of all times. Uniqueness of KaśmīraśabdāmRtam also lies in the fact that it is written in the *sūtraśailī*.

In this paper attempts have been made to present a critical analysis of Īśvar Kaul's description of the vocative case of Kashmiri nouns which constitutes second sub-chapter of the second chapter of *KaśmīraśabdāmRtam*. This study is based on a single Manuscript of *KashmiraŝabdamRtam* written by Īśvar

Kaul in the 19th century A.D. The said manuscript comprising ten chapters and eleven sub-chapters spread over 422 pages is written in the Devanagari script.

The description of vocative case of nouns in Kashmiri constitutes second sub-chapter of second chapter of the given legendary work. The title of this sub-chapter is *athaliṅgaprakaraṇesambuddhipādah*. The vocative case pertains to *modes of address* or the *act of calling*. It is also called the nominative of address. The terms of address in Kashmiri are correlated with the socio-cultural status as well as interpersonal relationship between the addresser and the addressee. Different types of interjections, first names, diminutive first names, honorific first or surnames, prepositional and postpositional particles, kinship terms and terms associated with professions are employed before or/and after the personal or common name of the addressee. Īśvar Kaul has used the word *pratyaya* (affix) for these terms which is not correct. The reason is that affixes are basically bound morphemes which are directly appended, in the forms of prefixes, infixes or suffixes, to the bases either to constitute new terms or to indicate the inflexion of nouns, pronouns, adjectives and verbs. Affixes manifest their meanings only after these are appended to the free forms. Besides, the addition of affixes may cause some changes in the internal structure of the stem while as the terms used in the act of

addressing are placed before or after the name of the addressee and thus, act as prepositional or postpositional words respectively. The examples are: *hatubidanuvati* (O! Dhanwati), *hatav rosy lālav* (O! Rosy dear).

According to Īśvar Kaul, the affixes (pre/post positional words) mentioned here onwards ('इत उत्तरं'[3]) are employed to denote ('आमन्त्रणे' -1[4]) the mode of direct address in Kashmiri. The author says: 'पुमादराह्वाने विशिष्टान्नाम्नो वा पूर्वं हे' - 2[5]. *he*-is the honorific interjection employed by a male person before the personal name of a male addressee. In his explanation of the sutra the author says that masculine personal names preceded by the interjection *he*- are usually followed either by the respectful interjection *juv* or by the surname of the person, such as–*he naranjuv*; *heganükol*.

Before commenting on the above-cited sutra it is desirable to mention that the native speakers of Kashmiri belong to two main religious communities viz; Hindus (generally called Pandits) and Muslims. Both the communities are further divided into socio-economic groups on the basis of professions and avocations. Pandits, who are all Brahmins by caste, are historically grouped into three classes viz., *purohits*, *kārkuns*and *buhuris*. Generally, these three socio-economic groups do not enter into matrimonial alliances with each other.

The *purohits* are religious gurus and their profession is to guide and assist the other two groups in the performance of the religious rites, rituals and ceremonies and constitute the clergy of the community. Accordingly, the mode of address used for this group is always respectful. Among the *karkuns*, the persons engaged in sundry professions such as cooking, confectionery, bakery and tailoring are considered socially lower in status. Rest among the *karkuns*constitutes the service class. They are the largest segment of the community and enjoy higher status among the *karkuns*. The terms of address used for the service class are the same as those for the *purohits*. The *buhuris*are businessmen dealing especially in grocery and other items of day to day use. Muslim community is also divided into different professional groups such as carpenters, blacksmiths, masons, goldsmiths, potters, braziers, oil extractors/traders, greengrocers, bakers, butchers, cobblers, sweepers, cooks, barbers, tailors, water-carriers, white collar workers and businessmen etc. Their modes of address reflect the socio-economic stratum of the people whointeract.

*he*- followed by -*juv*after the name of a person has almost disappeared among the Pandits while as it is in use among Muslims even now. -*juv*is a honorific interjection employed, in the present day Kashmiri, after the initial names of elderly persons such as- *he sulüjuv*,

*he kə̄ dirjuv*etc. *–juv*does not follow the surname of a person. In other words *he sulüdarjuv*is not the norm. -*juv*is replaced by *kākh*and is employed by the members of both the communities, such as - *he narānkākh*, *he sɔnükākh*etc. -*kākh*is also used as a respectful term in the informal address by the youngsters of the Muslim community for the elderly member of the family like grandfather or great grandfather etc. Īśvar Kaul is silent about the modes of address used by the Muslim Kashmiri speakers in their discourse. 'अन्ते सा प्रत्ययश्च, हतसाहे पूर्वं सा' -3/4[6]. In more respectful address-*sə̄* is also employed after -*juv*or surname or even after the personal name of a person, such as- *he naranjuvsə̄*, *heramkolsə̄*, *henārānsə̄*. *hatsə̄*-is optionally employed before he such as -hatüsə̄ he naranjuvsə̄, hatüsə̄ he ram kolsə̄, he nārānsə̄.

The addition of suffix -sə̄ is not in use in the present day Kashmiri. Instead, the honorific terms like-jiand-sə̄b are used after the first name or surname of the addressee, e.g., he sulüsə̄b; heashokji; herazdansə̄b.-jiand-sə̄b are commonly used with the hindu names and Muslim names respectively. Besides, sə̄ b is used with surnames and professional titles of both the communities, such as- he kolsə̄b; he darsə̄b; he zargarsə̄b etc. hatüsə̄ - is used while addressing spouses and juniors for showing intimacy. Sometimes, a wife may also use

the honorific term -sə̄ b after the surname or professional title of her husband such as kolsə̄ b, dākhtarsə̄ b, riyazsə̄ betc.

'बा प्रत्ययः पुरोहित सामान्ययदासेषु' – 5[7]. *bā*isused after the names of the *purohits,* common men and servants, such as- *he naranbā*. -*bā*is not employed after the surname of a person. Thus, *he ganübreṭhbā* is incorrect.

These assertions of Īśvar Kaul do not apply to the present day Kashmiri. *–bā* generally occurs combined with the imperative II person (sg./plu.) verb forms in the sense of order or command, such as- *vɔthbā/vəthivbā*(you sg./plu. get up), *tulbā/tulivbā*(you sg./plu. pick up), *par bā/pərivbā*(you sg./plu. read) etc.. In addition, about two generations back, -*bā* used to be a respectful term employed even by the daughter to address her father or by mother-in- law to address her son-in-law etc. It is probable that the use of *–bā* after first names of *purohits*, common men and servants might have been prevalent among the Kashmiri speakers of the nineteenth or early twentieth century and became obsolete with the passage of time. However, the term *boy* (brother) was most commonly used with the names of *purohits* during the latter half of the twentieth century but this term also elided gradually.

-*bā*combined with the words like *hatü, talü*or *kāh*is

used before the first name to formally address non-acquaintances, formal relations and persons of low profession such as labourers, servants, cooks etc. as in-hatübā ram ji/juv, talübā sulükākh/juv etc. Thefeminine form of -*bā*is -*bī* as in ***hatübī*** *ramrə nī*.

'हतसाहे पूर्वं वा वृद्धेषु, आप्रत्ययः कनिष्ठनीचयोः, हताशब्दः पूर्वं च'– 6/7/8[8]. If a *purohit* is an elderly person (तेषु पुरोहितादिषु वृद्धेषु सत्सु) *hatüsə he* or *hatübā he* is prefixed before his name to show respect for the addressee, e.g., *hatüsə he səhazbā*, *hatübāhezanbā*. Itsfeminine form is *hatübī* as in *hatübī danüwatī.*Further,accordingto 'आप्रत्ययः कनिष्ठनीचयोः'*ā* is suffixed to the first names of youngsters or persons of low social status and according to 'हताशब्दः पूर्वं च', *hatā* is employed to address a person (youngster or a person of low status) who is somedistance awaybut within thesight of theaddresser.

According to Īśvar Kaul's explanation of the above-cited sutra final -*u* of –*u* ending nouns is replaced by –*i*which further changes into –*y* in the vocative case such as: *gulu*→ *gulă̄*.In addition, the terminations which are added to masculine and feminine nouns in the objective case are employed to form their respective vocative forms. These assertions are unfounded. The name *gulu*is actually employed as *gulü*and does not possess -*u* at the final position. Replacement of -*u* by -*i*and then by -*y* is, therefore, uncalled for. It is rather a peculiarity of

Kashmiri that *–l* preceding the final vowel of a name is optionally palatalized in the vocative case, e.g; *gulü→gulā~gul̃ā* .Asstated in the previous chapter, in constructions where in verb takes two objects, the direct object occurs in the nominative form and the indirect object occurs in the oblique form. The assertions that the accusative case terminations are employed in the nominative of address are, therefore, incorrect.

Further, the illustrations quoted in support of the sutras reflect addition of -*o* as well, suchas: *hatoparyo*. *hatā mānā*; *hatā mānü kolā*; *hatā gulā̃* .Theterm-hatüsə̄ isusednotOnlybefore the names of the elderly persons to show respect but is also used while addressing spouses and youngsters to show intimacy. hatüsə̄ or hatüsə̄ he is used by the Kashmiri Panditspeakers while as the terms used by the Muslim speakers are jināb and həz, the derivations from Persio-Arabic words janāb and haz/drat meaning sir, Excellency respectively. These terms are used after interjection hatü, such as- hatüjināb / hatühəzsulüsə̄ b. The present dayKashmiri shows replacement of hatüsə̄ by the honorific term hatümāhrā. This term is used only by the speakers in informal conversation to address elderly persons as well as in formal conversations to showrespect.

'हा दूरविषादयोराप्रत्ययस्य चोकारः, हतो वा' -9.10[9]. -*hā*or -

भारतीयपरम्परानुसारम् ऐतिह्यानुसारं च वेदस्य न कश्चित् कर्ता अस्ति। ऋषयो मन्त्रद्रष्टारः, न तु वेदस्य कर्तारः । अतो हि वेदः अपौरुषेयः। सायणाचार्येण चोक्तम् 'अपौरुषेयं वाक्यं वेदः'[14] इति। वेदाः सूर्यालोकमिव स्वयं प्रकाशिताः। परमेश्वरोऽपि न वेदकर्तारः। यथा निःश्वासप्रश्वासादिकं स्वाभाविकं कर्म चेष्टाकृतं न भवति ,तद्वद् वेदा अपि परमेश्वरस्य चेष्टाकृता बुद्धिकल्पिता वा न भवन्ति । उक्तञ्च बृहदारण्यकोपनिषदि "अरे वाऽस्य महतो भूतस्य निःश्वसितं यदेतदृग्वेदो यजुर्वेदः सामवेदोथऽर्वाङ्गिरसः"[15] इति। परमेश्वरस्य प्रज्ञानमेव वेदः। ज्ञाता ज्ञेयश्चात्र अभिन्नत्वेन बोध्यः। प्रतिकल्पं परमेश्वरेण वेदः स्मर्यते। ब्रह्मापि न वेदकर्ता, स वेदस्मर्तामात्रमेव। विषयेऽस्मिन् उक्तं पराशरसंहितायां 'न कश्चिद् वेदकर्तास्ति वेदस्मर्ता चतुर्मुखः'[16] इति। अपि च उच्यते 'ब्रह्माद्या ऋषयः सर्वे स्मारका न तु कारकाः'[17] इति। ब्रह्माद्याराभ्य सर्वे ऋषयो वेदस्मर्तारो वेदधारकाः च, न तु ते वेदकर्तारः। परमेश्वरः प्रतिकल्पं नित्यं वेदान् ब्रह्मणे ददाति। उक्तञ्च 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदाश्च प्रहिणोति तस्मै'[18] इति। युगान्ते प्रलयकाले वा वेदः परावरे ब्रह्मणि अभिन्नत्वेन अवतिष्ठति, कल्पारम्भे वा पुनःसृष्टिप्रारम्भे ऋषयस्तपस्ययैव वेदान् लभन्ते।
तस्मादेवोच्यते -

"युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥"[19] इति।

किञ्च यास्काचार्येण निरुक्तेऽपि निरुक्तमृषिशब्दस्य निर्वचनकाले 'अजान् ह वै पृश्निंस्तपस्यमानान् ब्रह्म स्वयम्भू अभ्यानर्षत्तदृषयोऽभवन्'[20] इति। एतेनापि वेदानां स्वयम्भूत्वमुत्पत्तिरहितत्त्वमपौरुषेयत्वञ्च प्रतिष्ठितम्। परन्तु सामश्रमिण आचार्यस्य मते वेदा हि पौरुषेयाः। यास्काचार्यस्य निरुक्तवचनानुसारं सायणाचार्यादिभाष्यकारैः वेदस्यापौरुषेयत्वं यथा प्रतिपादितं तथैव आस्तिकदर्शनेषु केवलं पूर्वमीमांसादर्शने उत्तरमीमांसादर्शने च वेदस्यापौरुषेयत्वं प्रतिपादितम्। सांख्ययोगन्यायवैशेषिकरूपचतुर्षु आस्तिकदर्शनेषु वेदस्य अपौरुषेयत्वं निराकृतम्। परं वेदस्य प्रामाण्यं सर्वेषु आस्तिकदर्शनेषु स्वीकृतम्।

सामश्रमी आचार्यो निरुक्तस्य 'साक्षात्कृतधर्माण ऋषयो बभूवुः'[21] इति वचनाधारेण प्रतिपादितवान् यद् ऋषय एव वेदकर्तारः। किञ्च निरुक्तस्य 'विश्वामित्रो नदीस्तुष्टाव'[22], 'ऋषिपुत्र्या विलापितं वेदयन्ते'[23], 'कपिञ्जलोऽभिववाशे'[24], 'एवमुच्चावचैरभिप्रायै ऋषीणां मन्त्रदृष्टयो भवन्ति'[25] इत्यादिवचनानुसारं सामश्रमी महोदयः प्रत्यपादयद् यद् वेदमन्त्राणां द्रष्टृत्वे ऋषीणां मानसिकाः अभिप्राया यस्मात्कारणं तस्मादृषय एव वेदकर्तारः। किञ्च सामश्रमिमहोदयेन ऋषीणां वेदकर्तृत्वे ऋक्संहिताया दशममण्डान्तर्गतो यो मन्त्रः प्रमाणत्वेन उदाहृतः तदपि अत्रोल्लेख्यम् –

"सक्तुमिव तितउना पुनन्तो
यत्र धीरा मनसा वाचमक्रत।
अत्रा सखायः सख्यानि
जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि"।।[26] इति।

अत्र मन्त्रे 'मनसा वाचमक्रत' इत्यंशेनैव स्पष्टं यद् ऋषयो वेदमन्त्रकर्तार इति सामश्रमिमतम्।

आर्यशब्दार्थविमर्शनेऽपि सामश्रमिण आचार्यस्य अभिमतं विशेषं किञ्चिन्निर्दिशति। तन्मते वेदे बहुव्यवहृत आर्यशब्दः श्रेष्ठजातिरूपार्थे व्यपदिष्टः। तदीया युक्तिरत्र स्मर्तव्या – यास्ककृतनिरुक्तानुसारमार्यशब्दार्थो हि ईश्वरपुत्रः। तदुक्तं निरुक्ते यास्केन-'अर्य ईश्वरपुत्रः'इति। निघण्टौ ईश्वरवाचिशब्दमध्ये अर्यशब्दोपस्थितिर्लक्ष्यते। अर्यश्चेद् ईश्वरः, तस्मादर्यशब्दात् अपत्यार्थे 'तस्यापत्यम्' इति पाणिनीयसूत्रानुसारम् अण्प्रत्ययेन निष्पन्न आर्यशब्द ईश्वरपुत्रार्थे रूढः। वस्तुतस्तु पृथिव्यां सर्वेषु एव देशेषु धर्मविश्वासिनो जना आत्मानमीश्वरस्य वरपुत्ररूपेणैव मन्यन्ते इत्यस्माद् आर्यशब्दार्थ ईश्वरपुत्रार्थे श्रेष्ठजातिरूपार्थे वा ग्राह्य इत्यासीत् सामश्रमिण आचार्यस्याभिमतम्।

आर्याणां निवासविषयकविमर्शने वालगङ्गाधरतिलकमहोदयमतं आचार्यः सामश्रमी स्वयुक्त्या निराकृतवान्। तिलकमहोदयमते आर्याणाम् आदिनिवासस्थलमासीद् उत्तरमेरुप्रदेशः। सामश्रमिणा तिलकमतं समालोचयता

उक्तं स्वविरचिते ऐतरेयालोचन-ग्रन्थे "सुमेरुप्रदेशवासिन एवेति वालसिद्धान्तोऽपि वालसिद्धान्तः"[27] इति।

आर्याणां निवासस्थलनिर्धारणावसरे तिलकेन ऋग्वेदीयो दशममण्डलान्तर्गतो यो मन्त्रः प्रमाणत्वेन गृहीतः, स हि –

"अमी य ऋक्षा निहितास उच्चा
नक्तंददृशे कुह चिद् दिवेयुः।
अदब्धानि वरुणस्य व्रतानि
विचाकशच्चन्द्रमा नक्तमेति।।''[28] इति।

तिलकमते अनेन मन्त्रेण प्रतिपादितं भवति यद् आर्यजनाः तेषां मस्तकोपरि गगने एव सप्तर्षिमण्डलदर्शने शक्ता आसन्। सुमेरुप्रदेशं विना नान्यस्मिन् प्रदेशे मस्तकोपरि सप्तर्षिमण्डलदर्शनमसम्भवमेव। अत आर्याणां निवासस्थलं सुमेरुप्रदेश एवेति तिलकमतम्। परन्तु नेदं मतं सामश्रमिणा स्वीकृतम्। तन्मते निरुक्तानुसारं मन्त्रस्थस्य ऋक्षशब्दस्यार्थस्तु न सप्तर्षिमण्डलमपि तु यत्किञ्चिद् नक्षत्रम्। 'उच्चा' नाम मस्तकोपरिस्थितं गगनं न, उपरिस्थानमेवार्थः। तेन सर्वाणि एव नक्षत्राणि यानि उपरि आकाशे स्थितानि तानि एव अस्माभिः द्रष्टुं शक्यन्ते। केवलं शतपथब्राह्मणे ऋक्षशब्दः सप्तर्षिमण्डलार्थे प्रयुक्तः। परन्तु तत्र इदमपि उक्तं यत् सप्तर्षिमण्डलं केवलम् उत्तरस्यां दिशि एव द्रष्टुं शक्यते 'उत्तरा हि सप्तर्षय उद्यन्ति'[29] इति। परन्तु उत्तरशब्दो नात्र दिग्वाची। निरुक्ते उत्तरशब्द उपरिगतावस्थानार्थे व्यवहृतः। यत्किमपि उपरि अवस्थितं तदेवात्रोत्तरपदेन बोध्यम्। तथाहि निरुक्ते निरुक्तम् 'उत्तर उद्धततरो'[30] इति। दुर्गाचार्येणापि उक्तं भाष्ये 'उद्गततरो भवति उपरिष्टाद् अवस्थानात्'[31] इति। किञ्च सामश्रमिणा तिलकमतखण्डनाय इयमपि युक्तिर्विहिता यद् 'अमी यऋक्षा'....इत्यादिमन्त्रे दैवतं हि वरुणः। वरुणशब्दार्थो हि रात्रिः। तस्मादुच्यते ऐतरेयब्राह्मणे 'रात्रिर्वरुणः'[32] इति। निघण्टावपि आदित्यवाचिशब्दगणे वरुणशब्दः पठ्यते। तस्माद् वरुणो नाम सूर्यः। अतोऽस्य मन्त्रस्यार्थो हि – रात्रौ अधस्स्थितः सूर्यो दिवसे क्व अन्तर्धानं ब्रजति? वस्तुतस्तु आदित्यरूपिणो

वरुणस्य सूर्यस्य वा कारणात् चन्द्रनक्षत्रग्रहतारकादयः प्रकाशन्ते। यदि तिलकमतानुसारमार्याः मेरुप्रदेशस्य मूलनिवासिनस्तर्हि अधःस्थितेन सूर्येण कथमपि चन्द्रादीनां प्रकाशनं न सम्भवेत्। तस्माद् बालगङ्गाधरमतं सामश्रमिमते बालविजृम्भितमेव।

**वेदस्य रचनाकालविषये सत्यव्रतसामश्रमिणोऽभिमतम् -**

सामश्रमिमते वेदस्य कालनिर्धारणमसम्भवमेव। कल्हणविरचित-राजतरङ्गिण्याम् उद्धृतं –

"शतेषु षट्सु सार्धेषु त्र्यधिकेषु च भूतले।
कलेर्गतेषु वर्षणामभूवन् कुरुपाण्डवाः॥"[33]

इति श्लोकमिममाश्रित्य तेनोक्तं यत् कलियुगस्य ६५३ वत्सरे व्यतीते कुरुपाण्डवानाम् आबिर्भावोऽभवत्। अर्जुनस्तस्मात् कलियुगस्य सप्तमशताब्द्याम् आविर्भूतः। अर्जुनस्य पौत्रस्य परीक्षितः काले व्यासदेवसुनूः शुकदेव आसीत्। शुकदेवस्य कालः अष्टमशताब्दी। पाणिनिना व्यासदेवपुत्रविषये यदि ज्ञातं किञ्चित् स्यात् ,तर्हि तेन 'वैयासकिः' इति पदस्य व्युत्पत्तिविधानं विहितं स्यात्। परन्तु तेन वैयासकिरिति पदं न व्युत्पादितम्। वैयासकिरिति पदं व्युत्पादितं पाणिनिपरवर्तिकाले वार्तिककारेण महामतिना कात्यायनेन 'व्यासवरुड-'(पा.४.१.९७-वा.) इति वार्तिके। शुकदेवः परीक्षितश्च यदि कलियुगस्य अष्टमशताब्द्यामाविरभवतां तर्हि पाणिनिकालमवश्यमेव तत्पूर्वशताब्द्यां सप्तमशताब्द्यां स्यात्। खृष्टजन्मनः प्रायः ३१०० वत्सरात् प्राक् कलियुगस्य प्रारम्भो जात इति ऐतिहासिकानां राद्धान्तः। तेन पाणिनिकालम् अद्यप्रभृति ४५०० वस्तरात्पूर्वमेवेति ऐतिहासिकानां समयः। पाणिनेः पूर्वं वाभ्रव्यप्रभृतयो वैदिकमन्त्राणां क्रमपाठकर्तार आबिरभवन्, तेभ्यः पूर्वं शाकल्यादिपदपाठकर्तार आबिरभवन्, तेभ्योऽपि पूर्वं शाकटायनादीनामाबिर्भावोऽभवत्, तेषामपि पूर्वं लाट्यायनाटिकल्पसूत्रकाराणाम् आबिर्भावोऽभवत्। वेदाङ्गान्तर्गततया कल्पसूत्राणामपि पूर्वमनुब्राह्मणात्मकग्रन्थास्तेषामपि पूर्वं ब्राह्मणग्रन्थानाम्

आबिर्भावोऽभवत्। ब्राह्मणानामपि बहुपूर्वं वेदमन्त्राणां संकलनात्मकसंहिता-ग्रन्थाः सम्पादिताः। संहिताग्रन्थानां संकलनकालाद् बहुपूर्वमेव ऋषयो वेदमन्त्राणां कर्तारः अभवन्। तस्माद्वेदस्य कालनिर्णयोऽसम्भव एवेति सामश्रमिमतम्। सामश्रमिणा एवमपि उक्तं यत् क ऋषिः कं मन्त्रं रचितवान् इति विषयेऽपि नास्ति किमपि निश्चयात्मकं प्रमाणम्। द्रष्टुः स्रष्टृत्वेन स्वीकारेऽपि द्रष्टृणाम् ऋषीणां कल्पितनामधेयान् न किमपि स्थिरीकर्तुं शक्यते। यथा सूर्यवंशस्य आदिपुरुषत्वेन सूर्यस्य स्वीकारोऽपि सूर्यस्य जडपिण्डात् तस्य औरसेनैव सूर्यवंशीयनृपाणामाविर्भावोऽभवदिति विश्वासो यथा वास्तविकताया अभावान्न तत्प्रमाणत्वेन ग्राह्यं, तद्वद्वेदानां रचनाकालविषये सुदृढप्रमाणाभावाद् वैदिकसाहित्यस्य कालनिर्धारणविमर्शनम् असङ्गतमेवास्ते इति सामश्रमिमतम्।

## वेदानां पौर्वापर्यविषये सामश्रमिमतम्–

वेदानां पौर्वापर्यविषयकविमर्शनेऽपि सामश्रमिमहोदयो मनुते यदादौ ऋग्वेदः, ततः साम, साम्नः परं यजुः, अन्तिमे अथर्व इत्यादिरूपेण पौर्वापर्यविमर्शनं न संगतम्। तथाहि उदाहणरूपेण सामश्रमी महोदयो वदति यद् – कश्चिद् फलविक्रेता यदि बहूनि फलानि स्वकीये आपणे आम्र-जम्बु-इत्यादिरूपेण विभागं कृत्वा स्थापयन्ति, ततश्च तानि फलानि दृष्ट्वा कोऽपि यदि वक्तुमुत्सहते यद् -आम्राणि पूर्वमुत्पन्नानि, ततः जम्बुफलानि उत्पन्नानि, एवम्विधं वचनं यथा न युक्तिग्राह्यं प्रमाणाभावात्, तद्वद् ऋग्वेद आदौ आविर्भूतस्तत सामादिवेदानामाविर्भाव इत्यादिकथनमपि असंगतमेवास्ते प्रमाणाभावात्।

## विश्वसृष्टिविषये सामश्रमिमतम्–

वैदिकवाङ्मये बहुत्रैव विश्वसृष्टिविषयकं वर्णनं प्राप्यते,सामश्रमिमते तत्सर्वं रूपकमात्रमेव। तन्मते ब्राह्मणग्रन्थेषु वर्णितानि सृष्टितत्त्वानि प्रकृत्या कल्पनाप्रसूतानि। सामश्रमिणा एवमपि उक्तं यत् सृष्टिवर्णनविषये ब्राह्मणे यदुक्तानि तत्सर्वं न तथा गुरुत्वेन भाव्यम्। प्रसङ्गेऽस्मिन् तेन ब्राह्मणविषयकं

यास्काचार्यस्य निरुक्तवचनं समुद्धृतं 'बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति'[34] इति। सामश्रमिमते आदिसृष्टिविषयकं तथ्यं न केनापि ज्ञातुं शक्यम्। किञ्च तन्मते भूस्तरं परीक्ष्य भूतत्त्वविदः सृष्टिविषये यत्किमपि वक्तुमत्सहेत, तेन तु भूतत्त्वविदां धीसामर्थ्यनिर्णयो भवति, न तु एतेन सृष्टिविषये प्रकृतरूपेण ऐकमत्येन निश्चितसिद्धान्ते उपनेतुं समर्था भवन्ति विद्वांसः।

**लोकत्रयविषये सामश्रमिमतम्**–

वैदिकवाङ्मये भूलोकत्रयस्योल्लेखो दृश्यते। इदं हि भूलोकत्रयं सामश्रमिमते सूर्यात् क्रमादधो विद्यमाना बुधः, शुक्रः राहुश्चेति। तन्मते पृथिवी एव राहुरूपेण ज्ञेयः। अत्र प्रमाणत्वेन सामश्रमिणा ऋग्वेदाद् यो मन्त्र उदाहृतः स हि 'यं वै सूर्यं स्वर्भानुस्तमसाविध्यद् आसुरः'[35] इति। मन्त्रेऽस्मिन् प्रतिपादितं यद् आसुरः स्वर्भानुः तमसा सूर्यमावृणोति स्म, अत्रिपुत्राः तमसावृतं तं सूर्यं प्रकाशयाञ्चक्रुः। अयमेव स्वर्भानुः कृष्णवर्णत्वाद् अन्नसृष्टिकारिरूपेण पृथिवी एवेति ज्ञेयम्। छान्दोग्योपनिषद्यपि आम्नातं 'यत् कृष्णं तदन्नस्य'[36] इति। अन्नस्योत्सरूपेण पृथवी कृष्णवर्णा। पृथिवी सूर्यस्य प्रकाशमावृणोतीत्यस्माद्यथा स्वर्भानुरिति तन्नाम, तद्वत् सा पृथिवी आसुरीरूपापि। किञ्च सर्वेषामसूनां प्राणिनां वाश्रयत्वेन पृथिवी आसुरीपदेन व्यपदिष्टा। किञ्च पृथिवी सूर्यालोकं तमसावृणोतीत्यस्माद् राहुरिति पृथिव्या नामान्तरम्।

वैदिकवाङ्मये बहुत्रैव त्रिलोकस्योल्लेखो दृश्यते। सामश्रमिमते पृथिव्यास्तथा दृश्यजगतो मध्ये यथा द्युलोकान्तरीक्षलोकयोरवस्थानं तद्वदस्माकं मानवानां देहमध्येऽपि लोकत्रयस्य देवतात्रयस्य च अधिष्ठानं वर्तते।

**मन्त्रभेदविषये सामश्रमिमतम्** –

त्रयीटीकाग्रन्थे सामश्रमिणा आचार्येण वैदिकमन्त्राणां त्रैविध्यं प्रतिपादितम्। महर्षियास्कविरचिते निरुक्तवेदाङ्गे प्रत्यक्षकृत-परोक्षकृता-ध्यात्मिकभेदेन मन्त्रत्रैविध्यं निरूपितमस्ति। सामश्रमिणा आधिदैविकाधि-याज्ञिकाध्यात्मिकभेदेन मन्त्राणां त्रैविध्यं निरूपितम्। तन्मते वेदस्य नैके मन्त्रा

आधिदैविकाः, आधियाज्ञिकमन्त्रा आध्यात्मिकमन्त्राश्च स्वल्पा एव। परन्तु मन्त्राणामाधिदैविकदृष्ट्या व्याख्यानपरम्परा लुप्तप्राया इति हेतोः आधियाज्ञिक-दृष्ट्या वैदिकमन्त्राणां व्याख्याने भाष्यकाराणां कृतभूरिपरिश्रमा दरीदृश्यन्ते। तदुक्तं तेन त्रयीटीकायां –"वस्तुत आधियज्ञा आध्यात्मिकाश्च मन्त्राः स्वल्पा एव आधिदैविका एव बहवः। देवानाम् अग्न्यादीनां स्थानक्रिया-स्वरूपादिज्ञानमेव देवविज्ञानम्। तत एव भूविद्या-स्वविद्या-नौविद्यादेः समुद्भवः, सर्वविद्यानिलयश्चैष विद्यापरपर्यायो वेदः। हन्त! एतर्ह्यस्मद्देशे तादृशविज्ञानचर्चा लुप्तकल्पैवेति कोऽर्हति वेदस्यातिगम्भीरस्याधिदैविकं व्याख्यानं यथायथं पुनः प्रकटयितुम् ? अत एव प्रायः सर्वेषामेव मन्त्राणां यज्ञे व्यवहार्यत्वात् हौत्राद्युपयोगिव्याख्यानस्यैव प्राशस्त्यमिति मन्वानैः सायणाचार्यप्रभृतिभिर्यज्ञपरायणैः यज्ञपरमधियज्ञं नाम व्याख्यानम् अवाकारि प्रायः सर्वत्र, येषां तु आधिदैविक आध्यात्मिको वोभयविधो वार्थो निगदसिद्ध इव प्रतिभाति, तेषामनन्यगत्या तथा तथैव व्याख्यानमालेखि च॥"[37] इति।

**मोक्षविषये सामश्रमिमतम्**–

सामश्रमिणा एवमपि उच्यते यद् "ऐहिकामुष्मिकफलसाधनायैव प्रवृत्तोऽस्मद् वेदः कथं न ब्रुयादैहिकसुखहेतुभूतं पदार्थविज्ञानम्? किञ्च पदार्थज्ञानादामुष्मिकं फलञ्च स्वीकृतं वैशेषिकनैयायिकैश्च। तथाहि 'द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्' (१.१.४) इति काणादाः, 'दुःखजन्मप्रवृत्तिदोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' (१.१.२) इति च गौतमीयाः"[38] इति।

सामश्रमिमते सोमः अधियज्ञपक्षे वल्ली, अधिदैवतपक्षे चन्द्रमा, अध्यात्मपक्षे आत्मा इत्यवधेयम्। वैदिकः सप्तरश्मिः सामश्रमिमते सोमः, मङ्गलः, बुधः, बृहस्पतिः, शुक्रः, शनिः, राहुश्चेति। सूर्यकिरणैः सह उपर्युक्तानां सप्त ग्रहाणां सम्बन्धो विद्यते।

सामश्रमिमते वैदिकसंहिताभागे कुत्रापि मोक्षस्योल्लेखो निर्देशो वा नास्ति। ब्राह्मणग्रन्थे यद्यपि अपुनरावृत्तिः वर्णिता, तथापि सा न दर्शनप्रतिपाद्या मोक्षरूपा। तन्मते वैदिकवाङ्मयस्य संहिताभागानुसारं ब्राह्मणभागानुसारञ्च स्वर्गप्राप्तिरेव मोक्षरूपा। तस्मात् स्वर्गप्राप्तिरेव मनुष्यजीवनस्य मुख्यमुद्देश्यम् आसीद्वैदिककर्मकाण्डे इति सामश्रमिणो मतम्।

जैमिनिनापि उक्तं 'स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात् प्रत्ययाच्च'[39] इति। स हि स्वर्गो लोकान्तरस्थः। आम्नातञ्च ऐतरेयब्राह्मणे 'परो वा अस्माल्लोकात् स्वर्गो लोकः'[40] इति। पापाचारिणस्तस्मिन् स्वर्गे गन्तुम् असमर्थाः। तदुक्तमैतरेयब्राह्मणे 'सोऽपहतपापमूर्ध्वः स्वर्गं लोकमेति'[41] इति।

**शूद्रविषये सामश्रमिमतम्**–

शूद्रान् प्रति अन्यायः अविचारः च वेदानुशिष्टः कदापि न भवितुमर्हति इति सत्यव्रतसामश्रमिणो मतमासीत्। 'यच्छूद्रे यदर्थे यदेनश्चकृमा वयम्'[42] इति वाजसनेयसंहितामन्त्रमुद्धृत्य सामश्रमिणा प्रतिपादितं यद् शूद्राणां प्रति अन्यायाचरणकारिणोऽपराधो भवति। तस्माद्देवसविधे अन्यायाचरणकारिणा क्षमापि प्रार्थनीया। शूद्राणामपि उन्नतिः सर्वैः काम्या, तेभ्योऽपि यथोचितज्ञानशिक्षा प्रदेयेति वेद एव स्मारयन् आम्नायते –

"यथेमां वाचं कल्याणीमावदानि जनेभ्यः।
ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चरणाय च।।"[43] इति।

चतुर्वर्णानामेव मानवानां हितकामनया वैदिकवाङ्मये आम्नायते –

"रुचं नो धेहि ब्राह्मणेषु रुचं राजसु नस्कृधि।
रुचं विश्वेषु शूद्रेषु मयि धेहि रुचा रुचम्।।"[44] इति।

अपि चाम्नातमथर्ववेदे –

"एवं प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु।
प्रियं सर्वस्य पश्यत उत शूद्र उतार्ये।।"[45] इति।

**सामश्रमिणो दर्शनशास्त्रविषयकं मतम्–**

सामश्रमिमते षडास्तिकदर्शनेषु सांख्यं हि प्राचीनतमम्। तत्प्रवक्ता कपिलो महामुनिः आदिविद्वद्रूपेण प्रसिद्धः। श्रीकृष्णेनापि श्रीमद्भगवद्गीतायां गीतं 'सिद्धानां कपिलो मुनिः'[46] इति। तेन एतदपि उक्तं यद्यपि वैदिकवाङ्मये बहुत्रैव बहुकालात् प्रागेव नानाविधदार्शनिकतत्त्वानि निहितानि आसन्, तथापि सर्वादौ कपिलेन महामुनिनैव सर्वप्रथमतया सुन्दररूपेण सुशृङ्खलभावेन सुचारुतया सयुक्त्या च दर्शनशास्त्ररूपेण तानि तत्त्वानि विदुषां दृक्पथमानीतानि। तन्मते सांख्यदर्शनातिरिक्तानि पञ्चास्तिकदर्शनानि प्रायः समकालिकरूपाणि। अत्र कारणं हि प्रत्येकं दर्शने एव अन्येषां दर्शनानां मतानि तत्त्वानि वा उल्लिखितानि सांख्यं विहाय। यथा न्यायदर्शने 'सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात्' (न्यायसूत्रम् ४.१२.२५) इत्यस्य वेदान्तमतस्य, वेदान्ते न्यायवैशेषिकमतस्य 'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यां समवायाभ्युपगमाच्च साम्यादनवस्थितेः'[47] इत्यस्य, 'नित्यमेव च भावात्'[48] इत्यस्य उल्लेखो दृश्यते। वेदान्तदर्शने जैमिनिमतस्य उल्लेखो यथा 'साक्षादप्यविरोधं जैमिनिः'[49] इति सूत्रेण। मीमांसादर्शनेऽपि वेदान्तमतस्योल्लेखो दृश्यते 'ओत्पत्तिकस्तु वादरायणस्य अनपेक्षत्वात्'[50] इति सूत्रे। एवम्भावेन विचार्य सामश्रमिणा सिद्धान्तितं यदात्रेयेण मुनिना प्रवर्तितस्य आन्वीक्षिकिशास्त्रस्य तथा काशकृत्स्नेन प्रवर्तितस्य मीमांसाशास्त्रस्य प्रचारो यदा ह्रासं प्राप्तस्तदा सांख्यान्तरदर्शनशास्त्राणामाविर्भावो जातो युगपदेव। तेन तन्मते दार्शनिकाचार्येषु कपिलो महामुनिः सर्वादिमः, कपिलात् परं पतञ्जलिः, पतञ्जलेः परमात्रेयः काशकृत्स्नः च, तयोरपि उत्तरम् अक्षपादः, पाराशर्यः जैमिनिश्च अक्षपादादपि परं आबिरभवन्।

**आचार्याणां पौर्वापर्यविचारः–**

पाणिनिकात्यायनयोर्विषये सामश्रमिमतं हि यत्तौ मनुपूर्ववर्तिनौ। मनुना नास्तिकविषये उक्तं -

"योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः।

स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः।।"[51] इति।

पाणिनिना नास्तिकविषये यत्सूत्रं विहितं तद्धि'अस्ति नास्ति द्विष्टं मतिः'[52] इति। कात्यायनेनापि पाणिनिमतमिदं समर्थितम्, यस्मात्तेन उपर्युक्तं सूत्रमाश्रित्य वार्तिकं न किमपि प्रणीतम्। तेन पाणिनिकात्यायनयोः मते 'अस्ति परलोकमिति दिष्टं मतिः यस्य स आस्तिकः', किञ्च 'नास्ति परलोकमिति दिष्टं मति यस्य नास्तिकः' इति ज्ञेयः। मनुमते च वेदनिन्दाकारी जनो नास्तिकः। तस्मान्मनुपूर्ववर्तिनौ हि पाणिनिकात्यायनौ वैदिककर्मकाण्डस्य परलोकविषयात्मकत्वाद् इति सामश्रमिमतम्।

**यास्ककात्यायनयोः पौर्वापर्यविषये सामश्रमिणो मतस्यानन्यत्वम्**–

सामश्रमिमते निरुक्तकृद् यास्कः वार्तिककृतः कात्यायनस्य पूर्ववर्ती। प्रसङ्गेऽस्मिन् सामश्रमिणा चतस्रो युक्तयः समुपस्थापिताः।

**प्रथमतः**- निरुक्तकारो यास्कः 'अरण्यानी' इति शब्दस्यार्थो विहितः अरण्यपत्नी 'अरण्यानी अरण्यस्य पत्नी'[53] इति। यास्कश्चेत्कात्यायनात्परवर्ती तर्हि स कात्यायनमनुसृत्य 'अरण्यानी' शब्दार्थो महदरण्यार्थे कृतवान् स्यात्। परन्तु यास्केन महदरण्यार्थे अरण्यानीशब्दार्थो न विहितः। कात्यायनेन 'हिमारण्ययोर्महत्त्वे'[54] इति पाणिनिसूत्रमनुसृत्य महदरण्यार्थे अरण्यानीशब्दार्थो निष्पादितः। कात्यायनेन तु तत्पूर्ववर्तिनं यास्कमनुसृत्य अरण्यपत्न्यर्थे अरण्यानीशब्दार्थो न स्वीकृतः, यतः कात्यायनकाले अरण्यानीशब्दार्थो अरण्यपत्नीतो महदरण्यार्थे परिवर्तितो जातः।

**द्वितीयतः**- यास्केन 'सूर्या'शब्दस्यार्थो विहितः सूर्यपत्नी- 'सूर्या सूर्यस्य पत्नी'[55] इति। कात्यायनोऽपि यास्कमनुसृत्य सूर्यपत्न्यर्थे सूर्यशब्दार्थो निरूपितः 'सूर्याद्देवतायां चाब्वाच्यः'[56] इति।

**तृतीयतः-** यास्केन जारशब्दार्थ आदित्यार्थे निरूपितः। तदुक्तं निरुक्ते 'आदित्योऽत्र जार उच्यते, रात्रेर्जरयिता'[57] इति। यास्कमेवानुसृत्य कात्यायनेनोक्तं 'दारजारौ कर्तरि णिलुक् च'[58] इति।

**चतुर्थतः-** अप+ऋण इत्यस्य सन्धिकार्ये अपर्ण इत्येवं भवति पाणिनिमते। 'प्रवत्सरकम्बलवसनानाञ्चर्णे'[59] ,'ऋण दशाभ्याञ्च'[60] इति नियमानुसारं प्र-वत्सर-कम्बल-वसन-ऋण-दश-शब्दानां पूर्वावस्थितेन ऋकारस्य स्थाने आर् भवति। परम् 'अप'शब्दो नात्रान्तर्याति। यास्केन 'अपार्णम्' इति पदस्य प्रयोगो विहितः 'अरण्यमपार्णं ग्रामाद्'[61] इति। यास्कश्चेत् कात्यायनात्परवर्ती तर्हि तेन अपार्णमिति नोक्त्वा अपर्णमेव ब्रुयात्। परन्तु न तेन तथोक्तम्। तस्मात् कात्यायनात् पूर्ववर्ती यास्क इति सामश्रमिमतम्।

**पाणिनियास्कयोः पौर्वापर्यविचारे सत्यव्रतसामश्रमिणो मतम्**–

यास्कः कात्यायनात् पूर्वभावी अपि न स पाणिनिपूर्ववर्ती इति सामश्रमिमतम्। विषयेऽस्मिन् सामश्रमिणा या युक्तयः प्रदर्शितास्ता अधस्तादुल्लिख्यन्ते।

**प्रथमतः-** पाणिनिमनुसृत्यैव यास्केन निरुक्ते संहितालक्षणं कृतं 'परः सन्निकर्षः'[62] इति। पाणिनिना तु प्रोक्तमेवाष्टाध्याय्यां 'परः सन्निकर्षः संहिता'[63] इति।

**द्वितीयतः-** 'नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च वैयाकरणानाञ्चैके'[64] इति यास्कवचने वैयाकरणरूपेण पाणिनिसम्प्रदाय एव विविक्षितः। यास्कमते सर्वाणि एव नामपदानि धातुजानीति केचन वैयाकरणाः स्वीकुर्वन्ति, केचन च न स्वीकुर्वन्ति। तस्मादेव पाणिनिना सूत्रितमष्टाध्याय्याम् 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'[65] इति 'कृत्तद्धितसमासाश्च'[66] इति च। महाभाष्येऽपि धातुजानि अधातुजानि चेति द्विधा विभागो दर्शितो नामपदानाम्। परन्तु पाणिनिपूर्ववर्तिवैयाकरणसम्प्रदाये नामपदानां द्विधा एवं विभागो न दर्शितः।

तस्मादेव सामश्रमिमते यास्कः पाणिनिना प्रभावितः। अतः स पाणिनिपरवर्तीति तन्मतम्।

**तृतीयतः-** यास्केन अभ्यस्तधातूनां बोधनाय निरुक्ते 'चर्करीत' इति क्रियापदस्य व्यवहारो विहितः'आपनीफणदिति फणतेश्चर्करीतवृत्तम्'[67] इति। शाकटायनादीनामृक्तन्त्रादिग्रन्थात् 'चर्करीत' इति क्रियापदार्थो न ज्ञायतेऽस्माभिः। महाभाष्ये पतञ्जलिना 'चर्करीत' इति क्रियापदस्यार्थोऽभ्यस्तार्थे व्याख्यातः। तस्मादेव सामश्रमिमते यास्कः पाणिनिना प्रभावित इति ज्ञेयः।

**चतुर्थतः-** यास्केन निरुक्ते निरुक्तमेतद् यद् निरुक्तं शास्त्रं हि यौगपद्येन व्याकरणस्य परिपूरकं स्वातन्त्र्योपेतञ्च। तदुच्यते निरुक्ते 'व्याकरणस्य कार्त्स्न्यं स्वार्थसाधनञ्च'[68] इति। अत्र व्याकरणपदेन पाणिनिव्याकरणमेव बोध्यमित्यासीद् यास्कस्याभिप्रायः। वस्तुतस्तु परिपूर्णतया समग्रं व्याकरणशास्त्रं पाणिनिना एवादौ रचितमित्यस्ति प्रसिद्धिः, महाभाष्येऽपि समर्थितं प्रसङ्गेऽस्मिन् 'कथं तर्हि इमे शब्दाः प्रतिपत्तव्याः? किञ्चित् सामान्यविशेषवल्लक्षणं प्रवर्त्यं येनाल्पेन यत्नेन महतः शब्दौघान् प्रतिपद्येरन्।'[69] इति। पाणिनेरेव सर्वादिमव्याकरणकर्तृत्वं नन्दिकेश्वरस्य चतुर्दशमाहेश्वरसूत्रस्य व्याख्यायां प्रातिपादितः –

"नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।
उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्।।"[70] इति।

किञ्च श्लोकमिममाश्रित्य नागेशभट्टेन या व्याख्या कृता तया व्याख्ययापि महर्षेः पाणिनेः सर्वादिमव्याकरणकर्तृत्वं सिध्यति। पाणिनीयशिक्षाग्रन्थेऽपि प्रसङ्गेऽस्मिन् उक्तं –

"शङ्करः शाङ्करीं प्रादाद् दाक्षीपुत्राय धीमते।
वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः।।"[71] इति।

अतो यास्केन पाणिनिव्याकरणमेव निरुक्ते निर्दिष्टमिति सुधीभिर्भाव्यमिति हेतोः यास्कपूर्ववर्तिरूपेण पाणिनेरवस्थानं प्रमाणीकरोति सत्यव्रतसामश्रमिमहोदयः।

**पञ्चमतः-** निरुक्ते यास्केन उक्तं 'एवं तद्धितसमासान्निर्ब्रुयात्, निर्ब्रुयान् नावैयाकरणाय नानुसम्पन्नाय नाविदंविदे वा'[72] इति। अस्यार्थो व्याकरणेऽनभिज्ञाय जनाय निरुक्तशास्त्रज्ञानं न शिक्षणीयम्। अत्र व्याकरणपदेन पाणिनिव्याकरणमेवाभीष्टं यास्कस्येति सामश्रमिमतम्। तस्माद् यास्कपूर्ववर्ती पाणिनिरिति सिध्यति।

**षष्ठतः-** निरुक्ते 'तद्धितसमासेषु'[73] इति वाक्यांशे तद्धितप्रत्ययानामुल्लेखो दृश्यते। महाभाष्यकृता पतञ्जलिनापि उक्तं पस्पशाह्निके 'न चान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुम्'[74] इति। यस्मात् निरुक्तकारेण निरुक्ते तद्धितप्रत्ययानामुल्लेखो विहितस्तस्मात् तेन पाणिनिव्याकरणं विज्ञातं स्यादिति सामश्रमिमतम्। एतेनापि निरुक्तकारस्य पाणिनिपरभावित्वं सिध्यति। महर्षिणा पाणिनिना अष्टाध्याय्यां येषां पूर्वाचार्याणां शाकल्यादीनां नामोल्लेखं कृतं,तेन तु नैतत् सिध्यति यत्ते आचार्याः सर्वाङ्गसम्पूर्णतया किमपि व्याकरणशास्त्रं रचितमिति सामश्रमिमतम्। व्याकरणशास्त्रे विश्वतोमुखं गभीरमालोचनं पाणिनिनैव सर्वादौ कृतमिति निश्चित्यैव सामश्रमिणा सिद्धान्तितं यद् यास्काचार्यः पाणिनिपरवर्ती।

किं बहुना ऋग्वेदीयाद् ऐतरेयब्राह्मणात् परं यास्काचार्यस्याविर्भाव इति सामश्रमिणा सिद्धान्तितम्। निरुक्तस्य सन्ति नैकानि वचनानि यानि तु ऐतरेयब्राह्मणात् समुद्धृतानि। यथा सामश्रमिमते 'यस्यै देवतायै हविर्गृहीतं स्यात् तां मनसा ध्यायेद् वषट्करिष्यन्निति ह विज्ञायते'[75] इति निरुक्तवचनम् ऐतरेयब्राह्मणस्य 'यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेद् वषट्करिष्यन् साक्षादेव तद्देवतां प्रीणाति'[76] इत्यंशात् समुद्धृतम्।

किञ्चेदमैतरेयब्राह्मणं यास्कात् पाणिनेरपि च पूर्ववर्तीति सामश्रमिमतम्। 'छन्दोगौक्थिक्'[77] इति पाणिनीयसूत्राज् ज्ञातं भवति यच्छान्दग्योपनिषद् पाणिनेः पूर्ववर्तिनी। तस्यां छान्दोग्योपनिषदि महीदासस्य ऐतरेयस्य नामोपलभ्यते। तस्मादैतरेयब्राह्मणं छान्दोग्योपनिषदः पाणिनेश्च पूर्ववर्तिनमिति ज्ञेयम्। किञ्च गणपाठः पाणिनिना विहितस्तत्तु पाणिनेः 'श्रेण्यादयः कृतादिभिः'[78] इति सूत्रात् परिष्कृतः।श्रेण्यादयः पठ्यन्ते, कृतादय आकृतिगण इति तु पाणिनीयव्याकरणे व्याख्यातः। 'शुभ्रादिभ्यश्च'[79] इति पाणिनिसूत्रे शुभ्रादिगणे स्त्रियाम् इतराशब्दस्य पाठो विद्यते। इतराया पुत्रस्य महीदासस्य नामानुसारेणैव ऐतरेयब्राह्मणमिति नामकरणं प्रसिद्धमेव वैदिकवाङ्मये। इतराशब्दात् ढक्-प्रत्ययेन ऐतरेयशब्दस्य व्युत्पत्तिः पाणिनिव्याकरणे दर्शिता। अतः पाणिनिना ऐतरेयब्राह्मणविषयो विज्ञातः स्यादिति तु सिद्धमेव। किञ्च तस्मिन् ऐतरेयब्राह्मणे आश्वलायनश्रौतसूत्रस्य रचयितुः आश्वलायनस्य नामोल्लेखो मिलति। तस्माद् ऐतरेयो महीदास आश्वलायनात् पूर्ववर्तीति निश्चप्रचमेव वक्तुं शक्यते। अपि च स आश्वलायनः पाणिनेरपि पूर्ववर्तीति अपि ज्ञेयम्। अत्र कारणं हि पाणिनिना 'नडादिभ्यः फक्'[80] इति सूत्रे आश्वलायनशब्दस्य व्युत्पत्तिः प्रदर्शिता। तेन आश्वलायनः पाणिनिपूर्ववर्ती, ऐतरेयो महीदासश्च आश्वलायनपूर्ववर्ती, ऐतरेयो महीदासश्च पाणिनिपूर्ववर्तीति एवम्भूता एतावता आलोचिताः सामश्रमिसिद्धान्ता अनन्यत्वेन वेदविदां विदुषां संसदि सादरं गृहीता इत्यत्र नास्ति सन्देहावसरः।

एतादृशानां पुण्यश्लोकानां वेदज्ञाचार्याणां विविधशास्त्रगतवैदुष्य-प्रतिभाच्छटया क्षणे क्षणे एव नवतामादधानाः वेदव्याकरणदर्शन-ज्योतिषादिशास्त्रसिद्धान्ताः समेषां मनोमुकूरे चिराय राजन्ते। अतस्तद्वचनेनैव तदीयं महत्त्वमन्ततो गत्वा अस्माभिः सदैव स्मरणीया –

"दृष्ट्वा यत्सत्यनिष्ठां प्रमुदितगुरुणाख्यायि सत्यव्रतोऽयं
वुन्दीशानश्च तुष्टः सदसि परिचयादाह सामश्रमीति।
यस्मै बङ्गेष्वयच्छद् भुवनविजयिनी मुद्रितं ग्रन्थमेकं
यत्पौर्वैरावसथ्यः परिचरितो इतो बङ्गदेशेऽपि नित्यम्॥

आदैक्षाद् ब्रह्मचर्य्याद् गुरुभवनकृत्याद् येन वित्ता हि वेदा
आकेदाराच्च पद्भ्यां भ्रमितमपि जिता लिङ्गिनो ब्रह्मकुण्डे।
हरिश्चन्द्रीयपक्षे जयपुरसमितौ येन लब्धाः प्रतिष्ठा
माध्यस्थं येन काश्यां कृतमधिपमतं श्रीदयानन्दवादे ॥
बङ्गे छन्दश्च गेयं यदुरपि तनितं सानुवादं सटीकं
षड्विंशं दैवमन्त्रे विधिकमुपनिषद् वंशमार्षेयकञ्च।
उहोह्ये चैव गाने परिचयसहिते सप्तपर्वान्वितेऽपि
आख्याज्ञानाय तत्र प्रकटित इति ह स्तोत्रियारव्यावबोधः॥
गानञ्चारण्यकाख्यं स्वानुवदनयुतं छन्द आरण्यकञ्च
नैरुक्ते भाष्ययुक्ते निगमकसहिते टीकिते येन सम्यक्।
शाकेऽस्मिन् व्योमभास्वद्वसुकुमुदमिते पूर्णचन्द्रेऽर्ध्यभाद्रे
तेनाद्धा भाष्यभाषाविवरणसहितः काशितश्चोत्तराख्यः॥"[81]

इति शिवम्।

## सहायकग्रन्थपञ्जी


*अथर्वसंहिता*, रथ्-हुइटनी-सम्पादिता, वार्लिन् , संस्करणम् – 1856।

*अष्टादशस्मृतिः* (भाषाटीकासहिता), प्रकाशकः – प्रो. वेम्पटि-कुटुम्बशास्त्री, राष्ट्रियसंस्कृतसंस्थानम्, नइ-दिल्ली, संस्करणम् -2005।

आपदेवः, *मीमांसान्यायप्रकाशः*, सम्पादकः अभ्यङ्करोपाह्व-वासुदेव-शास्त्री, प्रकाशकः भाण्डारकर-प्राच्यविद्यामन्दिरः, संस्करणम् – 1937, पुणे।

आपस्तम्बः, *यज्ञपरिभाषासूत्रम्*, चिन्नस्वामिशास्त्रिसम्पादितम्, प्रकाशकः चौखम्बा-सुरभारती-प्रकाशन, द्वितीयसंस्करणम्, 2009, वाराणसी, उ. प्र.।

*ईशाद्यष्टोत्तरशतोपनिषदः*, पण्शीकरोपाह्व-विद्वद्वर-वासुदेवशर्मणा संस्कृतः, प्रकाशकः चौखम्बा-विद्याभवनम्, पुनर्मुद्रितसंस्करणम्, 2010, वाराणसी।

*ऋक्संहिता* (खण्डचतुष्टयात्मिका), श्रीमत्सायणाचार्यविरचितमाधवीय-वेदार्थप्रकाशसहिता, सम्पादकः श्रीमन्मोक्षमूलर्-भट्टः, प्रकाशकः – ड. सि गिरिः, राष्ट्रियसंस्कृतसंस्थानम्, भारतीयसंस्करणम्,2006, नइ दिल्ली, मुद्रकः चौखम्बा-संस्कृत-सिरिज्-अफिस्, वाराणसी।

*ऐतरेयब्राह्मणम्* (सायणभाष्योपेतं), प्रकाशकः ड. सी गिरिः, राष्ट्रियसंस्कृतसंस्थानम्, नइ दिल्ली, संस्करणम् 2006।

दीक्षितः, भट्टोजी, *वैयाकरणसिद्धान्तकौमुदी* (खण्डचतुष्टयात्मिका), सम्पादकः गिरिधर-शर्मा, संस्करणम् 2004, मोतिलाल-वनारसी-दासः,दिल्ली।

*ब्रह्मसूत्रशङ्करभाष्यम्* (भामती-कल्पतरु-परिमलसहितम्), सम्पादकः के. एल्. जोशी, प्रकाशकः परिमलसंस्करणम्, नइ दिल्ली,2007।

*त्रयीभाषा*, सत्यव्रतसामश्रमिलिखिता, सत्यव्रतसामश्रमिणा प्रकाशिता, कोलकाता,1908।

*त्रयीटीका*, सत्यव्रतसामश्रमिलिखिता, सत्यव्रतसामश्रमिणा प्रकाशिता, कोलकाता,1907।

*चतुर्वेदभाष्यभूमिकासंग्रहः*, बलदेव-उपाध्यायसम्पादितः,प्रकाशकः – वनारस-हिन्दु-विश्वविद्यालयः, द्वितीयसंस्करणम्,2003, वाराणसी, उ. प्र.।

*निरुक्तम्* (व्रजजीवन-प्राच्यभारतीयग्रन्थमाला), कश्यपप्रजापतिकृत-निघण्टुभाष्यरूपं दुर्गाचार्यकृत-ऋज्वर्थाख्यव्याख्यानुसारी च, मुकुन्दझाशर्मणा कृतया निरुक्तविवृत्त्या टिप्पण्यादिभिः समेतं सम्पादितं संशोधितं च, प्रकाशकः चौखम्बा-संस्कृतप्रतिष्ठानम्, संस्करणम् 2004, वाराणसी, उ. प्र.।

*पाणिनीयशिक्षा*, सम्पादकः – ड. नरेश-झा, प्रकाशकः – चौखम्बा-सुरभारतीप्रकाशनम्, वाराणसी, उ. प्र.,संस्करणम् 2009।

*वाजसनेयि-माध्यन्दिन-शुक्लयजुर्वेदसंहिता*, पण्डित-जगदीशलाल-शास्त्रिणा सम्पादिता, पुनर्मुद्रितसंस्करणम् – 2007, प्रकाशकः – नरेन्द्रप्रकाशजैन, मोतिलाल-वनारसी-दासः, ISBN 978-81-208-0336-7, नइ-दिल्ली।

भगवत्पतञ्जलिः, *व्याकरणमहाभाष्यम्*, सम्पादकः – श्रीगुरुप्रसाद-शास्त्री, प्रकाशकः – राष्ट्रियसंस्कृतसंस्थानम्, नव देहली, पुनर्मुद्रितसंस्करणम् – 2006।

भगवत्पाणिनिः, *अष्टाध्यायीसूत्रपाठः*, सम्पादकः – ड. रमाशङ्करमिश्रः, संस्करणम् 2005, मोतिलाल-वनारसी-दासः, दिल्ली।

*महाभारतम्*, शान्तिपर्व, महामहोपाध्यायहरिदाससिद्धान्तवागीशेन सम्पादितम्, प्रकाशकः विश्ववाणीप्रकाशनम्, तृतीयसंस्करणम्, 2005, कलिकाता।

*मार्कण्डेयपुराणम्*, पञ्चाननशास्त्रिसम्पादितम्, नवभारतप्रकाशनम्, कलिकाता, 2003 संस्करणम्।

*राजतरङ्गिणी*, अमितभट्टाचार्येण सम्पादिता, सदेश-प्रकाशनम्, कलिकाता, संस्करणम् 2009।

सामश्रमिसत्यव्रतेन लिखितम् *ऐतरेयालोचनम्*, कलिकाता,1920।

चट्टोपाध्यायः, अमरकुमारः, *वेदचर्चाय वङ्गभूमि ओ सामश्रमी*, सारस्वत समाज, द्वितीय संस्करण, 2005।

*श्रीमद्भगवद्गीता*, नवभारतप्रकाशनम्, कोलकाता, प्रथमसंस्करणम्, 2006।

वसु, योगिराजः, *वेदेर परिचय*, फार्मा के एल् एम् प्रा. लि., तृतीय संस्करण, 2007. कलिकाता.

## तथ्यसूत्राणि

---

[1] आपोदेवविरचिते *मीमांसान्यायप्रकाशे*

[2] *त्रयीटीकायाम्*, ४ पृष्ठायाम्

[3] तत्रैव, १२८ पृष्ठायाम्

[4] *श्रीमद्भगवद्गीतायाम्*, १६/२३

[5] *मार्कण्डेयपुराणोक्तदेवीमाहात्म्ये*, १२/२७-२८।

[6] *त्रयीभाषाग्रन्थभूमिकायाम्*

[7] *आपस्तम्बयज्ञपरिभाषासूत्रम्* (१/३४)

[8] *ऋग्वेदभाष्यभूमिका*, सायणाचार्यः

[9] *अष्टाध्यायी* ६/४/१७१

[10] तत्रैव ४/३/१०१

[11] *जैमिनिसूत्रम्*, १/२/३३

[12] *ऋग्वेदभाष्यभूमिका*, सायणाचार्यः

[13] *तैत्तिरीयसंहिताभाष्यभूमिका*, सायणाचार्यः

[14] *ऋग्वेदभाष्यभूमिका*, सायणाचार्यः

[15] *बृहदारण्यकोपनिषद्*, (२/४/१०),(४/५/११)

[16] *पराशरसंहिता* १/२०

[17] तत्रैव

[18] *निरुक्तम्*

[19] *महाभारतम्*, शान्तिपर्वणि १२/२१०/१९

[20] *निरुक्तम्* , २/१

[21] तत्रैव, १/६/५

[22] तत्रैव, २/७/२

[23] तत्रैव (५/१/२), (५/२/१९)

[24] तत्रैव (९/१/४), (९/४/५)

[25] *निरुक्तम्* ७/३/२०

[26] *ऋक्संहिता* १०/७१/२

[27] सामश्रमिकृतम् *ऐतरेयालोचनम्*

[28] *ऋक्संहिता* १/२४/१०

[29] *शतपथब्राह्मणम्* २/१/२/४

---

[30] *निरुक्तम्* २/३/२
[31] तत्रैव २/३/२ दुर्गाचार्यवृत्तिः
[32] *ऐतरेयब्राह्मणम्* ४/२/४
[33] *राजतरङ्गिणी* १/५१
[34] *निरुक्तम्* ७/७/२
[35] *ऋक्संहिता* ५/४०/९
[36] *छान्दोग्योपनिषद्* ६/४/२
[37] *त्रयीटीका*, पृ. ३९
[38] तत्रैव, पृ. १६३
[39] *पूर्वमीमांसासूत्रम्* ४/३/१५
[40] *ऐतरेयब्राह्मणम्* ६/४/४
[41] तत्रैव ७/२/२१
[42] *वाजसनेयसंहिता* २०/१७
[43] तत्रैव २३/२
[44] तत्रैव १४/४८
[45] *अथर्वसंहिता* १९/६२/१
[46] *श्रीमद्भगवद्गीता* १०/२६
[47] *ब्रह्मसूत्रम्* २/२/११,२/२/१३
[48] तत्रैव २/२/१४
[49] *जैमिनिसूत्रम्* १/२/२८
[50] तत्रैव १/१/५
[51] *मनुसंहिता* २/११
[52] *पाणिनिसूत्रम्* ४/४/६०
[53] *निरुक्तम्* ९/२/३/८
[54] *पाणिनिसूत्रम्* ४/१/४९
[55] *निरुक्तम्* १२/१/७
[56] *पाणिनिसूत्रम्* ४/१/४८वार्तिके
[57] *निरुक्तम्* ३/३/४
[58] *पाणिनिसूत्रम्* ३/३/२०
[59] तत्रैव ८/१/८०
[60] तत्रैव ८/१/८० वार्तिके

---

[61] *निरुक्तम्* ९/१/८

[62] तत्रैव १/६/१

[63] *पाणिनिसूत्रम्* –

[64] *निरुक्तम्* १/४/१

[65] *पाणिनिसूत्रम्* –

[66] तत्रैव

[67] *निरुक्तम्* २/७/६

[68] तत्रैव १/५/१

[69] *महाभाष्यम्* (पस्पशाह्निकम्)

[70] शिवसूत्राणामुपरि *नागेशभट्टीयव्याख्यायाम्*

[71] *पाणिनीयशिक्षा* ५६

[72] *निरुक्तम्* २/१/६

[73] तत्रैव २/१/४

[74] *महाभाष्ये* (पस्पशाह्निकम्)

[75] *निरुक्तम्* ८/३/७

[76] *ऐतरेयब्राह्मणम्* ११/८

[77] *पाणिनिसूत्रम्* ४/३/१२९

[78] तत्रैव २/१/५८

[79] तत्रैव ४/१/१२३

[80] तत्रैव ४/१/९९

[81] सत्यव्रतसामश्रमिसम्पादितायाः *सामवेदसंहिताया* भूमिकायाम्

# आसामप्रदेशवास्तव्यः संस्कृतसाधकः आनन्दरामवरुया

डा. सञ्जय-भट्टाचार्यः

आचार्यः खलु आनन्दराम-वरुया ऊनविंशशतकीयः कश्चनापरिचितो विद्वान् साधारणसंस्कृतविबुधानां सविधे। परन्तु तस्य कृतिविश्वं प्रेक्ष्य अस्माकं शिरः सदा श्रद्धया विनतं भवति। अस्य प्रकाण्डविदुषोऽतिमानविकं कर्मकाण्डम् आदाय विद्वत्संसदि तथालोचनं न भवति, यथापेक्ष्यते। आसीत् स पाश्चात्त्य-संस्कृत्या प्रभावितः परं संस्कृतभाषां प्राचीनसंस्कृतसाहित्यञ्च प्रत्याकर्षणम् अत्यन्तमासीत्तस्येत्यत्र नास्ति संशयलवः कश्चित्।

## आनन्दरामस्य आविर्भावकालो वंशपरिचयश्चेति -

भारतस्य उत्तरपूर्वप्रान्तान्तर्गतस्यासमराज्यस्योत्तरस्यां दिशि गौहाटि-नगर्य्याः राजादुयाराख्ये ग्रामे प्रसिद्धे कायस्थपरिवारे 1850 ईशवीयाब्दस्य मेमासस्यैकविंशतितमे दिवसे आनन्दरामो जनिं लेभे। प्राकृतिकसौन्दर्यमयस्य व्रह्मपुत्रनदस्योत्तरतीरस्थे जनपदे आहोम-नृपतिः चुखाम्पारो राजत्वञ्चकार इति प्रसिद्धिः। ख्रीष्टियषोडशशताब्द्यां चुखाम्पारस्य राजत्वकाले दुर्गाचरणवसुनामको जनः वङ्गदेशादागम्य अस्य राज्ञः सातिशयं प्रीतिमलभत। दुर्गाचरणस्य विद्यया बुद्ध्या चाकृष्टः सन् चुखाम्पारराजः स्नेहवशात् तस्मै मानिकचन्द्र-वरकाकती इत्युपाधिं प्रददौ। राजकर्मणः पुरस्कारस्वरूपेण मानिकचन्द्रः चुखाम्पारतो भूसम्पत्तिं लब्ध्वा असमीयासमाजान्तर्गतोऽभूत्। एवं क्रमेण वङ्गीयकायस्थ-परिवारोऽयं मारिन्दारवरुया इति नाम्ना ख्यातिमगात्। मानिकचन्द्रस्य उत्तरवर्त्ती अष्टमपुरुषो गर्गरामः उत्तरगौहाटिस्थानमुषितवान्। असमप्रदेशे व्रिटिशशासनकाले गर्गरामोऽयम् आमिन् (मुन्सेफ) इति पदमलङ्कृतवान्। आनन्दरामो गर्गरामस्य अस्य तृतीयपुत्रोऽभवत्। शैशवदशायाम् आनन्दरामस्य मातृवियोगोऽभूत्[1] ।

## आनन्दरामस्य शिक्षाजीवनम्

आनन्दरामस्य पिता गर्गरामः प्रभूतविद्यास्वनुरक्तोऽभूत्। स्वपुत्रेभ्यः प्रकृतशिक्षादानाय संस्कृतभाषानुशीलने स नितरां यतते स्म। अतः संस्कृतविबुधानां सकाशादध्ययनं कृत्वा अचिरादेव तत्पुत्रः आनन्दरामः संस्कृतभाषायां पारङ्गतोऽभूत्। उत्तरगौहाटिस्थे गोयालपाडा-विद्यालये कियत्कालम् अध्ययनं कृत्वा आनन्दरामः गौहाटि-उच्चविद्यालये स्वस्याग्रजस्य तत्त्वावधानेन अधीतवान्। 1864 ईशवीयाब्दे च अस्मात् विद्यालयात् सवृत्ति एन्ट्रान्सपरीक्षामुत्तीर्य उच्चशिक्षार्थमानन्दरामः कलकातामाजगाम। तत्र च प्रसिद्धे प्रेसिडेन्सिमहाविद्यालये स्नातकपाठे लब्धप्रवेशः। स्वेन स्वभावमाधुर्येण आनन्दरामः महाविद्यालयस्याध्यापकानां प्रियपात्रमभूत्। प्रख्यात-शास्त्रनिष्णाताः दक्षप्रशासकास्तथा राजनीतिज्ञरूपेणाख्याताः रमेशचन्द्रदत्त-विहारीलालगुप्त-प्रमुखाः विद्वांसः आनन्दरामस्य सहाध्यायिनो बभूवुः। 1866 ईशवीयाब्दे आनन्दरामः षष्ठस्थानम् अधिकृत्य एफ्.ए-परीक्षायां साफल्येन उत्तीर्णवान् । गणितविषये सर्वश्रेष्ठस्थानं प्राप्य तेन डाफ्-वृत्तिः लब्धा। 1869ईशवीयाब्दे प्रेसिडेन्सीमहाविद्यालयात् तृतीयस्थानं प्राप्य स वि.ए.-परीक्षायां ससम्मानं समुत्तीर्णवान्। तदनन्तरं आइ.सि.एस्.परीक्षायां साफल्यम् अधिगन्तुम् आनन्दरामेण भृशं पाठानुशीलनं कृतम्। तस्मिन् वर्षेऽपि गिलक्रिष्टवृत्तिं परिलभ्य अध्ययनाय स इंल्याण्डदेशं गतः। तत्र लण्डनविश्वविद्यालयतः प्रवेशिकापरीक्षाम् उत्तीर्य आनन्दरामः आइ.सि.एस्-परीक्षायै गभीरानुशीलनमकरोत्। अस्यां परीक्षायां ससम्मानं 1871 ईशवीयाब्दे तेन साफल्यमधिगतम्। परस्मिन् वर्षे एव आइन्-परीक्षायां समुत्तीर्य्य स अधिवक्तृपदमधिकुरुते स्म । लण्डनप्रदेशे अवस्थानावसरे आनन्दरामः थियोडोर-गोल्डष्ट्युकर-म्याक्सम्युलर-प्रभृतीनां प्रसिद्धसंस्कृतविदुषां सान्निध्यं लेभे। संस्कृतसाहित्ये आनन्दरामस्य सर्वातिशायिचिन्तनविषये “Anundoram Borooah : A truly civil life” इत्याख्ये प्रबन्धे स्पष्टतयोल्लिखितम् - “Anundoram sought India’s undying soul in Sanskrit and the ancient classics.” [2]

**कर्मजीवनम्–**

आनन्दरामेण कर्मजीवनम् असमराज्यस्य शिवसागरे, वङ्गदेशस्य मयमनसिंह-दिनाजपुर-वगुड़ा-वर्धमान-खुलना-यशोहर-चट्टग्राम-नोयाखालि-कुमिल्लाप्दिस्थानेषु अतिवाहितम्। 1872 ईशवीयाब्दस्यान्ते स विदेशात् स्वदेशं प्रत्यागम्य असमराज्यस्य शिवसागरे सहकारि-म्याजिस्ट्रेटपदमलञ्चकार ससम्मानम्। लब्धपदेनानेन तस्य कर्मजीवनस्य शुभारम्भो जातः। आनन्दरामः खलु असमराज्यस्य प्रथमः अधिवक्ता, आइ.सि.एस्.पदाधिकारी चेति अभूत्। इतःपूर्वम् अस्मिन्प्रदेशे नाभूत् कोऽप्यधिवक्ता -"Anundoram Borooah was an Indian lawyer and scholar of Sanskrit.[3] He was both the first graduate and member of the Indian Civil Service from the state of Assam"[4] [5]. पुत्रस्य कृतित्वेन पिता गर्गरामोऽपि नितरां गर्वितोऽभवत्। असमप्रदेशे स्वल्पदिवसाय प्रशासनिकपदे स्थित्वा आनन्दरामः 1874 ईशवीयाब्दे वङ्गदेशमाजगाम। तदनन्तरं स मैमनसिंह-दिनाजपुर-वर्धमानादि-विविधस्थानेषु भिन्नसमयेषु सहकारि-म्याजिस्ट्रेटपदमलंकृत्य स्वस्य प्रशासनिक-कार्यं साफल्येन परिचालितवान्। 1878 ईशवीयाब्दे युग्मविचारपतिकर-संग्राहकयोर्महद्गुरुत्ववहं पदद्वयम् आनन्दरामेणालंकृतमिति महद्गौरवास्पदमिति।

**आनन्दरामस्य सारस्वतकृतित्वम् -**

संस्कृतभाषां प्रत्यैकान्तिकानुरागवशात् बाल्यकालादारभ्य स्वदेशे विदेशे च निरवच्छिन्नत्वेन संस्कृतचर्चां कारं कारम् आनन्दरामः गीर्वाण्यां सविशेषं व्युत्पत्तिमर्जयामास। राजकार्यावसरे लब्धक्षणिकं मुहूर्त्तमपि तेन संस्कृतशास्त्राध्ययने व्ययितम्। आनन्दरामस्तस्य कर्मजीवने बहून् ग्रन्थान् सम्पादयामासुः। ध्रुपदीसंस्कृतसाहित्यग्रन्थसम्पादनं तावत्[6]-

क). भवभूतेः महावीरचरितम् (सजानकीरामभाष्यम्)
ख). सरस्वतीकण्ठाभरणम्
ग). नामलिङ्गानुशासनम्

अपि च, अन्ये शास्त्रीयग्रन्थाः खलु -

- A Practical English-Sanskrit Dictionary (Part I, II and III) (1877–80)
- Bhavabhūti and His Place in Sanskrit Literature (1878)
- Higher Sanskrit Grammar: Gender and Syntax (1879)
- Ancient Geography of India (1880)
- A Companion to the Sanskrit-reading undergraduates of the Calcutta University (1878)
- Comparison of a comprehensive dictionary of all Dialects of Bengal.
- A comprehensive grammar of the Sanskrit language analytical, historical and lexicographical(1882)

1877 ईशवीयाब्दे प्रशासनिककार्ये पश्चिमवङ्गान्तर्गते वर्धमाननामके स्थानेऽवस्थानकाले आनन्दरामकृतस्य आङ्गल-संस्कृताभिधानस्य प्रथमखण्डः प्रकाशितोऽभूत्। "A Practical English- Sanskrit Dictionary" इति नामाङ्कितोऽभिधानग्रन्थः स्वदेशीयैर्वैदेशिकैर्विद्वद्भिर्बहुधा प्रशंसितः। ग्रन्थस्योपद्धाते संस्कृतस्य प्राचीनत्वप्रसङ्गेन ग्रन्थकृता स्वयमेव उद्घोषितम् - "Sanskrit has long ceased to be a living language and its antiquity has been mixed up with all that imagination could inspire and veneration could support. Its grand and varied literature is, to a considerable extent, shut up in distant manuscripts and special works on special subjects have yet received but very scanty attention.A variety of causes has alienated the modern dialects from their mother tongue, making it often unsafe to draw any inferences from their usage."[7]

आनन्दरामस्याभिधानग्रन्थस्य जनप्रियतायै पुनः द्वितीयखण्डोऽनेन प्राकाशि 1878 ईशवीयाब्दे, पुनश्चास्य संस्करणस्य तृतीयखण्डोऽपि प्रकाशितः 1880ईशवीयाब्दे । पाश्चात्त्ये संस्कृतविद्यायाः प्रचार-प्रसारयोश्च सर्वाग्रगण्यः प्रख्यातो भारतविशारद् दार्शनिकप्रवरो म्याक्समुलारमहोदयोऽपि आनन्दरामस्य इंरेजि-संस्कृताभिधानाख्यग्रन्थस्य प्रशंसां कुर्वन् आनन्दराममुद्दिश्य लिखिते एकस्मिन् पत्रे भणति स्म -

"Your work is evidently not simply a Sanskrit English dictionary mechanically inverted but you have treated each word independently and by giving the nearest approach to each English word in Sanskrit you have shown your familiarity with the idioms of both languages the passages from Sanskrit writers illustrative of the employment of Sanskrit words are extremely useful and give to your work a really scholarlike character." (Extract from A letter from professor MaxMuller, dated Oxford the 31st December 1875)[8]

अपि च, ऊनविंशशताब्द्यन्तेऽविभक्ते वङ्गे कलिकातातः आङ्गल-भाषया प्रकाशितायां पत्रिकायाम् आनन्दरामकृतोऽभिधानग्रन्थो बहुशः प्रशंस्यते –

"Mr. Anandaram Baruah has undertaken a gigantic task -an English Sanskrit dictionary and he deserves all praise for thepatience and Perseverance with which he is pursuing it. We have the first volume of the great work before us; it has been prepared with much care and labour."[9]

1878 ईशवीयाब्दे आनन्दरामेण महाकवेर्भवभूतेर्महावीरचरितं स्वकीयेन जानकीरामभाष्येण समं प्रकाशितम्। स्वस्य दिवंगतस्य मध्यमाग्रजस्य जानकीरामस्य स्मृतिरक्षार्थम् अस्य भाष्यस्यैतादृशं नामकरणमिति निश्चप्रचम्। अस्मिन् वर्षे कलकाताविश्वविद्यालयस्य अध्येतॄणां कृते आनन्दरामेणैका "A

Companion to the Sanskrit-reading undergraduates of the Calcutta University" इति पुस्तिका प्रकाशिता, यत्र मेघदूत-कुमारसम्भव-रघुवंश-भट्टिकाव्य-अभिज्ञानशकुन्तलादिग्रन्थकुसुमानां टीकाटिप्पन्यः सन्निहिता वर्तन्ते । अस्य पुस्तकस्य प्रकाशनादनन्तरं ध्रुपदीसंस्कृतसाहित्ये भवभूतेः स्थानम् अवलम्ब्य आनन्दरामः "Bhavabhūti and His Place in Sanskrit Literature" इति शीर्षकं मनोज्ञमेकं ग्रन्थं रचितवान्। ग्रन्थादौ भवभूतेः सृष्टिमाहात्म्यमुल्लिख्य उच्चप्रशंसापुरःसरम् आनन्दरामेण स्वयमेवागादि -

"The name of Bhavabhūti stands high in Sanskrit literature, It is perhaps the highest in eloquence of expression and sublimity of imagination. Throughout the whole range of Sanskrit literature — from the simple lessons of Hitopadeśa to the most elaborate polish of Naiṣadha - from the terse vigour of Śaṅkarācāryato the studied majesty of Māgha — from the harmonious grace of Kālidāsa to the ornate picturesequences of kādambarī, there is probably no writer who can come up to Bhavabhūti in his wonderful command of Sanskrit language and surprising fluency and elevation of diction. The most difficult verses with the most complicated prosody seem to flow from his tongue without interruption - without any effort without a moment's reflection."[10]

सुबृहतः पूर्णाङ्गव्याकरणस्य प्रकाशनस्याकाङ्क्षातः कलकातायां वहरमपुरे च मुद्रणालयद्वयमानन्दरामेण संस्थापितम्। अथ व्याकरणग्रन्थस्योपादानसंग्रहार्थम् इंल्याण्डदेशं गतः सः । तत्र विविधेभ्यो ग्रन्थगारेभ्यः (व्रिटिश मिउजियम्, अक्सफोर्ड लाइव्रेरि, इण्डिया-अफिस-लाइव्रेरि चेति) व्याकरणग्रन्थानां विविधान्युपादानानि संगृह्य 1883 ईशवीयाब्दे अक्टोवरमासि आनन्दरामः स्वदेशं प्रत्याजगाम। आनन्दरामस्य परिकल्पित-व्याकरणग्रन्थस्य दशमखण्डः 1882ईशवीयाब्दे प्रचरद्रूपतामितः। अस्मिन् खण्डे

महता वैदुष्येण छन्दःशास्त्रीयं तत्त्वजातमुपस्थापितम्। प्रसङ्गतः उल्लेख्यं यत् 1883 ईशवीयाब्दे वामन-वागभट्ट-भोजराजादिप्राचार्यत्रितयस्य अलंकारशास्त्र-विषयकं ग्रन्थत्रयं सम्पाद्य आनन्दरामो ग्रन्थकुसुममिदं '**सरस्वतीकण्ठाभरणम्**' इति नाम्ना प्रकाशितवान्। 1884 ईशवीयाब्दे प्रकाशितस्य संस्कृतव्याकरणस्य तृतीये खण्डे अमरकोष-विश्वप्रकाश-त्रिकाण्डशेष-हारावली-मातृकाशेषादिभ्यः प्रचलिताप्रचलितेभ्यः कोषग्रन्थेभ्यः सदृष्टान्तं शब्दानां रूपान्तराण्यालोचितानि। आनन्दरामस्य संस्कृतव्याकरणस्य परवर्तिखण्डः तृतीयखण्डत्वेन **नानार्थसंग्रह**नाम्ना आङ्गलभाषया सुदीर्घभूमिकया समं प्रकाशितः। अपि च, आनन्दरामः 1885 ईशवीयाब्दे कलकाताविश्वविद्यालयस्य गवेषणाकर्मणः सहकर्मित्वेन नियुक्तोऽभवत्। अस्मिन् वर्षे एव तस्य **'नामलिङ्गानुशासनम्'** '**धातुवृत्तिसार**'श्चेति ग्रन्थद्वयमपि प्रकाशालोकमितम्। नामलिङ्गानुशासनम् इत्यत्र अमरसिंहेन रचितोऽमरकोषः, क्षीरस्वामिनः तथा च वङ्गीयविदुषः बृहस्पतिरायमुकुटस्य टीकया समं सन्निविष्टो वर्तते। धातुवृत्तिसारग्रन्थे दुर्गासिंहेन रचिता कातन्त्रगवृत्तिः रामनाथस्य मनोरमाभाष्येण सह मुद्रिता वर्तते। परस्मिन् वत्सरे आनन्दरामेण **धातुकोष**नाम्ना अपरः कश्चन ग्रन्थः प्राकाशि, यत्र वर्णानुक्रमेण संस्कृतभाषायाः सर्वधातूनाम् अर्थाः सन्निविष्टा वर्तन्ते। प्रचलितसंस्कृतव्याकरणानां धातुसम्बन्धीयांशस्य सारांशोऽप्यत्र सङ्कलितः इति शक्यवचम्।

प्रसङ्गत उल्लेख्यं यत् आसामराज्यवास्तव्योऽयम् आनन्दरामस्तावत् संस्कृतभाषायां सनेट्छन्दसः प्रथमजन्मदाता इति समालोचकाया ऋताचट्टोपाध्यायस्याभिमतम्। आनन्दरामो महता प्रयत्नेन निष्ठया चान्तरिकतया समं ध्रुपदीसाहित्यसमयान् नोल्लङ्घ्य पेष्ट्रार्क-स्पेन्सारीय-शेक्सपीयार-मिल्टनीयानां शिल्पशैल्या आश्चर्यसमन्वयेन सनेट्साहित्यम् अलंकृतवान्। तस्य English Sanskrit Dictionary इत्यस्य ग्रन्थस्य मङ्गलाचरण-ग्रन्थविसर्जनयोः कविताद्वितयं सनेट्छन्दोभिः प्रस्तुतम्। तस्य जीवनस्य श्रेष्ठकीर्तिस्तावद् अभिधानग्रन्थोऽयम्, यस्य ग्रन्थविसर्जनांशे स्वपित्रादीन् प्रति व्यक्तिनिष्ठभावावेगः प्रतिध्वन्यते –

“स्थित्वा यौ देवकल्पौ प्रथमपादमथो पुस्तकस्यास्य बद्धं
विघ्नः सर्वप्रकारः सततमुपनतो यत्प्रसादान्निरस्तः।।

कर्मण्यस्मिन् समाप्ते परिणतमनसानुग्रहानभ्युपेत्य
वन्दे तौ स्वर्गसंस्थौ मम परमगुरुदुर्लभागर्गरामौ”।।

अपि च, आनन्दरामेण Higher Sanskrit Grammar Or Gender And Syntax (The Saraswati press, Calcutta, 1879) इति शीर्षकस्य ग्रन्थस्य मुखबन्धे पञ्च सालंकृतभाषया अपृथग्-निर्वर्त्यतया च कविताः अनवद्यतया चारुरूपेण च स्वरचिताः। तदत्रोल्लिख्यते –

यस्यामादिकविः पवित्रचरितं रामस्य दिव्यं व्यधात्
यस्याञ्चित्ररसा विचित्ररचना वाभाति कादम्बरी।
या भाष्ये गहनां धियं वितनुतेऽभीशं परां शाङ्करे
जीव्यात् साप्रलयं समुज्ज्वलतरा संस्कारपूता गिरा ।।१।।

यस्यै शुद्धविबुद्धसौगतमतं पृथ्व्या महद्धार्यते
रेमे तैमुरवंशभूषणमतीवानन्दयित्या यया।
या शर्मण्यकवीशचित्तमहरद्ग्रन्थेन तेन क्षणात्
सा नो भारतभारती श्रुतिसुधां सर्वत्र कीर्यात् सदा ।।२।।

यामाश्रित्य बपा विदेशजनिनोदाभावि शास्त्रं नवं
भिन्नानां वचसां प्रदर्श्य सुतरां सम्वन्धसारं स्फुटं।
आर्याणां विषये निरस्तमहिमाऽनार्य्यैरिदानीन्तनैर्
उत्थासीष्ट पुनस्तमामतिरुचा सार्या गिरा मञ्जुला ।।३।।

येषां धीनयमार्गणैर्भुजबलैः सर्वत्र भूः सन्नता
येषां विश्वजनीनदर्शनगुणैः सर्वाः कलाः पोषिताः।
येषामाग्रहसंभृता जयति सा पौरातनी भारती
तेषां द्वीपभुवां ततो दृढतरा भूयाद्रतिर्भूयसी ।।४।।

तेषां प्राधान्यजुष्टं विविधगुणयुतं वङ्गवन्धुं समीक्ष्यं
वङ्गानां शासितारं नवविधिविधिना भारतीं द्योतयन्तं।
भारत्या ज्ञानलब्ध्यायतिशयसरलं संस्कृतं शब्दबोधं
वङ्गेष्वेतं नियुक्तस्तमुप सहृदयं **नेडनं** नाहरामि ।।५।।

इह ग्रन्थे प्राचीनैतिह्याधुनिकयोः ऋद्धसमन्वयेन सज्ञानम् आनन्दरामः संस्कृतकाव्यधर्मान् संररक्ष। अतः आसीत् आनन्दरामो न केवलं प्रसिद्धो भावकश्चापि कारयितृप्रतिभाधिकारीति सत्यम्।

## मूल्यायणम् -

ऊनविंशशताब्द्यां संस्कृतभाषायाः प्रचार-प्रसारयोश्च ये ये खलु सारस्वतसाधकाः आविर्भूतास्तेषु आनन्दरामः खल्वन्यतम इत्यत्र नास्ति संशयलवः कश्चित्। संस्कृतव्याकरणे विदुषोऽस्य महती प्रज्ञासीत् । प्रशासनिककर्मणा सह संयुक्तोऽपि अलंकारशास्त्रे अभिधानविषये चानन्दरामस्य सदा उत्साहः संस्कृतप्रेमिणाम् मनः समाकर्षति। तस्य रचनाशैलीं समीक्ष्य कलकातास्थस्य संस्कृतमहाविद्यालयस्य भूतपूर्वाध्यक्षेण महेशचन्द्रन्यायरत्नेन यदुदितं, तदंशमात्रमत्रोल्लिख्यते -"I have carefully gone who were the first two acts of the drama and I can honestly say that the manner in which you have discharged the duties of auditor and commentator has afforded me the greatest pleasure. Your notes are full of the most interesting matter and display an amount of Sanskrit learning that would be creditable to any Sanskrit scholar. ....I can have no hesitation in saying that your edition of ViraCharitais the most valuable that we possess."[11]

राजकार्यस्य गुरुभारेण निरन्तरम् अध्याप्य च आनन्दरामस्य स्वास्थ्यभङ्गो जातः। आनन्दरामस्तस्य ऊनचत्वारिंशद्वर्षाणि व्याप्य कर्मजीवने बहूनि गुरुत्ववहानि सारस्वतकार्याणि चकार। अन्ततोगत्वा परमसुहृदः

तारकनाथस्याश्रये 1889 ईशवीयाब्दे जानुयारीमासस्य ऊनविंशतितमे दिवसे अस्य ज्ञानतपस्विनः कर्मयोगिणः महापुरुषस्य ज्ञानप्रदीपो निर्वापितोऽभूत्। तस्य सृष्टिशैलीं सूक्ष्मेक्षिकया परिशील्य निश्चप्रचमेतद्वक्तुं शक्यते यत् समग्रजीवनं यावत् प्रशासनिककर्मणि अध्ययनाध्यापनादिषु व्यापृतः सन् आनन्दरामः संस्कृतकाव्याङ्गनम् आलोकयामास इत्यत्र नास्ति संशयः।

आनन्दरामकृतान् सम्पादितान् ग्रन्थान् विश्लिष्य अनायासेनैव वक्तुमलं यत् तस्य सारस्वतसाधनायाः लक्ष्यमासीत् संस्कृतभाषा-व्याकरणयोः प्रसारः। संस्कृते आनन्दरामस्यागाधपाण्डित्यन्तु व्याकरणाभिधानालंकारशास्त्रादिचर्चया निबद्धम्। संस्कृतशिक्षायाः प्रचयगमनार्थं तस्याजीवनस्य तुलना केवलं विद्यासागरेण सममेव भवितुमर्हतीति। प्रसङ्गतः उल्लेख्यं यत् विद्यासागर-राजेन्द्रलालमित्रादिविद्वद्भिरपि आनन्दरामस्य ज्ञानचर्चा सविशेषं प्रशंसिता।

## सहायकग्रन्थपञ्जी

Sengupta, Gourangagopal - *Svadēśīẏa Bhārata Bidyāpathika,* Calcutta Roop And Company , Calcutta 1972

Borooah, Anundoram–

*Bhavabhuti And His Place In Sanskrit Literature* , The Saraswati press, Calcutta , 1878

*A Practical English- Sanskrit Dictionary*, Vol.1, Saraswati Press , Calcutta , 1877

*A Comprehensive Grammar Of The Sanskrit Language. Analytical, Historical and Lexicographical. Vol- X. Prosody, Mani Rama Press, Calcutta, 1882*

*Higher Sanskrit Grammar Or Gender And Syntax*, The Saraswati press, Calcutta, 1879

Anundoram Borooah – Wikipedia https://en.m.wikipedia.org /wiki/Anundoram-Borooah

## References

---

[1] Gourangagopal Sengupta , *“Svadēśīẏa Bhārata Bidyāpathika”*

[2]https://www.telegraphindia.com/opinion/anundoram-borooah-a-truly-civil-life/cid/1684024

[3] *Phani Deka* (2007). The Great Indian Corridor in the East.Mittal Publications.p. 101. ISBN 978-81-8324-179-3

[4] *“For the first time in Assam"*. Retrieved 27 November 2012

[5] Dipankar Banerjee. *"A tale of the first torchbearer of higher education in Northeast"*. The Telegraph. Retrieved 27 November 2012

[6] https://en.m.wikipedia.org/wiki/Anundoram-Borooah

[7] Anundoram Borooah, *A Practical English- Sanskrit Dictionary*, Vol.1 , Preface. V

[8] *Bhavabhuti And His Place In Sanskrit Literature*

[9] *The Hindu patriot*, Dated August 6th 1877.

[10] *Bhavabhūti and His Place in Sanskrit Literature*, p.1

[11] ibid.

## ज्योतिषशास्त्रपरम्परायां महामहोपाध्यायसुधाकरद्विवेदिनः अवदानम्

**डा. मधुसूदनमिश्रः**

**जीवनवृत्तम् -**

आधुनिकज्योतिर्वित्सु महामहोपाध्याया: पं. सुधाकरद्विवेदिन: उन्नायका: आसन्। एतै: ज्योतिषशास्त्रस्य लुप्तानां प्राचीनग्रन्थानां प्रकाशेन स्वकीयव्याख्याप्रदावेन भाष्यानां पल्लवने उपपत्तौ च महान् श्रम: विहित:। न केवलं ज्योतिषशास्त्रे प्रत्युत् हिन्दीसाहित्योन्नयनेऽपि तेषां महन्महत्त्वं वरीवर्ति। आचार्यसुधाकरद्विवेदिमहोदयानां जन्म ईस्वीयसन् ख्रिस्ताब्दे1860 तदनु वैक्रमाब्दे 1917 चैत्रशुक्लचतुर्थ्यां काश्यां वरूणात: उत्तरस्यां दिशि चौकाघाटसेतुतोऽग्रे खजुरीनामके ग्रामेऽभवत्। अयं ग्राम अधुना वाराणसी "कचहरी" इत्याख्यस्थानात् उत्तरे विद्यते। एतेषां पूर्वजानां जन्म गोरक्षपुरे इदानींतने "गोरखपुरनगरे" आसीत्। कालांतरे वृद्धप्रतिपामहा: काश्यां समागत्य स्वमातामहानां सविधे दत्तकरूपेण अनुगता: । स्वविरचिते दीर्घवृत्तलक्षणनामके ग्रन्थे लिखितं यत् –

काश्यां सौम्ये विश्वनाथाद्विभाति
गव्यूत्यर्द्धे भव्यमूर्तिर्महेश:।
पृथ्वीशाख्य: तस्य पार्श्वे निवासो
ग्रामे विद्वन् राजगेहार्चिते मे।।[1]

वस्तुत: तदानीन्तने काले काश्यां प्रचलितैका मासिकपत्रिका सुधाकरनामिकासीत्। एकदा तत्पत्रवाहको यदैव चरित्रनायकपितामध्यस्य हस्ते तत्पत्रं समर्पितवान् तदैव गृहान्तरतो दासी शुभसंवादमदद्यात् तस्य पौत्रोऽभूदिति तदैवैतादृशशुभसंवादं श्रुत्वा युगपदेव पौत्ररत्नस्य तत्पत्रिकायाश्च प्राप्तिरभूत तेन कथितं यदस्य बालकस्य नामकरणं सुधाकर इत्येव करणीयम्। अष्टमे वर्षे फाल्गुनशुक्लपञ्चम्यां 1925 (1868 ई.) एतेषामक्षरारम्भो जात:।

## अध्ययनं गुरूपरम्परा च -

एतेषां शिक्षा समीचीना स्यादयं महान् पण्डितो च भवत्विति पितृणामिच्छा आसीत्। तेषां वृत्ति: कर्मकाण्डेनैव प्राचलत्। अत आदौ अयं किमपि ज्योतिषव्याकरणञ्च पठेत् येनास्य जीवनयापनं चलेत् कर्मकाण्डादिकं जातकादिकं चायं पश्येदिति धिया तेषां काशीगमनेच्छाभावद्। अत: निश्चित्य स्वग्रामप्रान्ते तेषां पौरोहित्यमासीत् अतो यदैभि: प्रथमं व्याकरणं पुराणादिकञ्च पठनीयं पश्चात् ज्योतिषीयमध्ययनं येन पौरोहित्यकर्मणि सौलभ्यं सम्पद्यते। अत: तत्कालीने संस्कृतमहाविद्यालये इमे दुर्गादत्तशास्त्रिमहोदयानां सविधे व्याकरणशास्त्राध्ययनं प्रारब्धवन्त:। एकस्मिन् दिने पितृवर्यै: साकं कौमुदीमनोरमेत्यादिपुस्तकं सम्यक् साधीत्य काशिकराजकीयसंस्कृतमहा-विद्यालये पं. श्रीदेवकृष्णमिश्रेभ्यो ज्यौतिषद्वितीयाध्यापकेभ्यो ज्योतिषाध्ययनं समारब्धम्। तदानीं तत्र प्रधानाध्यापका: स्वनामधन्या: ख्यातयशस्का: ज्योतिर्विद: महामहोपाध्याया: पण्डिता: बापूदेवशास्त्रिण: आसन्। ज्यौतिषाध्यापनादिकं तदानीमेकस्मिन्नेव प्रकोष्ठे आसीत्। एषां पिता कृपालुदत्त-द्विवेदी एतानादाय संस्कृतमहाविद्यालये गत्वा स्वयं दूरे एव स्थित्वा आदिष्टवान् यत् गच्छ तत्र शास्त्रिवर्यसमीपे उपविश यावदहमावश्यकं कार्यं सम्पाद्यागच्छामि। परन्त्वेभि: देवकृष्णमिश्रमेव शास्त्रिवर्यं बुद्ध्वा तस्य समीपे उपवेशनं कृतम्। किञ्चित्कालानन्तरं यदा पित्रा मिश्रसमीपे एषां स्थितिर्दृष्टा तदा एतान् आहूय भृशं भर्त्सितवान्। परञ्च एभि: उक्त:- ''पित: एष मिश्रो हृदयतो मम गुरूर्जात: अत्र परिवर्तनं केनापि प्रकारेण भवितुमशक्यम्।''[2] अत एभि: ज्योतिषं यत्किञ्चित्पठितं तद्देवकृष्णमिश्रादेवेति परम्परया ज्ञायते। अथ सुधाकरद्विवेदिन: अध्ययनकालस्यैका घटना विद्यते यस्या: उल्लेखकरणं महत्त्पूर्णं विद्यते। मं.म.प. बापूदवशास्त्रिभिख्यक्तगणितस्य प्रथमभागो मुद्रापित:। तस्यैकं पुस्तकं प्रतिरूपेण पं. देवकृष्णमिश्रमहोदयाय समर्पितम्। तदवलोक्यापूर्वमिदं पुस्तकमिति स्वगुरूवरत: आदरपूर्वकं गृहीत्वा एते स्वगृहमागता:। तत्र नैका: अशुद्धी: संशोध्य प्रातरागत्यैभिरूक्तं यदत्र प्रायेणाशुद्धिर्दृश्यते। श्रुत्वेदं पं. मिश्रमहोदयस्तु सकम्पो जात:, मुहुर्मुहु: हस्तमुद्रया मौनमालाम्व्यतामिति संकेतितवान्। यतो हि

तत्कालीना: शास्त्रिवर्या: गणितक्षेत्रे अप्रतिहता: विद्वांस: आसन्। तत्रैवापरे भागे स्थिता: महामहोपाध्याया: सर्वं कौतूहलं स्वयं प्रदृश्य तानाहूतवन्त:। तैश्च प्रतिभां गणितशास्त्रे कुशाग्रबुद्धिञ्च निभाल्य तदानीन्तनस्य संस्कृतपाठशालाया: अध्यक्षस्य "ग्रिफिथ" महोदयस्य समीपे लिखितं यत् –

"यदयं सुधाकरशर्मा गणिते बृहस्पतिसम:।"

एतेन शीघ्रमेव प्रसन्नेन अध्यक्षमहोदयेनैते महता पारितोषिकेण सम्मानिता:। घटनामिमामाश्रित्यैकदा गुरुभि: स्वयं कथितं यत् तस्मिन् दिने तेषां हृदये यादृश: आनन्द: सञ्जातो न पुस्तादृशोऽस्मिन् जन्मनि कदाप्यनुभूत:। परितोषिकमादाय अध्यक्षप्रकोष्टात् स्वगुरुसमीपे प्रत्यागच्छन्न एते अन्यन्तं हर्षिता बभूवु:। अयं तेषां प्रतिभाया: प्रथमपुरस्कार:। स्वजीवनेऽस्य सम्मानस्य महन्महत्वमिति तैरपि सर्वदा ख्यापितम्।

**अध्यापनपरम्परा -**

भारतवर्षे गणिते तु इमे अत्यन्तं प्रतिभाशलिनो विद्वांस: अभवन्। अध्ययनानन्तरं जीविकाप्राप्त्यर्थं इमे चिन्तिता: आसन्। परन्तुरियं समस्यापि सरलेन दूरीकृता। स्वीयछात्रावस्थायामेव एषां बहवो मैथिलाश्छात्रा: एषां विशिष्टां योग्यतां महाराजदरभंगानरेशश्रीलक्ष्मीश्विसंहबहादुरसमीपे प्रख्यापितवन्त:, तै: स्वपाठशालायां काशीस्थायामेतेषां सन्निवेश: कृत:। पश्चात् काशिकराजकीयमहाविद्यालस्य अध्यक्षेण श्रीमता थीबोमहाशयेनसह एभि: वराहमिहिररचितपञ्चसिद्धान्तिकाया: प्रकाशनं कृतं तदा तेनाध्यक्षेण राजकीयसंस्कृतपुस्तकालयस्याध्यक्षत्वेनैतेषां नियोग: तत्रैव विहित: । अस्मिन् पदे अनवरतं षड्वर्षाणि तैर्यापितानि। अस्मिन् काले सरस्वतीभवनस्य हस्तलिखितानां पुस्तकानां पांडुलिपीनान्च गभीरमध्ययनं विधाय बहव: ग्रन्था: रचिता:।

सन् 1889 ईस्वीये यदा म.म.पं. बापूदेवशास्त्रिण: सेवानिवृत्तिका: जाता: तदा पुन: राजकीयविद्यालये ज्यौतिषस्य स्थानं रिक्तं जातम्। तदा तत्राध्यापकत्वेन डा. थीबोमहोदयेन एषां नियुक्ति: कृता। तत: परं

तत्रैवाध्यापनादिकं सम्पाद्य 1910 ईशवीयवर्षे जनवरीमासे पञ्चाशद्वर्षासन्ने वयसि एतैः काश्यां मुक्तिरवापि। केवलं एकोनत्रिंशद्वयसि इमे संस्कृतमहाविद्यालयस्य ज्योतिषविभागस्य प्रधानाध्यापकाः सञ्जाताः। अबाधं एकविंशतिवर्षपर्यन्तमेभिरिदं दायित्वं निर्व्यूढम्। वस्तुतोऽयमेव कालः सुधाकरद्विवेदिमहोदयानां जीवने स्वर्णकालः वर्तते। अध्यापनकाले एकदा तत्र आङ्गलमहाविद्यालये छात्रेभ्यो गणिताध्ययनाय छात्राणामावाहनं कृतम्। तत्र द्वित्राणि वर्षाणि अध्याप्य पुनः स्वविभाग एवागमनं जातम्। परमदयालवः शतान् छात्रान् अध्यापयन्त इमे रामचन्द्रस्य परमभक्ताः आसन्। गोस्वामितुलसीदासकृतरामायणपाठकालेऽजस्त्रमश्रूणि एतेषां नयनाभ्यामपतन्। एतेषां महाभागानां यावन्तो ग्रन्थाः स्वतन्त्रलिखिताः सम्पादिताः वा वर्त्तन्ते, सर्वत्र श्रीरामचन्द्रस्यैव मङ्गलाचरणमस्ति। एतेषां कीर्तिर्दिगन्तव्याप्ता आसीत्। यूरोपदेशीया अपि गणितज्ञा विद्वास एतेषां सम्मानं चक्रुः। एकदा सकलग्रासे सूर्यग्रहणे तदानीन्तनो भारतेश्वरप्रतिनिधिः कर्जनमहाशयः बक्सरनगरे एतान् समाह्वयत्। तत्र चैभ्यः सः सूर्यग्रहणविषयंक विशेषं ज्ञातम्। एते न केवल प्राचीन ज्योतिषसिद्धान्ताभिज्ञा आसन् प्रत्युत् यूरोपीयगणितसिद्धान्ततोऽप्यनेकानि मार्मिकवस्तूनि संगृहीतवन्तः तथापि न केनापि ज्ञातुं शक्यते यदेष विषयो यूरोपीयज्यौतिषसिद्धान्ततो गृहीतः। यथा मधुकरो भिन्नभिन्नपुष्पेभ्यः तेषां रसानादाय मधुसञ्चयं करोति तत्र यथा न केनापि जनेन आस्वादेन एतत् कथयितुं शक्यते यदेष रसोऽस्य निर्दिष्टपुष्पस्यैवेति, तथैव महामहोपाध्यायैः सुगृहीते एतद्गणितं अमुकस्य इति कथनं दुःशकम्। तेष्वेवतादृशी विलक्षणा शक्तिः।

एभिः ज्योतिषशास्त्रपरम्परायामपूर्वं परिवर्तनं कृतम्। यद्यपि भारतीयज्यौतिषस्येतिहासे परिवर्तनस्यावसरः प्रयासश्च पूर्वमपि द्वित्राणि वाराणि अभवन। यथा वराहमिहिरस्य समये ग्रीकदेशीययवनैः साकं भारतीयज्यौतिषविदां समागमो जातः। एषां खलीफा अलमनसूरस्य समये रबदेशीयगणितिकैः सह भारतीयगणितज्ञानां समागमो जातः। पुनः मुहम्मदानां राज्यकाले पारसीयैः सह भारतीयगणितज्ञानां सम्मेलनं जातम्। परन्तु यादृशं दृढं सगूढं सम्मेलनं यूरोपीयगणितेन सह भारतीयगणितस्य सञ्जातं न तथा पूर्वम्। तत्रेदमेव

विशेषकारणं यत् संयोजितार: परमयोग्या: इदानीं समुपलब्धा:। यद्यपि एतस्मिन् विषये द्वारोद्घाटका: महामहोपाध्याया: बापूदेवशास्त्रिवर्या आसन् तथापि यथा पल्लवनं सुधाकरद्विवेदिभि: कृतं तत् श्लाघनीयम्। एतै: द्विवेदिवर्यै: गणेशदैवज्ञकृतस्य ग्रहलाघवस्य टीका सम्यग्तया विरचिता तत्र प्रथमतो मल्लारिकृतटीकां संरक्ष्य विश्वनाथोदाहरणं च प्रदाय तदनु स्वीया विशेष टीका निर्माय रक्षिता। एतत्कार्यं ज्योतिर्वित्सु सर्वथा प्रशंसितं जातम्। परन्तु प्राचीनब्रह्मगुप्तकृतब्रह्मस्फुटसिद्धान्तस्य मुद्राणावसरे लण्डननगरत: ब्राह्मस्फुट-सिद्धान्तस्य चतुर्वेदाचार्यकृतां टीकामानाय्य तस्य एव बलेन स्वतिलक: प्रकाशित:। अत्र यदि भास्कराचार्यतोपि प्राचीनस्य चतुर्वेदाचार्यस्य टीका ग्रहलाघवे मल्लारिटीकावत् संरक्षिताऽभवत्तदा प्राचीनगणकस्य महानुपकार: समभविष्यत्। एवञ्च सूर्यसिद्धान्तस्य टीका वस्तुत: सुधावर्षिणीनाम्नी विरचिता, तत्रापि कमलाकरस्य सौरवासनाटीकाया: कमलाकरस्य पितुर्नृसिंहदैवज्ञस्य सौरभाष्यस्य च समालोचनमनेकेषु स्थानेषु कृतम् स्वनिधनसमयात् किञ्चित् प्रागेव एतै: नारायणपण्डितनिर्मिताया: गणितकौमुद्या: उपपत्तिरारब्धा। तेषां वचनञ्चासीद्यत् यदि-

"चत्वारि पञ्चवर्षाणि वा मम जीवन सुरक्षितं स्यात् तदा भास्करलीलावतीं भारतदेशान्निस्कास्य तत्स्थाने गणितकौमुदीं स्थापयिष्यामि।" गणिकौमुद्या: प्रकाशनं पश्चात् सरस्वतीभवनत: सञ्जाताम्। तदैव गणितस्येतिहास: हिन्दीभाषायां लेखयितुं एते बद्धा:।

**परिवारः शिष्यपरम्परा च -**

एतेषां परिवारोऽपि समृद्ध:। ईशकृपया एतेषां त्रय: पुत्रा: सञ्जाता: ते च –

1. श्रीअच्युताकरद्विवेदी
2. श्रीकमलाकरद्विवेदी
3. श्रीपद्माकरद्विवेदी

एतेषु कनिष्ठाश्च पुत्रा: श्री पद्माकरद्विवेदिन: राजकीयसंस्कृत-महाविद्यालये वाराणस्यां ज्योतिषविभागाध्यक्षा: आसन्। अत: ज्योतिषशास्त्र-पारिवारिक परम्परा तैरेव संरक्षिता। शिष्यप्रशिष्येषु सूची दीर्घतमा विद्यते। इमे सफला: अध्यापका:। सरस्वतीभवनपुस्तकालये, राजकीयसंस्कृतमहाविद्यालये, दरभङ्गानरेश स्थापिते महाविद्यालये च एभि: अध्यापनं कारितम्। छात्रावस्थात: एव इमे अध्ययने प्रवीणा:। एतेषां शिष्याणां संख्या तु महती तथा अधिका: शिष्या प्रयेण मैथिला: आसन्। विशिष्टेन शिष्येषु इमे चत्वार: प्रसिद्धा: -

1. म.म. पं. मुरलीधरझा
2. पं. बलदेमिश्र:
3. पं. बलदेवदत्त पाठक:

कालान्तरे या शिष्यपरम्परा द्विवेदिमहोदयै: प्रारब्धा सैव परम्परा एतेषां शिष्यैरपि संरक्षिता संपोषिता संवर्द्धिता च।

**(ङ) उपाधय: सम्मानानि कृतयश्च -**

सुधाकरद्विवेदिन: संस्कृतसाहित्ये हिन्दी साहित्ये च महत्त्वपूर्णं योगदानं वर्तते। एतै: प्रायोऽष्टाविंशतिवर्षासन्ने वयसि महामहोपाध्यायपदवी लब्धा। वयसि परणिते अयं पुरस्कार: लभ्यते स्म परन्तु युवावस्थायमेभिरेवैतादृशी पदवी समुपलब्धा। एवमष्टादशवर्षे वयसि एतैदीर्घवृत्तं नाम्ना दुरूहपुस्तकं रचितम्। सुधाकरेण चक्रेऽष्टादशवर्षेण पुस्तकमिति ख्यात्या एवमेते अपूर्वा विद्वांसोऽभवन्।

1. दीर्घवृत्तलक्षणम्
2. ग्रहणकरणम्
3. द्युचरचार
4. यन्त्रराजः
5. वास्तवचन्द्रश्रृङ्गोन्नतिसाधनम्
6. करणकुतूहलम्
7. करणप्रकाश:
8. चलनकलनम्
9. पिण्डप्रभाकर:
10. छादकनिर्णय:
11. पञ्चाङ्गप्रपञ्च:
12. पञ्चाङ्गविचार:
13. शिष्यधीवृद्धिदटीका
14. पञ्चसिद्धान्तिकाटीका

15. बृहत्संहिताटीका
16. बृहत्स्फुटसिद्धान्तभाष्यम्
17. महासिद्धान्तभाष्यम्.
18. चलराशिकलनम्
19. ग्रहलाघवटीका
20. दिङ्मीमांसा
21. गणकतरंगिणी
22. लीलावती (टीका)
23. बीजगणितम् (टीका)
24. सिद्धान्ततत्त्वविवेकः (टीका)
25. गणितेतिहासः (टीका)
26. समीकरणमीमांसा
27. भाभ्रमरेखानिरूपणम्
28. घराभ्रमः
29. गणितकौमुदी
30. सूर्यसिद्धान्तः (भाष्यम्)
31. वृत्तान्तर्गतसम - सप्तदशभुजक्षेत्ररचनाप्रकारः
32. तुलसीसुधाकरः
33. पद्मावती टीका
34. रामकहानी
35. हिन्दीव्याकरणम्
36. भाषाबोधः
37. ज्यौतिषवेदांङ्गम्
38. वर्गकोष्ठपूरणरीतिः
39. सशल्यबाणनिर्णयः
40. हरिश्चन्द्रकुण्डल

हिन्दीभाषायाः अपि ते मार्मिकाः कवयः आसन्। तैरनेकानि पुस्तकानि हिन्दीभाषायां लिखितानि। यावज्जीवनं त एव नागरी प्राचारिणीसभायाः सभापतय आसन्। एतैः प्रायोऽष्टाविंशतिवर्षासन्ने वयसि महामहोपाध्यायपदवी लब्धा। एतेषां काव्यसौष्ठवनिरूपणे केचिच्छलोकाः अवलोकनीयाः सन्ति –

इति सुधकरनिर्मितवासना सकलया कलया कलयासना।
खचरमध्यगतौ परया गता भवलयाऽवलया वलयाऽऽसना॥[3]

गणकतरङ्गिण्याः आदावेव प्रोक्तं तैस्सुन्दरछन्दसा–

जयतो जयतोषकेशरूपौ चरणाववधपतेः सुधाकरः
तनुतेऽतनुतेजसा ययोस्तौ गणका गणकतरिङ्गणिमिमाम्॥[4]

चलराशिकलनस्यादौ हि –

यल्लीला विमला विलोक्य विपुलप्रालेयवालालये
भूपालेन्द्रललाटलालनकलालेपाङ्कितक्ष्मातले।

उल्लङ्ध्य स्वकुलालिकूलकलितां लज्जानदीमैथिली
यल्लोकाऽकुलिता चचाल चलवद्रामाय तस्मै नम:।।[5]

**सुधाकरद्विवेदिन: ज्योतिषशास्त्रे अवदानम् -**

ज्योतिषशास्त्रस्याध्ययनाध्यापनशोधपरम्परायांमहामहोपाध्यायसुधाकर द्विवेदन: महत्त्वपूर्णं योगदान विद्यते। एतेषां प्रथमा कृति: एकविंशतिवयसि वर्तते दीर्घवृतत्लक्षणम्। अस्मिन् ग्रन्थे 60 प्रतिज्ञा: सन्ति। तत्र तेषां गभीरज्ञानस्य परिचायकोऽयं ग्रन्थ: वर्तते। ग्रन्थेस्मिन् वैज्ञानिकरीत्या निम्नोक्ता: विषया: प्रथमतया ज्योतिषशास्त्राध्ययनपरम्परायां प्रतिपादिता: वर्तन्ते। यथा –

1. दीर्घवृत्तलक्षणम्
2. अक्षनाभिलक्षणम्
3. भुजकोटिलक्षणम्
4. लघुव्यासबृहद्व्याससाधनम्
5. दीर्घवृत्ते नाभिकेन्द्रान्तरज्ञानम्
6. वक्रक्षेत्रफलानयनम्
7. समाकलनम्
8. जीवाया: तात्कालिकगति साधनम्
9. लघुरिक्थगणना विधि:
10. स्थिरसंख्यया चलज्ञानम्
11. दीर्घवृत्तक्षेत्रफलानयनम्
12. दीर्घवृत्तपरिध्यानयनम्
13. पृष्ठफलानयनम्
14. केपलरीयसिद्धान्ता:
15. श्रेढीरूपगणितम्
16. चन्द्रविक्षेपज्ञानम्
17. मन्दफलदिगंशपाक्षिकादय: संस्कार:
18. ग्रहभ्रममसिद्धान्त:
19. सरलावर्तगतिनियमा:
20. न्यूटनगतिनियमा:

**वास्तवचन्द्रश्रृङ्गोन्नति: -**

चन्द्रश्रृङ्गोन्नतिग्रन्थे चन्द्रश्रृङ्गादिविषये सर्वेषां पक्षानां स्वतंत्रतया व्याख्यानं ग्रन्थेऽस्मिन् विहितम्। चन्द्रश्रृङ्गविषये सिद्धान्तज्योतिषे ये ये विषया: प्रतिपादिता: सन्ति तेषां विषयाणां सत्यापनं कृतमाचार्येण। यथाहि ग्रन्थेऽस्मिन् क्रमश: प्रतिपादिता: सन्ति –

1. चंद्रदर्शनसिद्धान्त
2. स्वदृश्यवृत्तकेन्द्रज्ञानम्

3. शुक्लवृत्तकेन्द्रज्ञानम्
4. शुक्लवृत्तव्यासार्धज्ञानम्
5. शुक्लांगुलसाधनम्
6. परिलेखनिर्माणम्
7. सितांशसाधनम्
8. भुजफलसाधनम्
9. सितांशे लल्लमतोपस्थापनम्
10. गणेशदैवज्ञमतोपस्थापनम्
11. ज्ञानराजमतोपस्थापनम्
12. कमलाकरमतोपस्थापनम्
13. बापूदेवमतोपस्थानम्
14. स्वमतोपस्थापनम्

इत्थं कस्याप्येकस्य विषयस्य सर्वान् पक्षान् विचार्य तदुपरि स्वतंत्रमतनिर्माणे इमे दक्षा:।

**गणकतरंगिणी :-**

अस्मिन् ग्रन्थे 73 ज्योतिर्विदां जीवनवृत्तं निरूपितं वर्तते। ग्रन्थेऽस्मिन् 500 ई; त: समारभ्य 1890 ई. पर्यन्तानां ज्योतिर्विदां चर्चा प्राप्यते। तेषां सिद्धान्तानामपि दिग्दर्शनं कृतं विद्यते।

**सुधाकरद्विवेदिकृतानि भाष्यानि-**

न केवलं ग्रन्थलेखने प्रत्युत् भाष्यपरम्परायामपि सुधाकरद्विवेदिन: महद्योगदानं वर्तते। अथ स्वकीयकुशललेखन्या वैज्ञानिकपद्धत्या विविधपाण्डुलिपीनां हस्तलेखानां ग्रन्थानाञ्च सम्पादनं एभि: कृतम्। एतेषां लेखनशैली बोधगम्या समधुरा विद्यते। सुसम्पादितेषु प्रमुखेषु मुख्या: सन्ति–

1. पञ्चसिद्धान्तिका
2. सिद्धान्ततत्त्वविवेक:
3. शिष्यधीवृद्धितन्त्रम्
4. करणकुतूहलवासना
5. बृहत्संहिता
   भटोत्पलभाष्यसंहिता
6. ब्राह्मस्फुटसिद्धान्त:
7. ग्रहलाघवम्
8. त्रिंशतिका
9. बीजगणितम्
10. सिद्धान्तशिरोमणि:
11. सूर्यसिद्धान्त:
12. वेदाङ्गज्योतिष्

एतेषु बृहत्संहिताया: 1200 पृष्ठेषु महता श्रमेण सम्पादनं कृतमेभि:। सर्वेषां दोषाणामपाकरणं विधाय शुद्धतया प्रकाशनं ज्योतिषशास्त्रे महत्त्वपूर्णम् अवदानं विद्यते। ब्राह्मस्फुटसिद्धान्तस्य सम्पादनं (India office Library) पुस्तकालयत: तस्य ग्रन्थस्य हस्तलिखितां प्रतिं समानीय विहितम्। ग्रहलाघवेऽपि स्वकीयं भाष्यं रचितं किञ्च प्राचीने द्वे भाष्ये प्रकाशिते सम्पादिते च। सूर्यसिद्धान्ते तु "सुधावर्षिणी" नामधेया टीका विरचिता। अत्र एतै: कमलाकरभट्टस्य सौरवासनाया: टीकाविहिता। प्रायेणोच्यते यदयं एतेषां प्रौढतमा सम्पादनरचना विद्यते । वेदांगज्योषिस्यापि वाचिकद्वयं प्राप्यते। एकं यजुर्वेदीयम् द्वितीयं तु ऋग्वेदीयम्। उभयत्र बहवो भेदा: सन्ति। याजुषज्योतिषे सोमाकरशेषस्य व्याख्यानं विद्यत एव। पुन: सुधकरद्विवेदिना तत्र समागतानां त्रुटीनां निराकरणाय याजुषज्योतिषेऽपि भाष्यं विरचितम्। भाष्यस्याय स्पष्टीकरणाय एतेषां शिष्येण पं. मुरलीधरझामहोदयेन "लघुविवरणम्" नाम्नी टीका रचिता। अस्या: आङ्गलानुवादोऽपि जात: ।

ज्योतिषशास्त्रस्य सिद्धान्तपरम्परायां सुधावर्षिणीटीकाया: महन्महत्वं विद्यते। यथा अस्या: नाम सुधावर्षिणी विद्यते तथैव सुधा अर्थात् अमृतमिवेयं व्याख्या वर्तते। सुधाकरद्विवेदिनां प्रसिद्धतमेयं टीका सर्वेषां कृते उपाकारिणी वर्तते। भाष्येऽस्मिन् पूर्ववर्तिनां प्रभाव: परवर्तिनां कृते च मार्गदर्शनं कृतमस्ति। भाष्यस्यास्य ज्योतिषशास्त्रीयमवदानं निम्नलिखित बिन्दुभि: मूल्यांकयतुिं शक्यते तद्यथा –

1. भाष्यस्य भाषापद्धति:
2. भाष्यस्य लेखनशैली/प्रतिपादनशैली
3. पूर्वाचार्याणां प्रभाव:
4. समसामयिकोपस्थिति:
5. विवादस्थलेषु समाधानम्

एतेषु सर्वेषु सोपानेषु सुधावर्षिणी विलक्षणा वर्तते। सूर्यसिद्धान्तस्य सुप्रसिद्धायां सुधावर्षिणी टीकायां 19 तमे शताब्देरवसानकालस्य 20

तमशताब्देः आरम्भकालस्य च मध्ये, समुपलब्धानां खगोलविज्ञानस्य समस्तानां टीकानामुत्तमज्ञानं संगृहीतमस्ति। अस्य ग्रन्थस्य प्रकाशनं एशियाटिक सोसाईटी कालेकाताताः 1885 मध्ये शताधिकवर्षाणिपूर्वं कृतमासीत्। 1987 तमे इस्वीये पं. डा. कृष्णचन्द्रद्विवेदिना सम्पूर्णानन्दसंस्कृतविश्वविद्यालस्य ज्योषविभागाध्यक्षेण भाष्येदं सुधाकरद्विवेदिग्रन्थमाला प्रकल्पे प्रकाशितम्। टीकायामस्यां प्रामुख्येन एतेषां पूर्वाचार्याणां मतानां निरूपणं दृश्यते सहैव अर्वाचीनविषयानामपि चर्चा सर्वत्र यथाप्रकरणे प्राप्यते।

**सुधाकरद्विवेदिनः मौलिकग्रन्थाः -**

एतदतिरिच्यापि विशिष्टस्थलानामुद्बोधनाय बहवः ग्रन्थाः रचिताः द्विवेदिवर्यैः। तत्र प्रमुखाः सन्ति –

1. रेखागणितम् (1-12 अध्यायाः)
2. चलनकलनम् (1-6 अध्यायाः)
3. चराशिकलनम् (1-16 अध्यायाः)
4. धराभ्रमः
5. अंकगणित का इतिहास

अत्र रेखागणिते ज्योतिषशास्त्रेण साकं गणितेऽपि ये सिद्धान्ताः रेखागणितीयाः सन्ति तेषां सन्निवेशः वर्तते। तत्र विशिष्टाः विषयाः सन्ति यथा –

1. रेखयोः परस्परसम्बन्धः
2. त्रिभुयोः परस्परसम्बन्धः
3. त्रिभुजप्रमेयाः
4. वृत्तप्रमेयाः
5. त्रिभुजे साजात्यनिर्धारम्
6. समद्विबाहुत्रिभुजसिद्धान्ताः
7. रेखागणिते गोलीयसिद्धान्ताः
8. आनुपातिकसम्बन्धसाधनम्

अथ च चलनकलनेऽपि बहवः विषयाः मुख्याः निरूपिताः सन्ति। तत्र प्रामुख्येन सन्ति –

1. चलराशीनां योगान्तरगुणनादिकम्

2. परस्परतात्कालिकसम्बन्धज्ञानम्
3. साधारणफलसम्बन्धा:
4. ज्याकोज्यादीनां फलनसम्बन्ध:
5. त्रैकोणमितिकानि विपरीतफलानि
6. गणितपरम्परानिरूपणक्रमे समीकरणविधि:
7. म्याक्लारिन् सिद्धानत:
8. द्वियुक्पदसिद्धान्त:
9. डेमाइवर सिद्धान्त:
10. समानघातांक सिद्धान्त:
11. बर्नली संख्यासिद्धान्ता:
12. टेलर सिद्धान्त:
13. लेबनिजसिद्धान्त:
14. लुप्तभिन्नस्य मानज्ञानम्
15. स्वतंत्रराशीनांफलादि सम्बन्धा:

अत्र प्रत्येकसूत्रस्य श्लोकबद्धे स्वरूपे हिन्दीभाषायां तस्य पद्यानुवादञ्च विहितं वर्तते। तेन उभयो: भाष्यो: तेषां दक्षता बोध्यते। अत्र सुधाकरद्विवेदिना सूत्रस्य श्लोकात्मकं रूपं तदनु पद्यात्मकं दोहारूपमपि प्रदर्शितम्। यथा –

राशिरूपोनघातघ्नो घाताङ्कोभवतीह स:।
य: तात्कालिकसम्बन्धो राशिघातस्य सर्वदा।।[6]

अस्य पद्यात्मकं स्वरूपं यथा –

राशिघातघाताङ्कको गुणन राशि सो भाग।
राशिघातसम्बन्ध सो ह्वै हैसदा आदाग।।[7]

इत्थमेव सर्वेषां सूत्राणामुभयात्मकं स्वरूपं तेषां प्रखरपाण्डित्यस्य काव्यदक्षतायाश्च परिचायकं विद्यते। एवमेव चलराशिकलेनऽपि विविधा: गणितीयपक्षा: पल्लवितास्सन्ति। किञ्च धराभ्रमनामके ग्रन्थेऽपि विंशति-

शताब्द्यामपि प्राच्यमतसमर्थने प्रोक्तं यत् इदानीं यावत् भूभ्रमणसन्दर्भे ये सिद्धान्ता: प्रतिपादिता: सन्ति ते सर्वेऽपि भ्रमात्मका:। तत्र वैदिकपक्षपोषयिता सुधाकरेण भूमे: स्थिरट्त्वं प्रतिपादितम्। काव्यशैलीदृष्ट्या युक्त्या तर्कदृष्ट्या चेयं रचना श्लाघनीया विद्यते।

**हिन्दीसाहित्ये सुधाकरद्विवेदिन अवदानम् :-**

सुधाकरद्विवेदिभि: हिन्दीसाहित्यस्यापि महती सेवा कृता। एतेषां हिन्दी साहित्ये कृतानि कार्यानि सन्ति हि–

1) **जायसीकृतपद्मावमहाकाव्यस्य सम्पादनम्** – अत्र हि हस्तलिखितान् प्रतीन् स्वीकृत्य अस्य महाकाव्यस्य संशोधितं संसकरणं डा. ग्रियर्सन् महोदयेन साकं स्वकीयया सुधाकरचन्द्रिकानाम्नीटीकया सह सम्पादनं विहितं यस्य प्रकाशनं बिब्लोथिका इण्डिया कोलकाता: जातम्।

2) द्वितीय: ग्रन्थ: वर्तते **तुलसी सतसई**- अत्र तै: कुण्डलीनां निवेश: कृत:। एभि: गोस्वामितुसलीविरचितस्य रामचरितमानसग्रन्थस्य बालकाण्डस्य संस्कृतानुवादोऽपि विहित:।

3) विनयपत्रिकाया: आंशिकरूपेणसंस्कृतेऽनुवादं विधाय संस्कृतानुरागिणां महदुपकार: विहित:।

समीक्षणेनेदमपि बुध्यते यत् ज्योतिषशास्त्रस्य पुन: प्रतिष्ठापने एतेषां महान् सहयोग: आसीत्। हिन्दीसंस्कृतोभयो: भाषयो: तेषां समानाधिकार: आसीत्। राजघाटपुलनिर्माणकाले सद्य एव दोहाछन्दसि रचना विहिता यथा –

राजघाट पर बनत पुल जँह कुलीन की ढेरि।
आज गये कल देखिके, आजहि लौटे फेरि।।[8]

संस्कृतकाव्यरचनायामपि इमे दक्षा: आसन् बृहत्संहिताया स्वटीकारम्भे भगवतो रामचन्द्रस्तुति: इत्थं प्रदर्शिता यथा –

जयति सहितशेषोऽशेषलीलाविशेषो
जनकवचनधीरः सत्यसंकल्पवीरः।
सकलनिजजनानां शर्मदः सज्जनानां
दशरथनृपबालः कोशलेन्द्रो नृपालः॥[9]

**मूल्यांकनं निष्कर्षश्च -**

सर्वेषु गणितीयग्रन्थेषु विषयाणां निरूपणक्रमे स्वपाण्डित्यवैभवं तैः प्रदर्शितम्। धराभ्रमे, वास्तवचन्द्रश्रृङ्गोन्नतौ बहवः श्लोकाः दक्षतया रचिताः सन्ति। चलनकलनादि ग्रन्थे तु सूत्रस्वरूपं एकस्मिन्नेव काले संस्कृतश्लोके हिन्दीपद्ये च अभिविरच्य स्वकीयं पाण्डित्यं प्रदर्शितवान्। सुधाकरद्विवेदिनः निसंशयं ज्योतिर्गणितस्य अप्रतिहतगतयः विद्वांस आसन्। ते कुशलाः अध्यापकाः दक्षाः प्रशासकाः समीचीनाः सम्पादकाश्चासन्। तेषां गणित-पाठनशैली भास्कराचार्यदक्षसमा। डॉ. गणेशप्रसादमहोदयेन डॉ. सम्पूर्णानन्दं प्रति प्रोक्तं यत् "सुधाकरद्विवेदिनः मदपेक्षयापि श्रेष्ठाः गणितज्ञाः आसन्।"

इमे अल्पवयस्येव वि.सं. 1967 मार्गशीर्षकृष्णद्वादश्यां तदनुसारं 28 नवम्बर 1910 ईस्वीये इमे अशेषकीर्त्तयः अभवन्। एतेषां विविधग्रन्थानां प्रथमप्रकाशनं 1881 ईस्वीयं वाराणस्यां ब्रहभूषणदास एण्डकम्पनी द्वारा कृतम्। तत्र "द्युचरचारः" इति नामधेयः ग्रन्थः प्रकाशितः। अस्य द्वितीयसंस्करणम् सरस्वतीभवनपुस्तकालयसम्बद्धेन पं. बलदेवमिश्रेण द्विघण्यादिभिः विभूष्य 1943 ईस्वीये मास्टर खेलारीलाल एण्ड सन्स द्वारा प्रकाशितम्। तृतीयं संस्करणञ्च 1981 ईस्वीये सम्पूर्णानन्दसंस्कृत विश्वविद्यालयेतः प्रकाशितम्।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालय वाराणसीतः तेषां स्मृतौ पं. सुधाकरद्विवेदीलघुग्रन्थ मालाक्रमे तैः विरचितानां ग्रन्थानां सम्पादनपूर्वकं पुनः प्रकाशनं च क्रियते। येन प्रायशः कृतयः सम्प्रति समुपलभ्यन्ते। किञ्च तेषां कर्मभूमौ अद्यतनीये सम्पूर्णानन्दसंस्कृतविश्वविद्यालये तेषां स्मृतौ महामहोपाध्यायसुधाकरद्विवेदिवेधशालापि स्थापितास्ति। किञ्च विद्वद्वैभव-

परम्परायां सुधकरद्विवेदिनमाश्रित्य विश्वविद्यालयद्वारा लघुवृत्त्चित्रमपि लोकार्पितमस्ति। इत्थं सुधावर्षिणीकार: महामहोपाध्याय: सुधकरद्विवेदी ज्योतिषजगति मार्तण्ड इवासीत्। ग्रन्थलेखने सम्पादने अध्यापने, शास्त्रसंरक्षणे तेषामवदानं टंकयितुं न शक्यते। तद्धि –

विज्ञानवीथीपथिकैरूपास्य:
सिद्धान्तसिंहासनसार्वभौम:।
प्राचीप्रतीचीगणितज्ञवन्द्य:
सुधाकरोऽयं महनीयकीर्ति:।।[10]

वस्तुत: निष्कर्षतया इदं वक्तुं शक्यते यत् इमे प्राच्यपाश्चात्यज्योतिष-शास्त्रयो: सेतुरूपा:। अर्वाचीनसंवर्गेऽपि इमे लब्धयशस्का:। इत्थं ज्योतिष-शास्त्रस्य सुदीर्घपरम्परायां आचार्य म.म. सुधकारद्विवेदिनामभूतपूर्वं योगदानं नितरामस्तीति दिक्।

**तथ्यसूत्राणि**

---

[1].*दीर्घवृत्तलक्षणम्* (परिशिष्टम्, पृ. 13)
[2] *सारस्वती सुषमाविशिष्टांक*: -१९४२
[3].*ग्रहलाघवटीकायाम्* प्रत्यधिकारान्ते
[4].*गणकतरंगिती* (परिशिष्टम्)
[5].*चलराशिकलनम्* (मङ्गलाचरणम्)
[6].*चलनकलनम्* (द्वितीयाध्याय:, पृ. - 5)
[7].तत्रैव
[8].तत्रैव पृ. 309
[9].*बृहत्संहितादिः* (उद्धृतम् *काशी की पाण्डित्य परम्परा*, पृ. - 309)
[10].उद्धृतम् *काशी की पाण्डित्य परम्परा*

# अभिधानकृद् वामन-शिवराम-आप्टे

**श्रीमती मधुमिता घोषः**

## भूमिका

संस्कृतभाषेतिहासादिशास्त्रपर्य्यालोचनाज्ज्ञायते यद्वैदिकसाहित्ये वेदाङ्गेषु ध्रुपदीसंस्कृतव्याकरणेषु च शब्दशास्त्रीयध्वनि-वर्ण-शब्दार्थादीनां व्याख्यानमूलानि नैकविधानि प्रस्थानानि निरवच्छिन्नत्नेनास्मद्बुद्धिमार्गम् अधिरोहन्ति। भाषासु व्यवहृतशब्दानां संग्रहमूलकः कोषग्रन्थः अभिधानं वेति निखिलवाङ्मयेतिहासे अतीव गुरुत्ववहं स्थानमधिकुरुते। प्राचीनशाब्दिकाः शब्दकोषः, अर्थशास्त्रम्, शब्दार्थशास्त्रम्, शब्दार्थसंग्रहः, पदार्थसंग्रहश्चेत्यादि-शास्त्राण्युपजीव्य बहून् ग्रन्थान् निर्बबन्धुः। यथा व्याकरणं शब्दशास्त्ररूपेण ध्वन्यते तथैव शब्दकोषोऽभिधानं वेति नामानुशासनेन नामलिङ्गानुशासनेन च परिकीर्त्यते। वयं जानीमो यत् अभिधानग्रन्थेषु सन्निहितं प्रतिशब्दम् अनेकार्थवहम् इति कृत्वा तद्ग्रन्थानां मूल्यमनस्वीकार्यम्।

सार्थवहो ध्वनिसमन्वयः शब्द एव। अभिधानस्य मुख्यं तावदुद्देश्यं शब्दार्थनिवेशः। व्याकरणे साधुशब्दानां व्युत्पत्तिरालोच्यते परम् अभिधाने व्याकरणसिद्धानां साधुशब्दानां तथा च लोकप्रचलितानाम् असाधुशब्दानाम् आलोचनं संदृश्यते। तत्र संस्कृतभाषायां प्रचलितानां शब्दानां संग्रहणे पुनरुद्धारे संरक्षणे नामाभिधानप्रणयने ये खलु विद्वांसो निरन्तरं गवेषणपरास्तेषु वामनशिवराम-आप्तेवर्यः ख्यातिशीर्षमलभत।

**जन्म वंशपरिचयश्च -**

प्राच्यविद्याचर्चाया विचारेण भारतवर्षस्य महाराष्ट्रप्रदेशस्यावदानम् अनस्वीकार्यमेव। तत्र माराठाप्रदेशान्तर्गते आसानोपालनाम्नि क्षुद्रे जनपदे १८५८ खीष्टाब्दे वामनो जनिं लेभे। तस्य सम्पूर्णं नाम वामन-शिवराम-आप्टे इति। पिता

तस्यासीत् विद्वान्। वामनस्य अष्टमवयसि पितुर्देहत्यागात् मात्रा स लालितः पालितश्चाभूत्। आसीत् तस्य माता तेजस्विनी रमणी। सा सन्तानद्वयेन सह कोलापुरमाजगाम। तत्र अतीव कष्टं साहं साहं कालं यापितवती। परन्तु वर्षत्रयाभ्यन्तरेण एव माता भ्राता च मृत्युमुखं प्रापिताविति वामनोऽनाथो जातः।

तस्य परिवारविषये तथ्यं प्रायो नाप्यते। प्रख्यातस्य जि. भि. दोशी-महोदयस्य कन्यया समं 1876 ख्रीष्टाब्दे स परिणयसूत्रेणाबद्धोऽभूत्। एतयोः गोदावरी नाम्नी कन्या जनिमलभत इति श्रूयते।

**शिक्षाजीवनं कर्मजीवनञ्चेति -**

राजारामाख्ये उच्चविद्यालये तस्य शिक्षाजीवनमारेभे। आसीत् विद्यालयस्यास्य प्रधानशिक्षकः खलु एम्. एम्. कुन्ते (M. M. Kunte) विद्वान् दयावांश्च। स तु अभिभावकहीनस्य वामनस्य विद्यालयशिक्षाया दायित्वभारं स्वकस्कन्धे जग्राह। १८७३ ख्रीष्टाब्दे वामनो जगन्नाथशङ्करशेठनामकं वृत्तिं परिलभ्य म्याट्रिकुलेशनपरीक्षायां साफल्येन समुत्तीर्णोऽभवत्।

पुन्नपत्तनस्य डेकानमहाविद्यालयस्य अध्यक्षश्चासीत् भाषाविद् किलहर्ण-महाभागः (Prof. Kielhorn)। म्याट्रिकुलेशनपरीक्षायां तस्य सन्तुष्टि-जनकं फलं दृष्ट्वा किलहर्णस्तं प्रति समाकृष्टः सन् तस्मैऽत्रैव पठनायादिदेश। वामनेनादेशोऽयं सारदमङ्गीकृतः। ततः १८७७ ख्रीष्टाब्दे भाउदाजि इत्याख्येन पुरष्कारेण स्नातकस्तरं पुनश्च १८७९ ख्रीष्टाब्दे भगवानदासाख्येन छात्रवृत्तिना सह स्नातकोत्तरञ्च साफल्येन उत्तीर्णवान् वामनः।

परीक्षायाम् साफल्यात् राष्ट्रियवृत्तिः अनेनानायासेन लब्धा। परन्तु स्वदेशभावनायामुद्बुद्धः सन् नव्याङ्गलविद्यालयस्य (New English School) प्रतिष्ठापकादीनां शिक्षाव्रतिनां लक-गोपालगणेश-आगरकार-विष्णुशास्त्रि-चिप्लुङ्कारादीनां साहचर्य्येणानुप्राणितः १८८० ख्रीष्टाब्दे युवसम्प्रदायमध्ये शिक्षां विस्तारयितुं स्वकीयजीवनमुत्सर्गीञ्चकार वामनः। शिक्षाजीवने तस्य

मतिर्यथा तथैव विद्यालयस्य परिचालनेऽपि। संस्कृतविषये तस्यानुरागः क्रमेणैव विवृद्धिं गतः।

पुन्नपत्तनस्य नव्याङ्गल-विद्यालयस्य सहप्रतिष्ठाता आसीत् विष्णुशास्त्री चिप्लुंकारमहाभागः (Vishnu Shastri Chiplunkar) कश्चन माराठीलेखकः। तन्मतादर्शेनानुप्राणितोऽयं वामनः शृङ्खलापरायणोऽभूत्। नव्याङ्गलविद्यालयस्य प्रधानशिक्षकस्य विष्णुशास्त्रिणोऽनुमतिक्रमेण तत्त्वावधायकरूपेण च तत्र वामनस्य नियुक्तिरभूत् तत्र। ब्रिटिशसर्वकारेण विहतं कर्म प्रति विरुद्धाचरणं स्वदेशीयशिक्षाविस्तारश्च विद्यालयस्यास्य मूलं लक्ष्यम्।

## शिक्षाव्रती वामन-शिवराम-आप्ते

भारतवर्षस्य शिक्षाव्यवस्थायाः समुन्नतौ चोत्कर्षप्रदानाय च डब्लिउ.डब्लिउ.हाण्टारमहोदयः (W. W. Hunter) हाण्टारसमितेः प्रतिष्ठाञ्चकार। प्रकल्पस्यास्य वास्तवसम्मतरूपं प्रदातुं हाण्टारकमिशननामकं संस्थाकं निकषा शिक्षाव्रती आप्ते आसीद् दृढ़व्रतः। बोम्बेप्रादेशिकशिक्षासंस्कार-सभायां (Bombay Provincial Educational Reforms Committee) १८७९ ख्रीष्टाब्दस्य सेप्टेम्बरमासस्य नवमदिनाङ्के सभापतिपदमलङ्कुर्वतां हान्टारमहाभागानां सविधे आप्तेमहाभागः नव्याङ्गलविद्यालयस्य (New English School) परिचालकानां शिक्षाविषयकं सुचिन्तितं मतमुपस्थापितवान्। तस्य मतस्य सारांशोऽयमेव -

'सहायकप्राप्तानां मिशनारिसंस्थापरिचालितानां विद्यालय-महाविद्यालयानां पाठ्यसूच्यां बाइबल्-धर्मग्रन्थीयशिक्षायाः यथार्थतया विरोधञ्चकार आप्तेमहोदयः। समालोचकानां मते 'He was Militating against the principle of religious neutrality'. पाठ्यसूच्यां बाइबल्-पाठः अनिवार्यतया 1854 ख्रीष्टाब्दे मिशनारिप्रस्तावित-शिक्षाव्यवस्थायां निर्दिष्टो बभूव। तस्याभिमतमेवम् आसीत् यत् मिशनारिप्रतिष्ठानानि कदापि स्वदेशीयोद्योगस्य प्रातिनिध्यं न कुर्वन्ति कथमपि। तेषां मिशनारिप्रतिष्ठानानां नीतयस्तु सम्पूर्णतया शिक्षामूलकाः नासन् इति कृत्वा इमाः नीतीः प्रति

कठोरानुगत्यं न हि समीचीनं प्रतिभाति आर्थिकानुदानलाभाय इत्यत्र न संशयविशेषः। माध्यमिकविद्यालयादीनां प्राक्-स्नातकोत्तरोपयोगि-पाठ्यसूचीनिर्मितौ पूर्णस्वाधीनतादानाय अनुरोधो विहितः आप्तेमहाभागेन[1]। अस्मादेव वामनशिवरामस्य शिक्षाविषयिणी उच्चाङ्गभावना प्रकाशपदवीं गता। अतः, प्रतिष्ठानादीनां स्वकीयपरिचालनपद्धतौ शिक्षाविद् आप्ते विस्फूर्जकण्ठैः स्वमतानि प्रतिष्ठापितवान्।

प्राथमिक-माध्यमिकविद्यालययोः पाठ्यक्रमानुसारीणि अनुसन्धाना-त्मकानि पुस्तकानि तेनैव प्रणीतानि। तन्मते प्रदेशभित्तिकपाठ्यसूची न निर्मातव्येति। प्रादेशिकशिक्षया छात्राणां शिक्षणं भवेदपूर्णमिति कृत्वा तत्त्याज्यम्। एतेषां प्रादेशिकप्रभावपुष्टपाठ्यविषयाध्ययनेन विद्यानुरागिणां शिक्षणं पर्यवेक्षणं च आप्रीतिकरेऽपूर्णे च भवत इति तन्मतिः[2]।

आङ्गल-शिक्षया समं शिक्षासम्पर्कितसन्धिप्रस्तावस्य अजातीयकरण-प्रवणतायाः संशोधनमवश्यकार्यमिति तन्मतम्। शिक्षाक्षेत्रे आदिवासिभ्यो यथार्थोत्साहदानं कर्तव्यतया परिगणनीयमिति। एतेन आदिवासिनाम् अबाधोन्नयनं भविष्यतीति आप्तेवर्यस्य नयः। अवैज्ञानिकेष्वाचारानुष्ठानेषु धर्मीय-निर्देशानामस्वीकारस्तदानीं शिक्षासूच्यां निर्दिष्टो बभूव। किन्तु साधारणजनान् प्रति व्यक्तिस्नेहजागरणाय समाज-देशान् प्रति छात्रमनस्सु कर्तव्यबोधं जागरितुं च नैतिकनिर्देशाः अवश्यकर्तव्यतया स्वीकरणीया इति आप्ते-महाभागस्य चिन्तनम् आसीत्।

तदानीं माध्यमिकशिक्षायां मुख्यत्रूटिरासीत् यत् अतिरञ्जितान् अप्राकृतिकविषयांश्च प्रति सर्वातिशायि गुरुत्वप्रदानमिति। तदानीमभूत् माध्यमिकविद्यालयेषु मातृभाषावहेलिता। स्नातकस्तरे मातृभाषा सम्पूर्णरूपेण निषिद्धाभूत्। मातृभाषया उच्चश्रेण्यां साहित्यनिर्मितौ विश्वविद्यालयादीनामवदानं खलु प्रायः शून्यमासीत्। विद्यालय-महाविद्यालयेषु आङ्गलशिक्षायाः महत्या परिकल्पनया सममेव आञ्चलिकभाषास्वपि गुरुत्वप्रदानं ह्यवश्यकर्तव्यतया परिगण्यते इत्येतत्तन्मतमेव।

तदानीं विद्यालयादिशिक्षाप्रतिष्ठानेषु अनुदानसाहाय्यपद्धतिः आप्ते-महाभागेन कठोरभावेन समालोचिता। विद्यालयस्तरे अनुदानप्रदानायैका मिश्रपद्धतिस्तेनाङ्गीकृता। आंशिकरूपेण नियुक्तानां शिक्षकाणां योग्यतानुसारं विभागीयपरीक्षायाः फलञ्च दृष्वा शिक्षाप्रतिष्ठानेभ्योऽनुदानं दातव्यमिति शिवराम-आप्ते-वर्यस्य सुचिन्तितं मतम्। ईदृशः शिक्षासंस्कारोऽद्याप्यतीव प्रयोजनीयः। हान्टारकमिशननामकसमितेः सकाशे आप्तेमहाभागस्य विचारोऽयमद्यापि शिक्षाविदां निमित्तम् अतीव युक्तियुक्तः इति।

वामन-शिवराम-आप्ते खलु डेकान-एडुकेशन-सोसाइटि इत्याख्यस्य प्रतिष्ठानस्य निर्मितौ महान्तं परिश्रमं कृतवान्। स प्रतिष्ठानस्यास्य कृते नवविधानानि युक्त्या प्रवर्तितवान्। प्रतिष्ठानमिदं साम्प्रतं महाराष्ट्रप्रदेशस्य त्रिचत्वारिंशत्संख्यकानि शिक्षाप्रतिष्ठानानि परिचालयदासीत्। आसीत् स प्रतिष्ठानस्यास्याजीवनसदस्यः खलु। विद्यालयनियुक्तैः सदस्यैः सह अपरसदस्यानां मतविरोधे सति अतिरिक्तविद्यालयस्थापने तस्योद्योगः सत्यमेव उल्लेखार्हः। अपि च, तेनोक्तम् - "We thought of employing the time at our command, in instructing ourselves, instructing the people and writing books for the use of our school". प्रतिष्ठानस्यास्योन्नत्याम् अग्रहप्रदानाय बालगङ्गाधरतिलक-आगरकारादिशिक्षाव्रतिनामिव आप्ते-महोदयस्य भूमिका सत्यमेव संस्मरणीयेति।

नव्याङ्गलविद्यालय-फार्गुसनमहाविद्यालययोरुन्नतौ तथा परिकल्पनायाञ्चेतरेभ्यः शिक्षाव्रतिभ्यस्तस्य सर्वाधिकमवदानमासीदिति निश्चप्रचमेव। अयन्तु १८९२ खीष्टाब्दस्य आगष्टमासस्य नवमे दिवसे इहलोकं परित्यज्य अमृतालोकं गतः।

संक्षिप्तजीवत्काले तस्य पाण्डित्यमसाधारणतया सर्वसमक्षं प्रतिभातम्। तत्प्रणीतानि The Students' Guide to Sanskrit Composition (1881), त्रीणि व्यवहारिक-संस्कृताभिधानानि च पञ्चसप्ततिवर्षेभ्यः परमपि छात्राणां कृते

महदुपकारकाणि भवन्ति। आसीत् स शृङ्खलापरायणः शिक्षाव्रती। विद्वद्रूपेण प्रशासकत्वेन च तस्य तुलना तत्रभवान् आप्टे स्वयमेव।

**शिवराम-आप्टे-वर्यस्य कृतयः**

**The Practical Sanskrit-English Dictionary (1890)**

तत्प्रणीतेषु पुस्तकेषु The Practical Sanskrit-English Dictionary इतीदं पुस्तकम् अतीव प्रसिद्धं जनप्रियञ्चेति। 1890 ख्रीष्टाब्दे ग्रन्थस्यास्य एकलप्रयासेनैव ग्रन्थस्य प्रणयनं प्रकाशनञ्च कृत्वा स ख्यातिमगात्। ग्रन्थस्यास्य निर्माणहेतुं स्वयमेव ग्रन्थकृत् भूमिकायामुल्लिलेख। ईदृशो ग्रन्थो 'न भूतो न भविष्यतीति'।

ग्रन्थोऽयन्तु विषयदिशा लोकप्रचलितानां संस्कृतशब्दानां संकलनपरकः। ऊनविंशतिशतपृष्ठात्मकोऽयं ग्रन्थः। अयं ग्रन्थः खलु मोनिओर-उइलियम्सप्रणीताद् अभिधानग्रन्थादपि पृष्टासंख्यागतदृष्ट्या बृहदाकारः। तत्प्रणीतेभ्यो ग्रन्थेभ्योऽयन्तु अतीव सहायको जनप्रियश्चेति समालोचकानां मतम्। विद्यार्थिनां सहायको भवतु ग्रन्थोऽयमिति तदुद्देश्यमासीदिति, यत्सम्पूर्णतया प्रतिफलितमेवास्ते ग्रन्थस्योपसंहारवचने।

ग्रन्थस्यास्य यानि नैकविधानि संस्काराणि समुपलभ्यन्ते, तानि आन्तर्जातिकमानाङ्कनपूरितानि। ग्रन्थपठनात् पूर्वमेव सम्पादकेन आप्टे-महाभागेन चतुर्दश नियमाः ध्येया इत्युक्तम्। वैदिकसाहित्यादारभ्य ध्रुपदीसंस्कृतसाहित्य-स्मृत्यर्थ-काम-मोक्षादिशास्त्रादिग्रन्थेभ्यो बहून् शब्दान् एकत्रीकृत्य आप्टे अर्थनिर्वचनादिकञ्चकार। अभिधानग्रन्थस्यास्यापरमेकं वैशिष्ट्यं यत् न्यायालंकारादिशास्त्रोक्तानां पारिभाषिकशब्दानां सम्पूर्णं व्याख्यानमाप्यते संस्कृतशास्त्रोद्धृतिपुरःसरमिति। विशेषेण, अलंकारशास्त्र-गतानां शब्दानां व्याख्यातुकामेन आप्टे-महाभागेन रसगङ्गाधर-चन्द्रोदय-कुवलयानन्दादिग्रन्थानां ऋणं स्वीकृतम्। अपरतः, नाट्यतत्त्वसम्बन्धिशब्दानां व्याख्यानप्रसङ्गे साहित्यदर्पणं सम्प्रबोधितवान् ग्रन्थकृत्।

ग्रन्थादौ आप्टे-महाभागेन स्व्यकारि यदेकस्मिन् जन्मन्येव संस्कृतसाहित्यशास्त्राणि निर्मथ्य बहुधा प्रयत्नेनापि सर्वेषां शब्दानामाकलनं न कथमपि सम्भवि। सम्पादकेन स्वयमेव प्राच्यविदुषः तारानाथतर्कवाचस्पतेः वाचस्पत्यमित्यस्य तथा च प्रतीच्यविदुषां Worterbtuch of Drs., Roth, Bothlingk चेति अभिधानग्रन्थानाम् ऋणं नम्रशिरसा अङ्गीकृतम्। तेन स्पष्टतयाभाणि –

'The extent of Sanskrit literature - is so vast that not even the life-long labors of a single individual, howsoever talented or persevering, -will be able to do full justice to it. It has two distinct branches, the Vedic and post-vedic, each of which will require an independent encyclopedia for itself. Not even the gigantic Vāchaspatyam of the late Professor Taranath Tarkavagis nor the equally gigantic German Worterbtuch of Drs., Roth and Bothlingk, can be said to altogether complete and comprehensive. Much less can a small work like mine — compiled during the leisure hours of a teacher's life — aspire to be called complete in any sense of that word. However, 1 have tried to make it as comprehensive and practically useful to the student of Sanskrit as ay humble powers enabled me to do, though how far I have succeeded in my object the reader alone can best decide'[3].

संस्कृतशब्दानां व्यवहारिकप्रयोगसिद्धयेऽस्याभिधानग्रन्थस्य महत्तात्पर्यं वरीवर्ति। मुख्यतोऽयमभिधानग्रन्थो विद्यालय-महाविद्यालयीयानां शिक्षार्थिनां कृते लिखितः[4]।

**The Students' English-Sanskrit Dictionary (1884)**

'The Students Hand Book of Progressive Exercise' इति ग्रन्थविरचनात्परमेव वामनाचार्यः शिक्षार्थिनां सहायतायै The English

Sanskrit Dictionary इत्याख्यं ग्रन्थं रचयति स्म। तत्र ग्रन्थस्यास्य भूमिकायां तेनोक्तं - 'द्वित्रा संस्कृताङ्गलभाषाभिधानानि वर्तन्ते, परं तैर्ग्रन्थैः संस्कृतशिक्षार्थिनां कृते प्रयोजनं न संसाध्यते। परन्तु तेषां कृते आङ्गल-संस्कृतभाषाभिधानपुस्तकं प्रायो नोपलभ्यत एवेति कृत्वा तत्र तस्यायमुद्योगः इति 'There are one or two small Sanskrit-English Dictionaries though not quite advanced student of Sanskrit, but there is no English-Sanskrit Dictionary such as will be within their easy reach.' [5]। तत्र पुनस्तेनाभाणि यदध्येतृहिताय अभिधानस्यास्य विरचनेन संस्कृतपाठकानां कृते सौविध्यं साधितं भवेदिति [6]।

ग्रन्थस्य सम्पूर्णत्वसाधने तेन ओयेष्टार्-महाभागकृतस्य अभिधानसंकलनस्य साहाय्यं समावाप्तम्। उद्भिद्विद्या-औषधिविद्या-मनोविज्ञान-रसायनादिशास्त्रप्रयुक्तानां पारिभाषिकशब्दानामुल्लेखोऽत्राप्यते। ग्रन्थस्यास्य अन्यद्वैशिष्ट्यं यत्प्रभिन्नशब्दोद्भूतानां यौगिकशब्दानाञ्च अर्थानामपि स्वल्पकृष्णचिह्नद्वारैव (Bold) प्रकाशः। अत्र संस्कृतकविभिः बहुलतया व्यवहृताः शब्दाः क्रमेणैव सन्निवेशिता भवन्ति।

कस्यचिच्छब्दस्य नैकविधतुल्यार्थप्रदाने आङ्गलार्थप्रदानाय प्रयोजनेनालमिति मन्यते। शब्दार्थावबोधनाय केषाञ्चित् साहित्यिकानाम् उक्तयोऽप्युद्धृताः। एतेन समेषामुपकारः संसाध्यत एव। कुत्रापि वा आङ्गल-वाक्यानि संस्कृतवाक्यान्युत सामान्यतया परिवर्तितानि चानूदितानि। तस्माच्छात्राः वाल्मीकि-कालिदास-बाणादिकवीनां ग्रन्थानां यथार्थाध्ययनमपि कर्तुमलमिति।

**The Students' Sanskrit-English Dictionary (1844) -**

ग्रन्थोऽयं विद्यालय-महाविद्यालयेषु पठितानां शिक्षार्थिनाम् आकाङ्क्षां सम्पूरयितुम् आप्तेमहाभागैः प्रणीतः। ग्रन्थेऽस्मिन् वेदोत्तरकालिकानां रामायण-महाभारत-पुराण-स्मृतिशास्त्र-दर्शन-नाट्य-साहित्य-सङ्गीत-ज्योतिष-वैज्ञानिकशाखासु प्रयुक्तानां पारिभाषिक-शब्दानां व्याख्यानम् अतीव सुललितया

रीत्या परिवेशितम् । अत्र मुख्यतया प्रयोजनीयाः प्रयुक्तिगतशब्दा व्याख्याताः। मुख्यतया न्यायालङ्कार-व्याकरणादीनां संस्कृतपंक्तयश्चाप्यत्र सन्निवेशिता भवन्ति । अपि च, उपनिषद्-सांख्य-मीमांसा-स्थायिभाव-प्रवेशक-रस-वार्त्तिक-अनैकान्तिकादिशब्दानां व्याख्यानं चकार आप्ते खलु।

अपि च, चित्ताकर्षकाः वाक्यांश-वाग्धाराश्च सप्रसङ्गं यथास्थानञ्चोल्लिखिता वर्तन्ते। शिक्षार्थिनां कृते उत्तमसहायकोऽयं ग्रन्थः इत्यत्र नास्ति संशयलवः कश्चित्। अभिधानेऽस्मिन् परिशिष्टांशो त्रिधैव विभज्यते। प्रथमे परिशिष्टांशे संस्कृतच्छन्दःशास्त्रानुसारतः मात्रा-गणाः सरलतयैव समुपवर्णिताः। तत्र तेन मुख्यतया छन्दोमञ्जरी-वृत्तरत्नाकराख्यौ ग्रन्थौ चानुसृतौ। द्वितीये परिशिष्टांशे केषाञ्चिन्मुख्यसंस्कृतकाव्यप्रणेतॄणां कथा चोल्लिखिता वर्तते । प्रसङ्गेऽस्मिन् तेन भणितं - “Here I have selected only those names about which something definite-something more than mere guesses and surmises - is known, and I have derived some hints from the Introduction of Vallabhadeva's Subhāṣitāvalī and Max Müller's 'India', for which my thanks are due to the author”.[7]

तृतीये तथा चान्तिमे प्राचीनभारतीयजनपदानाम् आधुनिकमान-चित्रेष्ववस्थानं सम्यक्तया निर्दिष्टम्। कार्यस्यास्य समाप्तौ तेन क्यानिंहाम-महोदयस्य प्राचीनभूगोलाख्यग्रन्थस्य साहाय्यं गृहीतम्। न केवलं विद्यार्थिनां, पुनस्तत्र समेषां संस्कृतानुरागिणामुपकारो जायते ग्रन्थपाठेनैवेति कृत्वा तेनोक्तमेव - “In conclusion, I trust that "The Student's Sanskrit-English Dictionary" will be found useful not only by those for whom it is mainly intended, but by the general Sanskrit reader also.”[8]

**The Students' Guide to Sanskrit Composition (1881) -**

ग्रन्थोऽयमतीव जनप्रियश्चासीत् आप्तेप्रणीतेषु ग्रन्थेषु। १८९० ख्रीष्टाब्दे आप्ते-महोदयो ग्रन्थस्यास्य तृतीयसंस्करणस्य संशोधनञ्च कृत्वा प्रकाशितवान् ।

तस्मात्प्रभृति ग्रन्थस्य नैकविधानि संस्कारणान्युपलभ्यानि। ग्रन्थोऽयन्तु राजभाषायामपि रामकृष्णशुक्लमहाभागैरनूदितः ।

आप्तेप्रणीतस्यास्य ग्रन्थस्य प्रथमांशस्याद्ये भागे कर्तृ-क्रिययोः समन्वयः, विशेष्य-विशेषणयोः सम्बन्धः, सम्बन्धवाचक-सम्बन्धिनोः समन्वयश्चेति विषयाश्च आलोच्यन्ते। द्वितीये भागे कर्मकारकाणां सामान्यप्रयोगः, विशेष-प्रयोगः, द्विकर्मक-प्रेरणार्थक-धातूनामालोचनं, तृतीयादिसप्तम्यन्तादीनां विभक्त्यादीनां सामान्यप्रयोगः विशेषप्रयोगश्चेति आलोच्यविषयमूलं ग्रन्थस्यास्य।

तृतीयांशे सर्वनामादिशब्दानां, शतृ-शानच्-स्यतृ-स्यमान्-क्वसु-कानच्-क्त-क्तवतु-कृत्यप्रत्ययादीनां, अव्ययार्थकप्रयुक्तानां क्त्वाच्-ल्यप-तुमुन्-प्रत्ययादीनां सम्यग् आलोचनं वर्तते, येन छात्राणामध्ययनं सहजसाध्यं भवति। अपि च, लटादिवर्तमानकालाः, अव्ययविशेषाः, आत्मनेपदि-परस्मैपदि-सम्पृक्तविषयाः, धातुपाठाश्चेत्यादीन्यत्र सन्निवेशितानि भवन्ति। चतुर्थभागे सोदाहरणं वाक्यविश्लेषणं, वाक्यसंकलनं, क्रियाविशेषणं, मिश्रितवाक्यविश्लेषणं, संयुक्तवाक्यविश्लेषणं चेत्यादीनि आलोचितानि। चान्तिमे विविधविषयकाः पत्रलेखनोपायाः, दुरूहशब्दानां व्याख्यानम्, शब्दकोषः, पुस्तकप्रयुक्तानां सांकेतिकशब्दानां सूचयश्चेत्यादीन्यप्यालोच्यन्ते। एतेनानुमीयते यद् ग्रन्थप्रणयने तस्य कीदृशी उच्चकोटिका शास्त्रीययुक्तिपरका भावना आसीदिति। शिक्षार्थिनां श्रमलाघवस्तथा संस्कृतस्य संरक्षणञ्च हि तस्य महदुद्देश्यमिति । एतेन तस्योद्देश्यं प्रपूरितमेवेति शक्यवचम्।

## The Students' Hand - Book of Progressive Exercises, Part I and II.

अनुवादकर्मणि छात्राणां सौविध्यार्थमेव ग्रन्थेऽस्मिन् अनुशीलनं संयोजितमास्ते। सरलतया अध्येतारः संस्कृतवाक्यानि रचयितुं यथालं, तदर्थमेव ग्रन्थस्यास्य विरचनप्रयासः। फलतो विद्यार्थिनोऽनायासेनैव चतुर्थतः सप्तमश्रेणीं प्रवेष्टुमर्हाः। ग्रन्थस्यास्य प्रथमांशः हस्तेनैव प्रस्तुतस्तेन परम् अन्तिमांशश्च

मूद्रापितो वर्तते । आङ्गलानुशीलनानि अध्यापकैः भाण्डारकरमहोदयैः प्रणीतात् संस्कृतग्रन्थद्वयादेव तथा च संस्कृतानुशीलनानि खलु गद्यपद्ययोरुभयोः साधारणानुशीलनादेव संगृहीतानि।

खण्डाद्वयात्मके इह ग्रन्थे समुपल्लिख्यमानाः दुरूहार्थकशब्दाः शब्दकोषद्वय एव सन्निवेशिताः, परमन्तिमे परिशिष्टांशे समासशास्त्रस्य साधारणनियमाः सङ्कलिताः वर्तन्ते। परिशिष्टभागस्योद्देश्यं तावद् विद्यार्थिनां प्रथमांशस्य बृहत्तरांशपाठादनन्तरं तथा च द्वितीयभागस्यादावेव सहायता-प्रदानमेव। द्वितीयसंस्करणन्तु १८३८ ख्रीष्टाब्दस्य डिसेम्बरमासस्य द्वाविंशति-दिवसे, तृतीयसंस्करणं खलु १८९४ ख्रीष्टाब्दे आगष्टमासस्य ऊनत्रिंशद्दिवसे पुणानगरीतः प्रकाशितम् तथा च पञ्चमसंस्करणमपि ऐषमः आगस्तमासस्य सममेव दिवसे प्रचरद्रूपताम् इतम्।

ग्रन्थस्यास्य द्वितीयखण्डस्यादावेव सङ्कलितानि संस्कृतानुच्छेदस्य अनुवादस्तथा च रामायण-महाभारतयोर्विवरणानि। अपि च, केचिदंशास्तावत् उइल्सनमहाभागस्य हिन्दु-थियेटार् इत्यस्मात् ग्रन्थात्संकलिताः। एतेषाम् अनुशीलनानां धारणेयं प्राच्यज्ञानप्रसूतेति कृत्वा शिक्षार्थिनामतीव सहायको भवेदिति ध्रुवम्। द्वितीयांशे आङ्गलभाषातः संस्कृतभाषायामनुवादप्रकरणानि, तृतीयांशे वर्णनपरक-नैतिकशिक्षामूलकान्यनुशीलनानि संयोजितानि। चतुर्थांशे नैतिकानुभूतिः, साधारणप्रयोगनीतयश्च मोनियार्-उइलियाम्सप्रणीतात् Indian Wisdom इत्याख्याद् ग्रन्थादेव संकलिताः दृश्यन्ते। आङ्गलानुशीलनानि गद्यपद्याभ्यां संमिश्रितानि। गद्यानि तु कादम्बरीतः संकलितानीति सिद्धम्। पुस्तकस्यान्तिमांशे व्याख्यातास्तावद्दुरूहशब्दा उच्चतरशिक्षार्थिनां कृते केवलं संयोजिता इति वक्तुमलम्।

## कुसुममाला (1891) -

संस्कृतसाहित्यजगति परिलसतां निर्वाचितानां संस्कृतपाठ्यांशानाञ्च संग्रहो वर्तते ग्रन्थेऽस्मिन्। संस्कृतविषये म्याट्रिकुलेशनशिक्षार्थिनां कृते प्रस्तुतोऽयं ग्रन्थः। अत्र आ वाल्मीकेर्जगन्नाथान्तं सर्वेषां सुप्रसिद्धानां प्राचीनानां कवीनां

गद्यकाराणाञ्च वर्णनामूलकास्तर्कयुक्ताः नीतिसम्पृक्ताः संकीर्णकाः महाकाव्य-दृश्यकाव्यगीतिकाव्यसम्पृक्ताः पाठादयश्च संकलिताः वर्तन्ते।

कुसुममालेति ग्रन्थस्त्रिधा विभज्यते। प्रतिवर्षम् अध्यायात्मिकैव पाठ्या। अत्र ग्रन्थेऽस्मिन् उर्वशी-पुरुरवसोः, सावित्री-सत्यवतोः उपाख्यानञ्च संकलितमासीत्। १८८२ ख्रीष्टाब्दतः १८९० ख्रीष्टाब्दं यावत् बोम्बेविश्व-विद्यालयस्य संस्कृतविषयस्य म्याट्रिकुलेशनपरीक्षायाः प्रश्नपत्राण्यपि ग्रन्थस्य अन्तिमे च संयोजितानि।

तत्र प्रथमवल्ल्यां सप्तविंशतिसंख्यकानां लेखादीनां संग्रहो वर्तते। विष्णुशर्मणा प्रणीतस्य पञ्चतन्त्राख्यग्रन्थस्य मत्स्यत्रयस्य कथाद्वारैव ग्रन्थस्यास्यारम्भो जायते। द्वितीयांशे हितोपदेशोपलब्धानां बृद्धजरद्गव-मार्जारयोः काहिनी वर्णिता। तृतीयांशस्तावत् कालिदासप्रणीतस्य मालविकाग्निमित्रस्य पञ्चमाङ्कस्य कथोपकथनपरकः। अपि च, कुमारसम्भवस्य पञ्चमसर्गगताः श्लोकाः, शूद्रकप्रणीतस्य मृच्छकटिकस्य अंशविशेषाः, विष्णुपुराणस्य केचिद्भागाः, पत्रलेखा-चन्द्रापीडयोर्वृत्तान्तः, मेघदूतोक्तयक्षस्य वासस्थानवर्णनं, दशकुमारचरितस्य केचनांशाः, रघुवंशस्य राजवृत्तान्तसम्पृक्ताः श्लोकाः, महाश्वेता-चन्द्रापीडयोर्वृत्तम्, वेणीसंहारोक्ता अश्वत्थामाकथा, रघुवंशस्य अजविलापः, कादम्बर्याः शुकनाशोपदेशः, रघुवंशस्य त्रयोदशसर्गस्य लङ्काप्रदेशतो रामस्यायोध्याप्रत्यावर्तनकथा, भट्टिकाव्यस्य दशरथ-विश्वामित्रयोः कथोपकथनं, किरातार्जुनीयमहाकाव्यस्य प्रथमसर्गे वर्णितं द्रौपदी-युधिष्ठिरयोः कथोपकथनं, याज्ञवल्क्यसंहितायाः व्यवहाराध्यायस्य केचन श्लोकाश्चेति संकलितानि वर्तन्ते।[9]

द्वितीयवल्ल्यां चतुर्विंशतिसंख्यकानां कथानां समावेशो दृश्यते। आदौ हितोपदेशस्य सन्धिनामकस्य तृतीयतन्त्रस्य नीलभाण्डपतितधूर्तशृगाल-कथोपलभ्यते। ततः विहग-वानरयोः कथोपलभ्यते। अपि चात्र मृच्छकटिकस्य प्रथमाङ्कस्य केचिदंशाः, ऋतुसंहारग्रन्थस्य ग्रीष्मवर्णनं, भगवद्गीतायाः सांख्ययोगनामकस्य द्वितीयाध्यायस्य आत्मसम्पृक्ताः श्लोकाः, महाश्वेतावृत्तान्तः,

मुद्राराक्षसस्य चाणक्य-चन्द्रगुप्तयोर्विवादः, महाभारतविलसितं पण्डितमुर्खयोः कथोपकथनं, हर्षचरितगतस्य प्रभाकरवर्धनस्य अस्वस्थतावृत्तान्तेन समं हर्षस्यावस्थावर्णनं, मालतीमाधवयोः प्रेमकथा, गङ्गायाश्चोत्सश्चेति विषयाः स्थानं प्रापिताः।[10]

तृतीयवल्ल्यां त्रयोविंशतिसंख्यकाः कथाः विलसन्ति। हितोपदेशस्य सुहृद्भेदनामकस्य द्वितीयतन्त्रस्य सिंह-शशकयोः कथादौ वर्णिता । द्वितीये तु पञ्चतन्त्रस्य सारस-कर्कटयोः कथा उपायनीकृता। अपि च, महाभारतस्य सावित्र्युपाख्यानं, मोहमुद्गरस्य केचन श्लोकाः, शकुन्तलानाटकस्य दुष्यन्तेन शकुन्तलाप्रत्याख्यानदृश्यं, कुमारसम्भवस्य केचन श्लोकाः, रत्नावलीनाटिकायाः प्रथमाङ्कस्य केचनांशाः, गीतोक्तविश्वरूपदर्शनयोगः, उत्तरचरिते रामेण सीतापरित्यागवृत्तान्तः, रघुवंशस्य अष्टमाध्यायस्य कति श्लोकाः, कादम्बर्याः वर्णनं, मनुसंहितायाः राजधर्मनामकस्य सप्तमाध्यायस्य राजकर्तव्यविषयकाः श्लोकाः, दशकुमारचरितस्य युवानं राजपुत्रं प्रति वृद्धसचिवस्योपदेशः, मुद्राराक्षसस्य चाणक्यस्य स्वगतोक्तिश्चेति वर्ण्यन्ते। ग्रन्थस्यान्ते कतिपयानां शब्दानाम् आङ्गलार्थोऽपि प्रदीयते ग्रन्थकारैः ।[11]

**उपसंहृतिः-**

परिशेषे वक्तव्यं यत् वैदिककालादेव अभिधानशास्त्रपरम्परा निरवच्छिन्नत्वेन अक्षुण्णा वर्तते ऊनविंशशताब्द्यामपि। आङ्गल-संस्कृतभाषयोः आप्तेमहाभागैर्विरचितानि अभिधानानि सत्यमेव संस्कृतशास्त्र-चर्चायामनवद्यानि तात्पर्यवहानि च। शिक्षाव्रतित्वेन यथा आप्ते अद्वितीयः अभिधानकृद्रूपेणापि। विशेषेण, संस्कृतभाषायाः साधारणपाठाकानां विशेषज्ञानाञ्च कृते आप्तेमहाभागेन प्रणीताः अभिधानग्रन्थाः सत्यमेव उपकाराय इत्यत्र नास्ति संशयलवः कश्चित्। भाषातत्त्व-व्याकरणादिशास्त्रदृशा संस्कृताभिधानग्रन्थविरचने शिवराम-आप्तेवर्यो मूर्ध्नि राजते इति शम्।

## परिशीलितग्रन्थपञ्जी

Apte, Vaman Shivaram. *Kushumamālā.* (5th edition revised by M. S. Apte). Poona: Shiralkar & Co, . (printed).

Apte, Vaman Shivaram. *The Student Guide of Sanskrit Composition* (9th edition.). Bombay: The Standard Publishing Company.1925. (printed).

आप्ते, शिवराम. *संस्कृतनिबन्धपथप्रदर्शक.* सम्पा. रामकृष्ण शुक्ला. एलाहावादः रामनारायण लाल, 1951. (मुद्रितम्).

Apte, Vaman Shivaram. *The Student Hand- Book of Progressive Exercise* (part-I & II). 7th edition revised by M. S. Apte). Poona: Shiralkar & Co.1899. (printed).

Apte, Vaman Shivaram. *The Practical Sanskrit English Dictionary.* Poona: Prasad Prakashan. 1957-1959. (printed).

Apte, Vaman Shivaram.*The Sanskrit English Dictionary*. Delhi: Shri Jainendra press. 1903. (printed).

Apte, Vaman Shivaram. *The Student's English Sanskrit Dictionary.* Bombay: Mrs. Radhabai Atmaram Sagoon, 1893. (printed).

## References

[1] Apte protested against the teaching of the Bible in aided Missionary schools and colleges as militating against the principle of religious neutrality, enunciated in the Despatch of 1854. He also expressed the opinion that Missionary institutions did not represent indigenous enterprise, nor were their objects purely educational, and hence a strict

adherence to the principles of the Despatch would make them ineligible for grant-in-aid.

A strong plea was put in by him for perfect freedom of management in internal organization, to be given to educational institutions, provided the requisite degree of efficiency was maintained. He pleaded that secondary schools might be left free to reach the goal of the Matriculation standard, by whatever course they thought best. **(https://dsal.uchicago.edu› frontmatter › frontmatter)**

[2] Vernacular Serial Reading Books were described by him as being "exactly what they should not be", being too abstruse and full of matter, far removed, from the experience and observation of boys. **(https://dsal.uchicago.edu› frontmatter › frontmatter)**

[3] *The Practical Sanskrit-English Dictionary*, Preface.- 1

[4] The chief feature of this Dictionary is that it has aimed at being practical. With this view I have added quotations and references to the peculiar and noteworthy senses of words, especially such as occur in works read by the student at School or College. (*The Practical Sanskrit-English Dictionary*, Preface, p. 2)

[5] *The English- Sanskrit Dictionary*. Prefece.

[6]I thought I shall be doing some service to the Sanskrit reading public if I compiled an English -Sanskrit Dictionary Adopted to the wants of the students.

[7] *The Students Sanskrit English Dictionary*, Pref. p.4.

[8] ibid

[9] *Kusumamālā*, pp.1-58.

[10] ibid, pp. 67-131.

[11] ibid, pp. 137-188.

# विदुषः अम्बिकादत्तव्यासस्य व्यक्तित्वं कृतित्वं शिवराजविजयञ्च

डा. सञ्जयकुमारः

विदुषोऽम्बिकादत्तव्यासस्यैकोनविंशशतकस्याधुनिकसंस्कृतसाहित्ये विशिष्टं स्थानं वर्तते। ते विविधकाव्यधर्मिरूपेण सुप्रतिष्ठन्ते। विहारी-विहारनामके ग्रन्थे स्वपरिचयो अनेन लिखितः। अस्य पूर्वजाः राजस्थानप्रदेशस्य जयपुरमण्डलान्तर्गते धूलानामके ग्रामे न्यवसन्। परन्तु अस्य पितामहो राजारामो धूलाग्रामं परित्यज्य काशीं जगाम। तस्य द्वौ पुत्रौ दुर्गादत्तः देवीदत्तश्चेति आस्ताम्। सनातनसंस्कृतानुरागिणः पण्डितदुर्गादत्तस्यैव धीमतो द्वितीयः पुत्रोऽम्बिकादत्त-व्यासो बभूव। 1858 ईसवीये वर्षे चैत्रषुक्लाष्टम्यां तिथौ जयपुरेऽम्बिकादत्तो जनिं लेभे। पं. अम्बिकादत्तव्यासस्य शैशवजीवनं सनातनभारतीय-संस्कृतेरेकं पल्लवितं पुष्पितञ्चाभवत्। परिणामतस्तस्य जीवनं श्रेष्ठावरणव्यवहारेण पूर्णम् आसीत्। स काश्यां शिक्षां जग्राह। 1880 ईशवीये वर्षे साहित्याचार्य-पदवीमधिगतवान्। बिहारप्रदेषस्य मधुवनीभागलपुर-छपरा-पटनास्थलेषु छात्रान् अध्यापयामास सः। संस्कृतभाषाव्याकरणसाहित्यदर्शनानां गम्भीराध्ययनेन तस्य अध्यापनमुत्कृष्टं महत्त्वशीलञ्च अभवत्। पं. अम्बिकादत्तव्यासस्याध्यापनस्येव रचनाकर्मापि महत्त्वपूर्णं विशालञ्चासीत्। तेन स्वाध्यायपूर्णे जीवनेऽनेकानि काव्यानि रचितानि। व्यासमहाभागानां सुरभारत्यां समुपनिबद्धानां ग्रन्थानां संख्या भूयसी वर्तते। सर्वे ग्रन्थाः भारतीयसंस्कृति-दर्शनसाहित्यव्याकरणेभ्यः सम्बद्धाः। तेषां नामानि -

'शिवराजविजयम्', 'दुःखद्रुमकुठारम्', 'सामवतम्', 'कथाकुसुमम्', 'संस्कृताभ्यासपुस्तकम्', 'अवतारमीमांसाकारिका', 'गुप्ताशुद्धिप्रदर्शनम्', 'बालव्याकरणम्', 'प्रस्तारदीपकम्', 'पातञ्जलप्रतिबिम्बम्', 'गणेशशतकम्', 'शिवविवाहः', 'संख्यसागरसुधा', 'चिकित्साचमत्कारम्', 'कुण्डलीदर्पणम्', 'रेखागणितम्', 'ललितानाटिका', 'रत्नपुराणम्', 'समस्यापूर्तिसर्वस्वम्', 'आनन्दमञ्जरी', 'अबोधनिवारणम्', 'ताशकौतुकपचीसी', 'द्रव्यस्तोत्रम्',

'चतुरङ्गचातुरी', 'क्षेत्रकौशलम्', 'गोसंकटनाटकम्', 'महाताशकौतुकपचीसी', 'सांख्यतरङ्गिणी', 'पण्डितप्रपञ्चकम्', 'आश्चर्यवृत्तान्तः', 'छन्दःप्रबन्धम्', 'सुकविसतसई', 'मानसप्रशंसा', 'भाषाभाष्यम्', 'पुष्पवर्षा', 'भारतसौभाग्यम्', 'बिहारीबिहारम्', 'रत्नाष्टकम्', 'कथाकुसुमकलिका', 'प्राकृतप्रवेशिका', 'संस्कृतसञ्जीवनम्', 'अनुष्टुप्लक्षणोद्धारः', 'गद्यकाव्यमीमांसा', 'स्वर्गसभा', 'विभक्तिविभागः', 'वामिचरितम्', 'साहित्यनवनीतम्', 'विहारीचरित्रम्', 'निजवृत्तान्तम्', 'सहस्रनामरामायणम्', 'मित्रलापः', 'धर्माधर्मकलकलम्', 'आश्रमधर्मनिरूपणं' चेत्यादीनि। अष्टसप्ततिग्रन्थान् संस्कृतहिन्दीव्रजभाषासु रचयित्वा संस्कृतसाहित्यस्याविरलधारां प्रवाहितवान् सः। एतेषु सर्वेषु ग्रन्थेषु नूतननवीनजीवनोपयोगिविषयाणां वर्णनं कृतं विद्वद्वर्येण।

अम्बिकादत्तव्यासेन संस्कृतभाषायां विरचितानां ग्रन्थानां प्रकाशनकालविषयकं तथ्यम् अत्र प्रस्तूयते।

| **ग्रन्थनाम** | **ग्रन्थारम्भ कालः** | **समापनकालः** | **प्रकाशनालयम्** | **प्रकाशन कालः** |
|---|---|---|---|---|
| गणेशशतकम् | 1926 | 1927 | ---- | ---- |
| पातञ्जलप्रतिबिम्बम् | 1934 | 1937 | व्यासयन्त्रालयः | 1952 |
| कुण्डलीदर्पणः | 1934 | 1935 | अमुद्रितम् | ---- |
| सामवतनाटकम् | 1934 | 1937 | खड्गविलास (वाँकीपुरम्) | 1945 |
| रेखागणितम् | 1935 | 1935 | अमुद्रितम् | ---- |
| रत्नपुराणम् | 1935 | ---- | अपूर्णम् | ---- |
| गुप्ताशुद्धिप्रदर्शनम् | 1937 | 1937 | हरिप्रकाशः (काशी) | 1937 |
| समस्यापूर्तिसर्व | 1937 | | (काशी) | |

| | | | | |
|---|---|---|---|---|
| स्वम् | | | | |
| द्रव्यस्तोत्रम् | 1939 | 1939 | खड्गविला स (वाँकीपुरम्) | 1939 |
| दुःखद्रुमकुठारः | 1942 | 1943 | हरिप्रकाशः (काशी) | 1943 |
| आर्यभाषासूत्रधारः | 1943 | ---- | अमुद्रितम् | ---- |
| रत्नाष्टकम् | 1944 | 1944 | च0 प्र. (काशी) | 1944 |
| कथाकुसुमम् | 1944 | 1944 | खड्गविला स (वाँकीपुरम्) | 1944 |
| शिवराजविजयम् | 1945 | 1950 | चौखम्बा | ---- |
| अनुष्टुब्लक्षणो द्धारः | 1945 | 1945 | अमुद्रितम् | ---- |
| सहस्रनामरामाय णम् | 1950 | 1950 | व्यासयन्त्राल यः | 1950 |

एषु ग्रन्थेषु प्रमुखग्रन्थानां परिचयोऽत्र दीयते-

**क). सामवतम्** - पण्डितैरम्बिकादत्तव्यासैः प्रणीतं 'सामवतम्' नाटकं षष्ठाङ्कसमन्वितं शृङ्गारसप्रधानमस्ति। नाटकस्यास्य कथावस्तु स्कन्दपुराणस्य ब्रह्मोत्तरखण्डस्य नवमेऽध्याये वर्तते। स्कन्दपुराणीये ब्रह्मोत्तरे खण्डे प्राप्तं सोमव्रतप्रकरणे सीमान्तपार्वतीधिया पूजितः पुरुषोऽपि सामवांस्तद्भक्तिमहिम्ना स्त्रीत्वं लेभे[1] इति संक्षिप्ता कथा। सैव समूलेऽपि पवित्रेति मनोहरेति अद्भुतेति शिक्षाभिक्षादायिनीति भक्तिपर्यवसायिनीति रचनासमन्विता। यद्यप्यत्राङ्गी शृङ्गारो रसस्तथापि नैष पारकीयं सामान्यनायिका वा समालम्ब्य प्रवृत्तो न वा गन्धर्वादिविवाश्रयः। अस्य नाटकस्य नायकः सुमेधा, सामवती च नायिकास्ति।

नाटकस्य नायकः सुमेधाः धीरप्रशान्तोऽनुकूलश्च विद्यते। सुमेधसः मित्रं सुशीलः विद्यते। स बह्वीषु विद्यासु निपुणो विद्यते। स वेदान्तसांख्यव्याकरणन्यायस्य वेत्तास्ति। नाटकेऽस्मिन् सारस्वतस्य पुत्रः सामवान् वर्तते। यश्च नाटकस्य प्रमुखं पात्रम्। सामवतस्य चरित्रं सम्पूर्णनाटके प्रस्फुटितमस्ति। अत एवास्य नाटकस्य नाम सामवतं विद्यते। एवं खलु सुमेधाः सुशीलः  सामवतश्च परस्परं मित्राणि सन्ति।

**ख). गुप्ताशुद्धिप्रदर्शनम्** - संस्कृतवाक्यरचनायां व्याकरणस्य अशुद्धि-परिचयार्थम् अशुद्धिनिवारणार्थं, शुद्धवाक्यबोधनार्थञ्च पण्डितेनाम्बिकादत्त-व्यासेन गुप्ताशुद्धिप्रदर्षशनं नामको ग्रन्थो निरमायि। ग्रन्थस्यास्य संस्कृत-व्याकरणदृष्ट्या विशिष्टं स्थानं विद्यते। संस्कृतकाव्यजगति लोकव्यवहारे च शुद्धवाक्यप्रयोगस्यानिवार्यतास्ति तस्मादेव ग्रन्थोऽयं स्वमहत्त्वं विधत्ते। संस्कृतभाषासाहित्ये लोकव्यवहारे चाजानतो जानतश्चाप्येव काचन स्वाभाविकाशुद्धयो भवन्त्येव। तद्बोधनार्थं तत्र ध्यानमाकर्षयितुं पण्डितस्य अम्बिकादत्तव्यासस्यायं प्रयासो महत्तमः।

**ग). बालव्याकरणम्** - बालव्याकरणस्य यथा नाम तथा गुणः। बालानां व्याकरणसुखबोधाय ग्रन्थस्यास्यातिमहत्त्वपूर्णं स्थानं विद्यते। बालव्याकरणस्य प्रकाशनं चन्द्रप्रभाप्रकाशकेन वाराणस्यां कृतम्। मुख्यरूपेणास्मिन् ग्रन्थे ग्रन्थकृद् विद्यार्थिनां कृते अंग्रेजीमाध्यमेन संस्कृतव्याकरणस्य ज्ञानं प्रकाशयतितराम्।

**घ). संस्कृताभ्यासपुस्तकम्** - ग्रन्थस्यास्य प्रकाशनं चन्द्रप्रभाप्रकाशकेन वाराणस्यां 1889 ईशवीये वर्षे कृतम्। ग्रन्थेऽस्मिन् शब्दानाम्, धातूनाम्, वाक्यानाम्, वर्णानाम्, भाषावैशिष्ट्यभूतकारकाणाम्, उपसर्गाणाम्, नियमसंगतपूर्णं वर्णनमस्ति। ग्रन्थस्य द्वितीये भागे प्रत्ययप्रयोगाणां वाक्यरचनाविशिष्टसमासानां नियमपूर्वकं वर्णनं पण्डितेन अम्बिकादत्तव्यासेन कृतं विद्यते।

**ङ). दुःखद्रुमकुठारम्** - ग्रन्थेऽस्मिन् मुख्यरूपेणाध्यात्मिको दार्शनिकश्च विषयः समुपस्थापितः। सर्वे विषया अत्र निबन्धरूपेण संकलिताः। निबन्धाश्च ते

मानवजीवनस्य गहनानुभूतिसमन्विताः। दुःखमयः संसारः इति भारतीयदर्शनस्य विचारसारः। प्रायः सर्वेषु निबन्धेषु दुःखमयस्य जीवनस्य चर्चास्ति। अस्मिन् ग्रन्थे मानवजीवनस्य आगर्भात् मृत्युपर्यन्तं सम्भावितदुःखस्य समाधानं प्रस्तुतं विद्यते।

**च). अवतारमीमांसा** - पण्डितैः अम्बिकादत्तव्यासैः अनुष्टुप्छन्दसि द्विशतोत्तरैकषष्टिश्लोकयुतोऽयं ग्रन्थो निरमायि। भागद्वयमिह विद्यते। पूर्वे भागे एकशतोत्तरैकादशश्लोकाः सन्ति अपरे च भागैकशतमष्टचत्वारिंषच्छलोकाः सन्ति। अपि चात्र ग्रन्थे विष्णोः दशावतारविषये शङ्कामुपस्थाय समाधानञ्चापि कृतम्।

**छ). कथाकुसुमम्** - पञ्चदशशिक्षाप्रदं प्रेरणादायकं कथासंग्रहं यत्र तत् कथाकुसुमम् काव्यम्। अस्य काव्यस्य सर्वाः कथाः पञ्चतन्त्रहितोपदेशाभ्यां सम्बद्धाः सन्ति। प्रत्येकं कथायाः समाप्त्यवसरे तस्याः कथायाः निष्कर्षो विद्यते।

**ज). शिवराजविजयम्** - द्वादशोच्छवासेन संयुक्तं शिवराजविजयं संस्कृतगद्यकाव्यस्य प्रथमम् ऐतिहासिकोपन्यासमिति स्वीक्रियते। अस्य विषयवस्तु राष्ट्रियचेतनासमन्वितं विद्यते। आलोचकानां मध्ये उपन्यासोऽयं सदा आद्रियते। पं. अम्बिकादत्तव्यासस्य गद्यशैली इह उत्कृष्टरूपेण परिलक्ष्यते। सरलसुबोधगद्यमस्य ग्रन्थस्य प्रतिष्ठां साहित्यजगति नितरां स्थापयति। ग्रन्थस्य भाषा कर्णप्रियास्ति। रसभावश्च निरन्तरं मानसप्रक्षालने समर्थः विद्यते। गद्यलेखनकार्यं न भवति खलु साधारणम्। वस्तुतः गद्यलेखनं प्रतिभायाः परीक्षणम्। यथा सुवर्णस्यैका रेखैव पश्यतोहरान् सूचयति स्वीयं सर्वं वैशिष्ट्यं, तथैव गद्यकाव्यस्यैका एव पंक्तिः रससिद्धानां कवीश्वराणां परिचयं ददाति। पद्यापेक्षया गद्यकाव्यं ध्वननातिरेकं सम्पाद्यते। प्रत्यक्षरं तत्र भावभाषां प्रति सुनिश्चितं स्थानमपेक्षते। तथैव गद्यकविः अक्षरयोजनां वर्णयोजनां प्रति विशेषसावधानतां वरीवर्ति। छन्दसः पारवश्यात् स्वच्छन्दपदप्रयोगे न भवत्यनिच्छतः विस्तार्यता। ते क्वचित् बहूनपि नियताक्षरान् संक्षिप्य क्षेदिष्ठं विधीयते। क्वचिच्च स्वाभाविकपदप्रयोगं विधाय पारस्परिकालाप-संस्कृतप्राप्तवाक्यानि जटलीक्रियन्ते। गद्ये तु यदि किमपि तादृशमस्वाभाविकं

स्यात् तत् कविरेव निर्वक्ति महदवद्यम् इत्यादिकारणैः पद्यापेक्षया गद्यमेव महामान्यं भवति। एतदर्थं महामान्याः धन्याः सुबन्धु-बाण-दण्डिनो महाकवयो ये वासवदत्ता-कादम्बरी-दशकुमारचरितान्यमृतमधुराणि गद्यकाव्यानि विरच्य भारतवर्षस्य साहित्यक्षेत्रे कविताक्षेत्रे वा महत्त्वं स्थापयन्ति। अतः आचार्यभामहेनोक्तम् - 'गद्यं कवीनां निकषं वदन्ति'[2]। शिवराजविजये पं. अम्बिकादत्तव्यासस्य सृजनशक्तिः सर्वथा गद्यधर्मस्यानुकूला विद्यते। अस्मिन् गद्यकाव्ये गद्यस्वरूपः ईदृशो वर्णितः-

'अरुण एव प्रकाशः पूर्वस्यां भगवतो मरीचिमालिनः। एष भगवान् मणिराकाशमण्डलस्य चक्रवर्ती खेचरचक्रस्य कुण्डलमाखण्डलदिशः दीपको ब्रह्माण्डभाण्डस्य प्रेयान् पुण्डरीकपटलस्य, शोकविमोकः कोकलोकस्य अवलम्बो रोलम्बकदम्बस्य सूत्रधारः सर्वव्यवहारस्य इनश्च दिनस्य'[3]।

गद्येऽस्मिन् महाकवेः पदे पदे वर्णनानैपुण्यं भाषानैपुण्यं चात्र स्पष्टं दरीदृश्यते। कोमलकान्तपदावलीभिः सहृदयवृन्दान् अनायासमेव मोहयत्ययम्। पं. अम्बिकादत्तव्यासस्य गद्यकाव्यस्य शिवराजविजयस्य कविताकामिनी मधुरपदगामिनीरूपेण विद्यते। अत एव संस्कृतगद्यधारासु पं. व्यासेन रचितस्य शिवराजविजयस्य अत्यधिकं महत्त्वं वर्तते। अस्मिन् काव्ये विविधविषयाणां वर्णनं कृत्वा साहित्यपटले नवीनामैतिहासिकां काव्यधाराम् उपन्यासरूपेण प्रस्तौति कविः। समाजचित्रेण सह राष्ट्रचिन्तनमिह महद्दृष्ट्या प्रकाश्यते। अस्मिन् काव्ये राष्ट्रियभावनाप्रसूतस्थलं तत् द्रष्टव्यम् -

''भारतवर्षीया यूयम्, तत्रापि महोच्चकुलजाताः, अस्ति चेदं भारतवर्षम्, भवति च स्वाभाविक एवानुरागः सर्वस्यापि स्वदेशे, पवित्रतमश्च यौष्माकीणः सनातनो धर्मः, तमेते जाल्माः समूलमुच्छिन्दन्ति, अस्ति च प्राणा यान्तु न च धर्मः इत्याचार्याणां दृढः सिद्धान्तः। महान्तो हि धर्मस्य कृते लुण्ठ्यन्ते, पात्यन्ते, हन्यन्ते, न धर्मं त्यजन्ति, किन्तु धर्मस्य रक्षायै सर्वसुखान्यपि त्यक्त्वा निशीथेष्वपि वर्षास्वपि, ग्रीष्मधर्मेष्वपि, महारण्येष्वपि, कन्दरिकन्दरेष्वपि

व्यालवृन्देष्वपि, सिंहसंघेष्वपि, वारणवारेष्वपि, चन्द्रहासचमत्कारेष्वपि च निर्भया विचरन्ति। तद्धन्या स्थ यूयम्, वस्तुतः आर्यवंशीयाः वस्तुतश्च भारतवर्षीयाः''[4]।

पं. अम्बिकादत्तव्यासो भारतस्य दुर्दशां स्वनेत्रेणापश्यत्। अत एव भारतदेशस्य संस्कृतिधर्मसभ्यतायाः जीवनमूल्यस्य च विषये तेन चिन्तनं कृतम्। तन्मते धर्म एव तत्तत्त्वं येन सम्पूर्णमपि राष्ट्रम् एकसूत्रेणैव बध्नातुं शक्यते। तस्मादेवायं ग्रन्थः राष्ट्रियभावनया ओतप्रोतो विद्यते। अत्र धर्मविषयेऽपि सन्दर्भविशेषे विशिष्टं वर्णनं विद्यते। यत्र राष्ट्रमेव जीवनम् राष्ट्रमेव मरणम्। सत्यमेवोक्तम् – 'धर्मो रक्षति रक्षितः'[5]। धर्म एव राष्ट्रस्य स्वरूपमस्ति, प्राणोऽस्ति। धर्मेण विना राष्ट्रकल्पना असम्भवा। प्रत्येकराष्ट्रस्य स्वधर्मो भवति यस्मिन् धर्मे तद्देशीया जनाः बद्धा भवन्ति। भारतस्य सहिष्णुता, दयालुता, कर्तव्यपरायणता, समानता, 'वसुधैव कुटुम्बकस्य' भावना इति सर्वं धर्मस्यान्तर्गते स्वीकुर्वन्ति जनाः। अत एव 'धारणाद्धर्म' इति कथ्यते। धर्मः सदा रक्षणीयः। भारतभूमिं प्रति गरुडपुराणे उक्तम्-

'गायन्ति देवाः किल गीतकानि धन्यास्तु ते भारतभूमिभागे।
स्वर्गापवर्गस्य फलार्जनाय भवन्ति भूयः पुरुषासुरत्वात्'[6]।।

अर्थात् देवा अपि स्वर्गापवर्गस्य मार्गं भारतभूमिं मन्वते। अत एव भूमिमिमां देवगणा अपि प्रशंसन्ति। मार्कण्डेयपुराणे उक्तम् -

'भारतो नाम चेद्वर्षं दक्षिणेन मयोदितम्।
तत्कर्म भूमिर्नान्यत्र सम्प्रति पुण्यपापयोः।
तत्प्रधानं विज्ञेयं यत्र सर्वं प्रतिष्ठितम्'[7]।

अर्थात् भारतभूमिः सम्पूर्णदेशेषु उत्तमदेश उत्तमभूमिः विद्यते। अयं मनुष्याणां कृते कर्मभूमिः। मानवोऽत्र सकलकार्यव्यापारसम्पादनार्थाय समर्थोऽस्ति, पुण्यफलं चाप्नोति। एषा भावना शिवराजविजये सर्वत्र दृष्टिगोचरीभवति। सर्वे जनाः राष्ट्रं प्रति तत्र स्वपवित्रभावनया समर्पिताः दृश्यन्ते। राष्ट्रमेव मनुष्याणां जीवनम्। महाराष्ट्रकेशरी शिववीरोऽत्र नायकः रघुवीरसिंहश्चोपनायकः गौरसिंहश्यामर-

सिंहश्चात्र सहायकौ। अवरंगजेवोऽत्र प्रतिनायकः। जयसिंहः स्वार्थलोलुपो भारतीयः। अयं केवलं स्वार्थमधिगच्छति। अत एवास्य देशवासिहृदयेषु नैव किञ्चित् स्थानम्। भारतस्तु वीरसपूतानां देशः। अत्र स्वार्थपराणां दुर्बलानां मनुष्याणां कृते न रिच्यते स्थानम्।

पं. अम्बिकादत्तव्यासः शिवराजविजये तत्कालीनमसामाजिक-व्यवस्थायाः सहजवर्णनं करोति। विशेषरूपेण हिन्दूसमाजस्य दयनीयव्यवस्थायाः वर्णनं करोति। यथा- ''सम्प्रति तु म्लेच्छैर्गावो हन्यते, वेदाः विदीर्यन्ते, स्मृतयः समृद्यन्ते। मन्दिराणि मन्दुरीक्रियन्ते, सत्यः पात्यन्ते, सन्ताश्च सन्ताप्यन्ते। सर्वमेतन्माहात्म्यं तस्यैव महाकालस्येति कथं धीरधौरेयोऽपि धैर्यं विधुरयसि?''[8]

एवं च भारतस्य वर्णनं श्रुत्वा महामुनेः हृदयं विदीर्णमभवत्। वस्तुतः भारतः प्राचीनसमयः सर्वधर्मसद्भावभावनया प्रभावितः आसीत्। न तदा धर्मविषये विवादः आसीत्। वैचारिकरूपेण धर्मस्य चर्चा समाजे व्याप्ता आसीत् परन्तु शारीरिकरूपेण न तत्र भेदः अजायत। परं मुगलषासनकालात् भारते धर्मविषयकसद्भावः मान्यता च खण्डिता जर्जरिताभवत्। भारतस्य दुर्दशां ज्ञात्वा महामुनेः मनसि भारतस्य वर्तमानविषयं ज्ञातुं प्रबलोत्कण्ठाभवत्। तदा एव काव्ये बटुकगुरुमाध्यमेन पुनः भारतस्य दशामुद्घाटयति कविः यथा- ''गजनीस्थाननिवासी महामदो यवनः ससेनः प्राविशेद् भारतवर्षे। स च प्रजाः विलुण्ठ्य, मन्दिराणि निपात्य, प्रतिमां विभिद्य, परश्शतान् जनान् च दासीकृत्य शतशः उष्ट्रेषु रत्नान्यारोप्य स्वदेशमनैषीत्।''[9]

अनेन वर्णनेन सहृदयानां हृदयं विदीर्णं भवति। भारतवर्षस्य तत्कालीनपरिस्थितेः परिचयो भवति। भारतवर्षस्य दुर्दशायाः एवं वर्णनं नान्यत्र दृश्यते। एवंभूताया दुर्दशायाः वर्णनसाहसं केवलं पं. अम्बिकादत्तव्यासः एव कर्तुं पारयति। पं. अम्बिकादत्तव्यासः प्रकृतिवर्णनम् एवं करोति - ''कदलीदलकुंजायितस्य एतत्कुटीरस्य पुष्पवाटिका पूर्वतः परमपवित्रपानीयं परस्सहस्रपुण्डरीकपटलपरिलसितं पतत्रिकुलकूजितपूजितं पयः पूरितं सर आसीत्। दक्षितश्चैको झरझर्झरध्वनिध्वनितदिगन्तरः फलपटलाऽऽस्वादचपलित-

चंचपतङ्गकुलाऽऽक्रमणाधिकविनतषाखाशाखिसमूहव्याप्तः सुन्दरकन्दरः पर्वतखण्ड आसीत्।''[10] अत्र कदलीवनस्य स्वाभाविकदृश्यम् उपस्थापयति कविः। पं. अम्बिकादत्तव्यासः संसारस्य अवस्थां जीवनं च अत्यन्तसामीप्येन अपश्यत्। ते मनुष्यजीवनं आशानिराशापूर्णं मन्वते। ते कथयन्ति -

'रात्रिर्गमिष्यति भविष्यति सुप्रभातम्
भास्वानुदेष्यति हसिष्यति पंकजश्रीः।
इत्थं विचिन्तयति कोषगते द्विरेफे
हा हन्त! हन्त!! नलिनीं गज उज्जहार'[11]।।

अर्थात् निशा गमिष्यति सुप्रभातं भविष्यति। सूर्योदयश्च भविष्यति पंकजश्रीः विकासमधिगमिष्यति। कोषगतेन भ्रमरेण इत्थं विचिन्त्यते परं कालरूपेण गजः नलिनीम् उत्खातवान्। संसारस्य जीवनदशापि तथैव समाना। अस्मिन् श्लोके अप्रस्तुतप्रशंसालंकारः वसन्ततिलकावृत्तञ्च। अनेन प्रकारेण पं. अम्बिकादत्तव्यासः केवलं नैव गद्यकारः, अपितु कवित्वशिखरमपि प्राप्नुवन्नस्ति। एवं प्रकारेण शिवराजविजयस्य प्रायः सर्वे निश्वासाः कयाश्चित् सूक्त्या श्लोकेन वा आरब्धाः। यथा प्रथमः निश्वासः -

'विष्णोर्माया भगवती यथा सम्मोहितं जगत्।
हिंस्रः स्वपापेन विहिंसितः यत्र साधु समत्वेन भयाद्विमुच्यते'[12]।।

तृतीये निश्वासे -

'जीवन्नरो भद्रशतानि पश्येत्।
संसारेऽपि सतीन्द्रजालमपरं यद्यस्ति तेनापि किम्'[13]।।

चतुर्थे निश्वासे – 'कार्यं वा साधयेयम् देहं वा पातयेयम्'[14]।

पंचमे निश्वासे – 'वयं नो ते विप्राः प्रतिदिवसमासाद्य कृपणान् धनं ये याचन्ते प्रतिगणितनक्षत्रतिथयः'[15]।

षष्ठः निश्वासः – 'बुद्धिर्यस्य बलं तस्य निर्बुद्धिश्चेत् कुतो बलम्'[16]।

सप्तमः निश्वासः -

‘अयं रेवाकुंजकुसुमसेवा समुचितः।
समीरोऽयं वेलादरविदलदेलापरिमलः।
इयं प्रावृड् धन्यान् जलद्विन्यासचतुरा।
पराधीनं चेतः सखि! कमपि कर्तुं मृगयते’।।

अपि च, गर्ज गर्ज क्षणं मूढ! अपि च उक्तम् -

‘कामन्त्यः क्षत कोमलांगुलिगलद्रक्तैः सदभीः स्थलीः
पादैः पातितः यावकैरिव गलद्वाष्पाम्बुधौतानाः।
भीता भर्तृकरावलम्बितकरात्वद्वैरिनार्याऽधुना
दावाग्नि परितोभ्रमन्ति पुनरप्युद्यद्विवाहाः इव’[17]।

अष्टमे निश्वासे -

‘वेधा देधा भ्रमं चक्रे कान्तासु कनकेषु च।
तासु तेष्वप्यनासक्तः साक्षाद् भर्गो नराकृतिः’[18]।।

नवमः निश्वासः - ‘दैवी विचित्रा गतिः’। अपि च,

‘येनामन्दमरन्देदलदरविन्दे दिनान्यनायिषत।
कुरजे खलु तेनेहा तेन हा! मधुकरेण कथम्’[19]।

दशमे निश्वासे – ‘मानो हि महतां धनम्। गंगातीरमपि त्यजन्ति मलिनम् ते राजहंसा वयम्’[20]।

एकादशे निश्वासे – ‘शतेकरीमशकपादविपादिकायाम्’। अपि च, उपकारिणी विस्रब्धे शुद्धमतौ यः समाचरति पापम्। तं जनमफलं सत्यसन्धं भगवति वसुधे! कथं वहसि[21]।।

द्वादशस्य निश्वासस्य प्रारम्भः एवम्भवति-

तासामविरमच्छौरिः स्मयमानमुखाम्बुजः।
पीताम्बरधरः स्राग्रवीसाक्षान्मन्मथमन्मथः।।

अपि च -

'यत्र योगेष्वरो कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीविजयोर्भूतिध्रुवा नीतिर्मतिर्मम'[22]॥

एवं खलु पं.अम्बिकादत्तव्यासेन स्वकीये काव्ये अनेकानि प्रेरकाणि ध्येयवाक्यसदृषानि सुभाषितानि उक्तानि, येन काव्यस्य तस्य महत्त्वं वर्धत एव। लोकजीवनस्य विषयमहत्त्वं स्वकाव्ये प्रस्तुत्य पं. अम्बिकादत्तव्यासः लोककविरूपेण सदा समादृतो लोकैः। तथाहि प्रेमवर्णने लोकविषयो द्रष्टव्यः -

''वीरः अभाग्यः एष जनः अस्वायत्तं हृदयं विगलितं, धैर्यं पराधीनं चित्तम्, अस्थिर आत्मा दुर्निवारः प्रेमप्रवाहः दुरन्तोऽभिलाषः अप्रतिरोधा कर्मरेखा तत् किमिव वच्मि? किमिव भावयामि न जाने कीदृशं वज्रादपि निष्ठुरं हृदयं भवादृशानां व्यरचि विधाता।''[23] अत्र प्रेम्णः स्वाभाविकं विस्तृतं वर्णनं दृश्यते। अम्बिकादत्तस्य जीवनं प्रति दृष्टिकोणः स्पष्टमस्ति। स उक्तवान् -

'धन-पटली बहु वर्षति तोयम्
धन-पटलीनमुखः पथिकोऽयम्।
बधुधारासाराश्च समुदिताः
बहुधा रागैरसिका मुदिता'[24]॥

अयमुपन्यासः खलु ऐतिहासिकवीररससमन्वितोऽस्ति परन्तु मानवजीवने प्रेम्णोऽनिवार्यतामपि स्वीकुर्वन्ति। जीवने यथा पौरुषस्य वीरतायाश्चावश्यकता विद्यते तथैव प्रेम्णोऽपि। मानवजीवने उपयोगिनः सर्वपक्षस्य महत्त्वं विद्यते तस्य सर्वस्य पक्षस्य पण्डितैः अम्बिकादत्तव्यासैः स्वसाहित्ये चिन्तनं कृतम्। पुनरपि काव्ये खलु वीररसशृङ्गारकरुणादयोऽङ्गभूतास्सन्ति। हास्यशान्तयोरपि वर्णनमात्रं दृश्यते। अफजलवधप्रसंगे बीभत्सदर्शनमपि मिलति तत्र। पं. अम्बिकादत्तव्यासः अलंकारप्रयोगेऽपि सिद्धहस्तकविरूपेण विराजते। गद्यकाव्येऽस्मिन् साधर्म्यबोधिका उपमा, अभेदबोधको रूपकः, उपरिप्रेक्षणात्मिका उत्प्रेक्षा तु मिलत्येव परं परिसंख्यानुप्रासादयोऽप्यलंकाराः सन्दृश्यन्ते। अनुप्रासालंकारस्तस्य मन्ये तस्य प्रियोऽलंकारः, यथोदाहरणेन

द्रष्टव्यम् – 'जातोऽयमरुणोदय कलविंकैरारब्धःकलरवःतनूभूतं तमः धीरः समीरः इरंमदो मदयति मयूरान् मतङ्गमोहनं गन्धमुद्गिरति नव वारिदवारिसरसिता रसावलाहका मन्दं गर्जन्ति समयेऽस्मिन् तोरणदुर्गसमीपस्थसरोवरप्रान्ते शिवमन्दिरे चारुहासिनी सौवर्ण्याऽऽलपति स्म'[25]।

अत्र प्राकृतिकदृश्यसमन्वितमनुप्रासालंकारसमन्वितं वर्णनमस्ति। पं. अम्बिकादत्तव्यासस्य विशेषतास्ति यत्ते सर्वत्र रसभावालंकारान् प्रकाशयन्ति। अत एव काव्यशैली तस्य महत्त्वशीला प्रतिभाति। पात्राणाञ्चरित्रचित्रणमपि सुस्पष्टं विद्यते। वातावरणदेशकालसंस्कृतिभावभङ्गिमाकुलशीलाध्वनने शैली सक्षमा। नेयं बाणभट्ट एव समासविकटा न वा सुबन्धुरिव प्रत्यक्षश्लेषा। अलंकारविधानमपि नवीनम्, कल्पनापि अभिनवा। वीरशिवाजी गद्यकाव्यस्यास्य नायकस्तस्य हृदये राष्ट्रियभावना सततं विराजते। सर्वैः समीक्षकैराचार्यैर्बलदेवोपाध्याय-कपिलदेवद्विवेदि-राधावल्लभत्रिपाठि-अभिराजराजेन्द्रमिश्र-भोलाशङ्करव्यासप्रभृतिभिर्ग्रन्थस्यास्य भावोऽयमङ्गीकृत एव।

## सहायकग्रन्थपञ्जी

*शिवराजविजयमहाकाव्यम्* (अम्बिकादत्तव्यासप्रणीतम्) (प्रथमो विरामः). व्याख्याकारः ड. विजयशङ्कर चौवे, चौखम्बा सुरभारती प्रकाशन, वाराणसी, 2018

*शिवराजविजयः* (प्रथम निश्वास:). व्याख्याकार श्रीनिवास शर्मा, भारतीय विद्या प्रकाशन, वाराणसी, चौखम्बा सुरभारती प्रकाशन, वाराणसी, 2015.

## तथ्यसूत्राणि

[1] *स्कन्दपुराणम्* (ब्रह्मोत्तरखण्डे)

[2] *काव्यालंकारसूत्रवृत्तिः* (1.3.21)

[3] *शिवराजविजयम्* (प्रथमो विरामः, प्रथमो निश्वासः, पृ.- 3)

---

[4] *शिवराजविजयम्* (प्रथमो विरामः, द्वितीयो निश्वासः पृ.- 140)
[5] *विष्णुस्मृतिः* (8.15)
[6] *गरुडपुराणम्* (उत्तरखण्डः, 1.6)
[7] *मार्कण्डेयपुराणम्* (55.21-22)
[8] *शिवराजविजयम्* (प्रथमो विरामः, प्रथमो निश्वासः, पृ.- 50)
[9] तत्रैव, (पृ.- 55)
[10] तत्रैव, (पृ.- 10)
[11] तत्रैव (द्वितीयो निश्वासः, पृ.- 101)
[12] तत्रैव (प्रथमो निश्वासः, पृ.- 1)
[13] तत्रैव (तृतीयो निश्वासः, पृ.- 239)
[14] तत्रैव (चतुर्थो निश्वासः, पृ.- 329)
[15] तत्रैव (द्वितीयो विरामः, पञ्चमो निश्वासः, पृ.- 1)
[16] तत्रैव (षष्ठो निश्वासः, पृ.- 43)
[17] तत्रैव (सप्तमो निश्वासः, पृ.- 116)
[18] तत्रैव (अष्टमो निश्वासः, पृ.- 193)
[19] तत्रैव (तृतीयो विरामः, नवमो निश्वासः, पृ.- 1)
[20] तत्रैव (दशमो निश्वासः, पृ.- 98)
[21] तत्रैव (एकादशो निश्वासः, पृ.- 175)
[22] तत्रैव ,(द्वादशो निश्वासः, पृ.- 267-268)
[23] तत्रैव (द्वितीयो विरामः, सप्तमो निश्वासः, पृ.- 151-152)
[24] तत्रैव, (पृ.-128)
[25] तत्रैव, (तृतीयो विरामः, द्वादशो निश्वासः, पृ.- 268-269)

# महामहोपाध्यायः गणपतिशास्त्री

राजेश-अधिकारी

## भूमिका

भारतवर्षो हि नः पुण्यभूमिः यत्र सहस्रवर्षेभ्यः प्राक्कालाद् आरभ्य प्रचलति अद्यावधि सरस्वत्याः समुपासनम्। सञ्जाताः सरस्वतीपुत्राः अगण्याः वाल्मीकि-वेदव्यास-भासकालिदासादयः। परन्तु विविधवैदेशिकहिंसनेन अस्माकं बह्व्यः ज्ञानाकराः पाण्डुलिपयः, अभिलेखाश्च धूलिसात्कृताः एकस्मिन् काले, काश्चन ताडपत्रेषु मसीकृताः पाण्डुलिपयः कीटैः दष्टाः, काश्चन वा पुरातनकारणात् स्वतो नष्टाः। अतः ज्ञानस्य एवंरूपेण नष्टीभावं दर्शं दर्शं व्यथितचित्ताः ज्ञानोपासकाः उत्थिताः पुनः अस्मन्मातृभूमौ। सम्प्राप्तानां च रामायणमहाभारतरघुवंशादीनां दिव्यवर्णनप्रसूनसौरभस्य आघ्राणेन समाकृष्टाः भृङ्गायिताः पाश्चात्याः अपि नैके विद्वांसः मैक्समुलर-वेबर-जाकोबीप्रभृतयः। तैः प्राच्यैः पाश्चात्यैश्च सर्वैः पाण्डुलिपीनाम् उद्धरणे, सम्पादने, प्रकाशने, शुद्ध्यशुद्धिविचारणे च सम्पूर्णं जीवनं व्यापृतम्। एतेषु एव ऊनविंशतिशतकीयः भारतीयः महान् विद्वान् महामहोपाध्यायः ड. तरुवाग्रहारम् गणपतिशास्त्रिमहाभागः। तेषां जीवनकथावर्णनमथ समारभ्यते।

## कार्यजीवनम्

षष्ठ्युत्तराष्टादशशततमे ईशवीयाब्दे अक्तुबरमासि माद्राज-स्थिते तिनिभेल्याख्ये मण्डले तारुवै इत्यभिधे ग्रामे[1] एकस्मिन् सुसंस्कृते ब्राह्मणपरिवारे तरुवाग्रहारम्-गणपतिशास्त्री जनिरलभत। षोडशशतकीयस्य शास्त्रपारङ्गतस्य ग्रन्थपटलप्रणेतुः अप्पय्यदीक्षितस्य कूले एव गणपतिपिता रामसुब्बिरियर-महोदयः अजायत। अनूपनयनसंस्कारम्, अष्टमाद् द्वादशवर्षपरिमिते स्वल्पे एव वयसि गणपतिः संस्कृतभाषायां, साहित्ये च लब्धव्युत्पत्तिः सम्पूर्णं यजुर्वेदं कण्ठे धारयामास। बाल्ये अतिक्रान्ते, अयं संस्कृतशास्त्रवारिधिं तितीर्षुः आगतः

त्रिवाङ्कुरराज्यस्य राजधानीं त्रिवेन्द्रनगरम् (साम्प्रतं केरलराज्यस्य राजधानी), तत्र च सुब्बादीक्षितायाः कर्मनाइ-सुब्राह्मण्यस्य च सान्निध्यं प्राप्य विविधशास्त्रं गम्भीररूपेण पपाठ। स्वल्पेनैव कालेन गणपतिः अलङ्कार-व्याकरण-दर्शनशास्त्रादिषु कुशाग्रचित्तः सञ्जातः, भूषितश्च शास्त्री इत्युपाधिना पण्डितप्रवरैः। सप्तदशवर्षदेशीयः स माधवीवसन्तम् इत्याख्यं संस्कृतनाटकं विरचयामास, तस्माच्च त्रिवाङ्कुरमहाराजस्य विद्यासमुपासकस्य विशाखम्-तिरुमलस्य दृष्टिरापतिता तस्मिन्।

एकोनाशीत्युत्तराष्टादशशततमे ईशवीयाब्दे स सम्राट् राजप्रासादीय-ग्रन्थागारभारं गणपत्यै प्रादात्। तस्मिन्नेव वर्षे त्रिवाङ्कुरस्य उच्चन्यायालये कर्मभारमपपि अवहत्। ऊननवत्युत्तर-अष्टादशशततमे ईशवीयाब्दे महाराजः त्रिवेन्द्रम्-नगरे एकं संस्कृतमहाविद्यालयं प्रतिष्ठापयामास, तस्य प्रधानसंस्कृत-शिक्षकरूपेण गणपतेः नियुक्तिर्जाता। तत्र तस्य महत्कर्मादर्शं दर्शं दर्शं कृतार्थः सन् प्रशंसावचांसि व्याजहार प्रशस्यः संस्कृतविद्वान् ए-आर-राजराजवर्मा। एतस्मिन्नवसरे तेन कानिचित् संस्कृतपुस्तकानि, पद्यानि च विरचितानि। दश वर्षाणि तत्र प्रधानशिक्षकरूपेण कार्यभारं समाप्य तत्रैव महाविद्यालये अध्यापकपदं समासीनः स।

अष्टोत्तरोनविंशतितमे ईशवीयाब्दे स महाराजः त्रिवेन्द्रम्-नगरे एकं सर्वकारपाण्डुलिपिसंग्रहशालां (Oriental Manuscript Library) निर्मितवान्। विविधस्थलेभ्यः संस्कृतपाण्डुलिपीः उद्धृत्य उद्धृत्य अस्यां संग्रहणम्, दुष्प्राप्यत्वेन निर्वाचितानां पाण्डुलिपीनां च मुद्रणम् अस्याः शालायाः लक्ष्यमासीत्। पूर्वमेव कोलकातायाः एशियेटिक् सोसाइटि-द्वारा "Bibliotheca Indica Series", वाराणस्याः भिजियानाग्राम-सिरिज, निर्णयसागरग्रन्थमाला (बोम्वाइ), आनन्दाश्रमग्रन्थमाला (पुने) इत्यादिषु दुष्प्राप्याणां बहूनां संस्कृतग्रन्थानां च प्रकाशनं सञ्जातम्। संस्कृतसाहित्यस्य प्रचारः तथा सर्वजनमनसि संस्कृतमाहात्म्यवर्धनप्रयोजनतायाः च अपेक्षया पूर्वोक्तानां प्रतिष्ठानानां प्रकाशनक्षमतायां स्वल्पीभावं परिलक्ष्यैव महाराजेन इदं प्रतिष्ठानम् आरब्धं, तत्र

संस्कृतपाण्डुलिपिप्रकाशनाय Trivendram Manuscript Series इति स्वीयग्रन्थमाला प्रवर्तिता। महाराजेन च गणपतिरेव तस्याः संग्रहशालायाः अध्यक्षत्वेन नियुक्तः, तथा त्रिवेन्द्रम्-संस्कृत-ग्रन्थमाला तस्यैव नाम्ना प्रकाशिता भवति स्म। 1908तः 1925 ईशवीयाब्दं यावत् पाण्डुलिपिसंग्रहशालायाः अध्यक्षः गणपतिः स्वयमेव चत्वारिंशच्छताधिकैकलक्षं पाण्डुलिपीः संगृहीतवान्। संस्कृताधृताः ताः वेद-व्याकरण-अलङ्कार-तर्क-मीमांसा-धर्मशास्त्र-ज्योतिष-स्थापत्य-तन्त्र-कल्प-राजनीत्यादिविषयाश्रिताः सन्ति। सम्पादकरूपेण गणपतिना याः भूमिकाः, टिप्पण्यश्च विरचिताः तासाम् एकत्र संग्रहणे अष्टशतपुटात्मकः एकः ग्रन्थः स्यात् प्रायः। 1920 ईशवीयाब्दे कोलकातास्थस्य एशियेटिक् सोसाइटि इत्यस्य वार्षिकसभायां सभापतेः भाषणे प्राच्यविद्यापारङ्गतेन महामहोपाध्यायेन हरप्रसादशास्त्रिणा गणपतिकृतगन्थसम्पादनस्य, शुद्धपाठस्य, ज्ञानगर्भभूमिकायाश्च भूयसी प्रशंसा विहिता। गणपतिः स्वस्यैव प्रयासेन संस्कृतस्य त्रयश्चत्वारिंशतः लेखकानां विरचनमाविष्कृतवान्। तेषां लेखकानां नाम, परिचयादिकञ्च गणपतिप्रयासेनैव सर्वेषां गोचरमभूत्। संस्कृतसाहित्यस्य इतिहासविरचने गणपतिशास्त्र्युक्तानां तथ्यानां, तद्राद्धान्तानां च माहात्म्यं सर्वैः अङ्गीक्रियते।

कालिदासपूर्ववर्तिनः संस्कृतलौकिकसाहित्यस्य महाकवेः भासस्य कृतिसमूहस्य आविष्कारः प्रचारश्च गणपतेः श्रेष्ठतमम् अवदानं संस्कृतसाहित्ये। यतो हि भासस्य नाममात्रमेव श्रुतं स्यात् तत्पूर्वकालीनैः संस्कृतपण्डितैः, ज्ञातं स्यात् यत् भासो ह्यासीत् कश्चन महान् विद्वान्, यत्कारणात् मालविकाग्निमित्रे (चतुर्थशतकीये), बाणभट्टस्य हर्षचरितकाव्ये (सप्तमशतकीये), वाक्पतेः गौडवहकाव्ये (अष्टमशतकीये), राजशेखरस्य (नवमशतकीयस्य) रचनासु, किं बहुना सुप्राचीनस्य आलङ्कारिकस्य भामहस्य काव्यलङ्कारग्रन्थे अपि भासरचनायाः प्रशंसा, अंशविशेषोल्लेखश्च कृतः अस्ति। तस्मात् स्पष्टमेतत् यत् दशमशताब्दीं यावत् भासस्य रचना सुप्रथिता आसीत्, परन्तु तत्पश्चात् भासस्य निदर्शनं कस्माच्चित्कारणात् विलुप्तं जातं, गणपतिना च तत्कीर्तिः पुनःप्रतिष्ठिता इति महतो गर्वस्य विषयस्तस्य।

दशोत्तरोनविंशतिशततमे ईशवीयाब्दे त्रिवेन्द्रम्-नगरस्य सर्वकार-पाण्डुलिपिसंग्रहालयस्य अध्यक्षरूपेण कार्यनिर्वाहकाले गणपतिना तद्राज्यस्य दक्षिणस्यां दिशि पद्मनाभपुरम् इत्याख्यस्य स्थानस्य मानालिक्करमठात् दश एकत्र संबद्धानि ताडपत्रीयनाटकानि उद्दधार। संस्कृतेन तथा शौरसेन्या रचितानि नाटकानि मालयाल्यक्षरेण लिखितानि आसन्। अनुसन्धानेन तेन आविष्कृतं यत् पुरा तत्स्था जनाः ताः पाण्डुलिपीः यात्रायाः पालारूपेण व्यवहरन्ति स्म। अनन्तरं च तत्स्थानात् पुनरपि तिस्रः पाण्डुलिप्यः आविष्कृताः तेन। ताभ्यः द्वयोः प्रतिकृतिः त्रिवाङ्कुरराजप्रासादस्थायाः पाण्डुलिपिसंग्रहशालायाः अपि प्राप्ता। तासु प्रस्तावनांशे पुष्पिकायां वा कुत्रापि भासस्य नाम नासीत्। अलङ्कारशास्त्रे, लौकिकसंस्कृते प्राकृतभाषायासाहित्ये दक्षतादार्ढ्यात् गणपतिः भासस्यैव विलुप्तरचनात्वेन उद्घोषयामास ताः पाण्डुलिपीः। शौरसेन्या लिखितत्वात् एव भाषातत्त्वविचारेण गणपतिना सिद्धान्तितं यत् तानि नाटकानि कालिदासात् प्राक्कालीनानि एव सन्ति इति। तदनु 1912-1915 ईशवीयाब्दयोः मध्ये त्रयोदश नाटकानि तानि भासकृतित्वेन गणपतिः प्रकाशयमास त्रिवेन्द्रम्-संस्कृत-ग्रन्थमालायाम्। तेन साकञ्च बहूनि साहित्यपुष्पाणि समाकुञ्च्य विविधयुक्त्यनुभवतथ्यैः भासविषयकसिद्धान्तानां संग्रहणेन तेषां नाटकानां भासकृतित्वं दार्ढ्येन प्रतिष्ठापयामास। एतैः सह गणपतेः स्वीयटीकाटिप्पण्यः संयुक्ताः जाताः। तन्मते कविकुलमूर्धन्यः कालिदासो न केवलं वाल्मीकिव्यासयोः एव प्रसादभाक्, अपितु भासेनापि बहुत्र प्रभावितः स महाकविरिति। शूद्रकस्य मृच्छकटिकम् इति नाटकमपि भासस्य चारुदत्तनाटकस्य प्रतिबिम्बमिति गणपतिमतम्।

भासस्य नाटकानाम्[2] आविष्कारात् परं भारतवर्षेष्वन्येषु देशेषु च संस्कृतविदां मध्ये एकमालोडनं सञ्जातमासीत्। गणपतेः प्रकाशनात् परं भासस्य विषये तन्नाटकविषे च संस्कृतपण्डितैः इतरैरपि बहुधा गवेषणमारब्धम्। भासगवेषकाणां मध्ये पाश्चात्यानाम् एषां नाम अवश्यमुदाहरणीयम् – याकोवि, युयोलि, उइन्टारनित्ज, ष्टेनकोनो, ल्याकोटे, वार्नेट, प्रेडरीख टमास, आर्थार वेरिडेल कीथ प्रभृतयः। एतद्देशप्रसूतेषु विद्वत्सु भासालोचकाः सन्ति – पिसारोटि,

सुघठन्करः, रामावतारः पाँड़े, परशुरामः वामानः काणे, रङ्गाचारी, अनन्तप्रसादः वन्द्योपाध्यायः इत्यादयः। एतेषां सर्वेषाम् आलोचनेन गणपतेः मतं सर्वैः अङ्गीकृतं यत् भासः कालिदासात्प्राक्कालीनः, तथा च त्रयोदश नाटकानि भासेनैव विरचितानि इति। कीथमहोदयेन गणपतेः मतं सर्वाङ्गीणतया अङ्गीकृतम्। पाश्चात्येषु वार्नेटमहोदयः प्राच्येषु च पिसारोटि, रामावतारपाँड़ेमहोदयः – एते भासस्य कालिदासादुत्तरकालीनत्वं स्वीचक्रुः। तेषां मते भासस्य कालः सप्तमशतकम् इति। गणपतिस्तु ईशपूर्व-पञ्चम्यां शताब्द्यां भासकालः आसीदिति कथयति, एतन्मतं केनापि नाङ्गीक्रियते। कीथ-विन्टारनित्ज-महोदययोः मते ख्रिष्ट्रियतृतीयशतकं भासस्य कालो बभूव इति स्वीक्रियते। भासकालत्वेन पाश्चात्यानां गवेषकाणां मतमेव उत्तरकालीनैः प्रमाणत्वेन स्वीक्रियते, परन्तु भासविषयकवितर्केषु गणपतिः प्रतिपक्षमतस्य विध्वंसने यथासाध्यमचेष्टत।

त्रिवन्द्रम्-संस्कृत-पाण्डुलिपिसंग्रहशालायाः अध्यक्षत्वेन, विविधपाण्डु-लिपेः सम्पादकत्वेन, प्रकाशकत्वेन च तस्य नाम, तस्य पाण्डित्यम्, तदध्यवसायश्च समग्रायाः धरण्याः संस्कृतवित्सु मुखरितमभूत्। त्रिवेन्द्रम्-संस्कृतग्रन्थमालासु बहुत्र पुस्तकेषु आरम्भे तस्य आङ्गलभाषायां लिखिता भूमिका प्राप्यते। न केवलं पाश्चात्यभाषायाम् आसीत् तस्य गभीरा गतिः, अपि तु पाश्चात्यपण्डितवत् विज्ञानदिशा समालोचनम् अपि तेन सम्यग्रूपेण स्वायत्तं कृतमासीत्। अष्टादशोत्तरोनविंशतीशवीयाब्दे जार्मानीनगरस्य प्रथितसंस्कृतशिक्षाकेन्द्रात् टुविङ्गेन-विश्वविद्यालयात् भासनाटकानाम् आविष्करणात्, सम्पादनात्, प्रकाशनाच्च विद्यावारिध्युपाधिना विभूषितः गणपतिशास्त्रिमहाभागः। लन्डनस्थ-ग्रेट-व्रिटेन तथा आयारल्यान्डस्थ-एशियेटिक-सोसाइटिद्वारा विंशत्युत्तरोनविंशतौ गणपतिमहोदयः सम्मान्यसदस्यरूपेण प्रतिष्ठितः। तस्मिन्नेव वर्षे ओरियेन्टल-सोसाइटि (अमेरिका), रयाल-एशियेटिक-सोसाइटि (ग्रेट-व्रिटेन), तथा च सोसाइते-एशियेटिक् (फ्रान्स) इत्येतेषां सदस्याः पारीनगरे एकस्मिन् अधिवेशने गणपतिशास्त्रिणः कृते एकं प्रशस्तिपत्रं पठितवन्तः – तत्र उक्तं यत् युरोप-अमेरिकयोः सर्वे प्राच्यविद्यासमुपासकाः आशासन्ते यत् ड. गणपतिशास्त्री चिरं

जीवेत्, तत्प्रदर्शिता या गवेषणधारा च भारतस्य विविधक्षेत्रेषु गौरवं वर्धयामास, सा च धारा चिराय प्रचलिता स्यादिति। म्याकडोनेल, फ्रेडारिक एडेन पाजिटार, विलियाम टमास, लियोनेल डेभिड, वार्नेट्, जर्ज ग्रीयारसन, आर्थार वेरिडेल कीथ, एडवार्ड जेम्स रपसन्, एमिल चार्लस सेनार, सिलभ्याँ लेभि, लुइ फिनो, जुल ब्लथ, मरिस व्लुमफिल्ड, नर्मान ब्राउन, चार्लस रकवेल, लानम्यान इत्यादयः आङ्गल-फारसि-मार्किन्-प्राच्यविद्वांसः अस्मिन् प्रशस्तिपत्रे साक्षरं प्रदत्तवन्तः। पाश्चात्य-विद्वद्भ्यः एतादृशी संवर्धना न सामान्यतः केनचित् प्राप्यते। द्वाविंशत्युत्तरोन-विंशतितमे ईशवीयाब्दे जनवरीमासे Literary Eminence in Sanskrit इति ग्रन्थविरचनार्थम् अमेरिकायाः Prince of Wales द्वारा स्वर्णपदकेन विभूषितः अयं विद्वान्। किं बहुना, तस्य दिव्यावदानराशेः कारणात् भारतसर्वकारेणापि अष्टादशोत्तरोनविंशतीशवीयाब्दे तस्मै 'महामहोपाध्यायः[3]' इत्युपाधिः प्रदत्तः[4]। तेन सम्पादितानां ग्रन्थानां नामानि तावत् -

1) ब्रह्मतत्त्वप्रकाशिका
2) दुर्घटवृत्तिः
3) परमार्थसारः
4) कामन्दकीयनीतिसारः
5) वैखानसधर्मप्रश्नः
6) जानकीपरिणयः
7) वररुचिसंग्रहपरिभाषावृत्तिः
8) तन्त्रशुद्धप्रकरणम्
9) आपस्तम्बधर्मसूत्रम्
10) नामलिङ्गानुशासनम्
11) शब्दनिर्णयः
12) सर्वमतसंग्रहः
13) तन्त्रसमुच्चयः
14) तत्त्वप्रकाशः
15) बादरायणब्रह्मसूत्रम्
16) ईश्वरप्रतिपत्तिप्रकाशः
17) याज्ञ्यवल्क्यस्मृतिः
18) आश्वलायनगृह्यसूत्रम्
19) सङ्गीतसमयसारः
20) विष्णुसंहिता

**सम्पादितानां रचितानां च ग्रन्थानां केषाञ्चन संक्षेपप्रतिपादनम्**

**तत्त्वप्रकाशः (1920)-**

पाशुपतदर्शनगततत्त्वसमन्वितस्य अस्य ग्रन्थस्य लेखकः सरस्वतीकण्ठाभरणप्रणेता श्रीभोजदेवनृपतिः सम्भाव्यते इति सम्पादकस्य गणपतेर्मतम्। अस्मिन् ग्रन्थे अनन्तकृष्णशास्त्रिणा प्रदत्तस्य जीर्णत्रुटितपत्रस्य कसंज्ञकस्य तथा महेश्वरभट्टतिरिसम्बन्धिना खसंज्ञकाया गसंज्ञकायाः च केरलीयतालपत्रात्मिकायाः पाण्डुलिपेः सम्पादनकार्यं कृतवान् गणपतिशास्त्रि-महाभागः। ग्रन्थेऽस्मिन् सरलतया दुरूहशैवदर्शनस्य व्याख्यानमपि प्रतिपादितं तात्पर्यदीपिकाख्यव्याख्यायाः कर्त्रा श्रीकुमारेण।

**विष्णुसंहिता (1901) –**

अतिविपुलायाः अष्टोत्तरशताध्यायात्मिकायाः महत्या विष्णुसंहितायाः संग्रहात्मिका त्रिंशदध्यायेन विष्णुप्रोक्ता नाम विष्णुसंहिता वर्तते। एषा तन्त्रसमुच्चयादीनां तन्त्रनिबन्धानाम् उपजीव्य आकरः इति गणपतेः मतम्। तस्य संशोधनाय अनेन षट् पाण्डुलिपयः आश्रिताः। सर्वा एव ताः केरलीयलिपयः तथा वर्षशतवृद्धदेशीयाः तालपत्रात्मकाः आसन् इति भूमिकायाः लिखति महाभागः।

**सर्वमतसंग्रहः (1918)**

सर्वमतसंग्रहो नामायं ग्रन्थः चङ्गारप्पल्लिमठस्वामिनः श्रीयुतपरमेश्वरपोत्ति-महाशयस्य सकाशात् केरलीयलिपियुतः तालपत्रात्मकत्वेन लब्धः गणपतिना। तस्मिन् ग्रन्थे प्रत्यक्षादिषट्प्रमाणानि आदौ निरूप्य ततः षड् दर्शनानि प्रतिपादितानि सन्ति विस्तारेण।

**मध्यमव्यायोगः[5] (1912)**

भासस्य सर्वाणि नाटकानि खलु गणपतिनैव उद्धृतानीति व्याख्यातम्। तेषु एव मध्यमव्यायोग एकं नाट्यम्। अनन्तशयनसंस्कृतग्रन्थावलौ प्रकाशितः अयं ग्रन्थः द्वितीयसंस्करणरूपः। एकमातृकाश्रयेण कृते प्रथमे संस्करणे केषुचित्स्थलेषु पाठसन्देहस्य वर्तमानत्वात् द्वितीयस्य अवतारणम्, तत्र च माङ्गानवास्तव्यस्य नीलकण्ठशाक्यारमहाभागस्य सकाशात् प्रपूर्वतरे हायने लब्धस्य द्वितीयादर्शस्य साहाय्येन संशयाः दूरीकृताः। व्युत्पित्सूनाम् उपकाराय गणपतिना रोचकं ललितं व्याख्यानमपि संश्लेषितमस्ति।

### आर्यमञ्जुश्रीमूलकल्पः (1920)

महायानबौद्धधर्मस्य उपरि विलिखितः अयं ग्रन्थः सर्वादौ गणपतिशास्त्रिणा पञ्चविंशत्युत्तरोनविंशतौ ईशवीयाब्दे उद्धृतः प्रकाशितश्च। अस्य ग्रन्थस्य लेखक आसीत् मध्यदेशस्थः श्रीमूलघोषविहाराधिपतिः पण्डितरविचन्द्रः इति। गणपतिना च पद्मनाभपुरसनीडसन्निविष्टाद् मणलिक्करमठात् सम्प्राप्तः दीर्घश्लक्ष्णलघुषु तालपत्रेषु त्रिचतुरशतवर्षपुरातनोऽपि सद्योमषीलिखितनिर्विशेष-स्फुलभास्वरवर्णमण्डितः नागरीलिपिविशिष्टः अयं ग्रन्थः मञ्जुश्रीमूलकल्पः। अस्मिन् ग्रन्थे एकसहस्रं श्लोकाः सन्ति, येभ्यः सप्तमाष्टमशतकयोः प्राचीनभारतीय-इतिहासविषये विस्तारेण व्याख्यानम् अस्ति। हर्षकालीनस्य भारतवर्षस्य विषये जिज्ञासुना अध्येयोऽयं ग्रन्थविशेषः।

### अर्थशास्त्रम्

त्रिवेन्द्रम्-संस्कृतग्रन्थमालायां गणपतिना सम्पादितेषु पुस्तकेषु आर्यमञ्जुश्रीमूलकल्पः (76 संख्यकम्, 1920-1925) तथा च कौटिल्यस्य अर्थशास्त्रम् (तृतीयखण्डः, 1921-1925) विशेषेण उल्लेख्यम्। कौटिल्यस्य अर्थशास्त्रं द्राविड़पण्डितेन श्यामाशास्त्रिणा आविष्कृतम्। तत्र कौटिल्यस्य अर्थशास्त्रेण सह गणपतेः श्रीमूलाटीका सन्निविष्टा आसीत्। आर्यमञ्जुश्रीकल्पे ईशवीयसप्तमशतकात् अष्टमं यावत् भारतवर्षस्य शासकानां सर्वेषां राज्ञां वर्णनम् आपातदुर्बोध्यरूपेण विरचितमस्ति। प्राचीनभारतीयेतिहासरचनायाम् अस्य पुस्तकस्य अवदानम् अनस्वीकार्यम्। गणपतिना आविष्कृतं सम्पादितं च एतत् पुस्तकमाश्रित्य अनन्तरं यशस्वान् ऐतिहासिकः काशीप्रसादः जयसोयालः (1881-1937) एकम् इतिहासपुस्तकं रचयित्वा स्वख्यातिं वर्धयामास।

### भारतानुवर्णनम्

गणपतिशास्त्रिणा भारतानुवर्णनमिति एकः महान ग्रन्थः विरचितः, यत्र भारतवर्षस्य सर्वे अपि विषयाः वर्णिताः रोचकतया, सुकुमारवाक्प्रवाहेन, प्रौढत्वस्य वर्जनेन। भारतस्य इतिहासं विजिज्ञासुः इमं ग्रन्थम् अवश्यं पठेत्[6]। अयं ग्रन्थः विशेषतः पाश्चात्यच्छात्राः तथा पाश्चात्यविद्वांसः यथा भारतं रोचकतया

जानीयुरिति धिया एव विरचितः तेन। तत्र हि "आधुनिकहिन्दुस्थितिः – तत्र बालाः पण्डिताः देवकैङ्कर्यं ग्रामः गृहं शिल्पं जीविका आपणः पण्यम्"[7] इत्यादिः सर्वोऽपि विषयः व्याख्यातः ग्रन्थकृता।

एतदतिरिच्यापि गणपतिशास्त्रिणा बहवो ग्रन्थाः विरचिताः, सम्पादिताश्च सन्ति। तेषु **तुलापुरुषदानम्**, पार्वतीस्तवात्मकः **अपर्णास्तवः**, राज्ञीभिक्टोरिया-चरितात्मिका **चक्रवर्तिनीगुणमणिमाला** इत्यादयः उल्लेखार्हाः।

सप्तदश वर्षाणि गणपतिः त्रिवाङ्कुरपाण्डुलिपिसंग्रहालये अध्यक्षत्वपदे स्वकार्यं समाप्य पञ्चविंशत्युत्तरोनविंशतिशतकतमे ईशवीयाब्दे अवसरं गृहीतवान्। ततः परस्मिन् वर्षे अर्थात् षड्विंशत्युत्तरोनविंशतौ एप्रिल्-मासस्य तृतीये दिवसे एते विद्वांसः गणपतिशास्त्रिमहाभागाः चेन्नई-नगरे स्वपुत्र्याः गेहेषु पार्थिवशरीरं तत्याज। अनन्तरं च तस्य सच्छिष्याः सहकर्मिणश्च त्रिवाङ्कुरसंस्कृतपाण्डुलिपि-संग्रहालयस्य कार्यं, तथा त्रिवेन्द्रम्-संस्कृत-सिरिज इत्यस्य प्रकाशनाकार्यं सुष्ठुरूपेण एव समचालयन्। 1949 ईशवीयाब्दस्य मर्चमासस्य त्रिंशति दिनाङ्के संस्कृतपाण्डुलिपिसंग्रहालयभवने कर्तृपक्षस्य चेष्टया गणपतिमहाभागानाम् एकं चित्रं प्रतिष्ठितम् अभवत्। भारतवर्षस्य महान्तः राष्ट्रपतयः ड. सर्वपल्ली-राधाकृष्णन्वर्याः आनुष्ठानिकरूपेण अस्य चित्रस्य उन्मोचनं कृतवन्तः। अस्मिन्नेव काले राष्ट्रपतिना गणपतशास्त्रिणः आविष्कृतानां, सम्पादितानां च पाण्डुलिपीनाम् उल्लेखः विहितः, समञ्च तस्य जीवनोदन्तजातस्य विवरणावसरे तेनोक्तं यत्, गणपतिना समग्रजीवनं व्याप्य विहितानां कृतीनां फलरूपेण एव अतीतभारतीय-इतिहासस्य साहित्यस्य च युक्तिग्राह्याणि तथ्यानि प्राप्तुं शक्यते अवरैरिति। एवंरूपेण शङ्कराचार्यजनिभूमौ तदीयं जीवनं सार्थकमेव बभूव।

त्रिवेन्द्रम्-संस्कृत-ग्रन्थमालायाः सम्पादकत्वेन गणपतिः न केवलं साहित्य-दर्शन-व्याकरणादिग्रन्थसम्पादने प्रकाशने च मनो न्यवेदयत्, अपि तु राजनीत्याश्रितं पुस्तकं, प्रयुक्तिविद्याश्रितं पुस्तकं चापि तेन प्रकाशितम्। अस्मिन् प्रसङ्गे उद्धरणीयं तत्सम्पादनमिदम् - समराङ्गणसूत्रधारः (गायकोयाड़

प्राच्यविद्या सिरिज, 1924) इति। भोजराजस्य नाम्नि कृतात् अस्मात् पुस्तकात् शिल्पाभ्यासस्य, गार्हस्थ्ययन्त्रादेः, तथा च समराङ्गणस्थद्रव्याणां व्यवहारनिर्माणादिविषये प्राचीनभारतीयानां संविदः गूढत्वं गम्यते। ऐतिहासिकस्य भोजस्य नाममात्रेण प्रचलितात् अस्मात् पुस्तकात् सम्प्राप्तैः तथ्यसमूहैः बहुकालं यावत् प्राचीनभारतीयाः गार्हस्थ्यस्य समराङ्गणे च विविधप्रयोजनानि साधयामासुः। गणपतिना इतोऽपि कानिचित् वास्तुशास्त्राधिकृतानि, शिल्पविषयकाणि च पुस्तकानि सम्पादितानि, तेषु वास्तुविद्या (1913), मयमतम् (1919), शिल्परत्नम् (श्रीकुमारविरचितम्, 1922) इत्यादीनि उल्लेखार्हानि।

**कालानुयायि संक्षिप्तजीवनम्**

- ❖ 1877 – माधवीवसन्तम् इति नाट्यं विरचयामास
- ❖ 1878 – त्रिवेन्द्रम् इत्यत्र संस्कृतशिक्षकः
- ❖ 1889 – तत्रैव संस्कृताध्यापकः, अनन्तरं मुख्याध्यापकश्च
- ❖ 1908 – ओरियन्टाल संस्कृत-ग्रन्थागारे मुख्याध्यक्षः
- ❖ 1918 – महामहोपाध्यायोपाधिलाभः भारतसर्वकारात्।
- ❖ 1924 – विद्यावारिध्युपाधिलाभः तुबिङ्गेनविश्वविद्यालयात्।
- ❖ 1926 – परलोकसम्प्राप्तिः

**उपसंहारः**

भारतवर्षस्य स्वाधीनतालाभात् परं देशस्थराज्यरूपेण त्रिवाङ्कुरस्य विलुप्तिर्जाता, त्रिवाङ्कुर-कोचिन् इत्याख्यस्य राज्यस्य मध्ये च तस्य अन्तर्भावो जातः। कियत्कालात् परं च राज्यानां पुनर्विन्यासात् त्रिवाङ्कुरस्य मालयालमभाषिणां कृते केरलराज्यस्य आविर्भावो जातः, त्रिवेन्द्रम्-नगरं च तस्य राजधानीत्वेन गणितम्। राज्यस्य पुनर्निर्मितेः परं त्रिवेन्द्रम्-संस्कृत-सिरिज इत्यस्य नाम्नि केरलविश्वविद्यालयसंस्कृतसिरिज इति नाम्ना सह युगलीभय ग्रन्थाः प्रकाशिताः भवन्ति अद्यावधि। गणपतिशास्त्रिणः अध्यक्षताकालात् आरभ्य 1964 ईशवीयाब्दं यावत् साकल्येन अस्यां ग्रन्थमालायां त्रयोदशाधिकद्विशतं

संस्कृतग्रन्थाः प्रकाशिताः जाताः। कीर्तिर्यस्य स जीवति इत्यस्ति रूढिः, स्वकृतिभिः एते कृतभूरिपरिश्रमाः संविदुपासकाः अस्मद्धृदयेषु चिरं जीविष्यतीति शिवम्।

## सहायकग्रन्थपञ्जी


भासः, *मध्यमव्यायोगः*, गणपतिशास्त्री (संशोधकः प्रकाशकश्च), श्रीधराख्यमुद्रणयन्त्रालयः, त्रिवेन्द्रम्, 1917

शास्त्री, गणपतिः, *भारतानुवर्णनम्*, Printer Jobbing Press, त्रिवेन्द्रम्, 1905

*विष्णुसंहिता अनन्तशयनसंस्कृतग्नन्थावलिः* – 85, गणपतिशास्त्री (संशोधकः), महामहिमश्रीसेतुलक्ष्मीमहाराज्ञीशासनभूतः राजकीयमुद्रणालयः, त्रिवेन्द्रम्, 1924

पण्डितरविचन्द्रः, *आर्यमञ्जुश्रीमूलकल्पः*, गणपतिशास्त्री (सम्पादकः), सि.बि.एच्-प्रकाशनम्, त्रिवेन्द्रम्, 1920

सेनगुप्त, गौराङ्गगोपाल, *स्वदेशीय भारतविद्या पथिक*, विवेकानन्द प्रेस, कलकाता, 1331 (बङ्गाब्दः)। (बङ्गभाषायां पुस्तकम्)

**अन्तर्जालसहायसूचिः**

https://en.wikipedia.org/wiki/T._Ganapati_Sastri

https://padmanaabh.blogspot.com/2010/09/dr-mahamahopadhyaya-t.html


## तथ्यसूत्राणि

---

[1] पालयामकोट्टाई इति नगरात् दशकिलोमिटर्-परिमिते दूरे, ताम्रपरण्याख्यायाः नद्याः तटे स्थितः अयं ग्रामः। तामिल-ग्रन्थादिलिपिविशिष्टानां शिवमन्दिरस्थानाम् अभिलेखनानां पर्यालोचनया

ज्ञायते यदयं पञ्चाशदुत्तरशतत्रयप्रहलायतनविशिष्टः (350 Acres) ग्रामः सुन्दरपाण्डेयाख्येन (1216-1239) राज्ञा अनुदानत्वेन ग्रामवासिभ्यः प्रदत्त आसीत् पुरा। अभिलेखनादेतदपि ज्ञायते यत् स ग्रामः पूर्वं कूपक-राय-नेलौर इति नाम्ना अपि अभिधीयते स्म इति।

[2] प्रतिज्ञायौगन्धरायणम्, अविमारकम्, दरिद्रचारुदत्तम्, प्रतिमानाटकम्, अभिषेकनाटकम्, पञ्चतन्त्रम्, दूतवाक्यम्, दूतघटोत्कचम्, उरुभङ्गम्, मध्यमव्यायोगः, बालचरितम्, कर्णभारम्, भासनाटकचक्रम् इति भासस्य नाटकानां त्रयोदश।

[3] महामहोपाध्यायः इत्युपाधिः भारतवर्षस्य सम्मानीयेभ्यः संस्कृताचार्येभ्यः पण्डितेभ्यो वा विभूष्यते भारतसर्वकारेण। आधुनिकविद्वत्सु ड. मणिद्राविडशास्त्रिमहाभागाः अपि महामहोपाध्यायोपाधिना विभूषिताः।

[4] *The contribution of Kerala to Sanskrit Literature*; K.Kunjunni Raja; University of Madras 1980; page 257

[5] मध्यमसंज्ञकः व्यायोगः रूपकाणां दशानामेको भेदः। पाण्डवमध्यमत्वनिरूढेन मध्यमोऽहमिति (श्लोकः – 28) उक्तबहुप्रकारकमध्यमत्वयोगसिद्धेन वा मध्यमनाम्ना प्रसिद्धो भीमसेन्मेऽत्र नायक इति तत्प्रधानत्वात् ग्रन्थो मध्यमशब्देन व्यपदिश्यते।

[6] स्वयमेव भूमिकायां लिखति – "ग्रन्थे तावत् प्राचीनभारतखण्डे प्रधानानि पर्वतनदीदेशरगराण्याधुनिकनामसंवादेन निर्देष्टव्यानि। ततो भारतसय् पुरावृत्तं महम्मदीयकालावधिकं – तत्र बुद्धश्चन्द्रगुप्तो यवनाः अशोकः शकहिन्दवो गुप्ता विक्रमादित्यः शालिवाहनो हर्षो भोजो रामचरितं पाण्डवचरितं साहित्यम् इत्येतत् प्रतिपाद्यम्" इति।

[7] *भारतानुवर्णनम्* (भूमिकाभागः)

# संस्कृतसाहित्यशास्त्रादौ विवेकानन्दस्वामिनाम् अवदानम्

**सोमनाथ-साहा**

**भूमिका**

'नमः श्रीयतिराजाय विवेकानन्दसूरये ।
सच्चित्सुखस्वरूपाय स्वामिने तापहारिणे'।।

देशप्रेम्णस्तथा अध्यात्मसाधनायाश्च मूर्तविग्रहः, आधुनिकभारतवर्षस्य प्रधानो रूपकृत् खलु विवेकानन्द इत्यत्र नास्ति संशयलवः कश्चित्। विश्वजनीनधर्मत्वेन हिन्दुधर्मं प्रतिष्ठापयितुम्, आत्मविस्मृतात्मनां भारतीयानां सविधे सनातनधर्मस्यास्यैश्वर्यं माहात्म्यञ्च प्रकटयितुं पराधीनभारतवर्षस्य एकस्मिन् विशिष्टे सन्धिक्षणे उत्तरकलिकातायाः प्रसिद्धे दत्तवंशे ईशवीयाब्दस्य त्रिषष्ट्युत्तराष्टादशशततमवर्षस्य जनवरीमासस्य द्वादशे दिनाङ्के विश्वनाथदत्त-भुवनेश्वरीदेव्योः पुत्रत्वेन जनिं लेभे नरेन्द्रनाथदत्तः। ऊनविंशशताब्दीय-भारतवर्षस्य भगवतस्वरूपस्य श्रीरामकृष्णपरमहंसदेवस्य प्रधानशिष्योऽयं युगपुरुषोऽभूत् ज्ञानकर्मयोगादीनां स्वरूपेणाधारपुरुषः।

महापुरुषस्यास्य जीवितं श्रीरामकृष्णदेवस्यादर्शेनाभवत्परिवर्तितम्। श्रीरामकृष्णस्य वाणीभिरेव नरेन्द्रस्यान्तस्था सुप्ता प्रतिभा जागरिता। गुरोः रामकृष्णस्य देहत्यागात् परं स्वामिविवेकानन्दो गुरोर्वाक्यं जीवनादर्शञ्च प्रचारयितुम् आत्मानं नियोजितवान्। युरोपदेशेषु हिन्दुधर्मस्य तथा च योगवेदान्तादिदर्शनानां प्रसारार्थं विशिष्टम् अवदानमासीत् स्वामिविवेकानन्दस्य। ऊनविंशशतकस्यायं गैरिकवसनधारी सन्न्यासी खल्वासीत् धर्मनेता, कर्मत्यागी, साहित्यानुरागी, सर्वत्यागी चेति। आसीदयम् असारसंसारबन्धनात् मुक्तो वेदान्तकेशरी। अज्ञानतायाः जडतायाश्च विपक्षे संग्रामी नेतृस्थानीयो महापुरुषश्चासीदयं सर्वत्यागी सन्न्यासी विवेकानन्दः।

धर्म-दर्शन-शिल्प-साहित्य-विज्ञानेतिहास-कृष्टि-संस्कृत्याध्यात्मिकता-समाजविज्ञानादिविषयाः समुद्भासितास्तदुपलब्धैरैश्वर्येण, मननदीप्त्या, चिन्तन-मौलिकतया, पौरुषस्य शक्त्या चेति। आधुनिकभारतवर्षस्य नास्ति किमपि क्षेत्रं, यत्र विवेकानन्दस्य प्रतिभायाः स्फुरणं नालक्षि अस्माभिः। जगतीतले स्वामिनः प्रभावस्य विषये अरविन्दस्योक्तेर्मर्मार्थस्तावदेव – 'विवेकानन्दस्य प्रभावोऽद्यापि विपुलतया कार्यं कुर्वन्नस्ति; अस्माभिर्द्रष्टुं शक्यम् परं न विद्मः 'केन रूपेणे'ति, न शक्यवचं 'कुत्रे'ति। सिंहसदृशः, विराट्, सम्बोधिदीप्तः स प्रभावः पयोधेस्तरङ्गवत् प्रविशन्नस्ति भारतस्य मर्मकेन्द्रभूमाविति दृष्ट्वा सोच्छ्वासं कथयन्तो वयम्, पश्यन्तु! विवेकानन्दोऽद्यापि जागर्ति मातृधर्मे मातृसन्तानानां मर्मलोके चेति'। तथाहि विवेकानन्दः संसारत्यागी सन्न्यासी अपि सन्न्यासस्य प्रचलितैतिह्यमुपजीव्य संसारादात्मानं न पृथक्कृतवान्। समाजस्योन्नत्यां, मानवसमृद्धौ तथा च दारिद्र्य-क्षुधा-शोषण-कुसंस्कारादिभ्यो मानवान् मोक्तुमात्मानं स नियुङ्क्ते स्म।

## संस्कृतभाषाविषये स्वामिनो विवेकानन्दस्य अभिमतम्

धर्मो हि भारतवर्षस्य मूलम्। किन्तु साम्प्रतं धर्मस्य निगूढं तत्त्वम् ('धर्मस्य तत्त्वं निहितं गुहायाम्', कठोपनिषत्) उपलब्धुं संस्कृतज्ञानं नितरामावश्यकमिति। यया संस्कृतभाषया रक्षितं दुर्बोध्यं धर्मतत्त्वमिदम्, सा भाषा साधारणमनुजनूनां कृते आसीत् दुर्भेद्येति विषये स्वामिपादः सम्पूर्ण-तयावहितोऽवर्तत। तथाहि तेनोपलब्धं यत् भारतीयधर्मस्वरूपम् अधिगन्तुं प्राथम्येन सम्यक्तया संस्कृतभाषाशिक्षया वयं शिक्षणीयाः। अत्रेदमुल्लेखार्हं यत् संस्कृतं खलु जगति विद्यमानस्य अखिलस्य ज्ञानराशोः अनादिनिधनो निधिरिति। पारमार्थिकतत्त्वानां ज्ञानप्रदायिनीं भारतस्य गौरवविवर्धिनीं सनातनधर्मख्यापिनीं वाग्वैभवशालिनीं सुरभारतीं नवभारतोदयाय सनातनवैदिकधर्मस्य पुनःप्रतिष्ठायै च गरीयसीं मेनिरे विवेकानन्दपादाः। आपातदृष्ट्या संस्कृतभाषायाः कठिनावृतस्वरूपे विधृतं धर्मरहस्यम्। संस्कृतशब्दानां कठिनावरणात् धर्मस्वरूपस्य मुक्तिर्हि अवश्यकर्तव्या इति स्वामिनोऽभिमतम्। वस्तुतः, स्वामिविवेकानन्दस्य संस्कृत-भाषां प्रत्यनुरागबीजं जन्मनः एवोप्तमासीत्।

नरेन्द्रनाथस्य पितामहो दुर्गाप्रसाददत्तः खलु संस्कृत-पारस्यभाषयोश्च सुपण्डितः आसीत्। पितुर्विश्वनाथदत्तस्यापि आसीद् बह्वीषु भाषासु दक्षता। विश्वनाथः संस्कृतज्ञस्य कालीचरणभट्टाचार्यस्य गोयावागानटोल्नामकशालायां संस्कृतभाषां शिक्षितवान्। तदानीं तेन बहवः संस्कृतग्रन्था अधीताः। पितुः संस्कारवशात् नरेन्द्रनाथोऽपि आ बाल्यादेव संस्कृतभाषां प्रति आकृष्टः समासीत्। प्रसङ्गतो वक्तव्यं यत् 'भारतेर भविष्यत्' इति प्रबन्धे स्वामिना यदुक्तं, तस्य संस्कृतार्थोऽयमेव, 'अस्याः संस्कृतभाषाया गौरवावहं वस्तु तावत् संस्कृतस्य काठिन्यं हि सर्वभावप्रचारस्य महान् अन्तरायः। यावत् अस्माकं समस्तं राष्ट्रम् उत्तमरूपेण संस्कृतभाषां न शिक्षेत, तावत् सोऽन्तरायो न दूरीभविष्यति। संस्कृतभाषा अत्यन्तं कठिनेति भवद्भिः मद्वक्तव्यं श्रुत्वैवावबोद्धुमलं यत्, अहं जीवनं व्याप्य संस्कृतभाषाम् अधीते, तथापि प्रत्येकं नूतनसंस्कृतग्रन्थ एव मत्सकाशेऽद्यापि नवीन इति। यैः भाषाया अस्याः सम्पूर्णरूपेण शिक्षावसरो नावाप्तः, तेषां कृते भाषेयं किंविधं कठिनमिति भवद्भिरनायासेन बोद्धुं शक्यते। अतस्तेभ्योऽवश्यमेव लोकभाषाभिः (colloquial language) सर्वाणि संस्कृततत्त्वानि शिक्षणीयानि। तैः सह संस्कृतशिक्षापि करणीया। संस्कृतशिक्षायां संस्कृतशब्दोच्चारणादेव राष्ट्रस्य गौरवं - कश्चन शक्तिभावो जागरयिष्यती'[1]ति।

अल्पजीवितोऽयं युगपुरुषस्तथा आधुनिकभारतस्य श्रेष्ठो व्याख्याता विवेकानन्दः संस्कृतशास्त्रेषु परमप्रावीण्यमर्जयामास। तेन अनूदितग्रन्थान्, वेदादारभ्य धर्मदर्शनादिशास्त्राणां मूलमाश्रित्यैव शास्त्रार्थः आयत्तीकृतः। आजीवनं संस्कृतम् उन्नतरुचिशीलभाषात्वेन स आमनति। किन्तु प्रयोजने सति भाषाया अस्या दोषान् उल्लिखितुं नास्ति तस्य कापि द्विधा। शिशुवयसि संस्कृतशिक्षया स उद्बोधितोऽभूत्। पित्रादिपरिजनानाम् उदारचित्तेन ज्ञानसमृद्धप्रगतिशीलमनसा चानुप्राणितो विवेकानन्दः। रामायणमहाभारतयोः वृत्तम्, हिन्दुधर्मस्य देवदेवीनां प्रसङ्गः, भारतीयसंस्कृतेः ऐतिह्यस्य स्वरूपञ्च इत्यादिविषयास्तेन सादरं शैशवकालादेव अधिगताः। भाविनि काले भाषणसमये संस्कृतग्रन्थोक्तास्ताः कथा उदाहृत्य श्रोतृजनान् सुललितकण्ठेन विमोहयति स्म नरेन्द्रनाथः[2]। अतः, दृढभित्तिभूमौ प्रथितं विवेकानन्दस्य संस्कृतज्ञानं परवर्तिनि

काले शास्त्रव्याख्याकालेऽप्यनुस्यूतमभूत्। पारिवारिक-संस्कार एवास्य कारणम्। संस्कृतभाषया रचितं सुविशालं शास्त्रवाङ्मयम् आत्मसात्कृत्यैव भारतस्य शाश्वतमर्मवाणीं नाम शास्वतवेदान्तवाणीं जगत्सभायामुपस्थापयामास। भाष्यकृता तथा प्रवक्त्रा विवेकानन्देन सनातनधर्मस्य व्याख्यानप्रसङ्गे यद्यदुक्तं, तन्न हि तस्य कल्पनाप्रसूतम्, परं संस्कृतभाषया लिखितानां धर्मदर्शनग्रन्थानां भाववैभवस्यानास्वादितपूर्वं भाष्यमात्रमित्यत्र नास्त्यत्युक्तिः। वस्तुतः, प्राचीन-भारतवर्षस्य संस्कृताश्रितभावैश्वर्यस्य नवतरो व्याख्याता खलु विवेकानन्दः। आङ्गलसंस्कृत-भाषयोः समाधिपत्यवशादेव स प्राच्यपाश्चात्त्ययोर्मूलभावधारां सूक्ष्मदृष्ट्या विवेचितवान्। भारतीय भाषा इति पदेन विवेकानननन्देन नैकस्थलेषु संस्कृतभाषा परामृश्यते। वस्तुतः, भारतस्य नैकासु भाषासु संस्कृतमेव केवलं योगसूत्रं रचयति। अपि च, धर्म-दर्शन-नीत्यादिविषयकाः विवेकानन्दस्य वक्तृताः ग्रन्थांशाश्च संस्कृतभाषया रचितं प्राचीनभारतीयसाहित्यं विशेषतः संस्कृतसाहित्ये प्रतिष्ठिता वर्तन्ते। स्वामिजी कलोम्बोनामके स्थाने समायोजितायां वक्तृतायामुक्तवान् यद्भारतीयभाषायां नाम संस्कृतभाषायां विलसन्त्या सम्मोहन्या शक्त्या समस्तमानवजातिः आश्चर्येण प्रभावभाविता। तेनोपलब्धं यत् भारतीयैः यदि प्राचीनसंस्कृतग्रन्थाः समनोयोगं अध्यवसायेन चालोच्यन्ते, तर्हि तेषां कृते भारतीयाचारव्यवहारयोरन्तर्निहिततत्त्वैः समं सम्पर्कः संस्थाप्येत। एतेन पाठकाः निश्चप्रचं भारतीयशास्त्रनिष्ठचिन्तायाः सौन्दर्यं गाम्भीर्यञ्चोपलभ्य विस्मयविमूढा भविष्यन्ती[3]ति।

भारतीयनवजागरणस्य प्राणपुरुषः स्वामिविवेकानन्दो मन्यते यत् निखिलवाङ्मयेषु संस्कृतं खलु भारतीयानाम् अमोघम् ऐतिह्यम्। तन्नये संस्कृतशब्दानामुच्चारममात्रमेव भारतीयाः स्वकीयं सुप्राचीनं सांस्कृतिकमैतिह्यं स्मारं स्मारं परां श्लाघामनुभवन्ति। तथाहि संस्कृतस्य एतादृशं माहात्म्यं यत्संस्कृतशब्दा उच्चारिताः सन्त एव भारतजातेः सम्माननं कुर्वन्ति, तस्यै वीर्यं प्रददति, ओजस्विनी च सा सञ्जायते इति स्वामिपादस्य मतम्। यद्यपि स्वामिपादैरगादि यदाध्यात्मिकतत्त्वानि धर्मतत्त्वानि च लोकभाषाद्वारेणैव जनसाधारणेभ्य उपदेष्टव्यानि। तथापि अस्मदीया सुप्राचीना संस्कृतिर्ज्ञेया चेन्नूनं

सर्वैरेव भारतीयैरध्येयं संस्कृतम्। एकत्र स्वामिपादैर्निगद्यते यन्मानवजातेः अभ्युदयो विधेयश्चेत् सर्वप्रथमं तेभ्यः शिक्षा प्रदेया। अस्मच्छास्त्रेषु निखिलकुसंस्कारहन्तृ यज्ज्ञानजातं विद्यते तत्सर्वं तेभ्यः प्रचलितलोकभाषामाध्यमेनोपदेष्टव्यम्। किन्तु यौगपद्येन संस्कृतविषयिणी शिक्षापि प्रदेया। यतो हि संस्कृतशब्दानामुच्चारणमात्रमेव भारतीया आत्मनो गौरवान्वितान् अभिमन्यन्ते तेषु चौजस्सञ्चारो जायते। तदुक्तं स्वामिपादैः –
''Therefore the ideas must be taught in the language of the people, at the same time Sanskrit education must go on along with it, because the very sound of Sanskrit words gives a prestige and a power and a strength to the race.''[4]

शैशवादेव स्वामिनः अनुरागोऽदर्शि संस्कृतभाषायाम्। येन बाल्यादेव स्वामिपादैर्मुग्धबोधव्याकरणं कानिचन स्तोत्राणि चाधिगतानि। भारतस्य प्रतिदिशं प्रव्रजनावसरे स जयपुराधीशराजधानीपदमापेदिरे। तत्र कश्चन वैयाकरणः समासीत्। विवेकानन्दस्वामी तस्य सकाशात् अष्टाध्यायीमध्येतुं प्रारेभे। सरलेनोपायेन विविधप्रकारैश्च अष्टाध्याय्याः प्रथमसूत्रभाष्यं दिवसत्रयं यावत् स वैयाकरणः स्वामिपादान् विबोधितवान्। परन्तु स्वामिपादस्य कृते तच्छास्त्राध्ययनं दुर्बोध्यं प्रतिभाति। तदा कृतप्रयत्नेनापि पण्डितेन तेनाकथि चतुर्थे दिवसे ''मच्छकाशात्पाठमधीत्य नास्ति कोऽपि लाभः'' इति। एतन्निशम्य भाष्यावबोधे स्वदुरवस्थितिमुपलभ्य लज्जिताः स्वामिनः एकप्रहराभ्यन्तरे सूत्रभाष्यं पठित्वा तद्वैयाकरणसमीपं गतः। ततः तैः क्रियमाणं प्राञ्जलव्याख्यानमाकर्ण्य स नूनमेव विस्मयविमूढोऽभूत्। तदनन्तरं खेतडिराज्ञः सभायामवस्थानकाले स्वकीयज्ञानं वर्धयितुकामो स्वामिविवेकानन्दस्तत्परः आसीत्। तदा राजस्थानप्रदेशे वैयाकरणेषु मूर्धन्यभूतस्य वैयाकरणस्य नारायणदासस्य सकाशात् पाणिनीयव्याकरणं तथा पतञ्जलेर्महाभाष्यञ्चापि अधीतवान् स्वामी। स्वल्पसमयमध्ये स्वामिनोऽध्ययनं समाप्तं जातम्। नारायणदासः खलु पूर्वाधीतं विषयं छात्रमुखात् श्रोतुमियेष। विवेकानन्दः अधीतविषयान् प्राञ्जलव्याख्यया न केवलम् उपस्थापितवान्, अपि च तत्र स्वमतमपि संयोजितवान् इति कृत्वा

स्वामिनः संस्कृतव्याकरणं प्रति गभीरज्ञानमनुरागश्च प्रमाणीभवत इति। ततः, पोरवन्दरस्य पाण्डुरङ्गाद् वेदान्तशास्त्रम् अधीतवान्। स्वाभाविकगत्या संस्कृताध्ययने लेखने चापि तस्य महान् आग्रहोऽवर्तत।

प्राच्यशास्त्रेषु विवेकानन्दस्य महती श्रद्धासीत्। आर्यवचनेष्वपि अगाधो विश्वासो वर्तते तस्य। संस्कृतं खलु भारतीयशास्त्रपरम्परायाः वाहकम् इत्यत्र नास्ति संशयः। अस्यां भाषायामेव स्वामिनः श्रद्धा महतीति। मृत्युशय्यामुपविश्यापि संस्कृतचिन्तनं स्वामिनो मर्ममूलम्। तदुक्तं तेन –

'It (Veda) will kill out superstitions.' 'Who told you to neglect spirituality and Sanskrit learning? …The very sound of Sanskrit words give a prestige and a power and strength to the race. ….Sanskrit and prestige go together in India. As soon as you have that, none dares say anything against you. That is the one secret, take that up. ….The only safely, I tell you men who belong to the lower castes, the only way to raise your condition is to study Sanskrit. ….Why do you not become Sanskrit scholars? Why do you not spend millions to bring Sanskrit education to all castes of India? That is the question. The moment you do these things, you are equal to Bramhin.'[5]

अर्थात् संस्कृतभाषायाः क्रमावनमनं दृष्ट्वा विवेकानन्दस्य चेतो नितरामेव अवसादम् अगमत्। तन्मनसि संस्कृतमन्दाकिन्या दुरवस्थामिमां परिलक्ष्य बहवः प्रश्नाः जाग्रति। तद्यथा – केन भारतीयाः उपदिष्टाः संस्कृतशिक्षायाः आध्यात्मिकसाधनायाश्चावधीरणे? कुतः संस्कृतनिपुणाः न भवन्ति भारतीयाः? कथञ्च भारतीयानां सर्ववर्णेषु समभावेन संस्कृतशिक्षां विस्तारयितुमर्थशतानि न विनियुज्यन्ते सर्वकारैः? स्वामिपादस्यैते कठोर-प्रश्नवाणाः सुरभारतीं प्रत्यस्माकं क्रमवर्धमाननैराश्यं दूरीकृत्य अस्मानुद्बोधयन्ति। वस्तुतः स्वामिनो मनोगतोद्देश्यमासीत् संस्कृतं भारतवर्षस्य मुख्यतमा भाषा भवत्विति।

संस्कृतं न खलु केवलं भाषाविशेषः, तदतिरिक्तममूल्यं किञ्चिद्विद्यते अस्यां सुरभारत्याम्। वस्तुतः, जगदुत्पत्तितः अद्यावधि मानवजीवनस्याभ्युदयस्य स्पष्टं चित्रमङ्कितव्यं चेत् सुतरां संस्कृतमाधारीकृत्य तदालेख्यम्। संस्कृतभाषाम् आरूढो निखिलज्ञानमयो भगवान् वेदः प्रथमं प्रकाशं गतः, वेदार्थावबोधार्थं व्याकरणादीनि वेदाङ्गानि संस्कृताश्रितानि, प्रवृत्तिनिवृत्तिबोधकानि वेदमूलकानि गृह्यसूत्रात्मकानि, धर्मशास्त्राणि, महाभारतादीनि च संस्कृतमाश्रित्यैव प्रवर्तितानि। धर्मादिपुरुषार्थचतुष्टयस्य लाभोपायः सर्वप्रथमतया संस्कृत एव सन्निवेशितः। किञ्च, ऐहिकामुष्मिकविषयाणां प्राथम्येन परिचयः संस्कृतादेव लभ्यते। ब्रह्मचर्याद्याश्रमेषु निवसतां मानवानाम् आश्रमावसाने जागतिकसर्ववस्तुसन्न्यासेन इहलोकादात्यन्तिकनिवृत्तिर्भवतीति तत्त्वजातं संस्कृतेनैवोपदिष्टमादावेव। मोक्षशास्त्ररूपाणि भारतीयदर्शनानि संस्कृतभाषयैव ग्रथितानि। काव्यरसपिपासूनां तृष्णाशमनार्थं कालिदासमाघादिमहाकवीनां महाकाव्यानि संस्कृतेनैव प्रणीतानि। एतच्छ्रास्त्रप्रपञ्चमतिरिच्य कलाशास्त्र-वैद्यकशास्त्र-शिल्पशास्त्रादीन्यपि संस्कृतेनैव प्रथमतया प्रकाशितानि। तस्मादेव कारणाद् भारतात्मा अस्माभिः परिज्ञायते चेत् संस्कृतमेव एकशरणमिति स्वामिपादानामभिप्रायः। तथाह्युदितम् – ''Its religion, its philosophy, its history, its ethics, its politics were all inlaid in a flower bed of poetic imagery- the miracle of language which was called Sanskrit or perfected, lending itself to expressing and manipulating them better than any other tongue. The aid of melodious numbers was invoked even to express the hard facts of mathematics.''[6]

पूर्वोल्लिखिताः विषयाः खलु भारतीयसनातनपरम्पराया मूलीभूतानि वैशिष्ठानि। आ बहोः कालादेव तानि सर्वाण्येव ऐतिह्यानुक्रमेण वंशपरम्परया चानुशीलनात्तथा निरन्तराभ्यासाच्च अस्माभिः शोणितीकृतानि। वस्तुतः किं नाम संस्कृतिरिति चेच्छक्यवचं यत् किमपि समग्रामपि मानवजातिम् अनर्थादपवार्य अभीष्टार्थं नियोजयति चोत्तरोत्तरमुत्कृष्टां विदधाति, प्रपित्सितलक्ष्यञ्च प्रापयति, तदेव संस्कृतिपदवाच्यं भवति। ऋषिभिः समर्जितानि मानवजातेः उत्कर्षविधायकानि तत्त्वानि संस्कृते इतस्ततो विततानि।

संस्कृत-भारतीयसंस्कृत्योः सम्बन्धः अविनाभावः। यदेव संस्कृतं सैव संस्कृतिः, या च संस्कृतिस्तदेव संस्कृतम्। संस्कृतं विहाय भारतीयनसंस्कृतेः सत्ता कल्पयितुं नालम् । तस्मादेव कारणात् स्वामिविवेकानन्देनोदितं यद्भारतवर्षे सम्मानः संस्कृतञ्च सहगामिनी। यावदधिगता सुरभारती न कश्चन तावदुत्सहते कमपि प्रतिकूलयितुम्। एतन्नाम (संस्कृतनैपुण्यम्) अभ्युन्नते रहस्यम्, एतदेव शरणम्। तथाहि भणितम् - ''Sanskrit and prestige go together in India. As soon as you have that, none dares say anything against you. That is the one secret; take that up.''[7]

बुद्ध-चैतन्य-कबीरादिभिर्महात्मभिः खलु वेदोपनिषद्धर्मशास्त्रादिषु निहितं तत्त्वम् उपदिश्य अवरजातिषु विद्यमानानां जनानामभ्युदयो व्यधायीति सत्यं, परन्तु तेन सह संस्कृतशिक्षापि सम्प्रचारणीया। कारणमस्यायमेव यत् एतेन अस्मच्छास्त्रगतया विद्यया समं परिचयस्तेषां जातः किन्तु सा विद्या दृढसंस्काररूपेण मज्जासु अप्रविष्टा सती तेषाम् आत्मश्लाघाम् उद्बोधयितुं नालम्। समधिगता विद्या यावन्न संस्कारमज्जादिक्रमेण परिणम्य संस्कृतिरूपतां लभते तावन्न तद्भावराशेर्भृशं प्राबल्यं सोढुं शक्नोति। तदुक्तम् - 'That was great; it spread the ideas quickly and made them reach far and wide. But along with that, Sanskrit ought to have spread. Knowledge came, but the prestige was not there, culture was not there. It is culture that withstands shocks not a simple mass of knowledge.''[8]

स्वामिनो मते, मन्वादिशास्त्राध्ययनपुरःसरं तन्निहितानि तत्त्वानि संगृह्य तानि च यदि अस्माभिः वर्तमानकालोपयोगीनि कर्तुं शक्यन्ते तर्हि तानि समाजस्य लोकानाञ्च महत्यै भूतये सम्पद्येरन्। एतस्माद् अवगन्तुं शक्यते यत् स्मृतिग्रन्थरचनायामपि तेषां मतिरासीत्। तच्च स्मृतिरचनं संस्कृतेतरभाषया खल्वासीद् असाध्यम्। अतः परोक्षतया संस्कृतभाषायाः सम्प्रसारणे तद्धीरासीदित्यनुमीयते। एतत्सत्त्वेऽपि स्वामिविवेकानन्दपादैरनुभूतं यावन्न वेदोपनिषत्स्मृतिग्रन्थादीनां पाठव्यवस्था प्रचलति तावन्न संस्कृतं

सार्वत्रिकव्यापकत्वमाप्तुं शक्नुयात्। अत एव काश्मीरप्रदेशेऽवस्थितिकाले काश्मीराधीशसमक्षं संस्कृतमहाविद्यालयं प्रतिष्ठापयितुं स्वकेच्छा प्रकटीकृता विवेकानन्दैः। किञ्च, एकदा तैः अगादि तच्छिष्यं शरच्चन्द्रमुद्दिश्य ''दक्षिणतो मठस्य भूमिः सा दृश्यते? तत्र विद्याकेन्द्रस्थलं भविता। तत्र व्याकरणदर्शनविज्ञानकाव्यालङ्कारस्मृतिशास्त्राणि राजभाषा संस्कृतभाषा च अध्यापयिष्यन्ते'' इति। चिराय मृत्योः पूर्वं निर्विकल्पसमाधौ स्वामिपादैः वेदविद्यालयं प्रतिष्ठापयितुम् ईप्सितमासीत्। तदीयामीमाम् इच्छां तद्गुरुभ्रातृसमक्षं प्रकटयामासुः स्वामिपादाः। तदा ''क उपकारः साधयिष्यतेऽनेन'' इति जिज्ञासिते तस्मिन् स्वामिचरणा उक्तवन्तः - ''नूनं हनिष्यन्ति वेदा अपसंस्कारम्'' इति। न केवलं संस्कृताध्ययने स्वामिपादाः सर्वेभ्यः प्रोत्साहं दत्तवन्तः अपि तु तेऽप्यासन् संस्कृताध्ययने समुत्सुकाः सोत्साहिनश्च। तस्मादेव तद्विरचितानि गीर्वाणवाण्या स्तोत्राणि प्राप्यन्ते। पत्रादिष्वपि भूरिशः संस्कृतसुभाषितानि तैरुदधृतानि तथा नैकानि पत्रानि संस्कृतेनैव विरचितानि।

विश्वं प्रति विवेकानन्दस्य वार्तासु प्राप्यते यद् विश्वहिताय मानवजातेश्च अभ्युन्नतये सामाजिकानां विवादानां समाधानाय च पवित्रतमा भाषा ग्राह्या या किल निखिलभाषाणां जननीस्वरूपा - ''The only solution to be reached was the finding of a great sacred language of which all the others would be considered as manifestations and that was found in the Sanskrit. Has been the linguistic solution''[9]

**संस्कृतकाव्यनाटकादिशास्त्रचर्चायां स्वामिविवेकानन्दः -**

स्वामिविवेकानन्दः सप्तत्युत्तराष्टादशशततमे ईशवीयाब्दे आगष्टमासे भागलपुरमगमत्। तत्र स्वामिपादः मम्मथचौधुरीनामकस्य विद्योत्साहिनः आलये आतिथ्यं जग्राह। प्रत्यहं स मम्मथमहोदयेन सार्धं विविधशास्त्रालोचनं कुर्वन् आसीत्। स्वामिपादस्य शास्त्रनैपुण्येनाश्चर्यान्वितः सन् मम्मथमहोदयः कदाचित् स्वामिपादस्य शिष्यं प्रति पत्रमाध्यमेन अलिखत्, उपनिषदां प्राञ्जलव्याख्यानश्रवणाद्विज्ञातोऽहं यत् स्वामिपादानामस्त्यसाधारणव्युत्पत्तिः

सर्वशास्त्रेषु। तथा चोपनिषदां मन्त्रोच्चारणं यथा तेन कृतं, तत्तु वास्तविकतया मनोमुग्धकरमिति। वेदस्याध्ययनाध्यापननिमित्तं स्वामिपादः एतावान् कृतयत्नः आसीत् यत् स तु स्वयमेव साधून् ब्रह्मचारिणश्च विषयमिमं पाठयति स्म। स्वामिपादस्तदीये 'वाणी ओ रचना' इत्यस्य षष्ठे खण्डे उल्लिखितवान् - शास्त्रशब्देनानादिरनन्तो वेदोऽवबुध्यते। स्वामिनः वेदसम्पर्कितायाः चिन्ताभावनायाः उत्कृष्टं फलं खलु वैदिक धर्मादर्श इति प्रबन्धः। शास्त्रव्याख्यानमुखेन बहवः श्रुत्युक्तीः सुभाषितानि चाकलितानि तैः। तद्यथा केवलं श्रुतिरेव धर्मशासने समर्था। पुराणादिग्रन्थास्तु स्मृतिशब्दवाच्याः। तेषां प्रामाण्यं तावद् यावत्ते वेदमनुसरन्ति। सत्यं द्विविधम्। तत्र प्रथमं हि साधारणमानवानां पञ्चेन्द्रियैर्वा तदुपस्थितानुमानेन वा ग्राह्यं सत्यं द्वितीयं यदतीन्द्रियेण वा सूक्ष्मयोगजशक्त्या गम्यं तदपि सत्यं नाम। प्रथमोपायेन लब्धं ज्ञानं विज्ञानमिति कथ्यते। द्वितीयोपायेन प्राप्तं ज्ञानन्तु वेदः इत्युच्यते। इत्थम् अतीन्द्रियशक्तिः यस्मिन् पुरुषे तिष्ठति, स पुरुषः ऋषिरित्यभिधीयते। तया शक्त्या यदलौकिकशक्तेरुपलब्धिर्भवति, तस्याः शक्तेरभिधानं वेदः खलु इति। स्वामिपादः प्राह - सार्वजनीनधर्मव्याख्याता केवलं वेद एवेति।

ऊनविंशतिदिनाङ्के कस्याञ्चिदालोचनासभायां स्वामिपादस्य संस्कृतवाग्मितया पाण्डित्यस्य गभीरतया च आश्चर्यान्वितः स्थानीयवङ्गीयः सर्वकारस्योच्चपदस्थः कर्मचारी श्रीहरिपदमिश्रः। तेन स्वाभिज्ञता प्रकटिता यत् विवेकानन्दः केनचित् सह आङ्गलभाषया, केनचित् साकं संस्कृतभाषया, केनचित् सार्धं वा हिन्द्यादिभाषाभिः प्रश्नान् उत्तरयति स्म झटित्येव। तस्मिन्नहनि हरिपदमिश्रो ब्राह्मणोऽभिवक्ता अपृच्छत् - भोः ! स्वामिपाद सन्ध्याह्निकादिमन्त्राः संस्कृतभाषया रचिताः। वयन्तु तन्न बोद्धुमलम्। अस्माकम् एवंविध-मन्त्रोच्चारणात्किमपि फलमस्ति वेति पृच्छायाम् अवश्यमिति स्वामिपादः प्राह। धर्मीयक्रियानुष्ठानकाले उच्चारितसंस्कृतमन्त्रादीनाम् अर्थान् बोद्धुं न शक्नुवन्ति स्म साधारणमानवाः। मन्त्रार्थाभावादपि केवलं मनसा सन्ध्यावन्दनादिकं सम्पाद्य मनसि पापचिन्ता विदूरीभवति चेदुत्तमफललाभो भवेत्। स्वामिपादेन केवलं संस्कृतेन रचितशास्त्राणामेवाध्ययनं न कृतमिति। तेन देवभाषया विरचिता

लौकिकग्रन्था अपि पठिताः। प्रथमतीर्थयात्रातः प्रत्यागमनकाले विवेकानन्दः पथि मीराटनगर्य्यां कानिचन दिनानि न्यवसत्। तत्र यज्ञेश्वरस्य नाम स्वामिज्ञानानन्दस्योद्याने स यथा ध्यानजपादिकञ्चकार, तथैव मध्याह्नभोजनात्परं शुद्रकस्य मृच्छकटिकम्, कालिदासस्य अभिज्ञानशकुन्तलम्, मेघदूतम्, कुमारसम्भवम्, तथा च विष्णुपुराणादिकमपि श्रावयति स्म। न केवलमेतावदेव, तेषां शास्त्रीयग्रन्थानामर्थान् स श्रोतृजनेभ्यो बोधयति स्म। कोलाहपुरे एकदा यदा स्वामिपादः हिन्दुख्रीष्टधर्मयोर्मध्ये ख्रीष्टधर्मस्यसारतां प्रतिपादयितुं कृतप्रचेष्टः, तदा कश्चन उत्साही श्रोता प्राह - युरोपदेशीयाः मांसभुजः इति कृत्वा धर्मविषये तेऽज्ञा इति। तत्क्षणमेव स्वामिना भवभूतेरुत्तररामचरितात् श्लोकाः प्रमाणत्वेन उद्धृताः। तत्र तेन दर्शितं यत् भारतीयाः ऋषयोऽपि मांसमश्नन्ति स्म। प्रसङ्गेऽस्मिन् सम्भवतः उत्तररामचरितस्य चतुर्थाङ्कस्य निम्नोक्तश्लोकः समुद्धृतः तेन –

''समांसो मधुपर्क इत्याम्नायं बहुमन्यमानाः
श्रोत्रियाय अभ्यगताय वत्सतरीं महोक्षं वा।
महाजं वा पचन्ति गृहमेधिनः।
तं हि धर्मं धर्मसूत्रकाराः समामनन्ति।''[10]इति।

अर्थात् वाल्मीकेराश्रमे समुपस्थिताय वशिष्ठाय कस्यचिदेकस्य कपिलवर्णस्य शुभलक्षणोपेतस्य गोवत्सस्य मांसं भोजनार्थं प्रदत्तम्। एतद्विलोक्य बाल्मीकिशिष्यः सौधातकिः आश्चर्यान्वितः। तदा दाण्डायननामकोऽपरः एकः शिष्यः सौधातकये बोधयति यत् - ये गृहस्थाः वैदिकाः शास्त्रवाक्यं प्रति सम्मानं प्रदर्शयन्ति ते यथाशास्त्रं निलये उपस्थिताय वेदज्ञब्राह्मणाय समधुपर्कं मांसं भोजनाय प्रददति। तन्मांसं गोवत्सस्य, बृहद्वृषस्य वा छागस्य वा भवितुमर्हति। धर्मसूत्रकारैरतिथिभ्यः एतन्मांसप्रदानम् धर्मकोषः इत्युच्यते। संस्कृतभाषायाः प्रभावः स्वामिपादस्य जीवने कियान् आसीदित्यस्योत्कृष्टोदाहरणं प्राप्यते रामकृष्णानन्दं प्रति लिखितादेकस्मात्पत्रात्। ब्राह्मसमाजस्य प्रतिनिधिः प्रतापचन्द्रमजुमदारः आमेरिकायां स्वामिपादस्य साकल्येन ईर्ष्यान्वितौऽभवत्। ते च स्वामिपादस्यापप्रचारमपि कुर्वन्तः अभवन्। वार्तामिमां निशम्य स्वामिपादः पत्रमेतत् रामकृष्णानन्दं प्रति व्यलिखत्। इह पत्रे स कालिदासस्य कुमारसम्भवात्

तथा च भगवद्गीतातः श्लोकांशान् संयुज्य स्वाभिमतं सकौतुकं सुन्दरतया उपस्थापितवान्।

शास्त्रं प्रत्यासीत् तस्य महदाकर्षणञ्चापि काव्यनाटकचर्चासु स्वामिपादः आसीत् सिद्धहस्तः। इदन्तु दार्जिलिंमण्डलात् प्रेषितपत्रात् सुष्ठुतयावगम्यते। तत्र स्वामिपादो भवभूतेर्मालतिमाधवनाटकमुद्धृत्य लिलेख - ''उत्पत्स्यते हस्ती वा मम कोऽपि समानधर्मा कालो ह्ययं निरवधि विपुर्ला च पृथ्वी''[11] इति।

कालिदासस्य कुमारसम्भव-शकुन्तला-मेघदूतादिग्रन्थाः स्वामिपादस्य कण्ठस्थाः आसन्। गीतावेदान्तोपनिषत्प्रभृतीनां ग्रन्थानामपि पाठः स्वामिपादेन नित्यं क्रियते स्म। वेदादिशास्त्राण्यपि तस्य सुष्ठुतयाधिगतान्यासन्। स्वामिपादस्योत्साहेन तस्यैव प्रियपात्रः हरमोहनदत्तः कालीप्रसन्नसिंहीय-महाभारताद् 'गीता' इत्यंशविशेषस्य मूलं बङ्गानुवादञ्च प्रकाशितवान्। स्वामिपादेन यथा विविधभाषाभिर्विरचितानां शास्त्राणां गभीरतत्त्वमनुभूयते तथैव संस्कृतशास्त्राणामपि मूलसारतत्त्वस्योपलब्धिस्तेन क्रियते स्म। एकदा स्वामिपादेनोक्तम् - कथञ्चिद्भवभूतिरेव समरप्रियकविरिति शक्यवचमिति। कियत्परिमाणकात्सूक्ष्माध्ययनात्परमेवैतादृशं वाचमभिधातुं शक्यत इत्यनायासेन एवानुमेयम्। कदाचित् श्रीरामकृष्णस्य गृहिभक्तस्य श्रीदुर्गाचरणनागस्य त्यागभक्तिदीनतादिविषयाणां वर्णनायै स्वामिपादेन कालिदासस्य अभिज्ञान-शकुन्तलनाटकस्य प्रथमाङ्कादुद्धृतिरियमुद्धृता - ''वयं तत्त्वान्वेषाद् हताः मधुकर! त्वं खलु कृती ''[12]इति।

अत्र विनयेन समं ज्ञानभक्त्यादीनामधिकारी कथं भवतीति स्वामिपादोऽनुसन्धित्सुन् सुष्ठु विज्ञापितवान्। सति अवसरे समये परिजनैः साकं संस्कृतचर्चा स्वामिपादस्यासीत् मुख्यध्येयः। नवनवत्युत्तराष्टादशशततमवर्षस्य जुलाइमासे द्वितीयवारं मार्किनदेशं प्रति यात्राकाले स्वामिपादो यदा उइम्बलडनतः यात्रां प्रारेभे, तदा तद्यात्राया वर्णनकाले डेट्रयेट्देशवासिन्या

स्वामिपादस्य शिष्यया श्रीमत्या मेरी.सि.फाङ्कि-महोदययोक्तम् - ''अधिसमुद्रम् अतिवाहितानाम् एतेषां दशदिनानां स्मृतिः कदापि न विस्मर्तव्या। प्रत्यहमुषसि गीतापाठः, तस्य व्याख्यानं भवति, संस्कृतकवितानामावृत्तिः अनुवादश्च, वैदिकस्तोत्रस्यावृत्तिः भवन्ति स्म'' इति। स्वामिपादः प्रकृतभारतप्रेमिकाणां कृते संस्कृतशिक्षायाः सुफलप्रयोजनीयतादिविषये यूनाञ्चेतसि श्रद्धाविश्वासादिकं स्थापयितुं समर्थः आसीत्। स युवकान् प्रति संवदति स्म - संस्कृतं पठत, तेनैव सह पाश्चात्त्यविज्ञानस्य चर्चां कुरुत, पुनश्च सर्वं विषयं यथार्थतया द्रष्टुं वक्तुञ्च शिक्षध्वम् इति।

भारतीयधर्मदर्शनादीनामखिलभारतीयसंस्कृतेश्च निर्यासं जगत्सभायां परिवेशयितुं स्वामिपादेन आङ्गलभाषया संस्कृतशास्त्रकाव्यादीनाम् अशविशेषाणामनुवादोऽपि कृतः। स्वामिपादस्य बहूनि भाषणानि, नाटकचर्चा, समग्ररचनावली चेत्येतानि तस्यानुवादकसत्तायाः परिचायकानि। स्वामिपादस्य रचनासु अस्माभिर्बहुत्रैवोपनिषदां मन्त्राणां मन्त्रांशानां वानुवादो दृश्यते। स्वामिपादेन विविधेषु स्थानेषु ऋग्वेदीयसूक्तानां छन्दसा सममनुवादो विहितः। गीतायाः श्लोकानामप्यनुवादस्तेन कृतः।

**स्वामिविवेकानन्दस्य मौलिककृतयः**

शिष्यस्य शरच्चन्द्रस्य विरचितात् स्वामिशिष्यसंवादग्रन्थाद्वयं ज्ञातुं शक्नुमो यत् अष्टनवत्युत्तराष्टादशशततमवर्षस्य नभेम्बरमासे यदा स्वामिविवेकानन्दो बेलुडमठेऽभूत्, तदा स कानिचन संस्कृतस्तोत्रादीनि व्यरचयत्, यानि स्तोत्राणि परं प्रसिद्धानि जातानि। एतेषां स्तोत्राणां प्रोयोऽधिकानि स्तोत्राणि गुरुदेवं श्रीरामकृष्णं प्रति नमस्करणपुरःसरं विरचितान्यासन्।

तत्र 'आचण्डलाप्रतिहततरयोः' 'स्तब्धीकृत्यप्रलयकलितं' चेति स्तोत्रद्वयम् एकस्मिन् दिने एव विरचितं स्वामिना। पुनश्च 'ॐ ह्रीं ऋतम्', 'शिवस्तोत्रम्', 'अम्बास्तोत्रम्' चेत्येतानि तेनैव विरचितानि सन्ति। शिष्यः शरच्चन्द्रो व्यलिखत् यत् यस्मिन् समये स्वामिपादः स्तोत्राण्येतानि ससर्ज, तदानीं

यथा वाग्देवी तस्य रसनायामारूढासीत्। स्तोत्राणां विश्लेषणाज्ज्ञायते यत् तेषु स्तोत्रेषु छन्दः-अलंकार-समासादीनां प्रयोगनैपुण्येन वर्तत एव। इदन्तु तस्य संस्कृतानुशीलनस्यानवद्यनिदर्शनमिति शक्यवचम्। यथा श्रीरामकृष्णस्तोत्रे दृश्यते यत् – 'ॐ नमो भगवते रामकृष्णाय' इति प्रणाममन्त्रस्याद्याक्षरैः प्रतिपंक्ति रचितम्। तद्यथा - ''ॐ ह्रीं ऋतं त्वमचलो गुणजित् गुणेड्यः'' इत्यत्र 'ह्रीं' इति शब्दप्रयोगादेव प्रकृतिपुरुषयोर्वा ब्रह्मशक्त्योरभेदतत्त्वं प्रादर्शि । बृहदारण्योकपनिषदि आम्नातम् -''तस्योपनिषत् सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ''[13] इति। पुनश्च 'ॐ ह्रीं ऋतम्' इत्यस्य पदत्रयस्य प्रयोगात् श्रीरामकृष्णदेवस्य सामग्रिकरूपकल्पना क्रियते स्वामिपादैः। गीतायां गीतमस्ति भगवता —

''अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः''[14] इति।।

स्वामिविवेकानन्दो व्यज्ञापयत् यत् श्रीरामकृष्णदेव एव पुण्यात्मा, चिरस्थायी, सनातनश्चेति। ''ॐ ह्रीं ऋतम्................'' इत्यादिस्तोत्रे वसन्ततिलकच्छन्दो अस्ति। स्तोत्रेऽस्मिन् 'ऋतम्', 'अचलः', 'गुणजित्', 'गुणेड्य'श्चेत्यादिविशेषण-प्रयोगात् परमात्मनः स्वरूपं माहात्म्यञ्च प्रकटीभवतः। स्तोत्रकर्तुरभिप्राय-विशेषस्तावदेतैर्विशेषणैः प्रकाश्यते। तस्मादत्र परिकरालङ्कारः। पुनश्च स्तोत्रेऽस्मिन् 'गुणजित्', 'गुणेड्य'श्चेति विशेषणद्वयं मिथो विरुद्धधर्मयुक्तम्। वस्तुतोऽत्र विरोधाभावेऽपि विरोधज्ञानाद्विरोधाभासालंकारः। पुनश्च स्तोत्रस्यास्य तृतीयचरणे 'मर्त्यामृतं तव पदं मरणोर्मिनाशं' इत्यत्र मरणोर्मिनाशपदे रूपकालंकारः, चतुर्थचरणे 'कृत्यं करोति कलुषं कुहकान्तकारि' इत्यत्र स्वामिपादस्यानाश्रयभावः सुस्पष्टः। स्वामिपादस्तावद्दीनः, आश्रयहीनः पुनश्च गुरुदेवः खलु श्रीरामकृष्णदेवोऽदीनः, केवलाश्रयदाता च। गुरुवन्दनात्र सुष्ठु प्रकाशिता।

स्वामिपादोऽत्र वर्णयति यत् गुरुदेवः श्रीरामकृष्णः एव आश्रयदाता, स एवास्माकं शरणम् । स एवास्मान् सर्वेभ्यः पापेभ्यो मोक्षयिष्यतीति। स्वामिपादेन तस्येष्टगुरुविषये उक्तम्-

''सामाख्याद्यैर्गीतिसुमधुरैर्मेघगम्भीरघोषै-
र्यज्ञध्वान-ध्वनितगगनैर्ब्राक्षणैर्ज्ञातवेदैः।
वेदान्ताख्यैः सुविहितमुखोद्भिन्नमोहान्धकारैः
स्तुतो गीतो य इह सततं तं भजे रामकृष्णम् ''[15] इति ॥

अनेन पद्येन स्वामिपादा गुरुं प्रति भक्तिं श्रद्धार्घञ्च निवेदितवान्। स्वामिपादेन ''आचण्डालाप्रतिहततरयो'' च ''स्तब्धीकृत्यप्रलयकलितम्'' इति स्तोत्रद्वयविरचनाद्दर्शितं यत् यः श्रीरामः, यः कृष्णः, स एवेदानीं श्रीरामकृष्णः इति। धर्मक्षेत्रे कुरुक्षेत्रे योऽर्जुनस्य मोहान्धकारं दूरीकर्तुं गीताम् उपदिदेश, स एवाधुना श्रीरामकृष्णरूपेणावतीर्णो भुवि इति।

स्वामिपादानां मौलिककाव्यरचनासु एतादृशं छन्दः, भावस्य गूढतत्त्वं तथा चालङ्कारञ्चावलोक्येदं कल्पयितुं शक्यते यत् स्वामिपादा श्रेष्ठकवयितारोऽभवन्। स्वामिपादैः यथा भाषणाद्यवसरे संस्कृतकाव्य-शास्त्रादीनामुद्धृतिर्दीयते स्म, तथैव स्वकृतिष्वपि शास्त्रसम्मतशब्दार्थालंकारादि-प्रयोगाद्वक्तव्यस्य दृढता सम्पाद्यते। चतुर्नवत्युत्तराष्टादशशततमवर्षस्य सेप्टम्बरमासस्य पञ्चविंशतितमे दिनाङ्के निउ-इर्यकनगरतः स्वामिपादैः श्रीरामकृष्णस्य शिष्याणां प्रति पत्रमेकं लिखितम्। पत्रेऽस्मिन् शिष्याणां जडताभीरुतादीनां दूरीकरणार्थं तेन बहूपदेशोऽपि प्रादायि। प्रसङ्गेऽस्मिन् सोऽलिखत् - महाहुङ्कारेण कार्यमारभ्यताम्, कस्माद्भीतिः, कः समर्थो बाधयितुं, रामकृष्णदासास्तावद्वयम् इति। मन्त्रस्तावत् -

''कुर्मस्तारकचर्वणं त्रिभुवनमुत्पाटयामो बलात्
किं भो न विजनास्यस्मान् रामकृष्णदासावयम्''[16] इति ॥

अयमंशः श्लोकाकारेण रचितस्तैः। अंशस्यास्य पाठादिदं वक्तुं शक्यते यत् स्वामिपादस्य वक्तव्यस्योपादेयतेतावती दृढता नाभिद्योतिते, यदि देवभाषया मन्त्रो न लिखितः स्यात्। अस्याः श्लोकत्रय्याः द्वितीयश्लोकोऽत्र प्रदीयते—

''पीत्वा पीत्वा परमामृतं वीतसंसाररागाः
हित्वा हित्वा सकलकलहप्रापिणीं स्वार्थसिद्धिम्
ध्यात्वा ध्यात्वा गुरुवरपदं सर्वकल्याणरूपम्
नत्वा नत्वा सकलभुवनं पातुम् आमन्त्रयामः''[17] इति॥

चारुत्वं श्रुतिमाधुर्य्यञ्च समायाते श्लोकेऽस्मिन् सार्थकयमकालंकारप्रयोगात्। एवंविधप्रयोगस्तु कालिदास-भारवि-भट्टि प्रभृतीनां कवीनां रीतिमेव स्मारयति। किञ्च प्रथमचरणे पीत्वा पीत्वा, द्वितीयचरणे हित्वा हित्वा, तृतीयचरणे ध्यात्वा ध्यात्वा, चतुर्थचरणे नत्वा नत्वा चेत्येषां पदानाम् असकृत्प्रयोगात् वृत्त्यानुप्रासालङ्कारः। स्वामिपादैर्विरचितानि स्तोत्राणि तु पूर्णाङ्गसाहित्यस्वरूपाणीति वक्तुं शक्यते। विविधसमये लिखितानामेतेषां श्लोकानां विषयस्तावत् शास्त्रम्, धर्मः, शिक्षासमाजश्चेति। स्वामिपादस्य पत्रं क्वचित् गभीरभावप्रधानम्, कुत्रचिद्वा सकौतुकं भवतीति।

स्वामिनः संस्कृतस्तोत्रप्रसङ्गे भूपेन्द्रनाथदत्तः (स्वामिनः सहोदरः) यन्मूल्यायणं विहितवान्, तदत्रोल्लेखार्हम् – 'संस्कृतभाषायां रचितानि स्तोत्राणि तस्य प्राचीनहिन्दुविश्वासस्य बहिःप्रकाशः खलु। सामन्तयुगीयभारतस्य भावधारावहन-कारिकवितासु आसु आदर्शप्रतीकवादौ नोपलभ्येते। जनजीवनस्योन्नत्याः पथनिर्देशोऽप्यत्र नास्ति। एतानि पद्यानि मुख्यतः आध्यात्मिकानि तथा च तस्यादर्शवादिमनसः परिचायकानी'ति। (स्वामी विवेकानन्द, कलिकाता, 1383 वङ्गाब्द, पृ.- 273)

अध्यापकशङ्करीप्रसादवसुमहाभागस्योक्त्या स्वामिनः अनुवादप्रतिभां स्पष्टतया बोद्धुमलम् – स्वामिपादाः विविधस्थानेषु ऋग्वेदस्य नासदीयसूक्तस्य सच्छन्दो अनुवादञ्चक्रुः। ड.जगदीशचन्द्रवसु-महाभागस्यानुरोधादेव सूक्तस्यास्य पूर्णाङ्गोऽनुवादो विहितस्तेन। गीतायाः बहवः श्लोका अनेनानवद्यवाचानूदिताः। अत्रेदं ज्ञातव्यं यत् इ.टि.स्टार्डिमहाभागेन यदा नारदीयभक्तिसूत्रस्य पूर्णाङ्गोऽनुवादः कृतः स्वामिनां तत्त्वावधायेनैव। अपि च, विवेकानन्दपादाः भर्तृहरेर्वैराग्यशतकस्य सम्पूर्णमनुवादं विहितवान् तथा च शङ्कराचार्यस्य निर्वाणषट्कमित्यस्यापि।

## विवेकानन्दस्य प्रायोगिकवेदान्तचिन्तनम्

मनुष्यजीवनस्य चरमोद्देश्यं खलु आत्मसाक्षात्कारः। श्रवण-मनन-निदिध्यासनैरेवात्मज्ञानं सम्भवति नान्यथा। तानि श्रवण-मनन-निदिध्यासनादीनि हि मनीषिभिर्दर्शनहेतुत्वेनोपात्तानि। एतदभिप्रायेणैवोक्तम्-

''श्रोतव्यः श्रुतिवाक्यभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा तु सततं ध्येयः, एते दर्शनहेतवः ।।'' इति।

अद्वैतवादो भारतस्य सनातनभावधारायां प्रतिष्ठितो राद्धान्तः। अयं सिद्धान्तः श्रुति-स्मृति-पुराण-रामायण-महाभारतादिषु प्रकटितः। परं तत्त्वमिदं गौडपादशङ्कराचार्याणाम्, तदीयशिष्याणाञ्च दर्शनशास्त्रादिषु सुस्पष्टरूपेण प्रकाशपदवीं गतम्। अद्वैतवादे साधारणदृष्ट्यात्मतत्त्वं वर्णितम्। सोऽहम् इति भावं प्रकटयति तत्त्वमिदम्। कर्मजीवने वेदान्तप्रयोगो हि विवेकानन्दस्य महदवदानरूपेण विविच्यते। गिरिष्वरण्यानीषु निहितं सर्वशास्त्रसारभूतं वेदान्ततत्त्वमिदम्। ब्रह्मचिन्तनेन समाजोन्नतिस्तथात्मोन्नतिः सम्भवतीति धारणा तन्मनसि दृढासीत्। अद्वैतवादेन जगदिदमुन्नतिमार्गं प्रत्येति।

के तावद्वेदान्तपाठाधिकारिणः इति चेदुच्यते सदानन्दयोगिन्द्रपादैः वेदान्तसारे उक्तम् -'अधिकारी तु विधिवदधीतवेदवेदाङ्गत्वेन आपाततो अधिगताखिलवेदार्थः अस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरः सरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्मल-स्वान्तः साधनचतुष्टयसम्पन्नः प्रमाता''[18] इति। अर्थात् साधनचतुष्टयसम्पन्नः प्रमाता वेदान्तस्य अधिकारीति। साधनमार्गेण यदा चित्तशुद्धिर्जायते तदात्मज्ञानं समुद्भासते। वेदान्ते विविदिषेति पदेन ब्रह्मजिज्ञासा बोध्यते। अस्थिरबुद्ध्या ब्रह्मोपलब्धिर्नैव साध्यते। हृदयेन हि ब्रह्मज्ञानं लभ्यते। कठोपनिषदि आम्नातम्-

'' एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम्।
एतद्ध्येवाक्षरंज्ञात्वा यो यदिच्छति तस्य तत्''[19] इति ।

प्रसङ्गेऽस्मिन् विवेकानन्दस्य व्याख्यानमेतदेव यत् धीवरो यदि स्वयमेव आत्मेति चिन्तयति, तदा स यथार्थो धीवरो भवितुमर्हति। 'सोऽयमात्मा' इति भावनायां अध्येता सुविद्यार्थी भवेत्। ब्रह्मात्मचिन्तनस्य फललाभविषये स्वामिपादैः भणितम् - ''अद्वैतवादस्य प्रयोगात् फलमपि आयाति मानवजीवने। धनं प्राप्तुकामो धनमुपार्जयति, विद्वान् महापुरुषो भवति, मुमुक्षो मोक्षं लभते'' इति। उपनिषदां परिशीलनाज्ज्ञायते यत् ब्रह्मणः अंशविशेषा वयम्। गीतायामपि पद्मनाभिना भगवतागादि, विद्याविनयसम्पन्ने ब्राह्मणे गवि शुनि चण्डाले चात्मा राजते। अतः सर्वे खलु अधिकारिणः ब्रह्मचिन्तने आत्मचिन्तने वेति। स्वामिविवेकानन्दः प्राह - जगतो मङ्गलमयं कामय विनाशं न च भजस्व। सिद्धावस्थायां विश्वमिदं ब्रह्मैव भाति। सूक्ष्मदृष्ट्या ब्रह्म विभिन्नरूपेण प्रकाशते। विवेकानन्दो धराधाम्नि आत्मतत्त्वमिदं प्रचारयामास। आत्मज्ञानादात्मविश्वासः समुपद्यते। आत्मविश्वासो हि मानवकल्याणस्य मूलसोपानभूतः। आत्मविश्वासः यदि कार्ये परिणमते, तदा जगति सर्वाणि दुःखान्यपसरन्ति। आत्मानं विना सर्वं शून्यमेवानुमीयते। स्वरूपभेदवशात् ईश्वरो विभिन्नरूपेण प्रतीयते। वेदान्तदृष्ट्या कर्म तु द्विविधम् – सत्कर्म असत्कर्म चेति। एकत्वसम्पादकं कर्म सत्कर्मरूपेणाभिधीयते, तद्विरुद्धाचाररूपं कर्म नानात्वबोधककर्म वेत्यसत्कर्मेति मतं खलु विवेकानन्दस्याभीष्टम्। एतावत्पर्यन्तम् अद्वैतवादः आध्यात्मिक-चिन्तनैर्मण्डित आसीत्। पुनः प्रश्नो जायते को नाम वेदान्तः? न केवलम् अद्वितीयब्रह्मात्मतत्त्वोपवृंहितः, अपि तु शम-दम-उपरति-तितिक्षा-समाधान-श्रद्धादिसाधननिर्देशकोऽयं वेदान्तः। स्वामिपादस्य नये स्वजीविते वेदान्ततत्त्वस्य परिणमो नूनं विधेयः, अन्यथा तद्धि बुद्धतैक्ष्णं विदध्यात्, नान्यत्। न केवलं बौद्धवादश्चित्तशुद्धिद्वारा आत्मोपलब्धिं विदधातुमलम्, यतो हि 'यस्तु क्रियावान् पुरुषः स विद्वान्' इति। आत्मतत्त्वोपलब्धये अद्वैतब्रह्मात्मतत्त्व-मननस्य अनार्जवत्वेऽपि वेदान्तदर्शितसाधनमार्गः सुगमः अनुष्ठानसापेक्षत्वात् अभ्यास-भूयिष्ठत्वाच्चेति विदां वादः। स्वामिपादेन ब्रह्मोपलब्धये द्विविधः साधनमार्गः प्रत्यपादि - १. शमदमादिसाधनषट्कमार्गः २. यज्ञ-दान-तपस्-कर्ममार्गश्चेति। शमदमादिसाधनससाध्यं ब्रह्मज्ञानं शास्त्रकृद्भिरपि स्व्यकारि। एतानि साधनानि ब्रह्मोपलब्धये सोपानानि। एतैः साधनैः ईश्वरलाभोऽतीवः दुःसाध्यः। यज्ञ-दान-

तपस्यादिनिष्कामकर्मानुष्ठानेन चित्तशुद्धिर्जायते। अनासक्तचित्तेन कर्म सम्पादनीयम्।

स्वामिपादैः श्रीरामकृष्णस्तोत्रस्य 'नरदेव देव जय जय नरदेव' इत्यादिश्लोकेन गुरुदेवो वन्दितः। श्लोकस्यास्य द्वितीयस्तवके स्वामिपादस्य अद्वैतवादतत्त्वं स्पष्टीभूतमास्ते। तथाहि प्राह -

''अद्वयतत्त्वसमाहितचित्तं प्रोज्ज्वलभक्तिपटावृतवृत्तं।
कर्मकलेवरमद्भूतचेष्टं यामि गुरुं शरणं भववैद्यम्''[20]।।

द्वैतप्रतीतिर्मिथ्येति अद्वैतवादस्य मूलम्। अहं-त्वंभावयोः प्रतीतिरेव द्वैतबोधस्य कारणम्। एवंविधप्रतीतिरूपसंस्कारो जीवचैतन्ये वर्तमानः सन् जन्मनो जन्मान्तरं प्रत्यनुवर्तितो भवति। स्वामिपादैरपि शिवस्तोत्रे एतदेव वर्णितम्—

''वहति विपुलवातः पूर्वसंस्काररूपः
विदलति वलवृन्दं घूर्णितेवोर्मिमाला
प्रचलति खलु युग्मं युष्मदस्मत्प्रतीतम्
अतिविकलितरूपं नौमि चित्तं शिवस्थम्''[21] इति।।

श्लोकेऽस्मिन् उक्तम् यत् यथा प्रबलतरङ्गमालया वारि तरङ्गायितं भवति, तथैव संसारेऽपि आवर्तस्य सृष्टिर्भवति। स्वामिपादानामभिमतं यत् - बहुधा विभग्नाम् अर्थात् बहुरूपेण विभक्तां वा भग्नां शान्तिं प्रतिष्ठापयितुं जगतो माता सर्वदैव प्रयासरतेति कृत्वात्राप्यद्वैततत्त्वं प्रतिष्ठितं भवति। पुनश्च स्वामिपादैः शिवस्तोत्रस्य चतुर्थस्तवके उक्तम् यथा—

''जनकजनितभावो वृत्तयः संस्कृताश्च
अगणनवहूरूपा यत्र चैको यथार्थः
शमितविकृतिवाते यत्र नान्तर्वहिश्च
तमहह हरमीडे चित्तवृत्तेर्निरोधम्''[22]इति ।।

जन्यजनकवृत्तयो बहवः सन्ति। तथापि अद्वैतमेव यथार्थसत्यम्। वृत्तेरुदयाभावाद् बाह्यान्तर्भेदो न तिष्ठति, चित्तविकृतेः स्तब्धताकारणात्। तस्य चित्तवृत्तिनिरोधकस्वरूपस्य महादेवस्य स्तुतिर्मया क्रियते इत्यर्थः। अस्मिन् शिवस्तोत्रेऽपि वेदान्तभावः प्रकटितः। शङ्कराचार्येणाप्युदितम् तत्त्वोपदेशे - ''अद्वैतमेव सत्यं त्वं विद्धि द्वैतमसत् सदा इति''।

ब्रह्मज्ञानी साधकः स्वामिविवेकानन्दो भक्तिभावाप्लुतेन हृदयेन परमां जननीं प्रति भक्तिनिवेदनं करोति तस्य अम्बास्तोत्रे। स्वामिपादो बङ्गभाषया यद्यदुक्तवान्, तस्य संस्कृतानुवादस्तावत् - ''मातृशक्तिरेव पक्षदोषहीना महाशक्तिः.............मातरं निकषा नित्यं पूर्णशरणागतिरेवास्मभ्यं शान्तिं प्रदातुमलम्, तदर्थमेव तां प्रीणीहि न तु भयाद्वा प्राप्तिलोभात्'' इति। अम्बास्तोत्रस्य प्रथमश्लोको यथा

''क्वा त्वं शुभे शिवकरे सुखदुःखहस्ते
आघूर्णितं भवजलं प्रवलोर्मिभङ्गैः
शान्तिं विधातुमिह किं वहूधा विभग्नां
मातः प्रयत्नपरमासि सदैव विश्वे''[23] इति ॥

श्लोकस्यास्यालङ्कारविश्लेषणाद्वक्तुं शक्यते यद् द्वितीयचरणे भवजलपदे रूपकालङ्कारोऽस्ति। अत्र भवजलयोः मध्ये तादात्म्यं विद्यते। भव इति विशेषणम्, जलञ्च विशेष्यमिति कृत्वात्र रूपकालङ्कारः। पुनश्च चतुर्थपादस्य प्रत्येकं पदस्य हेतुत्वात्काव्यलिङ्गालंकारः। स्तोत्रमिदं वसन्ततिलकच्छन्दसा व्यरचि स्वामिपादैः। अद्वैतवादस्योत्कर्षश्रेष्ठत्वादिविषये स्वामिपादैरुक्तम् -''वयं मन्यामहे यदेतदेव सकलयुगस्य समस्तदेशस्य च प्रकृतदर्शनम्। एवं धर्मस्यान्तिमं सुन्दरतमं पुष्पम्। अत्रैव मानवीयचिन्तायाः उच्चतमो विकाशो दृश्यते, यद्रहस्यमभेद्यरूपेण प्रतीयते तदरहस्यमपि अद्वैतवादी भिनत्ति, एष एव वेदान्तः अद्वैतवादिनाम्'' इति। अतो ब्रह्मात्मज्ञानं निरन्तरसाधनाभ्याससाध्यम्। ब्रह्मात्मविद्या आयत्तीयोग्येति अद्वैतवेदान्तिनां राद्धान्तः। विद्येयं जीवनकल्याणसाधिकेति सर्वैर्वेदान्तशास्त्रकृद्भिरङ्गीकृतम्।

अद्वैतदर्शनस्य समालोचनायाः मूलकारणमेतद्यद् अद्वैतदर्शनमिन्द्रियभोगविषये अनुत्साहि, वयं सानन्दमेतत्स्वीकुर्मः''इति। 'अयमात्मा ब्रह्म' 'तत्त्वमसि' इति श्रुतिवाक्यद्वयं ह्यद्वैतवादभित्तिरूपम्। अर्थात् भूतजातं ब्रह्मेति। आत्मतत्त्ववित् सदैव मानवहृदस्थदेवमुपासते। स्वप्रेम्णा सर्वभूतेषु ईश्वरस्योपस्थितिरनुमीयते। तथा च श्वेताश्वतरोपनिषद्वाणी -''सदा जनानां हृदये सन्निविष्टः''इति। सर्वभूतेषु ईश्वरसेवां व्यतिरिच्य, मूर्तिपूजानुष्ठानेन न किमपि पुण्यफलं लभन्ते मनुष्याः। पद्मनाभिना श्रीकृष्णेन गीतायां गीतम्

''प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु।
तानकृत्स्नविदो मन्दान् कृत्सनविन्न विचालयेत्''[24] इति।

स्वामिविवेकानन्दपादैः स्वगुरुदेवात् श्रीरामकृष्णदेवात् 'शिवज्ञानेन जीवसेवा' इति प्रचोदयित्री। तस्याः प्रतिफलनं स्वकीयकवितायां प्रकाशयमानीतं तेन -

'' बहुरूपेण तवाभिमुखे हित्वा क्वान्वेषयमीशम्।
प्रीणाति यो जीवान् स हीशं सेवते ''[25] इति।

स्वामिपादाः कथयन्ति यद् अद्वैतवादः अस्मान् शिक्षयति यत् यः अपरान् हिंसितुं प्रभवति, स आत्मानमेव हिनस्ति। वस्तुतः वयं सर्वे आत्मीयाः। सर्वैः क्रियमाणं कर्म त्वमेव करोषि, समेषां चरणैस्त्वमेव चरसि, अज्ञजने, दुर्वले, विद्वज्जने चापि त्वम्। अर्थात् त्वमेव सर्ममूलम्। अतः गीतायां गीतमस्ति -

''समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम्।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम्''[26] इति ।।

प्राचीनसंस्कृतस्तोत्रसाहित्ये स्वामिपादाः कियान्तो निष्णाता आसन् इति तद्रचितस्तोत्रकाव्यानि विश्लिष्य अनुमातुं शक्यते। अनुप्रास-समासबद्धपदप्रयोगनैपुण्यात् स्तवकानां गाम्भीर्यमेतावदभवव् यत्तेषामुच्चारणमात्रमेव मनसि स्वत एव श्रद्धा भक्तिश्चोद्भवतः। स्तवकानां निर्माणावसरे स्वामिपादैः बहु चिन्तितम्, असकृदेव परिशीलितं स्तोत्रजातञ्च। अतः बहुशब्दानां पाठान्तरमपि अस्माकं नयनयोरापतति। संस्कृतभाषणं

संस्कृतरचनादिकञ्च स्वामिपादानां संस्कृतानुशीलनस्य अनवद्यनिदर्शनम् आसीदिति। श्रीरामकृष्णदेवस्य प्रणाममन्त्रः पुनः उच्चार्यते, यस्तेनैव व्यरचि -

स्थापकाय च धर्मस्य सर्वधर्मस्वरूपिणे।
अवतारवरिष्ठाय रामकृष्णाय ते नमः।।

**उपसंहारः**

संस्कृतभाषां संस्कृतसाहित्यञ्च प्रति स्वामिविवेकानन्दानाम् अकृत्रिमानुरागः त्वस्माकं समेषां संस्कृतप्रेमिणां समीपे परमोत्साहप्रदायकः। परहितार्थिनां स्वामिपादानां जीवनस्य मूलमासीद्धर्मः। तस्य धर्मबोधस्यास्योद्गमः शास्त्रज्ञानाद्भारतीयपरम्परागतैतिह्याच्चाभूत्। स्वामिविवेकानन्दाः सर्वं विषयजातं सम्यक्तया विदित्वान्तःकरणेन जग्राह। अतस्तत्समीपे संस्कृतशिक्षणम् आसीदत्यावश्यकम्।

वस्तुतो सनातनधर्मस्य, भारतीयदर्शनस्य, भारतीयसंस्कृतेः, संस्कृत-भाषामाहात्म्यस्य प्रथममूल्यायनकारी आसीत् स्वामिविवेकानन्दः। वैदिककालादेव भारतीयानां मनसि स्तोत्रसाहित्यमतिप्रसिद्धम्। तद्यथा दुर्गास्तोत्रम्, कालिकास्तोत्रम्, गङ्गास्तोत्रम्, दशावतारस्तोत्रञ्चेति स्तोत्रावली बहुलतया प्रचलितास्ति। अतः स्वामिविवेकानन्दाः स्तोत्रसाहित्यस्य समृद्धिमपि सम्पादयामासुः। तस्य श्रीरामकृष्णदेवं प्रति लिखितानि स्तोत्राणि भक्तिरसपरिपूर्णानि सहृदयनां हृदयानि ह्लादयन्ति। श्रीशंकराचार्यस्य स्तोत्रेषु यथा गुरुभक्तिर्निहिता तथैव विवेकानन्दस्य स्तोत्रेषु इत्यत्र नास्ति संशयलवः कश्चित्।

स्वामिविवेकानन्दस्य जीवनस्य मूलमन्त्रः समासीत् मानवजातेः उद्धरणमिति। यत् सर्वतः पावित्र्यं परिशुद्धा सुरभारती ज्ञानगर्भतत्त्वालोकेन सततं भारतीयान् भारतजातिञ्च पुनाना संस्कृतमिति अन्वर्थनाम्ना परिचीयमाना जनान् स्वस्वधर्मे प्रचोदयति, पुरुषार्धचतुष्टयलाभोपायं ज्ञापयति, अमृतत्वं च ददाति। अतो भारतजातेरभ्युत्थानाय भारतीयसनातनसंस्कृतेश्च पुनःप्रतिष्ठायै संस्कृतविषये यन्निगदितं स्वामिपादैस्तत्सर्वैरादर्तव्यं तदनुसारञ्चास्माभिः संस्कृतज्ञैः

यतनीयमिति। स्वामिपादानां सकलभावानामेकत्र समावेशात् सुविशालस्य काव्यविश्वस्य वातावरणं निर्मितं भवतीति कृत्वा फलं तावत् भावरसोपेतं काव्यवाङ्मयम् । प्राचीनभावधारां प्रत्यन्धमोहेन कुसंस्कारस्य जडतया च स कथमपि कदापि बद्धो नासीत्। अपि च, पूर्वजानाममूल्यसम्पदादिकं प्रति हेयज्ञानमपि तेन नादर्शि। मननशीलो मुक्तचिन्तकः स खलु स्वच्छदृष्ट्या संस्कृतज्ञानं समर्जितवान्। सन्न्यासिनो निर्मोहविवेकेन अतीतं ज्ञानप्रपञ्चं विचारयति स्म स्वामिपादः। ग्रहणवर्जनाभ्यां भारतवर्षस्य प्रकृतमहिमानं सोऽखिले जगति पुनः प्रतिष्ठापयितुमचेष्टत इति शिवम्।

## सहायकग्रन्थपञ्जी


*उपनिषद्*। अतुलचन्द्र सेन। कलिकाताः हरफप्रकाशन्, २०१५ (पुनर्मुद्रित)।

*ऋग्वेदसंहिता*। सम्पा. आब्दुल आजीज आल आमान। कलिकाताः हरफप्रकाशन्, २०११ (पुनर्मुद्रित)।

सदानन्दयोगीन्द्रः। *वेदान्तसारः*। स्वामी अमृतत्वानन्दः। कलिकाताः उद्बोधनकार्यालय, २०१२ (पुनर्मद्रित)।

*स्वामिविवेकानन्देर दृष्टिते जातीय जीवने संस्कृतशिक्षार गुरुत्व*। मानवेन्दु वन्द्योपाध्याय। कलिकाताः संस्कृत पुस्तक भाण्डार, १४०२।

*स्वामिविवेकानन्देर वाणी ओ रचना*। स्वामी नित्यमुक्तानन्द। कलिकाताः उद्बोधन कार्यालय, १४२५ (पुनर्मुद्रित)।

*स्वामिविवेकानन्देर कवितासमग्र*। स्वामी सुपर्णानन्द। कलिकाताः रामकृष्णमिशन इनस्टिटिउट अव कालचार,२०१६ (तृतीय मुद्रित)।

## तथ्यसूत्राणि

---

[1] *स्वामी विवेकानन्देर वाणी ओ रचना*, पञ्चम खण्ड, पृ.- 187

[2] *युगनायक विवेकानन्द*, स्वामी गम्भीरानन्द, प्रथम खण्ड, पृ.- 32

[3] *स्वामी विवेकानन्देर वाणी ओ रचना*, पञ्चम खण्ड, पृ.- 9

[4] *The complete works of Swami Vivekananda*, Vol. III, 290.2

[5] Ibid, Vol. III, 298.2

[6] Ibid, Vol. VI, 158.2,

[7] Ibid, volume III, 299.2

[8] Ibid, Volume III, 291

[9] Ibid, Volume III, 291

[10] *उत्तररामचरितम्*; (सम्पा.) सीतानाथ आचार्य शास्त्री, पृ. १८६

[11] *मालतीमाधवम्*

[12] *अभिज्ञानशकुन्तलम्*; (सम्पा.) सत्यनारायण चक्रवर्ती, पृ.७१

[13] *बृहदारण्यकोपनिषत्*; अतुलचन्द्र सेन, मन्त्रः २/१/२०।

[14] *श्रीमद्भगवद्गीता*; स्वामि प्रभुपाद, पृ. १०४।

[15] *कवित्रयम्*; मिनतिकरः, पृ. १७३।

[16] *स्वामिविवेकानन्देर कविता समग्र*; स्वामिसुपर्णानन्द, पृ.१५५।

[17] तत्रैव, पृ.१५६।

[18] *वेदान्तसारः*; पृ. ५ ।

[19] *कठोपनिषत्;* अतुलचन्द्र सेन, मन्त्रः १/२/१६

[20] *स्वामि विवेकानन्देर कविता समग्र*; स्वामि सुपर्णानन्द, पृ. १५३

[21] *तत्रैव.* पृ. १६२।

[22] तत्रैव, पृ. १६२।

[23] तत्रैव, पृ.१५८ ।

[24] *श्रीमद्भगवद्गीता*; स्वामि प्रभुपाद, श्लोकः३/२९ ।

[25] *वाणी ओ रचना* (षष्ठ खण्ड) ; स्वामी मुमुक्षानन्द, पृ.२६९ ।

[26] तत्रैव, पृ. २९७ ।

# समीक्षाचक्रवर्ती पण्डितमधुसूदनः

**प्रवीण-पण्ड्या**

मिथिलादेशे सम्प्रति च बिहारसंज्ञप्रान्तस्य मुजफ्फरपुरजनपदे गाढाग्रामे वैक्रमाब्दे 1923 तमे संवत्सरे भाद्रपदकृष्णाष्टम्यां तदनुसारेण ख्रिष्टाब्दे 1866 तमे वर्षे जनिं लेभे पण्डितमधुसूदनः। पिता वैद्यनाथ उत्तमकोटिको विद्वानासीत्। ज्येष्ठपितृव्यो राजीवलोचनोपि महान् विद्वान् जयपुरराज्ये च मानितो राजपण्डित आसीत्। अपुत्रस्यास्य राजीवलोचनस्य दत्तकपुत्रोऽभून्मधुसूदनः। मिथिलायां लब्धजन्मा समीक्षाचक्रवर्ती पण्डितोऽसौ बाल्य एव जयपुराभिजनोऽभवत्।

काशीपण्डितपरम्पराया महान् पण्डितः सर्वशास्त्रालोचनलोचनः शिवकुमारशास्त्री गुरुरस्य। अलवरराज्ये राजगुरोः चञ्चलनाथस्य पुत्र्या विवाहोऽस्य सम्पन्नः। काश्यां समाप्तशिक्षो जयपुरे महाराजसंस्कृतकॉलेजे संस्कृतविभागाध्यक्षत्वेन नियोजितोऽभवत्। तदन्तरेण च स पण्डितो राज्यस्य प्रधानामात्यस्य कान्तिचन्द्रबन्दोपाध्यायस्य नवनिर्मिते गृहे समायोजिते स्वाध्याययज्ञे वाल्मीकिरामायणप्रवचने श्लोकार्थोद्घाटनप्रतिभया जयपुरमहाराजस्य सम्मानपात्रमभूत्। प्राध्यापनान्मुक्त्वा स महाराजस्य निजवर्गे सदस्यत्वेन नियोजितः। ततश्च जयपुरराज्यग्रन्थालयस्य 'पोथीखाना' इत्यभिधस्याध्यक्षत्वेन नियुक्तोऽभूत्। ख्रिष्टाब्दे 1902 तमे वर्षे एडवर्डसप्तमस्य राज्यारोहणसमारोहे भागं निर्वोढुं लन्दनं गतो महाराजो मधुसूदनेन सह। तत्र च प्राच्यविद् मैक्डोलनो दृष्टो मधुसूदनपण्डितेन। ख्रिष्टाब्दे 1905 तमे वर्षे प्रयागकुम्भे 1906 तमे च वर्षे काश्यां काङ्ग्रेसाधिवेशने जयपुरनरेशप्रतिनिधित्वेन भागमग्रहीत्।[1] ख्रिष्टाब्दे 1939 तमे वर्षे दिवङ्गतो महानयं भारतविद्याविचक्षणः।

समुद्र इवापारो गम्भीरश्च पण्डितमधुसूदनओझापादानां सारस्वतसंसारः। मधुसूदनवागमृतम् इति तद्ग्रन्थसंहितासम्पादकेन विदुषा डॉ. ए. एस. रामनाथन् महानुभावेन द्वादशसु विभागेषु तद्ग्रन्थाः परिचायिताः

**I. वेदवेदाङ्गसमीक्षा**

1. वेदसमीक्षा
2. वर्णसमीक्षा
3. छन्दस्समीक्षा
4. पथ्यास्वस्ति
5. वैदिककोशः
6. वेदधर्मव्याख्यानम्
7. निगमबोधः
8. व्याकरणविनोदः

**II. दिव्यविभूतिः**

9. इन्द्रविजयः
10. जगद्गुरुवैभवम्
11. स्वर्गसन्देशः
12. महर्षिकुलवैभवम्-1
13. महर्षिकुलवैभवम्-2
14. दशवादरहस्यम्

**III. उक्थवैराजिकम्**

15. सदसद्वादः
16. रजोवादः
17. व्योमवादः
18. अपरवादः
19. आवरणवादः
20. अम्भोवादः
21. अमृतमृत्युवादः
22. अहोरात्रवादः
23. दैववादः

**IV. आर्यहृदयसर्वस्वम्**

24. ब्राह्मणहृदयम्
25. उपनिषद्हृदयम्

**V. ब्रह्मविज्ञानम्**
**(भगवद्गीताभाष्यम्)**

26. .शास्त्ररहस्यकाण्डः
27. .आचार्यरहस्यकाण्डः
28. .शीर्षकाण्डः

**शारीरकविज्ञानम्**

29. प्रथमो भागः
30. द्वितीयो भागः
31. ब्रह्मसिद्धान्तः
32. संशयतदुच्छेदवादः
33. शारीरकविमर्शः
34. विज्ञानविद्युत्
35. ब्रह्मविज्ञान
( हिन्दीभाषायाम्)
36. ब्रह्मचतुष्पदी

37. ब्रह्मसमन्वयः
38. ब्रह्मविनयः

**VI. पुराणसमीक्षा**

39. पुराणोत्पत्तिप्रसङ्गः
40. मन्वन्तरनिर्धारः
41. वैज्ञानिकोपाख्यानम्
42. देवासुरख्यातिः
43. माधवख्यातिः
44. अत्रिख्यातिः
45. राघवख्यातिः
46. पुराणनिर्माणाधिकरणम्

**VII. यज्ञमधुसूदनः**

47. यज्ञसरस्वती
48. स्मार्तकुण्डाध्यायः
49. यज्ञोपकरणाध्यायः
50. यज्ञविटपाध्यायः
51. कर्मानुक्रमणिकाध्यायः
52. आधिदैविकाध्यायः
53. आध्यात्मिकाध्यायः
54. छन्दोऽभ्यस्ता

**VIII. निवित्कलापः**

55. देवतानिवित्
56. सत्यनिवित्
57. आत्मनिवित्
58. वेदनिवित्
59. भूतनिवित्
60. वैश्वरूपनिवित्
61. प्रयोगपारिजातः
(द्वादशाधिका ग्रन्था विभागेऽस्मिन् प्रणीताः। तेष्वेको ग्रन्थो निरूढपशुबन्धो मुद्रित)

**IX. प्रयोगपारिजातः**

**X. विविधाः**

62. सन्ध्योपासनरहस्यम्
63. वस्तुसमीक्षा
64. पञ्चभूतसमीक्षा
65. प्रत्यन्तप्रस्थानसमीक्षा

**XI. विविधाः ( येऽनुपलब्धाः)**

66. धर्मसमीक्षा
67. यज्ञसमीक्षा
68. श्राद्धसमीक्षा

**XII. आगमरहस्यम्**

(120 ग्रन्था अस्मिन् शीर्षके नाम्ना सन्ति, न चोपलब्धाः)

(2)

द्विधारं परम्परं भारतं राष्ट्रम्। निगमागमाभ्यां तद्वेदश्चकास्ति भारतवेद इति संज्ञयितुशक्यः। भारतवेदप्रसृते स्तो द्विधारे निगमागमाख्ये। कामं, नोपलभ्यते मधुसूदनओझासमीक्षाचक्रवर्तिना समीक्षित आगमविचारो नास्ति च स नः पुरतः प्रकाशितः सम्प्रति, परं स आगमनिगमतटान्ताभ्यां रक्षितां प्रवहमाणां च भारतस्य भारतीं सम्यगजानात्। निगमव्याख्यानेऽपि तदागमाधीतिर्द्रष्टुं शक्यते। असौ निगमे व्यापकफलकं प्रसार्य यमाकारं लिखति, स सर्वसमाहारसमृद्धो भारतभारतीरूपाकार एव। वेदवेदाङ्गसमीक्षायां वर्णसमीक्षा शिक्षावेदाङ्गे, छन्दस्समीक्षा छन्दोवेदाङ्गे, व्याकरणविनोदो व्याकरणवेदाङ्गे चेति प्रणीताः। न वैदिकानां कश्चनैको दार्शनिकः सिद्धान्त एवासीत्, परं तेषु प्रसिद्धानां दशानां वादानां पर्यालोचनात् समुद्भूतस्सिद्धान्तः। ते च वादाः केऽभूवन्निति नासदीयसूक्तं प्रमाणम्। तान् वादान् विवरितुं मधुसूदनओझावर्येण प्राणीयन्त सदसद्वादो रजोवादो व्योमवादोऽपरवादः आवरणवादोऽम्भोवादोऽमृतमृत्युवादो-ऽहोरात्रवादो दैववाद इतिनामानो ग्रन्थाः। वैदिका दार्शनिका वादाः पूर्वपक्षा वा ग्रन्थैरेभिः प्रकाशिताः। तदुत्तरपक्षः किमुत सिद्धान्तो ब्रह्मविज्ञाने प्रणीता ग्रन्था वर्तन्ते। समीक्षाचक्रवर्तिना मधुसूदनओझावर्येण प्रणीते भगवद्गीताभाष्य-शारीरकविज्ञाने ब्रह्मसिद्धान्त-ब्रह्मचतुष्पदी-ब्रह्मसमन्वय-ब्रह्मविनयादयश्च ग्रन्था वैदिकानां सिद्धान्तभूतस्य ब्रह्मणो विज्ञानमस्ति। ब्रह्मेति वैदिकानां सिद्धान्तपक्षो विज्ञानं वा। इतिहासपुराणौ न वेदविरुद्धावपितु वेदोपबृंहणप्रयोजनौ इति प्रतिपादनधिया पुराणसमीक्षायां पुराणोत्पत्तिप्रसङ्ग-मन्वन्तरनिर्धार-वैज्ञानिकोपाख्यान-देवासुरख्याति-माधवख्यात्यत्रिख्याति-राघवख्याति-पुराणनिर्माणाधिकरणसंज्ञका ग्रन्था रचिताः। वैदिकज्ञानपरम्पराया विवरणाय ब्राह्मणहृदयमुपनिषद्हृदयं च निर्मिते। यज्ञो वैदिकी संस्था। सा च त्रिविधा। आध्यात्मिकी आधिदैविकी च सा ज्ञानविज्ञानयोर्विषया। प्रयोगविषया च साऽधिभौतिकी। तत्परिज्ञानाय यज्ञमधुसूदनाख्ये विभागे यज्ञसरस्वती-स्मार्तकुण्डाध्याय-यज्ञोपकरणाध्याय-यज्ञविटपाध्याय-कर्मानुक्रमणिकाध्याय-आधिदैविकाध्याय-आध्यात्मिकाध्याय-छन्दोऽभ्यस्तेति ग्रन्थाः कृताः।

इन्द्रविजयो वेदेषु विवृतस्येतिहासस्य संकलनं व्याख्या च। जगद्गुरुवैभवञ्च भारतीयजातेर्विषये प्राच्यविदां मतान्यालोच्य भारतीयः पक्ष उपस्थापितः।

मौखिकपरम्परया रक्षणाद्वेदाः श्रुतिपदवाच्याश्चेन्नेति माधुसूदनो विमर्शः। का नाम श्रुतिरिति पदार्थः शारीरकविमर्शे स्पष्टीकृतः—''तथा चेदं चाक्षुषं ज्ञानमशाब्दी दृष्टिः। श्रुतिस्त्वेषा शाब्दी दृष्टिः। इत्येवं द्वे प्रत्यक्षे। अथ स्मृतिरेषा शाब्दस्तर्कः, युक्तिस्त्वशाब्दस्तर्क इत्येवं द्वे अनुमाने''[2] इत्थं योरोपीय-प्राच्यायनपरम्परोत्थापितानां भ्रमान् निरस्यति। आर्याणां बहिर्देशादागमानादयो वादा इन्द्रविजये जगद्गुरुवैभवे च साध्वपास्ताः।

प्राचीनेषु साहित्येषु प्रयुक्ता बहवः शब्दा विचाराश्च तदुत्तरवर्तिभिः शब्दैर्विचारैः सङ्करतामवाप्य स्वार्थाच्च्युताः। तदर्थानां पुनः सन्धानं सप्रमाणं मधुसूदनओझावर्योऽकरोत्। पुनःसन्धानमिदं भारतीयपरम्पराया वास्तवार्थस्य अस्ति। त्रैलोक्यं वेदेषु प्रसिद्धम्। तच्च न केवलमाकाशान्तरिक्षपृथिवीनामेव त्रैलोक्यम्। आकाशान्तरिक्षाभ्यां परं पृथिवीति चिन्तयतां या काचिदुपरिमध्याऽधोदिगाश्रिता दृष्टिरवैज्ञानिकी, सैव वैदिकी त्रिलोकी नास्ति। बहुविधेयं त्रिलोकी वेदेषु वर्णिता। दिव्यशारीरभौमभेदात् सा त्रिलोक्यपि त्रिधा। रघुवंशीया यं स्वर्गं समगच्छन्, स स्वर्गो भूमौ स्थितो भौमस्वर्गः। भूमेस्त्रयो भागाः पृथिवीस्वर्गपातालसंज्ञकाः। पृथिवीसंज्ञकायां भूमौ रघुवंश्या आसन् स्वर्गसंज्ञकायां च भूमौ भौमा देवाः। रूस-तातारदेशयोर्भौमस्वर्गत्वम्, तत्रैव च गतित्वाद् रघुवंश्या आनाकरथवर्त्मान आसन्। रूसस्य साइबीरियाख्यप्रदेश इन्द्रस्य विष्टप आसीत्—

क्षुद्रैशियान्ततः प्राक् चीनात् प्रत्यक् तु विष्टपं ब्राह्मम्।
सर्कैशियादिपश्चिमरूसप्रान्तोऽत्र विष्टपं विष्णोः।। 20।।
आसीद् विष्टपमैन्द्रं प्राग् रूसः सायिवीर्य्याख्यः।
इत्थं प्रसिध्यति स्म त्रिविष्टपं स्वर्गलोकोऽसौ।। 21।।[3]

त्रिविष्टपो नाम स्वर्गस्य पर्याय इति परिचायन्ति कोशकारा वैयाकरणाश्च त्रयो विष्टपा यत्रेति त्रिविष्टप इति वक्तुं प्रभवेयुः कामं, परं वैदिकेतिहासज्ञानाभावे तद्वास्तवार्थो न व्यक्तीभवेत्। रूसदेश एव पुराणेषु काव्येषु च ख्यापितः स्वर्गः। स्वर्गो न काल्पनिकः, परं वास्तविको भूमावेव तत्स्थितेः—

यावानद्य स रूसस्तावानखिलः पुराऽभवत् स्वर्गः।
अपराजिता दिगेषा यो देशः सायिवीरिया नाम।। 22।।[4]

ब्रह्मा विष्णुरिन्द्रश्चेति त्रयो देवेश्वराः स्वर्गस्य। एशिया माइनर इति ब्रह्मविष्टपः। एकोऽपि स्वर्गो ब्रह्मलोकविष्णुलोकेन्द्रलोकैस्त्रिविधतां गत आसीत्। इतिहासे या त्रिलोकी सा भूमौ स्थिता भौमत्रिलोक्येव ज्ञेया विज्ञाने च या त्रिलोकी सा दिव्येति भौमदिव्यत्रैलोक्ययोर्विवेकः। रूसः स्वर्गो भारतवर्षं च पृथिवी —

दिवमधिजगुर्बुधा यां पूर्वयुगे सा बभूव वसुधायाम्।
उत्तरमेरौ स्वर्गस्तत्र स वसति देवतावर्गः।। 1।।
दक्षिणतः प्राग् मेरोरिरावतीनिर्गमाद् गिरेस्तूदक्।
अयमन्तरिक्षलोको वसतिः सा देवयोनीनाम्।। 2।।
देशो य उदक् विषुवत इरावतीनिर्गमाद् गिरेस्त्ववार्क्।
तदिदं भारतवर्षं पृथिवीलोकस्त्रिलोक्यां सः।। 3।।[5]

रूसदेशीया देवसंज्ञका भारतदेशीयाश्च मनुष्यसंज्ञका इति माधुसूदनं मतम्। मनुष्यस्तन्नाम भारतीय इति विज्ञाय भारतीयसाहित्यस्यालोचनं विशिष्टं स्यात्। देवा मनुष्या अदेवा इति भूलोकनिवासिनस्त्रिधाऽभवन्। अदेवाश्चतुर्विधा अभूवन्—

अखिला नराः पुरात्वे त्रेधा भिन्नाः प्रधानतो ह्यभवन्।
देवा अथ च मनुष्या देवविरोधात् त्वदेवाश्च।। 1।।
अत्युन्नविज्ञानाः प्रभाववन्तोऽभवन् देवाः।
विज्ञानदुर्बला अपि बहुलप्रज्ञा महाबला असुराः।। 2।।
साधारणी तु जनता मनुष्यनाम्ना प्रतीताऽऽसीत्।

तत्रादेवा आसन् दानवा दैत्याश्च दस्यवः पणयः।। 3।।
अफरीकाद्या देशा दैत्यानां दानवानां च।
फीनीशिया पणीनां दस्यूनां हेमकूटाद्याः।। 4।।[6]

आसुरलोकोऽपि त्रिधा विभक्त आसीत्—

दायविभागे ब्रह्मा देवेभ्यस्त्रीन् ददौ यथा लोकान्।
तद्वत् त्रीनसुरेभ्योऽप्यन्यान् देशान् ददौ बृहतः।। 1।।
विपुलास्त्रयः प्रदेशा असुरेभ्यो येऽर्पितास्ते तु।
अमरौकाऽपरौको यवरूपश्चोदिता असुरैः।। 2।।[7]

अमरौक एवाऽमेरिका, अपरौकश्चाऽफ्रीका यवरूपश्च योरोपः कथ्यन्ते। इत्थं वैदिकी वर्तमानकालिकी च भौगिलिक्यौ स्थिती मधुसूदनओझा परिचाययति। देवानां कैः कैः सह केभ्यः केभ्यः सङ्ग्रामाः किंनामानश्च कश्च तेषामितिहास इति साधु प्रत्यपादि तेन।

भारतवर्षस्य च द्वेधा विभाग आर्यावर्त आर्यायणश्च। पौर्वात्यभारतदेश आर्यावर्त आर्यायणश्च पश्चिमभारतदेशः। प्राच्यभारतम् इन्द्राय प्रतिपादितं प्रतीच्यभारतं च वरुणाय—

प्राच्यं भारतमैन्द्रं सिन्धुस्थानं तदेताख्यतम्।
पश्चिमभारतमुक्तं पारस्थानं तु वारुणं तदभूत्।। 22।।[8]

पारस्थानं नाम फारसः। आर्यायणो नाम ईरानः। भागद्वयवासिनो भारतीयाः। तेषु च भारतीयेषु पूर्वभारतनिवासिन एव हिन्दुपदवाच्याः। सर्वतः प्रथमं पारसीकजातेः दसातीरनामके ग्रन्थे हिन्दुरिति पदं प्रायुङ्क्त।[4]

भूमिवासिषु नरेषु भारतीया एव मनुष्याः—

यावान् मनुष्यलोकः सा पृथिवी तच्च भारतं वर्षम्।
तत्र च मनुष्यशब्दः पृथिवीशब्दश्च लाक्षणिकः।। 5।।[9]

मनुश्च भरतः। भरतपुत्रा मनुपुत्रा एव भारतीया इति कश्चन नूतनो विचारसन्दोहः। स्वामिदयानन्दसरस्वतीपादैर्हिन्दुसंज्ञाया यो निषेधः कृतस्तस्य एवोत्तरमत्र शिवकुमारशास्त्रिणां शिष्यो मधुसूदनओझावर्यः प्रादात्। इन्द्रविजय इति ग्रन्थस्याऽपरसंज्ञैवास्ति—भारतवर्षीयार्योपाख्यानम्। वैदिक इतिहासपक्ष साधित इन्द्रविजयजगद्गुरु-वैभवाऽत्रिख्यातिप्रभृतिग्रन्थेषु। वेदमन्त्रेषु वर्णितम् इतिहासं विज्ञातुं विवरीतुं च मधुसूदनओझावर्य्याणां कृतयः सन्दर्भग्रन्थायन्ते।

दशं वादान् वेदेषु कल्पयित्वा ब्रह्मवादं सिद्धान्तं प्रदर्श्य प्रवर्तते समीक्षाचक्रवर्ती। ब्रह्मसिद्धान्तनामके ग्रन्थे सर्वोऽपि नैगमागमविचारपारावारः कुम्भायितः। बलरसयोर्वैदिकं तत्त्वं स्फोरयन् दार्शनिकविचारसम्प्रदायानां सकलमपि विचारोत्थवस्तु निर्मथ्नाति—

पुनः समाजे विदुषां त्रिधाऽभवंस्तर्कक्रमे विप्रतिपत्तयः।
आस्ते बलं नास्ति रसोऽथवा बलं बीजं न बीजं तु रसो रसोऽथवा।।
व्यक्तिं यदव्यक्तमुपैति तस्मादाभाति विश्वं ह्यचरं चरं च।
देही च नात्मा पृथगस्ति तस्मादव्यक्ततोऽन्यः सुगता वदन्ति।।
अव्यक्ततोऽन्यः पुरुषः स आत्मा पृथग्विधोऽस्त्यक्रियनिर्विकारः।
सचेतनोऽव्यक्तजडस्थितः सन् भोक्ता न कर्ता कपिलोक्तिरेषा।।
यः प्रत्ययो या प्रकृतिस्तदेतौ भिन्नौ भवेतां हि पृथक्स्वभावौ।
यतोऽस्य सत्ता प्रकृतिर्मता सा स प्रत्ययो येन तु भातिरस्य।।
क्षेत्रज्ञ आत्मा पुरुषो मतस्तैरव्यक्तरूपा प्रकृतिर्हि यस्य।
परोऽक्षरो वा न च दृश्यते तैरव्यक्तमेवाक्षरसंज्ञमाहुः।। 39-44।।[10]

इत्थं सर्वेऽपि रसबलयोर्वैदिकप्रत्यययोरोलाके दार्शनिकाः सम्प्रदाया मीमांसिता वेदसंहितोक्तमन्त्राणां प्रामाण्येन च सिद्धान्तो निरूपितः। अशनाया, ईट्, ऊर्क् चेति परवर्तिषु दर्शनेषु कैः शब्दैरुक्ता इति मधुसूदनमहाभागाः स्पष्टयन्ति। वेदा एव परवर्तिषु साहित्येषु प्रवर्तन्त इति कश्चन दुर्लभोऽनुभवाधिगमो माधुसूदनसाहित्यादाप्यते। विच्छिन्नतया व्याख्याताश्छन्दोब्राह्मणारण्यकोपनिषदो माधुसूदन्यां व्याख्यायां सङ्गत्यैकवाक्यतां गताः प्रकाशन्ते—

रसोऽमृतं ब्रह्म बलं तु मृत्युः कर्मेति सामान्यतया यदुक्तम्।
तयोः पुनर्ब्रह्म निरूपितं प्रागतः परं कर्म निरूपणीयम्।। 1।।
आत्मा यथा ब्रह्मतयेष्यतेऽयं शक्तिस्तथा ब्रह्मतयैव वेद्या।
ब्रह्म द्विधोदेति वृषा च योषा योषैव शक्तिर्नु वृषा स आत्मा।। 8।।[11]

ब्राह्मणेषु योषा वृषा चोक्ते शैवशाक्तागमेषु च शिवः शक्तिश्च कथिते वस्तुतो वैदिके रसबले इति।

त्रयी च केति बहुधा बहुप्रकारैशश्च ओझामहाभागा व्याख्यातवन्तः। घनतरलविरलावस्था वेदेषु ध्रुवधर्त्रधरुणपदवाच्याः। मूर्तिगतिमण्डलानाम् ऋग्यजुस्सामत्वम्। विज्ञानमपि वेदस्य विस्तरेण सप्रमाणमेभिर्व्याख्यातम्। ऋषिगन्धर्वासुरदेवादेर्जातिमात्रसंज्ञाने ह्येव पर्यवसानं परं विज्ञानस्य संज्ञारूपेणापि ते प्रयुज्यन्ते। वसिष्ठादयः प्राणा अपि सन्ति, इतिहासप्रसिद्धाश्च पुरुषा अपीति वैदिकवाङ्मयस्य व्याख्याने सर्वतोभद्रप्रासादो निर्मित इति दिङ्मात्रमेवात्र सूच्यम्।

### सहायकग्रन्थपञ्जी

*मधुसूदनवागमृतम्*, प्रथमखण्डः, सम्पादकः डॉ. एएस् रामनाथन्, पण्डितमधुसूदनओझा वैदिक अध्ययन एवं शोध पीठ संस्थान, जयपुर, 2009.

………………, पञ्चमः खण्डः, प्रथमो भागः, सम्पादकः डॉ. एएस् रामनाथन्, पण्डितमधुसूदनओझा वैदिक अध्ययन एवं शोध पीठ संस्थान, जयपुर, 2009.

*इन्द्रविजयः*, मधुसूदनओझा, प्रकाशकः पण्डितमधुसूदनओझा-शोधप्रकोष्ठः, संस्कृतविभागः, जयनारायण-विश्वविद्यालयः, जोधपुरम्, 1997.

*ब्रह्मसिद्धान्तः*, गिरिधरशर्मचतुर्वेदकृत-सिद्धान्तप्रकाशिकाटीकासहितः, काशीहिन्दूविश्वविद्यालयः, 1961.

## तथ्यसूत्राणि

---

[1] *पण्डित मधुसूदन जी ओझाः एक परिचय*, पण्डितगोपालनारायण बहुरा, (व्योमवाद इति संज्ञके मधुसूदनओझा-रचितग्रन्थे जयनारायण-विश्वविद्यालयजोधपुरस्थेन पण्डितमधुसूदन ओझा-शोधप्रकोष्ठेन प्रकाशिते पृष्ठाङ्काः—अ-ढ

[2] *मधुसूदनवागमृतम्*, पञ्चमः खण्डः, प्रथमो भागः, सम्पादकः डॉ. एएस् रामनाथन्, पण्डितमधुसूदनओझा वैदिक अध्ययन एवं शोध पीठ संस्थान, जयपुर, 2009, पृष्ठाङ्काः—126

[3] इन्द्र*विजयः*, मधुसूदनओझा, प्रकाशकः पण्डितमधुसूदनओझा-शोधप्रकोष्ठः, संस्कृतविभागः, जयनारायण-विश्वविद्यालयः, जोधपुरम्, 1997, पृष्ठाङ्काः—6

[4] तत्रैव

[5] तत्रैव, पृष्ठाङ्कः - 9

[6] तत्रैव, पृष्ठाङ्कः - 263

[7] तत्रैव, पृष्ठाङ्कः - 274

[8] तत्रैव, पृष्ठाङ्कः - 90

[9] तत्रैव, पृष्ठाङ्कः - 10

[10]*ब्रह्मसिद्धान्तः*, गिरिधरशर्मचतुर्वेदकृत-सिद्धान्तप्रकाशिकाटीकासहितः, काशीहिन्दूविश्व-विद्यालयः, 1961, तृतीयाधिकारः, मूलबलाधिकरणम्, पृष्ठाङ्काः 146,

[11] तत्रैव, पृष्ठाङ्काः 139

## प्रधानाचार्यः पण्डितयमुनाप्रसादत्रिपाठी

**प्रो. रामकृष्णपाण्डेयः 'परमहंसः'**

भारतीयसंस्कृतेः सभ्यतायाः संस्कृतवाङ्मयस्य च सुषमासम्वर्द्धने भारतदेशस्य पूर्वभागस्थितप्रदेशानामवदानं सर्वथाविस्मरणीयमस्तीति सुविदितचरमिव समेषां सुधियाम्। तत्रापि बिहारप्रदेशोद्भवानाम् ऋषिकल्पानां संस्कृतमनीषिणां योगदानं वैदिककालमारभ्य अद्यावधि निरन्तरं भजतेऽतीव-महत्त्वपूर्णं स्थानम्। आदिकविवाल्मीकि-गौतम-याज्ञवल्क्य- विश्वामित्र-राजर्षिजनक- जगज्जननीजानकी-कपिल-कणाद-पाणिनि-पतञ्जलि- चाणक्य-आर्यभट्ट-जीवक-मण्डनमिश्र-भारती-बुद्ध-महावीर-वाचस्पतिमिश्र-चण्डेश्वर-कुमारिलभट्ट-विद्यापति-देशरत्नडॉ० राजेन्द्रप्रसाद-सर्वतन्त्र स्वतन्त्र म.म. रामावतार शर्मा- डॉ० सर गङ्गानाथझा प्रभृतयः शताधिक मनीषिणः बिहारराज्यस्य परमपुनीतधरायामवतीर्णाः इति नास्त्यविदितं विदुषाम्। गीर्वाण्याः समुपासकैरेभिर्मनीषिभिः निजविलक्षणप्रतिभावलेन पाण्डित्यप्रकर्षेण च निजानुपमसारस्वतकृतिभिः अवदानैश्च भारतीयसंस्कृतेः समस्तसंस्कृतवाङ्मयस्य च विविधशास्त्राणां वैदिकवाङ्मय-पुराणेतिहास-धर्मशास्त्र-दर्शन-ज्योतिष-कर्मकाण्ड-आयुर्वेद-अर्थशास्त्रादिविविधविद्यानां समृद्धये श्रीवृद्धये च विलक्षणग्रन्थान् विरच्य विश्वस्मिन्नपि विश्वे सुरभारत्याः सुषमा सुतरां सम्वर्धिता। प्राचीनभारतस्य प्रसिद्धशिक्षाकेन्द्रभूतौ नालन्दाविश्वविद्यालयः विक्रमशिलाविश्वविद्यालयश्च विहारराज्ये एव स्थितौ भारतवर्षस्य गौरवं सम्वर्धितवन्तौ इत्यपि जानन्त्येव समेपि सुधियः।

न केवलं प्राचीनकाले एव अपितु साम्प्रतिककालेऽपि बिहारराज्ये सारस्वतसाधनायाः अजस्रधारा परम्परा च निरन्तरमविच्छिन्नरूपेण प्रवहमाना दृग्गोचरी भवति। अस्यामेव परम्परायां न केवलं बिहारराज्येऽपितु समस्तेऽपि भारतवर्षे परमप्रसिद्धिमाप्ताः विश्रुताः धर्मशास्त्रिणः पौराणिकाश्च प्रधानाचार्याः विद्वदग्रगण्याः पं. यमुनाप्रसादत्रिपाठिनः भजन्ते अतीव महत्वपूर्णं स्थानम्। अद्यापि

तेषां शताधिकाः शिष्याः प्रशिष्याश्च भारतवर्षस्य विविधविद्यापीठेषु विश्वविद्यालयेषु च स्मृतिसाहित्यस्य पुराणसाहित्यस्य च अध्ययने, अध्यापने, प्रचारे, प्रसारे च निरन्तरं संलग्नाः दृष्टिपथमायान्ति।

त्रिपाठिमहोदयाः 1943 विक्रमाब्दे श्रावणकृष्णाष्टम्यां तिथौ शनिवासरे (24.07.1886 ईश्वीयाब्दे) बिहारराज्यस्य सिवानमण्डलान्तर्गते महाराजगंजानुमण्डलस्थे 'तक्कीपुर' (तर्किपुरम्) ग्रामे साक्षाद्देवीरूपायां श्रीरामझरीदेव्यां परमभागवतात् पं. रामगोविन्दत्रिपाठिनः जनिमलभन्त। एतेषां पितामहाः पण्डितरामलग्नत्रिपाठिनः, प्रपितामहाः पण्डितचिन्तामणित्रिपाठिनः, वृद्धप्रपितामहाः पण्डितजयकरणत्रिपाठिनः, अतिवृद्धप्रपितामहाः पण्डित-मान्धातात्रिपाठिनः, वृद्धातिवृद्धप्रपितामहाः पण्डितघुरहूत्रिपाठिनः च सर्वेऽपि ऋषिकल्पाः वेद-धर्मशास्त्र-पुराणादिविषयेषु निष्णाताः विद्वांसः आसन्। एतेषां पितामही श्रीशुकीदेवी, जननी श्रीरामझरीदेवी, धर्मभार्या श्रीरामसुमेरी देवी, पुत्रवधू श्रीराजलग्नीदेवी च सर्वाः परमधर्मपरायणाः आसन्।

'ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे'- इति मनुवचनानुसारं पञ्चमवर्षे कृतोपनयनाः इमे अयोध्यानगर्य्यां स्थिते 'सरयूवाग-संस्कृतविद्यालये' विश्रुताध्यापकानां निजग्रामनिवासिनाम् अग्रजकल्पानां पण्डितरामाज्ञात्रिपाठिनां सन्निधौ ब्रह्मचारिरूपेण स्थिताः द्वादशवर्षाणि यावत् न्याय-वेदान्त-व्याकरणादिशास्त्राणां विशिष्टमध्ययनं कृतवन्तः। किन्तु सप्तदशवर्षावस्थायामेव डुमराँवनरेशस्य श्रीहरिसिंहदेवस्य कुलगुरुणां एतेषां पितृचरणानां पण्डितरामगोविन्दत्रिपाठिमहोदयानां चत्वारिंशत्तमे एव अल्पे वयसि (1903 तमे खृष्टाब्दे) आकस्मिक-महाप्रयाणात् एतेषां स्वाध्याये महती बाधा समजनि | किन्तु उपस्थितेऽपि अध्ययनविघ्ने समस्तं गृहकार्यभारं वहन्तः, पुत्रशोकात् अन्धत्वमापन्नानां पितामहचरणानां च सुश्रूशां सम्पादयन्तः इमे 1916 तमखृष्टाब्दं यावत् गृहे एव निवसन्तः स्वविलक्षणप्रतिभाबलेन स्वतन्त्ररूपेण बङ्गीयसंस्कृत-समितेः स्मृति-पुराण-व्याकरण-वेदान्त-सांख्ययोगादिशास्त्रेषु तीर्थोपाधिम् अधिगतवन्तः। एतन्मध्ये एव इमे पाटलिपुत्रे अवस्थाय पण्डितपञ्चाननात् महामहोपाध्यायपण्डितहरिहरकृपालुमहोदयाद्वेदान्तशास्त्रमधीतवन्तः ।

तत्रैव प्राच्यप्रतीच्योभयविद्यानिष्णातेभ्यः अलौकिकप्रतिभासम्पन्नेभ्यः म.म. पण्डितरामावतारशर्म्मिमहानुभावेभ्यः काव्यशास्त्रं काव्यरचनाकौशलं च अधिगतवन्तः। तेषाम् अन्तेवासिसंसदि दर्शित-निजविलक्षणप्रतिभाकाः इमे परमप्रसन्नेभ्यः तेभ्यः सरस्वतीयन्त्ररहस्यमभ्यगच्छन्। तत्प्रभावात् प्रत्युत्पन्नमतयः इमे महाभागाः परनिर्दिष्टविषयानुसारं पदसङ्केतितकोष्ठेषु एकमेकमक्षरं विन्यस्य तत्क्षणमेव विनाविलम्बं नूतनश्लोकरचनां विधाय सुधीसमुदायं चमत्कुर्वन्ति स्म। सर्वतोभद्र-गोमूत्रिकाबन्धादिचित्रकाव्य-रचनायामपि परमप्रवीणाः इमे काव्यजगति महद्यशः अवापुः। निसर्गतः विलक्षणाशुकवयः एते विविधविद्वद्गोष्ठीषु आर्या-वंशस्थ-भुजङ्गप्रयातादि-छन्दांसि आधृत्य संस्कृतपद्यमयभाषणं धाराप्रवाहरूपेण प्रस्तूय श्रोतृवर्गं चमत्कृतं विमुग्धं च विधाय प्रभूतं यशः अवापुः।

बङ्गप्रदेशात् बिहारप्रदेशस्य विभाजनानन्तरं 1917 तमे ईश्वीयाब्दे जनवरीमासे नवस्थाप्यमाने मुजफ्फरपुरनगरस्थिते बिहारोत्कलप्रदेशस्य एकमात्रराजकीय धर्मसमाजसंस्कृतमहाविद्यालये धर्मशास्त्र-पुराणप्राध्यापकपदे संस्थापकाध्यापकत्वेन ससम्मानम् आमन्त्रिताः नियुक्ताश्च । तत्र इमे महाभागाः प्रायः सप्तविंशतिवर्षाणियावत् शास्त्राण्याध्यापयन्तः शताधिकान् सुयोग्यशिष्यान् अध्याप्य 1944 तमें ईश्वीयाब्दे जून मासे राजकीयसेवातो पूर्णावकाशं लब्धवन्तः। स्वसेवावधौ बिहारसंस्कृतसमितिनिदेशकेन पण्डितईश्वरदत्तदुर्गादत्तशास्त्रि-महाभागेन संस्कृतसमितेः मान्यस्थायिसदस्यत्वेन नियोजिताः इमे निजप्राशासनिककौशलेन संस्कृतसाहित्यस्य गौरवं नितरां सम्वर्धितवन्तः। पाटलिपुत्रस्थबिहारसंस्कृतसञ्जीवनसमाजस्य मान्याध्यक्षैः डॉ. तारापदचौधरीमहाभागैः सम्मानिताः। किञ्च बिहारराज्यस्य राज्यपालेन श्रीहरिमाधव अणेमहाभागेन **'प्रधानाचार्य'** इत्युपाधिना इमे अलङ्कृताः सभाजिताश्च।

त्रिपाठिमहोदयानां विलक्षणवैदुष्यविद्यासेवाभिः परितुष्टः बिहारराज्यपालः पूर्णावकाशप्राप्त्यनन्तरं पुनरपि 1954 तमे ईश्वीयाब्दे विश्वविश्रुते दरभङ्गास्थमिथिला संस्कृतशोधसंस्थाने सोपायनमेनं तत्र शास्त्रीयान्वेषण-कार्यकर्तृभ्यो (Research Scholar). प्राध्यापकेभ्यः च शास्त्रीयमार्गदर्शनप्रदानेन

साहाय्यमाचरितुं नियुक्तवान्। तत्र शोधसंस्थाने सम्मानितपरम्परागताचार्यरूपेण (Tradltlonal Scholar) अध्यापयन्तः इमे म.म. उमेश मिश्र- डॉ. पी.एल. वैद्य- डॉ. शीतांशुशेखरवागची- डॉ. बी. आर. शर्मा- डॉ. अनन्तलालठाकुर-डॉ. शोभाकान्तजयदेवझा-प्रभृति-तत्कालीननिदेशकवर्गस्य परमसम्मानभाजः विविधशास्त्रीयग्रन्थिभेदकत्वेन परमां प्रशंसां ख्यातिञ्चावापुः। गुरुवत् तेभिः सदैव पूजिताः इमे पण्डितवर्याः। जर्मनीदेशस्य विद्वान् श्रीहैकरः, फ्रान्सदेशीयः भिक्षु आर्यदेवः, महामनीषी डॉ. अनन्तललाठाकुरादयः विद्वांसस्तु प्रायेण एतेषाम् आवासगृहमागत्य प्रणिपत्य शिष्यवद् व्यवहरन्ति स्म।

दरभङ्गास्थमिथिलाशोधसंस्थाने एभिः शताधिकानां शोधकर्मनिरतानां, एम.ए. वर्गे अध्ययनरतानां च छात्राणाम् अध्यापनं विहितम्। तेषु केचन उल्लेखनीयाः विद्वांसः सन्ति-

(1) राष्ट्रपतिसम्मानितः श्रीनारायणमिश्रः, आचार्योध्यक्षचरश्च संस्कृतविभागः काशीहिन्दूविश्वविद्यालयः, वाराणसी।

(2) राष्ट्रपतिसम्मानितः डॉ. किशोरनाथ झा, गङ्गानाथझा केन्द्रीयसंस्कृत-विद्यापीठम्, आजादोद्यानम्, प्रयागराजः।

(3) राष्ट्रपतिसम्मानितः डॉ. त्रिलोकनाथ झा, पूर्व-कुलपतिः,कामेश्वरसिंह-दरभङ्गा-संस्कृतविश्वविद्यालयः, दरभङ्गा।

(4) राष्ट्रपतिसम्मानितः डॉ. महाप्रभुलाल-गोस्वामी, अध्यक्षः, दर्शनविभागः. सम्पूर्णानन्द संस्कृतविश्वविद्यालयः, वाराणसी।

(5) राष्ट्रपतिसम्मानितः प्रो. सुखेश्वरझा, आचार्योऽध्यक्षचरश्च, स्नाकोत्तर संस्कृत विभागः, भागलपुर विश्वविद्यालयः।

(6) डॉ. बाबूमिश्रः- पूर्वनिदेशकः, मिथिला-संस्कृत-शोधसंस्थानम्, दरभङ्गा।

त्रिपाठिपादानां शिष्यपरम्परायां अधःउल्लिखिताः विश्रुताः विद्वांसः भजन्ते उल्लेखनीयं स्थानम्-

(१) डॉ. रामकरण शर्मा- संस्कृतशिक्षापरामर्शदाता, भारतसर्वकारः, पूर्व-कुलपतिः, कामेश्वरसिंह-दरभङ्गा-संस्कृतविश्वविद्यालयः, दरभङ्गा, पूर्व-कुलपतिः- सम्पूर्णानन्द संस्कृतविश्वविद्यालयः, वाराणसी, अध्यक्षचरः विश्वसंस्कृतसमवायः, संस्थापक-निदेशकः राष्ट्रिय-संस्कृत-संस्थानम्, नवदेहली।

(२) विद्यावाचस्पतिः पण्डितभवानीदत्तशर्मा- पूर्वविभागाध्यक्षः, स्नातकोत्तर-वेदविभागः कामेश्वरसिंह-दरभङ्गा संस्कृतविश्वविद्यालयः, दरभङ्गा।

(३) विद्यावाचस्पतिः पण्डितरामकरणशर्मा- पूर्वप्राचार्यः, राजकीयधर्मसमाज-संस्कृत महाविद्यालयः, मुजफ्फपुरम् (बिहार)।

(४) राष्ट्रपतिसम्मानितः पण्डित केदारनाथत्रिपाठी- पूर्वदर्शन-विभागाध्यक्षः,काशी- हिन्दू-विश्वविद्यालयः, वाराणसी, काशी-विद्वद्परिषदः पूर्वाध्यक्षश्च।

(५) पण्डित चन्द्रदेवशर्मा- पूर्वपुराणविभागाध्यक्षः, कामेश्वरसिंह-दरभङ्गा संस्कृतविश्वविद्यालयः, दरभङ्गा।

(६) पण्डित गङ्गाधरशर्मा- पूर्वप्राचार्यः, राजकीयसंस्कृतमहाविद्यालयः भागलपुरम् (बिहार)

(७) पण्डित रामपदार्थशर्मा- निदेशकचरः, बिहारसंस्कृतसमितिः, पटना।

(८) पण्डित जानकीबल्लभशास्त्री पूर्वसाहित्यविभागाध्यक्षः, राजकीय धर्मसमाज संस्कृतमहाविद्यालयः मुजफ्फरपुरम् (बिहार)।

न केवलं संस्कृतभाषायामेव अपितु आङ्लभाषायामिप नितान्तं निष्णाताः इमे भाषाद्वयोपरि समानाधिकारसम्पन्नाः आसन्। विद्वद्सदसि धाराप्रवाहरूपेण आंग्लभाषामाध्यमेनापि निजभाषणेन इमे आङ्ग्लजनानपि चमत्कुर्वन्ति स्म। उच्च-न्यायालयेषु हिन्दूविधेः (H|ndu Law) जटिलसमस्यानां समाधानाय मार्गदर्शनाय च इमे आङ्गलन्यायाधीशैरपि बहुधा मुख्यपरामर्शदातृरूपेण ससम्मानं समामन्त्रिताः सम्मानिताश्च आसन्।

सम्पूर्णेऽपि भारतवर्षे अनेकदा धर्मशास्त्रीयसमस्यानां समाधानाय मार्गदर्शकत्वेन सादरमामन्त्रिताः इमे स्वशास्त्रीयपरामर्शैः विदुषां मार्गदर्शनं कृतवन्तः। यथा- दरभङ्गा-नरेशस्य श्रीकामेश्वरसिंहमहोदयस्य, भारतरत्नस्य महामना-पण्डित-मदनमोहन मालवीयस्य च तत्कालीन-आङ्ग्ल-सर्वकारस्य आमन्त्रणानुसारं विदेशयात्रावसरे अनयोः यात्रयोः शास्त्रीयताविषये एतेषां महोदयानां परामर्शः विद्वद्परिषदा गृहीतः। तदनुसारं च ताभ्यां विदेश (लन्दनयात्रा) यात्रा कृता।

स्वतन्त्रतान्दोलनकाले महात्मगान्धिना अहमदाबादनगरे साबरमती-आश्रमस्य, मौलानामजरूलहक्क द्वारा देवघरविद्यापीठस्य डॉ. भगवानदास द्वारा काशीविद्यापीठस्य आचार्यविनोवाभावे-द्वारा वर्धा-आश्रमस्य स्थापनया उत्साहं प्रेरणां च गृहीत्वा त्रिपाठिमहोदयैः पण्डितअम्बिकादत्तशर्ममहोदयेन सह मिलित्वा मुजफ्फरपुरनगरे गन्नीपुरग्रामे गुरुकुलशिक्षापद्धतिमनुसृत्य वेदधर्मशास्त्राणाम् अध्ययनाय **"लोकमान्यब्रह्मचर्याश्रम"**-संस्थायाः स्थापना कृता। अत्र वेदोपनिषदादिविविधशास्त्रैः सार्द्धं तत्रत्यब्रह्मचारिणां कृते देशभक्तेः राष्ट्रिय-स्वाभिमानस्य च प्रशिक्षणम् अनिवार्यमासीत्। आङ्ग्लशासकानां कोपभाजन-भूतादस्माद्-ब्रह्मचर्याश्रमाद् परश्शताः राष्ट्रभक्ताः भारतीय-संस्कृतिसमुपासकाश्च विश्रुतसंस्कृतमनीषिणः स्वतन्त्रतान्दोलने अपूर्वं सहयोगं कृतवन्तः। तेषु डॉ. रामकरणशर्मा, (पूर्व-संस्कृतशिक्षा-परामर्शदाता, भारतसर्वकारः, विद्या-वाचस्पतिः, पं. भवानीदत्तशर्म्मा, पूर्व-वेदविभागाध्यक्षः कामेश्वरसिंह-दरभङ्गा संस्कृतविश्वविद्यालयः, दरभङ्गा, विद्यावाचस्पतिः पं. रामकरणशर्म्मा, पूर्व-प्राचार्यः, राजकीयधर्मसमाजसंस्कृत-महाविद्यालयः, पण्डितचन्द्रदेवशर्म्मा, पूर्व-पुराणविभागाध्यक्षः, कामेश्वरसिंह-दरभङ्गा संस्कृतविश्वविद्यालयः, दरभङ्गा, पं. रामपदार्थशर्मा, बिहार-संस्कृत-समितेः पूर्वाधीक्षकः, पं. गङ्गाधर-शर्मा राजकीय-संस्कृत-महाविद्यालयस्य पूर्वप्राचार्यः, श्री कुलपतिशर्मा (I.A.S.) प्रभृतयः राष्ट्रभक्ताः शताधिकाः संस्कृतविद्वांसः प्रशासकाश्च भारतराष्ट्रस्य सुषमां सुतरां समेधितवन्तः।

वेदधर्मशास्त्रादिविविधशास्त्राणां केवलं सैद्धान्तिकाध्ययनाध्यापनाभ्यामेव एषां मनसि संतुष्टिर्न जाता। अतः "यस्तु क्रियावान् पुरुषः स विद्वान्" इति वचनमनुसरन्तः इमे महानुभावाः श्रुतिस्मृतिप्रोक्तधर्माणामुपदेशानां च व्यवहारिकजीवनेऽपि सम्यक् परिपालनाय निजशिष्यान् परिवारसदस्याञ्च प्रेरिवन्तः। एतदर्थमेव तैः मुजफ्फरपुरनगरे लोकमान्यब्रह्मचर्याश्रमः संस्थापितः। निजमनुजं पण्डितउमानाथत्रिपाठिनं धर्मशास्त्रमध्यापितवान्, स च धर्मशास्त्राचार्यपरीक्षायां स्वर्णपदकेन पुरस्कृतः। "प्रतिवेदं ब्रह्मचर्यम् द्वादशाब्दानि'' इति याज्ञवल्क्यवचनमनुसरन् निजैकमात्रमात्मजं पञ्चमवर्षे उपनीय द्वादशवर्षाणियावत् दण्डमेखलाजिनानि धारयित्वा ब्रह्मचारिव्रतपालनाय प्रेरितवान् । तदनु निजपौत्रान् वाचस्पति-सुरपति-प्रजापति-श्रीपतिसंज्ञकान् तथैव ब्रह्मचारिधर्मपालनाय आदिष्टवान्। सम्प्रति एषु पौत्रेषु ज्येष्ठः राष्ट्रपतिसम्मानितः आचार्यवाचस्पतिशर्मत्रिपाठी, पुरीस्थित-राष्ट्रिय-संस्कृत-संस्थाने, कामेश्वर-सिंह-दरभङ्गा- संस्कृत-विश्वविद्यालये च धर्मशास्त्रविभागाध्यक्षपदमलङ्कृत्य सेवानिवृत्तः समस्तेऽपि भारते धर्मशास्त्रज्ञानाम् चूडामणिरिव राजते साम्प्रतम् । कनिष्ठः आचार्य श्रीपतित्रिपाठी च निजाग्रजस्य उत्तराधिकारिरूपेण अद्यापि समलङ्करोति तत्पदम्। समस्तेऽपि भारतवर्षे एतेषां शिष्यपरम्परा अद्यापि निरन्तरं समेधते। एतेषां प्रपौत्रः डॉ० हिमांशुशेखरत्रिपाठी अपि निजकुलक्रमागतविषयं धर्मशास्त्रमधीत्य सम्प्रति श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विश्वविद्यालये (केन्द्रीय-विश्वविद्यालये) धर्मशास्त्रविभागे सहायकाचार्यरूपेण धर्मशास्त्रमध्यापयन् निजकुलगौरवं समेधते।

एतेषां पण्डितवर्याणां प्रपौत्र्याः पतिः आचार्यरामकृष्णपाण्डेय-परमहंसोऽपि केन्द्रीयसंस्कृतविश्वविद्यालयस्य प्रयागस्थिते गङ्गानाथझापरिसरे समलङ्करोति धर्मशास्त्रविभागाध्यक्षपदम्। ज्येष्ठप्रपौत्र्याः पतिः डॉ. उदयशङ्करपाण्डेयः, द्वितीय- प्रपौत्र्याः पतिः डॉ. ब्रजमोहनतिवारी, ज्येष्ठप्रपौत्री डॉ. प्रभा, द्वितीयप्रपौत्री डॉ. आभा, तृतीयप्रपौत्री डॉ. विभा च सर्वाः धर्मशास्त्रविषये आचार्यपरीक्षोत्तीर्णाः पीएच्.डी. इत्युपाधिना विभूषिताः विराजन्ते सम्प्रति। धर्मशास्त्रविषयाध्यनाध्यापनयोः निरन्तरं संलग्ना एतादृशीकुलपरम्परा

प्रायेण सुदुर्लभा एव। अस्याः परम्परायाः मूलाधारभूताः प्रेरकाश्च मान्यवर्याः पण्डितयमुनाप्रसादत्रिपाठिनवर्या एव इत्यत्र नास्ति काचन विप्रतिपत्तिः।

त्रिपाठिपादानां सारस्वतकृतिषु सम्प्रति तिस्रः कृतयः समुपलभ्यन्ते-

(I) श्रुतबोधः
(II) पञ्चकन्यास्मरणम्
(III) आर्यनारीसुचरितम्।

एषु ग्रन्थेषु श्रुतबोधः यद्यपि मूलरूपेण छन्दःशास्त्रेण सम्बद्धो विद्यते तथापि एभिः श्रीकालिदासविरचितेऽस्मिन् ग्रन्थे यत्र तत्र प्रयुक्तान् श्रृंगाररसपूरितान् अश्लीलशब्दान् अपाकृत्य तत्स्थाने बालकोपकारकान् धर्मोपदेशसम्मितान् शब्दान् विनिवेश्य ग्रन्थस्यास्य निजप्रतिभया विशुद्धिर्विहिता। तत्र निरूपितछन्दसामुदाहरणानि तु एभिः स्वनिर्मितैः श्रुतिस्मृतिसम्मतोपदेशपूरितैः भारतीय-प्राचीनाचार-शिक्षाप्रधानैः श्लौकैः प्रदत्तानि। येन छात्राणां सनातन-धर्मं तत्वावबोधोऽपि अनायासेनैव भवति। उदाहरणरूपेण द्वित्राण्येव पद्यानि समुपस्थाप्यन्ते अधस्तात्-

(1) गीतिछन्दसः उदाहरणं यथा-

"नित्यं वेदाध्ययनं ब्राह्मण तव धर्मोऽस्ति, नहि गानम्।
अथ चेदिच्छसि गातुं साम्नां गीतिं विधेहि देवस्तुत्।।"[1]

(2) त्रोटकवृत्तोदाहरणं यथा-

"पठ वेदवचांसि समाधिरतो द्विज-देव-गवां प्रणतिप्रवणः।
यदि धर्मरतिर्विरतिर्दुरितान् मुदितोऽटकलेस्तव नास्ति भयम्।।"[2]

(3) भुजङ्गप्रयातोदाहरणं यथा-

"सखे जन्म चेत् पूर्वपुण्येन लब्धं
त्वया भारते, ब्राह्मणश्चासि विद्वान्।
तदा नेन्द्रियार्थेषु सङ्गं विदध्याः
श्रुतिं धर्मशास्त्रं सदा चिन्तयेथाः।।"[3]

(4) आर्यावृत्तेः उदाहरणं यथा-

यस्य मनसि गुरुभक्तिः,धर्मे स्वीये तथेश्वरे निष्ठा।
तस्य भवेत्सुखसम्पत् सर्वा पृथ्वी च तस्यार्या।।

एवमेव समेषामपि छन्दसामुदाहरणानि सरल-सरस-सुगम-सुरगिरा सदुपदेश- समुपेतानि समुपस्थापितानि एभिः। 'पञ्चकन्यास्मरणम्'-इति संज्ञके द्वितीयग्रन्थे –

"अहल्या-द्रौपदी-तारा-कुन्ती-मन्दोदरी तथा।
पञ्चकन्याः स्मरेन्नित्यं महापातकनाशनम्।।"[4]

इति श्लोकमनुसृत्य धर्मशास्त्रपुराणैः प्रभूतानि उद्धरणानि उद्धृत्य आसां पञ्चानामपि कथं कन्यात्वमिति प्रतिपादितं विविधयुक्तिप्रमाणैः।

तृतीये 'आर्यनारीसुचरितम्' इति संज्ञके ग्रन्थे विविधपुराणेषु समुपवर्णितानाम् आर्यनारीणां पावनचरित्राणि समुपवर्णितानि। एषु ग्रन्थेषु प्रथमस्य "श्रुतबोधस्य" नूतनसंस्करणस्य सम्पादनं एतेषां पौत्रेण प्रो. श्रीपतित्रिपाठिना कृतम्। काशीस्थ मनीष प्रकाशन द्वारा प्रकाशितं पुस्तकमिदम्। अन्यद्ग्रन्थद्वयम् इदानीमपि प्रकाशनाधीनमस्ति।

## सन्दर्भसंकेताः

---

[1] *श्रुतबोधः* (पृष्ठ सं २५)- पण्डित यमुनाप्रसादत्रिपाठी (मनीष प्रकाशन, रोहितनगर, वाराणसी-5)

[2] तत्रैव (पृष्ठ सं ३४)

[3] तत्रैव (पृष्ठ सं ३५)

[4] तत्रैव (पृष्ठ सं २५)

# महाकविस्तथा अशेषशास्त्रवित् पञ्चाननतर्करत्नभट्टाचार्यः

**डा. अन्नदाशङ्कर-पाहाडी**

महामहोपाध्याय इत्युपाधिभाक् पञ्चाननभट्टाचार्यतर्करत्नः १८६६ ख्रीष्टाब्दे बङ्गदेशस्य अविभक्तचव्विशपरगणाजिल्लान्तःपातिनि भट्टपल्लीस्थिते (भाटपाडा इति भाषायाम्) कस्मिंश्चित् सदाचारसम्पन्ने विद्वत्कुले जनिं लेभे। आसीत्तदीयो जनको नन्दलालभट्टार्यविद्यारत्नः खलु तदानीन्तनबङ्गदेशस्य सुप्रसिद्धो विद्वान्। पञ्चाननतर्करत्नस्य पुत्रो महामहोपाध्यायः श्रीजीवन्यायतीर्थभट्टाचार्यो विदुषामपि मूर्धण्यपदभाक् सर्वविद्यावित् सुकविश्चासीत्। अमरमङ्गलनाटकस्य स्वरचितविमलाटीकाया मङ्गलाचणे पितृकृतिं कीर्तयन्नाह श्रीजीवन्यायतीर्थः -

'साक्षाद्वाक्पतिमक्षपादमथवा व्यचक्षते यं जना-
स्तं नत्वा किल तातपादमखिलज्ञानैकमूर्तिं गुरुम्।'

लोकाः यं साक्षात् बृहस्पतो न्यायसूत्रकारगौतम इति वदन्ति, तं सकलज्ञाननिधिं मे पितरं प्रणम्य मया टीकेयं क्रियते विमला इत्यर्थः।

पञ्चाननस्य मेधा अत्युत्तमासीद् बाल्यादेव, स्मृतिशक्तिश्चापि विस्मयावहा। सकृदधीतः कोऽपि विषयः असकृदभ्यासं विनापि चिराय तेन बालकेन पञ्चाननेन कण्ठस्थीकर्तुं शक्यते स्म इति श्रूयते। स्वगृहस्थचतुष्पाठ्यां पितुः सकाशात् तेन काव्य-व्याकरण-दर्शन-वेद-वेदान्त-स्मृतिपुराणादीनां शास्त्राणां सम्यगध्ययनं कृत्वा वैदुष्यञ्चाधिगतम् एतेषु। शास्त्रेषु विविधेषु कृतविद्यः असौ युवा पञ्चाननः तदनन्तरं कलिकातास्थितबङ्गवासी-महाविद्यालयस्य संस्कृतविभागे अध्यापनाकार्यं कर्त्तुमारेभे। कार्यमिदं तत्र नाधिकदिवसस्थायि अभवत्, यतः स्वाधीनचेता पञ्चाननः कर्मक्षेत्रे वैदेशिकसर्वकारस्याधीनत्वं नाङ्गीचकार। ततः त्यक्त्वा तदध्यापकपदं महाविद्यालयस्य स खलु पितुः चतुष्पाठ्यां परमोत्साहेन विद्यार्थिभ्यो विशेषेण

न्यायशास्त्रमध्यापयितुमारेभे। तदीयपाठनपाठवेन क्रमेण समाकृष्टाः सन्तो नानादिग्देशेभ्यो बहवो विद्यार्थिनः अध्ययनार्थं तत्र समाजग्मु:। प्राय: चत्वारिंशदधिकानि वर्षाणि यावत् सर्वविद्याविद् अयमध्यापको नैकेषां विद्यार्थिनां कृते विद्यानामनेकासामध्यापनञ्चकार।

न केवलं पठनपाठनकर्मणि, अपि तु विविधसामाजिकसांस्कृतिक-कर्मकाण्डेष्वपि तस्यासीद् विपुलाग्रह:। स्वदेशानुरागस्तस्य मनसि तादृश: प्रवल आसीद्, यादृशस्तस्य विद्यानुराग:। तदानीन्तनकाले वङ्गदेशे आङ्गलसर्वकार-विरोधीनि जनान्दोलनादीनि प्रचलन्ति स्म। नितरां देशभक्तिपरायण: पञ्चाननोऽपि तेषु सक्रियं भागमग्रहीत्। १९०८ ख्रीष्टाब्दे तारकेश्वर-सत्याग्रहान्दोलनकर्मणि प्रत्यक्षतया भागं गृहीतवान् इति हेतो: स खलु आङ्गलसर्वकारेण कारागारं प्रेषित:। अपि च, १९३० ख्रीष्टाब्दे आङ्गलसर्वकारेण प्रवर्तितं सारदानुशासनमिति बाल्यविवाहनियन्त्रण-मूलकमनुशासनम् (Child Marriage Restraint Act, 1930) अस्वीकुर्वन् तदनुशासनविरोधितामावहन् चायं पञ्चाननस्तस्मै आङ्गलसर्वकारप्रदत्तं 'महामहोपाध्याय' इत्युपाधिं तत्प्रदात्रे एव प्रत्यर्पितवान्। दीर्घकालं यावत् अध्यापना-ग्रन्थरचना-सामाजिककर्मकाण्डादिकं बहुविधं सम्पादयन् पञ्चानन: १९४० ख्रीष्टाब्दे काशीनगरीं गत:। पञ्चाननेन बहुविधा ग्रन्था रचिता:। तेषु काव्यनाटकादीनि यथा अलङ्कारशास्त्रदृष्ट्या तथैव महृदयदृष्ट्या अत्युत्तमत्वं परमास्वाद्यत्वञ्च नितरां भजन्ते। टीकाभाष्यादिग्रन्थेषु वैदग्ध्यं तदीयं सम्यक् प्रकाशितं भवति। अनेन संस्कृतभाषातो बहवो ग्रन्था अपि बङ्गभाषयानूदिताश्च। सामाजिकपत्रपत्रिकादिषु नानासामाजिकविषयानधिकृत्य निबन्धान् बहून् विरचयामास असौ मनीषी।

**पञ्चाननस्य कृतितति: -**

क) **<u>स्वरचितानि काव्यनाटकादीनि पुस्तकानि</u>**

१. अमरमङ्गलम्[1]

२. कलङ्कमोचनम्

३. प्राणदूतम् (दूतकाव्यम्, अधुना दुर्लभम्)
४. पार्थाश्वमेधमहाकाव्यम्[2] (अधुना दुर्लभम्)।
५. सर्वमङ्गलोदयम्[3] (श्लेष्टप्रधानकाव्यम्)
६. स्तोत्रावली
७. मातुकाप्रशस्तिः (दुर्गास्तुतिः)
८. शोककवितावली[4] (श्लोकसंग्रहः, अधुना दुर्लभः)।
९. श्रीविष्णुविक्रमकाव्यम् (अप्रकाशितम्)

**ख) टीकाग्रन्थाः**

१. देवीभाष्यम् (चण्डीटीका)
२. सांख्यदर्शनम् (पूर्णिमा टीका) (सांख्यतत्त्वकौमुदीमधिकृत्य रचिता, 1903)
३. शक्तिभाष्यम् (ईशोपनिषद्भाष्यम्)
४. शक्तिभाष्यम् (ब्रह्मसूत्रमधिकृत्य रचितम्)
५. शक्तिभाष्यम् (श्रीमद्भगवद्गीताग्रन्थमधिकृत्य रचितम्)
६. परिष्कारः[5] (वैशेषिकग्रन्थः, 1906)
७. अनुमितिविवृतिः (गौतमस्य न्यायसूत्रमुपरि टीका)

**ग) सम्पादिताः ग्रन्थाः**

१. मनुसंहिता (मेधातिथि-कुल्लूकभट्टयोः भाष्यसहिता)
२. महाभारतम् (नीलकण्ठीटीकासमेतम्)
३. रामायणम् (गोविन्दराज-तिलकयोः टीकोपेतम्)
४. भागवतपुराणम् (श्रीधरटीकासमेतम्)
५. विष्णुपुराणम् (श्रीधरटीकाविशिष्टम्)
६. हरिवंशः (नीलकण्ठःटीकासमेतः)
७. बङ्गानुवादसहितानि अनेकानि पुराणान्युपपुराणानि च
८. महानिर्वाणतन्त्रम् (समूलम् बङ्गानुवादश्चेति)
९. तन्त्रसारः (मूलसमेतो बङ्गानुवादः)
१०. अद्भुतरामायणम् (बङ्गभाषया पद्याकारेण अनूदितम्)
११. चरकसंहिता (आयुर्वेदग्रन्थः) (मूलम् बङ्गानुवादश्चेति)

१२. बृहत्संहिता (ज्योतिषग्रन्थः) (मूलसहिता बङ्गानुवादोपेता)

१३. ऊनविंशतिसंहिता (मूलम् बङ्गानुवादश्चेति)

१४. दशकुमारचरितम् (बङ्गानुवादसमेतं मूलम्)

१५. मालतीमाधवम् (बङ्गानुवादसमेतं मूलम्)

१६. कामसूत्रम् (वात्सायनप्रणीतम्) (बङ्गानुवादसमेतं मूलम्)

१७. रत्नावलीनाटकम् (बङ्गानुवादसमेतं मूलम्, श्लोकाश्च बङ्गभाषया पद्यकारेण अनूदिताः)

**घ. शास्त्रीयग्रन्थाः**

क) विशुद्ध नित्य कर्मव्यवस्था

ख) प्रायश्चित्तविधिः

ग) सप्तशती

घ) मुक्तावलीसंग्रहः

ङ) प्रबोधसुधाकरः (श्रीशङकराचार्यप्रणीतः, सानुवादं व्याख्यासमेतञ्च)

एतस्माद्विवरणाज्ज्ञायते यत् पञ्चाननस्यासीद् बहुविषयव्यापिनी प्रज्ञा। बहुविधशास्त्रविषयनिर्भराणि टीकाभाष्यादिपुस्तकानि तेन यथा रचितानि, दुरूहशास्त्रग्रन्थानां बङ्गभाषया अनुवादश्च कृतः, तथैव सृजनधर्मविशिष्टानि काव्यनाटकादीन्यपि विरचितानि। टीकासु भाष्येषु च तस्य सरलभाषया मूलग्रन्थानामाशयप्रकाशनम्, शास्त्रावगाहिनी वैपश्चिती बुद्धिः, सर्वत्रोदाहरण-द्वारेण विषयव्याख्यानम्, परिमितिबोधश्च परिलक्ष्यन्ते। अनुवादकर्मणि मूलं प्रति आनुगत्यम्, बङ्गभाषाया रचनाशैल्याः सम्यगनुसरणम्, मूलगतप्रतिपाद्य-विषयस्य सहजतयोपस्थापनञ्च सर्वत्र प्राप्यते। दिङ्मात्रमुदाहरणं तत्र -

‘श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम्’[6]॥

श्लोकोऽयं पञ्चाननेन बङ्गभाषया ईदृग्रूपेणानुवादो विहितो यत् ‘श्रुति, स्मृति, महाजनेर सदाचार, आपनार प्रीति एवं सम्यक् सङ्कल्पजनित शास्त्रविरुद्ध कामना इहाइ धर्मज्ञानेर मूल’।

यतो हि 'अमरमङ्गलं' 'सर्वमङ्गलोदयकाव्यं' च विना पञ्चाननतर्करत्नेन विरचिता अन्ये काव्यनाटकादिग्रन्था न सुलभा अधुना, ततः अस्य नाटकस्य काव्यस्य च विषयादिव्याख्यानद्वारेण कवेः कवित्वविचारः क्रियते।

**(क) 'सर्वमङ्गलोदयम्'** -

पञ्चाननेन ग्रथितं 'सर्वमङ्गलोदयं' नाम श्लेषप्रधानं काव्यं 1860ईशवीयाब्दे वाराणसीशाखान्तर्गतात् सौदामिनीपाठशालातः श्रीजीवन्यायतीर्थेन प्रकाशितम्। श्रीजीवेन काव्यस्यांशतो वङ्गभाषयानूदितं संक्षिप्तसरलसंस्कृतटीकया संयोजितम्। काव्यमिदं पदद्वयार्थबोधकम्। एकस्मिन् पक्षे शिवलीलाबोधकम्, पक्षान्तरे चरमे विष्णुलीलावर्णनपरम्। नवमसर्गसम्पूर्णं काव्यमिदम्। काव्यस्यास्य प्रतिसर्ग पक्षान्तरप्रतिपादनेन भिन्नार्थो द्योत्यते। काव्यस्यास्य प्रथमं मङ्गलाचरणम् अस्माभिः लक्ष्यते। तद्यथा –

यदङ्गसङ्गान्महिमातिरेकं गङ्गाधियाता जगदेकशुद्धिः।
समानसोदीरितवर्त्मदूरस्थितो भवो मां सवितुः पुनातु॥
सुरासुराधीश्वरमौलिलोलमन्दारमालापुनरुक्तरक्तः।
सर्वाश्रयोमापदपल्लवो मे सन्तापसन्तानमपाकरोतु॥

प्रथमो मङ्गलाचरणात्मकः श्लोकः द्व्यर्थवाचकः – शिवार्थद्योतकस्तथा विष्णुपरकश्च। द्वितीयेन श्लोकेन एकतो यथा देवी दुर्गा स्तुत्यते तथैव अपरतः लक्ष्मीरपि। काव्यस्यास्य वैशिष्ट्यं यत् काव्यगतं प्रतिश्लोकं द्व्यर्थबोधकमिति। काव्यान्ते महाकाल्याः स्तुतिपरकाणि स्तोत्राणि संयोजितानि।

प्रथमसर्गे शिवलीलापक्षे ब्रह्मणः आदेशेन उपस्थितं दक्षं प्रति महेश्वरेण पूजायाम् अप्रयुक्तायां दक्षक्रोधः, दक्षस्य शिवं प्रति आक्षेपः, नन्दिनः क्रोधः, दक्षपक्षीयेषु मुनिषु दूरुक्तिः, दक्षस्य सभात्यागः, महर्षिभृगुसहायतया दक्षस्य शिवहीनयज्ञानुष्ठानम्, अनामन्त्रिताया अपि दाक्षायण्याः पितृगृहे यज्ञोत्सवं श्रुत्वा

कथमपि शिवस्यानुमतिमादाय पितृगृहगमनम्, शिवहीनयज्ञदर्शनेन शिवनिन्दाश्रवणेन च तस्याः देहत्यागस्तथा च अनुचराणां विमूढावस्था चेति वृत्तानि प्रथमसर्गगतानि। पक्षान्तरे विष्णुलीलापक्षे, इन्द्राय भ्राम्यतो दुर्वाससः पारिजातार्पणम्, इन्द्रेण ऐरावतशिरसि तत्स्थापनम्, तेन दुर्वाससः क्रोधः, इतः श्रीभ्रंशो भवतु इतीन्द्रं प्रति अभिशापदानम्, इन्द्रस्य अमरावतीप्रस्थानम्. दुर्वाससस्तपसे अरण्यप्रस्थानम्, इन्द्रस्य लक्ष्मीभ्रंशः, लक्ष्म्याः क्षीरोदसागरप्रवेशः, तेन प्राणिना विमूढावस्थेति प्रथमसर्गस्यार्थान्तरम्।

द्वितीयसर्गे दाक्षायणीमनुसृतानां गणानां विलापः, अनन्तरं श्रीशिवसमीपे तद्वृतान्तकथनाय केषाञ्चित् कैलासगमनमिति शिवलीलापक्षस्य अर्थः। पक्षान्तरे लक्ष्म्या विरहे प्राणिनां विलापः इति विष्णुलीलापक्षे द्वितीयसर्गार्थः। अत्र शब्दश्लेषस्तु कदाचित्कः। श्रुतवृत्तान्तस्य शिवस्य रोषः, शिवेन सह वीरभद्रादीनां दक्षयज्ञादिध्वंसाय यात्रा, संक्षेपेण दक्षनगरावरोधकथनम्। पक्षान्तरे लक्ष्मीभ्रंशेन पूर्वशत्रोः इन्द्रस्य अवसादं दृष्ट्वा रसातलवासिनाम् असुराणाम् इन्द्रजयाय स्वर्गयात्रा तथा च सर्गाक्रमणस्य वृत्तमिति उद्योगनामके तृतीयसर्गस्य विषयसंक्षेपः। अनन्तरं सर्गत्रयं कल्पनाप्रधानवर्णनापरम्। तत्र चतुर्थपञ्चमसर्गौ पूर्ववृत्तज्ञापकतयोपन्यस्तौ शिवलीलापक्षे प्रजापतिराजस्य दक्षस्यैव बुद्धिमोहतत्परिपाकारम्भात् पूर्वं दुर्निमित्तदर्शनम्, भविष्यदर्शनशक्तिलोपः अपि दुर्निमित्तविशेष एव कथम् अन्यथा एव कर्मप्रवृत्तिः, दाक्षायणीमरणादपि तन्निवृत्तिस्तस्य नासीदिति शङ्कानिवृत्त्यर्थौ। पक्षान्तरे इन्द्रस्य तादृग्बुद्धिमोहाद् पूर्वं तथा दुर्निमित्तदर्शनं जातम्, तच्च भविष्यदनिष्टसूचकम्, न तु तत्कारकम्, यादृगनिष्टप्रारब्धवशाद् घटिष्यते तदेव दुनिर्मित्तेन सूच्यते। प्रारब्धखण्डनं देवानामपि भोगं विना न भवत्यत इन्द्रस्यापि बुद्धिमोहः, न च सर्वज्ञेनापि तत्पित्रा कश्यपेन तन्निवारणोपायो विहितः इत्येतद्बोधनार्थौ।

चतुर्थसर्गे तु दक्षस्य दुःस्वप्नवर्णनं शिवलीलापक्षे, पक्षान्तरे चेन्द्रमातुः दुःस्वप्नवर्णनं समस्ति। दुर्निमित्तदर्शनाख्ये पञ्चमे तु शिवलीलापक्षे दक्षनगरे दुर्निमित्तसूचकाद् भूतवर्णनं परं पक्षान्तरे भारते सर्गे च तथाविधाद् भूतवर्णनम्

आलोक्यते। पूज्यपूजाव्यतिक्रमनामके षष्ठे सर्गे दक्षस्य प्रजापतिराजत्वम्, विष्णुपुराणानुसारं राजत्वख्यापकसैन्यादिवर्णनम्, स्पन्दपुराणानुसारि दक्षपक्षशिवपक्षयोः युद्धमुक्तम्, काल्पनिकप्रकारमिलनेन तदनुवादः, दक्षनाशदक्षयज्ञध्वंसावसानपर्यन्तः शिवलीलापक्षे बोध्यः। भगवद्वेषेण महतामपि शक्तिर्नश्यतीति तत्त्वसमर्थको दिव्यास्त्रविस्मरण-पादस्तन्मूलकञ्च युद्धप्रकार-कल्पनम्। पक्षान्तरे दुर्वाससः शापमूलकं दैवास्त्रविस्मरणं, देवानां पराजयफलकम् काल्पनिकं, तदानीं देवासुरसंग्रामो देवतानां पराभवश्चेति विष्णुपुराणाद् अनूदितौ।

स्तोत्राख्ये सप्तमे सर्गे शिवलीलापक्षे दक्षपत्न्या ब्रह्मादिदेवानाञ्च शिवस्य प्रसादनार्थं स्तुतिः, ततश्च शिवप्रसादो, दक्षस्य पुनर्जीवनं तदीययोद्धॄन् प्रति अनुग्रहः, शिवगृहीतस्य दाक्षायणीमृतदेहस्य लोकोपकाराय विष्णुना चक्रेण च्छेदः, शिवस्य च सगणस्यान्तर्धानमिति। पक्षान्तरे पराजितदेवानां ब्रह्माणं पुरस्कृत्य विष्णुस्तवः, समुद्रमन्थनं कर्तुमादिष्टमित्येतद्वर्णनम् अस्ति। इतः प्रभृति पक्षान्तरमिदं विष्णुलीलामयम्।

उद्वाहनामके अष्टमसर्गे शिवलीलापक्षे दाक्षायण्याः हिमालयकन्यात्वेन प्रादुर्भावो वर्णितः। तारकासुरवधाय शिवपुत्र एव केवलं समर्थ इति कृत्वा तपोमग्नस्य शिवस्य उमाविवाहाय प्रयासः, शिवस्य विवाहप्रवृत्तिसम्पादनार्थम् इन्द्रेण कामस्य विनियोगश्च सर्गस्यास्य विषयः खलु। ततः शिवं विजिगीषमाणस्य कामस्य नेष्टसिद्धिः प्रत्युत देहपातः इत्येवंविपदि शिवमेव शरणत्वेन प्रपद्यमानेषु देवेषु करुणया, उपमाया शिवपरायणता च शिवेन उमाया विवाहः, विवाहोत्सवश्चेति वृत्तान्ता वर्णिताः सन्ति। पक्षान्तरे असुरैः सन्धिं विधाय तैः समं मिलितैः देवैः क्षीरोदसमुद्रमन्थनम्, ततश्च अमृतोद्भवो लक्ष्म्या उद्धारश्चेति। तदनन्तरं लक्ष्मीनारायणविवाहो वर्णितः। लक्ष्म्या उद्धारात् देवादीनां सर्वेषाम् आनन्दश्चेति विषयीकरोति कविः पञ्चाननः रोचिष्णुतया।

अन्तिमे देवताभ्युदयाख्ये नवमे सर्गे शिललीलापक्षे हरपार्वत्योः लीलावर्णनं समस्ति। तत्र च वर्ण्यन्ते अग्निगृहीतशिवतेजसा गङ्गाया निक्षेपः,

कार्तिकेयजन्म, तेन च तारकाद्यसुरजयाद् देवानां पूर्ववत् सर्गाधिकारश्च। पक्षान्तरे लक्ष्मीनारायणयोः वैकुण्ठे प्रियानुचरैः सेवा, विष्णुमाहात्म्यवर्णनम्, विष्णोः कृपया देवानाम् अमृतभोजनम्, असुराणाञ्च तदप्राप्तिः, असुराणाञ्च युद्धे पराजयः, देवानाञ्च पूर्ववत् स्वर्गाधिकारश्चेति पुरातत्त्वविषयाणां विस्तरशो वर्णनेन काव्यमिदं समाप्तिं गतम्।

**(ख). 'अमरमङ्गलम्'**

अमरमङ्गलमिति नाम इतिहासाश्रितम् अत्युत्कृष्टनाटकं राजपुतानाख्यस्य भूखण्डस्य इतिहासमधिकृत्य विरचितम्। मोघलशासनाधिकारात् चितोरसमेतं मेवारदेशम् उद्धर्तुं दीर्घं प्रयासं कृत्वापि साफल्यं विना मेवारदेशान्तर्गतस्य क्षुद्रस्यापि स्वाधीनभूण्डस्य राजा क्षत्रियकुलतिलक: प्रतापसिंह: दिवं गत:। अस्तं गते तस्मिन् राजपुतानारवौ तदीयात्मज: अमरसिंहो राजाऽभूत्। मेवारस्य स्वतन्त्रतापादनमासीत् प्रतापसिंहस्य लक्ष्यमेकम्। पितृप्रतिज्ञां तां सफलीकर्तुम् अमरसिंहोऽपि सर्वथा प्रयत्नं चकार। स्त्रीव्यसनद्वारेण तु अमरसिंहं हतबलं रणविमुखञ्च विधातुं दिल्लीश्वरसेनाध्यक्षो मानसिंहो दुष्प्रयासम् आचरितवान् चरांश्च नियुक्तवान्। दिल्लीश्वरेण सह प्रत्यक्षसंग्रामेन मेवारोद्धारोऽसम्भव इत्यत: कूटनीतिमाश्रित्य तदीयसामन्तनृपानां सहायताद्वारेण सर्वमेतत् मानसिंहदुश्चेष्टितं विफलीकृत्य चामरसिंहो जवनाधिकारात् चितोरसमेतं मेवारदेशमुद्धर्तुं समर्थो जातः। चितोरोद्धाररूपपितृप्रतिज्ञापूरणेन मेवारस्य स्वतन्त्रतासम्पादनेन च अमरसिंहस्य कल्याणं साधितमित्यतो नाटकस्य नाम अभवत् अमरमङ्गलम् इति।

समग्रेऽस्मिन् नाटके एक एव विषय: आदित: अन्तपर्यन्तं प्राधान्यं भजते, स एव प्रवलो देशानुराग:। जन्मभूमिः जननीसमा। निगडबद्धाया देशजनन्या बन्धनमोचनमेव अमरसिंहस्यैकमात्रं व्रतम्। नाटकस्य नान्दीश्लोके मेवारदेशजननी संस्तुता; भरतवाक्येऽपि देशजननीपूजनं कीर्तितम् – 'सम्पूजयन्तु जननीमिव जन्मभूमिम्'। देशभक्तिः, स्वतन्त्रता, स्वाधीनतास्पृहा, स्वाजात्यबोध:, जन्मभूमौ जननीत्वारोपश्चेत्येते विषया: नवीनतया प्रतिभान्ति नाटकेऽस्मिन्। इत:

पूर्वम् एतेषां प्रयोगः संस्कृतकाव्यनाटकादिषु नाभिलक्षित एव। ब्राह्मणपुरोहितादयोऽपि एत्र देशजनन्याः बन्धनमोचनसंग्रामे सक्रियं भागं गृह्णन्ति इत्यपि नवीनं प्रतिभाति संस्कृतवाङ्मये। इतिहासमाश्रित्य रचितेऽपि नाटकेऽस्मिन् अनैतिहासिकत्वं नाल्पमस्ति। इतिहासदृष्ट्या अमरसिंहो रणे दिल्लीश्वरेण पराभूतः, चितोरसमेतं मेवारदेशं मोघलशासनाधिकाराद् अधिगन्तुमशक्तो जातश्च। नाटके तु तेन सचितोरं मेवारोद्धारः कृत इति दर्शितम्। सर्वाणि स्त्रीपात्राणि नाटकेऽस्मिन् नाट्यकृता उद्भावितानि। मन्त्रणादात्री, प्रेममयी, सुक्षत्रिया, रणक्षेत्रे शत्रुसंहारकारिणी राजमहिषी देवी सत्यमेव संस्कृतसाहित्ये नवीना इति प्रतिभाति। अमरसिंहवचनाज्ज्ञायते तदीयचरित्रवैशिष्ट्यादिकम् –

'त्वं राजनीतिनिगमे मम शिक्षयित्री
शिष्यासि मे रणकलासु कृतश्रमा त्वम्।
सर्वापदि स्थिरमतिः सचिवोऽसि मे त्वं
त्वं गेहिनी सदृशदुःखसुखा सखी च'[7]॥

स्पर्शमणिस्वरूपाया अस्या देव्याः प्रभावात् अयोरूपिनी वाराङ्गना वीरापि सर्वत्यागव्रता प्रेममयी सञ्जाता। पश्चात् सा खलु वीरा सिद्धातापसीरूपेण चितोरोद्धारकर्मणि अमरसिंहस्य मुख्यसहायिका जाता। पुरुषपात्रेष्वपि अनेके नाट्यकारेण उद्भाविताः। आत्मश्लाघापरः स्वधर्मनिरतः, स्वाधीनचित्तः, ब्रह्मतेजोद्दीप्तः मेवारराजपुरोहितः शैलदेवः स्वयं नाट्यकारमेव अनुकरोति इति प्रतीयते। अत्र सर्वाणि नाट्यकारचरित्राणि सुनिपुणतया चित्रितानि। अप्रधानचरित्रचित्रणकर्मण्यपि कवेः तुल्यो यत्नः परिलक्ष्यते। नाट्यवृत्तग्रन्थनकर्मणि नाट्यकारस्य पटुता अत्युकृष्टतयाऽत्र प्रकाशिता। अत्र वीर एव अङ्गी रसः, श्रृङ्गार-हास्य-रौद्रादिरसाश्चान्ये अङ्गित्वम् आपन्नाः। वारवनितावीराप्रसङ्गे शृङ्ङ्गाररसस्य, मानसिंहोद्वेजनप्रसङ्गे रौद्ररसस्य, द्वितीयाङ्कवर्तिनि विष्कम्भके बृद्धदैवज्ञयोः कथोपकथनप्रसङ्गे हास्यरसस्य, युद्धादिप्रसङ्गे वीररसस्य च प्रकाशः परिलक्ष्यते।

अमरमङ्गलनाटकं संस्कृतसाहित्यसंसदि नृपायते एव। काव्यत्वनाट्यत्वधर्मयो: सार्थक: समाहार: अस्मिन् सञ्जातः। बीजाद्यर्थप्रकृति-आरम्भादिकार्य-मुखादिसन्धिप्रभृतीनां नाट्योपकरणभूतानामङ्गानां सुष्ठु सन्निवेशात् पात्रोपयोगिनाट्योक्तिसंरचनाच्च नाट्यधर्मो यथा संसाधितः, तथा व्यञ्जनागर्भवाक्यप्रयोगपाटवेन गुणरीत्यलंकारादीनां काव्यसामग्रीसमूहानां सम्यक् संयोजनकौशलेन सूक्तिसदृशवचोविन्यासवैदग्ध्येन च काव्यत्वधर्मोऽपि समापादित:। प्राप्यन्ते चात्र शाश्वतसत्यप्रकाशका: केचन श्लोका: कानिचन सूक्तितुल्यवचनानि च-

‘गुणवानिति क: शत्रुं बलवान् समुपेक्षते।
द्विजराजोऽयमिति किं राहुर्न ग्रसते विधुम्’[8]॥
‘न सुखं कामे न सुखं विषये
सुखमिह केवलममले हृदये’[9]।
‘बुद्धिर्भोगो बलं सत्त्वं कान्ति: पुष्टि: स्मृतिर्धृति:।
जरसा जीर्यते सर्वमेका वाणी विवर्धते’[10]॥
‘को नाम स्वयमुपनतं पीयूषं नाभिनन्दति’[11]।
‘प्रमादे हि प्रभवो रक्षणीया मन्त्रिभिः’।

पञ्चाननस्यासीत् सहजातकवित्वप्रतिभा स्मृति-तन्त्र-दर्शनशास्त्रादिसम्मता तार्किकी बुद्धिश्च। वास्तवदृष्ट्या एकस्मिन्नाधारे एतेषां शास्त्राणां समापतनं दुर्लभमेव। किन्तु नैतयोर्विरोध: अस्ति अस्मिन् कदापि। प्रत्युत वाक्तर्कयोरपूर्व: संयोग: साधित: पञ्चाननस्य समस्तासु रचनासु। वस्तुतस्तु पञ्चाननस्य वाणी सर्वथा तर्करसोज्ज्वला सती सकलसामाजिकमानसं सततं समुल्लासयति सुतराम्। अत्र एते संग्रहश्लोका: -

‘मिलन्ति निखिला विद्यास्तीर्थे यस्मिंस्वतस्पूते।
उच्यते सैव विद्वद्भिर्विद्यातीर्थो महेश्वर: ॥
स्फुरन्ति सर्वशास्त्राणि यस्याननेषु सर्वदा।
पञ्चसु तस्य देवस्य नाम पञ्चानन: स्मृत: ॥

काव्यं तन्त्रञ्च तर्कश्च पुराणं स्मृतिरेव च।
प्रसिद्धमाननं यस्य सोऽपि पञ्चाननः कविः।।
कार्कश्यं तर्कशास्त्रस्य निर्मलकाव्यवारिभिः।
प्रक्षाल्य कविनानेन रसार्द्रं कोमलं कृतम्।।
अतस्तु कथ्यते सर्वैरालङ्कारिकसत्तमैः।
वाणी पञ्चाननस्यापि सदा तर्करसोज्ज्वला'।।

**(ग). कलङ्कमोचनम्** –

कलङ्कमोचनमिति पञ्चाननस्य सप्ताङ्कोपेतं नाटकम्। यच्च अधुना दुष्प्राप्यम्। राधाकृष्णयोरनुरागं तथा कृष्णप्रियायाः राधायाः कलङ्कस्य निराकरणञ्च विषयीकरोति नाट्यकृत् भक्तिरसेन तथा च प्राचीनवृत्तमाधारीकृत्य। 1907 ईशवीयाब्दे रूपकमिदं प्रचरद्रूपतामितम्।

**(घ) टीकाकृत् पञ्चाननः** –

सांख्य-वेदान्त-न्याय-वैशेषिकादिभारतीयास्तिकदर्शनेषु पञ्चानन-तर्करत्नस्य प्रभूतं ज्ञानमासीदिति तद्रचितटीकाग्रन्थेभ्यः सम्यक्तयानुमीयते। पञ्चाननतर्करत्नस्य सम्पादनेन महर्षिकपिलमताश्रितं सांख्यदर्शनमिति ग्रन्थो मूलतः ईश्वरकृष्णाचार्यप्रणीतकारिकात्मकः। तत्र षड्दर्शनटीकाकृद्वाचस्पतिमिश्र-विरचितया तत्त्वकौमुद्या सह पञ्चाननस्य स्वकीया **पूर्णिमे**ति टीका संयोजिता वर्तते। अस्याष्टीकाया आलोकेन सांख्यराद्धान्ताः नूतनशैल्या सरलव्याख्यया च उद्भासिता वर्तन्ते। अपि च, गौतमस्य न्यायसूत्रमुपरि पञ्चाननेन **अनुमितिविवृति**नाम्नी टीकैका ग्रथिता। साम्प्रतं टीकेयं नोपलभ्यते। टीकाकृद्रूपेण पञ्चाननस्य कृतित्वस्य परिचायिका खलु वैशेषिकसूत्रस्य प्रामाणिकीं उपष्कारनाम्नीं टीकामुपरि **परिष्कारटीके**ति। परिष्कारटीकाया वैशिष्ट्यमत्रैव यत् पञ्चाननेनात्र नव्यन्यायशैल्या उपष्कारटीकायाः दुरूहस्थलानि परिष्कृतानि। नव्यन्यायभाषया न केवलं वैशेषिकसूत्रस्य तथा चोपष्कारस्य तुलनात्मकं विश्लेषणं प्रतिपदव्यावृत्त्या समं कृतं, चापि उभयोग्रन्थयोः ये च

विषयाः चर्चाविषयतां न नीतास्तेऽपि प्रासङ्गिकोद्धृतिभिः व्याख्याताः पञ्चाननेन। उपष्कारटीकायामुल्लिखितलक्षणस्थपदार्थेषु आपत्तिं प्रदर्शयता निर्दुष्टतया लक्षणं विहितम् अस्यां परिष्कारटीकायाम्। वैशेषिकसूत्रोपष्कारयोः अनुल्लिखिताः प्रसङ्गास्तथा चोद्धृतयः अनेन टीकायां संयोजिताः। अपि च, पञ्चाननतर्करत्नेन मूर्तिरहस्यदेवीसूक्तार्गलकीलक-कवचादिसहिता श्रीश्रीचण्डीति ग्रन्थः समूलं वङ्गानुवादसहितः सम्पादितः। तत्र महर्षिणा वेदव्यासेन रचितं मार्कण्डेयपुराणान्तर्गतं समूलं देवीमाहात्म्यं सम्पादककृत-देवीभाष्यसप्तमाध्याय-पर्यन्त-वङ्गानुवाद-तद्व्याख्याति-जगन्मान्य-नागोजीभट्टकृतटीकया गौडप्रसिद्ध-गोपालचक्रवर्तिकृत-तत्त्वप्रकाशिकाख्यटीकया समेतं श्रीजीवन्यायतीर्थस्य वङ्गानुवादसहितं प्राकाशि पञ्चाननेन श्रीश्रीचण्डीनाम्ना। आदावेव ब्रह्मसूत्रस्य **शक्तिभाष्यं** (समूलः प्रथमाध्यायः) 1859 ईशवीयाब्दे पञ्चाननेन सम्पादितम् अनुवादसहितम्। अपि च, ब्रह्मसूत्रस्य **शक्तिभाष्यम**पि समूलं द्वितीयाध्याद् ग्रन्थसमाप्तिपर्यन्तं 1861 ईशवीयाब्दे प्रकाशितं पञ्चाननेन। सर्ववेदप्रतिपाद्यत्वं सर्वधर्मोपपत्तिमत्त्वं च शक्तिब्रह्मण इति सप्रपञ्चम् उपपादितम् अनेनेह भाष्ये। सप्तशती च सर्वथा श्रुतिमेव अनुवर्तत इति सम्यग् उपवर्णितं तदीयदेवीभाष्ये। श्रीदुर्गाकृपासमुन्मेषितो नवो वादः अनेकधा वर्तते सूत्रव्याख्याने श्रुतिविवरणे कार्यकारणभावे साधनादिसृष्टौ शब्दाभिधास्वरूपादौ च। तेषाम् अपसिद्धान्तत्वम् आशङ्कमानैः गतानुगतिकैः स्पर्शमात्रेण यदीदं हीयेत तदेवं श्रीमच्छिरोमणिवचनं अनूदितवान् पञ्चाननः अस्मिन् भाष्ये। कविरूपेण पञ्चाननो यथा प्रसिद्धिं प्राप्नोत्, तथैव दर्शनग्रन्थानां भाष्यरचनायां तस्य सावलीलत्वं लक्ष्यते। प्रत्येकं भाष्यटीकादिरचनायां कविस्तथा टीकाकृत् पञ्चाननः विषयगाम्भीर्येण अर्णवायमाण इति।

### (ङ) सम्पादकरूपेण पञ्चाननभट्टाचार्यस्य कृतित्वम्

बभूव तदानीन्तने काले सम्पादकत्वेन पञ्चाननः प्रभूतयशोभाक् । रामायण-महाभारतयोः आर्षमहाकाव्ययोः टीकया सह सरलवङ्गानुवादेन सम्पादनं विहितं पञ्चाननेन । विशेषेण, पञ्चाननसम्पादितं महाभारतं

वङ्गीयसंस्करणेषु आद्यस्थानीयम्। न केवलं काव्यानां, ऊनविंशतिसंहितापि वङ्गानुवादेन सह समूलम् अनेन सम्पादितमा। अपि च, प्रायः विंशतिसंख्यकानि पुराणानि उपपुराणानि चानेन अनवद्यतया सुखबोध्यरूपेण वङ्गभाषयानूद्य सम्पादितानि। प्रसङ्गत उल्लेख्यं यत् विष्णुपुराणं प्राथम्येन श्रीश्रीसीतारामदास-ओङ्कारनाथेन प्रवर्तितस्य आर्यशास्त्रस्य तृतीयसंख्यायां 1372वङ्गाब्दे पञ्चाननतर्करत्नस्य वङ्गानुवादेन समं प्रकाशितम्। किञ्च, पञ्चाननस्य सम्पादनेन श्रीमद्भारतीतीर्थविद्यारण्यमुनीश्वरकृता श्रीरामकृष्णविरचितटीकया सह **पञ्चदशी** प्रचरद्रूपतां गतम् 1311शकाब्दे। किञ्च, अद्भुतरामायणस्य वङ्गानुवादः पद्यरीत्या सम्पादितः पञ्चाननेन। चरकसंहिताख्यम् आयुर्वेदशास्त्रीयग्रन्थं सरलया बङ्गभाषया अनूद्य प्रकाशितवान्। अर्थात् सम्पादकरूपेण न केवलं वङ्गदेशस्य विद्वत्परिषदि, चापि आसमुद्रे भारतवर्षे विद्वान् अयं ख्यातिशिखरमवाप इति निश्चप्रचम्।

१९४० ख्रीष्टाब्दे महतो कवेस्तथा टीकाकृतः काश्यामेव महाप्रयाणमभवत्। वङ्गदेशस्य शास्त्रचर्चायां पञ्चाननस्य योगदानम् अनस्वीकार्यम्। वर्णाश्रमधर्मं प्रति आसक्तिवशात् वर्णाश्रमराद्धान्तास्तस्य रचनासु प्रत्यक्षतया भासमाना आसन्। परिशेषे वक्तव्यं यत् कवेस्तथा टीकाकृतः पञ्चाननतर्करत्नभट्टचार्यस्य कृतिविश्वं सत्यमेव प्रशंसार्हमिति कृत्वा मृत्योः परमपि विद्वत्संसदि अयं मनीषी स्वसारस्वतसाधनायै अमरत्वमलभत इति शम्।

## तथ्यसूत्राणि

---

[1]*अमरमङ्गलम्* इतिहासाश्रितम् अष्टाङ्कनाटकम्, 1907

[2] पौराणिकवृत्तान्तम् उपजीव्य ग्रथितं *पार्थाश्वमेधमहाकाव्यम्* इति विद्योदयपत्रिकायां प्रथममेव प्रकाशितमभूत् 1962 ईशवीयाब्दे।

[3] ऋतुवर्णनापरकं श्लेषप्रधानं गीतिकाव्यं *सर्वमङ्गलोदय*मिति शृङ्गाररसभरितम्।

[4] *शोककवितावली* तावत् पञ्चाननस्य करुणरसाश्रितं शोकाभिभूतकवितासंकलनम्।

[5] परिष्कारः

[6] *याज्ञकवल्क्यसंहिता* (1.7)

[7] *अमरमङ्गलम्* (2.8)

[8] तत्रैव (4.2)

[9] तत्रैव (5.2)

[10] तत्रैव (अमरसिंहवचनम्)

[11] तत्रैव (अमात्यस्य उक्तिः)

# महर्षिः अरविन्दघोषः तत्संस्कृतसम्बन्धश्च

**अनीश-राघवन्**

## भूमिका

भारतस्य पुनरुज्जीवनार्थं विविधक्षेत्रेषु नैकमहतां विदुषां मध्ये श्रीयुक्तस्य अरविन्दघोषस्य नाम अविस्मरणीयं वर्तते। अयं खलु अरविन्दमहाशयो न केवलमाङ्ग्लशासनविरोधेन राजनैतिके वैप्लवकर्मणि निमग्नोऽपि तु भारतीयवाङ्मयस्य मूलतत्त्वानां प्रकाशकः, दार्शनिकः, सांस्कृतिकजागरणपरः, महाकविः, तथा अध्यात्मगुरुः, योगी चेति। ऋषिः अरविन्द इत्याख्यया प्रसिद्धोऽयं महान् यद्यपि स्वजीवनस्य आद्यपर्व आङ्ग्लदेशे यापयत् पाश्चात्त्यसंस्कृतौ सन्निमग्नः आसीत्। एकविंशतिवयसि स्वदेशागमनान्तरमचिरमेव भारतीय-संस्कृत्यनुभवे शास्त्रेषु च पारदर्श्यभूदिति महते विस्मयायैव। एवं भारतीयतां पुनः कृत्स्नविश्वसकाशं प्रकाशयितुं तथा च विविधग्रन्थैः प्रकाशितवद्भ्यो महद्भ्यः स कश्चित् विलक्षणोऽग्रगण्यः पण्डित इति कथने न कापि विप्रतिपत्तिः स्यात्।

## अरविन्दजीवनम्

1872-तमे वर्षे आगष्टमासे पञ्चदशतमे दिनाङ्के कलिकातायां सुप्रसिद्धस्य डा.कृष्णधनघोषनाम्नो वैद्यस्य तथा अर्वाचीनबङ्गप्रदेशनिर्माणे पुरोगामिनः ऋषिराजनारायणवसुरिति विख्यातस्य आदिब्राह्मसमाजमार्गदर्शकस्य दुहितुः श्रीमत्याः स्वर्णलतायाः तृतीयपुत्ररूपेण लब्धजन्मा अरविन्दघोषः। भविष्यनवतिवर्षं यावदयं स्वजीवितेन देशस्यास्य तथा मानवजातेश्च सामाजिकसांस्कृतिकोद्धरणम् आध्यात्मिकोन्मीलनञ्च विहितवान्।

## बालारविन्दः

ईशवीये 1879-तमे वर्षे सप्तवर्षीयोऽरविन्दः तद्भ्रातरश्च पाश्चात्त्यसंस्कृत्युपासकेन स्वपित्रा अध्ययनार्थम् आङ्ग्लदेशं प्रेषिताः। तत्रादौ

कस्मिंश्चिद् Drewett-नाम्नि आङ्ग्लपरिवारे वर्धितः पोषितश्च सन् बालोऽरविन्दः लातिन-फ्रेञ्च्-आङ्ग्लभाषासु Drewett-महोदयेनैव कृतोत्तमाधारः, 1184-तमे वत्सरे St. Paul's School इति लण्डन्-नगरस्थे प्रसिद्धविद्यालये छात्रत्वेन नीतः। तत्र पञ्चवर्षाणि यावत् स नैकपुरस्कारविजेतृत्वेन विशेषविद्यार्थित्वेन च सुपरिचितः। अन्ततो गत्वा Cambridge नगरस्य सुप्रसिद्धायां King's College इति कलाशालायां शास्त्रीयच्छात्रवेतनविजयेन (Scholarship) स्वीकृतः। तत्र Classical Tripos इति परीक्षां प्रथमश्रेण्यामुच्चाङ्कैः प्रोत्तीर्णः स ग्रीक्लातिनभाषादिसाहित्ये नैजं महत्पाण्डित्यं च Rawley पुरस्कारादि-नैकप्रसिद्धविजयेन सर्वजनविदितं चकार। अन्ततः, पितुराज्ञया I.C.S. इति तत्कालिकश्रेष्ठपरीक्षां विशेषाङ्कैः प्रोत्तरत्। परन्तु आङ्ग्लराजशासनक्षेत्रे निःशेषतया अनुत्सुकः सः, अश्वारोहणचरमपरीक्षायां ज्ञानतोऽनुपस्थितो भूत्वा शासनसेवायाः स्वयम् अपात्रीकृतः। तदानीं *सायाजीराव*-नामकेन वटोदरानगरमहाराजेन साक्षात्काररीत्या वटोदरासांराज्य-शासनसेवायाम् उद्योगाय चितः अरविन्दः 1893-तमे वर्षे फेब्रवरीमासे चतुर्दशवर्षात्मकं विदेशवासं परिसमाप्य स्वजन्मभूमिं प्रति प्रस्थितः। एवं मुम्बानगरे अप्पोलो-बन्दर्-तटे अरविन्दस्य भारतभूमौ प्रथमपदन्यासमात्रेण कोऽपि दैविकशान्तेराविर्भावात्मकः आद्यः आध्यात्मिकानुभवश्च तत्प्रत्यागमनस्य दिव्यपरिणाममसूचयदिव।[1]

## स्वातन्त्र्यसङ्ग्रामी अरविन्दः

*सायाजीराव*-महाराजेन प्रदेशशासनविभागेषु कार्यार्थं नियोजितः अरविन्दः वटोदराकलाशालायां फ्रेञ्च्-आङ्ग्लभाषयोरध्यापकरूपेण, तदनु कदाचित् 1904-तमे वर्षे कुलपतिरूपेणापि कार्यमकार्षीत्। एवं त्रयोदशवर्षात्मके वटोदरावासे पूर्वस्मादेव पाश्चात्त्यविद्याविशारदः स पूर्वाननुभूतभारतीयशास्त्रेषु बङ्गसंस्कृतगुर्जरभाषासु कृतोत्तमाधिकारः स्वदेशस्य ऐतिहासिकसाहित्यिक-सांस्कृतिकज्ञाने स्वल्पसमये एव प्रमाणपुरुषोऽभूत् तथैव भारतसांस्कृतिका-लङ्कारिकैतिहासिकवैदुष्यविभूषितान् सुप्रसिद्धप्रबन्धान् नाटकानि काव्यानि च विरचयामास। तदानीमेव भारतस्य आङ्ग्लशासनजनितां दुर्दशां तथैव तत्कालिक-

कोङ्ग्रेस्-दलस्य भीतिं सङ्कोचं दृढमाक्षिपन् इन्दुप्रकाश इति पत्रिकायां New Lamps for Old इति शीर्षकेण प्रोद्दीपनप्रबन्धान् लिलेख। नैतिकक्षेत्रे समाविष्टः अरविन्दः देशस्वातन्त्र्यसङ्ग्रामे देशस्य लोककार्यकाराणां (Proletariats) भागग्रहणेन तथा आङ्ग्लापकारस्फुटखण्डनेन स्वदेशम् आङ्ग्लहस्तात् मोचयितुम् उत्सुकः बङ्गप्रदेशे स्वानुजेन वारीन्द्रनाथघोषेण तथा भगिनीनिवेदिता-चित्तरञ्चनदासप्रभृतिमहाजनसाहचर्येण राष्ट्रभावपोषणाय देशपराक्रमिणां किमपि रहस्यदलं समायोजयत्।

1905 तमे वर्षे क्रान्तिकर्मणे बङ्गदेशमागच्छन् सः बङ्गदेश-विभाजनसमये नैतिकजगत् पूर्णतया प्राविशत्। तत्र एकवर्षं यावत् National College इति कलाशालायाः अधिपतिः सन् अरविन्दः महाक्रान्तिकारिणा विपिनचन्द्रपालेन प्रारब्धायाः 'बन्दे मातरम्' इति पत्रिकायाः मुख्यसम्पादको भूत्वा, विविधप्रौढप्रेरकनिबन्धलेखनेन, तथा नैकभाषणैश्च न केवलं लाल-बाल-पाल-सदृशेषु क्रान्तिकारिष्वपि तु आङ्ग्लसाहित्यकेष्वपि सुविख्यातोऽभूत्। तथैव पूर्वतनकाङ्ग्रेस्-दलस्य विदग्धजनसीमितं भयप्रच्छन्नम् आङ्ग्लशासनविरोधे प्रयासायमानं सङ्कुचितप्रयासं खण्डयन् अरविन्दः 1907-तमे डिसम्बरमासे सूरत्-नगरे, काङ्ग्रेस्-दलस्य द्विधा वियोजने Nationalist इति पक्षतः सुप्रसिद्धनायकरूपेण लोकप्रियः जातः। समकाले अरविन्दस्याध्यात्म्यजीवनेऽपि लेलेनाममहायोगिनो मार्गदर्शनेन 1908-तमवर्षे जानवरी-मासे कश्चित् प्रधानः आद्वैतिकानुभवः तमध्यात्मवर्त्मनि प्रावाहयत्।

1908-तमे वर्षे आङ्ग्लैः The most dangerous man इति परिचितः, मानिक्तलानामकेन दलेन संयुक्ते आलिपुरस्फोटव्यवहारे तैः बन्धीकृतः, आलिपुरकारागृहस्य कस्मिंश्चित् व्यतिरिक्तकोष्ठे एकवर्षं यावत् रुद्ध आसीत्। तदानीं न्यायालये सुप्रसिद्धविधिज्ञेन चित्तरञ्जनदासेन अरविन्दपक्षतः वर्षात्मक-न्याययुद्धपरेण अन्ततः तन्माहात्म्यमुद्घोषितं तथा तदनपराधता च साधितं येन अनपराधः अरविन्दः 1909-तमे वर्षे मे-मासस्य 6-दिनाङ्के विमुक्तोऽभवत्। अपि तु विमुक्तोऽयम् अरविन्दः न हि कारागारप्रविष्टारविन्देन समः। तस्य एकवर्षात्मकः

कारावासः तज्जीवने किमपि अद्भुतम् आध्यात्मजागरणं व्यदधात् यस्मिन्, वासुदेवस्य सर्वव्यापकं दर्शनं, गीतोपनिषज्ज्ञानोपलब्धिः च तस्य सनातनधर्मप्रकाशकम् आध्यात्मिकं सल्लक्ष्यं न्यवेदयत्। एवम् अरविन्दः कारावासतपोगुहायाः निर्गतः नैतिकक्षेत्रं परित्यज्य कारागृहानुभवं तथा भारतमातुः सज्जागरणाय आध्यात्मिकलक्ष्यावलम्बनं च उत्तरपाडायां प्रदत्ते भाषणे तथा *काराकाहिनी* इति बङ्गलेखे च सविस्तरम् अवर्णयत्। ततश्च *कर्मयोगिन्* इति पत्रिकायां धर्मविषये, आध्यात्मिकविषये तथा देशसंस्कृतेः सारविषये च विविधप्रबन्धान् कविताश्च अप्रकाशयत्। 1910-तमे वर्षे यथाकथञ्चित् तं सङ्ग्रहीतुं तत्परान् आङ्ग्लशासकान् भ्रामयन् तथा कमपि दिव्यम् आत्मादेशमनुसरन् अरविन्दः प्रच्छन्नरूपेण चन्दननगरं तदनु पुदुच्चेरिनगरं च एप्रिल्-मासस्य चतुर्थदिनाङ्के सम्प्राप्तः।[2]

## योगी अरविन्दः

पुदुच्चेर्यां त्रिंशद्वर्षेभ्यः पूर्वं नागैस्वामिनामधेयेन वैष्णवयोगिना दीर्घदृष्टिसूचितम् कस्यचिद् उत्तरयोगिनः आगमनं प्रतीक्षमाणेन तच्छिष्येण मण्डूयश्रीनिवासाचार्येण तथा तमिळमहाकविना सुब्रह्मण्यभारतिमहोदयेन, वि.वि.एस्. अय्यर् नामकक्रान्तिकारिणा एवं सुप्रसिद्धराष्ट्रियवादिभिः प्रत्युद्गतः अरविन्दः चतुर्वर्षाणि यावत् रहस्सदने राष्ट्रस्वातन्त्र्योत्कण्ठितैः बङ्गतमिळ-क्रान्तिकारिभिः परमदारिद्र्यताण्डवमन्वभूत्। तथापि अविह्वलः स त्रयोविंशति-दिनानि यौगिकपरीक्षारूपेण उपवासं चकार।[3] एवं दिनानुदिनम् आध्यात्म-जीवनान्तर्गूढः अरविन्दः यौगिकसाधने विविधस्तरान् ससिद्धिं उपालभत।

1914-तमे वर्षे त्रयश्चत्वारिंशद्वर्षीयः अरविन्दः *आर्य* इति मासिकपत्रिकां प्रारभत यस्याः मुख्योद्देश्यं मानवास्तित्वस्य प्रधानसमस्यानां व्यवस्थित-परिशीलनम् (A systematic study of the highest problems of existence) इत्यासीत्। अस्यां पत्रिकायाम् अरविन्दस्य आध्यात्मदर्शनाश्रितभावा अनुसन्धानानि च प्रकाशितानि यानि अन्ततः अरविन्दस्य आध्यात्मिक-दार्शनिकरचनानां समाहाररूपेण विश्वप्रसिद्धानि जातानि। एवं षड्वर्षाणि यावत्

आर्यपत्रिका सुविख्याता 1921-तमवर्षपर्यन्तं प्रकाशिता। 1926-तमवर्षस्य नवम्बरमासे चतुर्विंशतिदिनाङ्के अरविन्दस्य योगसाधनम् अतिमानसनामकं (Overmind) किमपि निहिताध्यात्मिकस्तरं प्रापयतः अरविन्दाध्यात्मिक-लक्ष्यस्य मानवविकासक्रमागतस्य अतिमानवस्तरस्य (Supermind) जगति आविर्भावार्थं लब्धसङ्केतः जगज्जननीस्वरूपेण तदभिज्ञातायै मीरानाम-श्रेष्ठशिष्यायै आश्रमोत्तरदायित्वं विन्यस्य आजीवनं दृढैकान्ते च मानवमङ्गलाय अतिमानवस्तराविर्भावे योगनिमग्नः आसीत्।

1950-तमे वर्षे डिसम्बरमासे पञ्चमतिथौ अरविन्दः स्वशरीरमजहत् तथैव स्वाश्रमप्राङ्गणे समाधिनिष्ठः। अरविन्दस्याध्यात्मिकारम्भस्य अग्रनेत्री श्रीमातेति ख्याता मीरा तदाश्रमं परिचालयन्ती तद्दर्शनलक्ष्यं मानवस्तरे प्रतिष्ठापितवती। तथैव अरविन्दस्य सिद्धान्ताः नैकग्रन्थाश्च अद्यावधि विश्वस्तरे प्रकाशिताः, अनुसृताः, गवेषिताः, समास्वादिताश्च।

**अरविन्दस्य संस्कृतसम्बन्धः**

अरविन्दघोषः आङ्ग्लदेशात् प्रत्यागमनानन्तरं वटोदरानगर्यां महाराज-सान्निध्ये वटोदराकलाशालायाम् अध्यापकरूपेण कार्यं कुर्वन्, स्वदेशज्ञानामृतपिपासुः देशात्मभूतां संस्कृतभाषां न केवलमध्यैत अपि तु अचिरमेव शास्त्रसागरेषु पूर्णतया न्यमज्जत्। स आदौ संस्कृतशिक्षणं कदाचित्साक्षात् संस्कृतमाध्यमेन तथाङ्ग्लमाध्यमेन कुर्वन्, महाभारत-नलोपाख्यानसन्दर्भस्य पौनःपुन्यपठनेन भाषायाः परिचयं तत्सामर्थ्यं चावर्धयत्।[4] एवं कृताशुप्रगतिरयं अचिरमेव वेदोपनिषदां पुराणेतिहासयोः तथा कालिदास-भवभूत्यादिकृतरचनानां असीमसंस्कृतसागरं तथा तदगाधतलाश्रितं भारतीयसंस्कृतिसारं च समन्वभूत्। सः अनुभवश्च संस्कृतप्रणयने तं प्रबन्धरचनानुवादादिविविधदिशा प्रैरयत्। अरविन्दस्य संस्कृतरसिकत्वं तथा तद्विषयोल्लेखाश्च स्वरचनासु बहुशः दरीदृश्यन्ते। उदाहरणार्थं तस्य The Life Divine इति प्रमुखग्रन्थे प्रत्यध्यायं वेदमन्त्राणाम् उपनिषद्वचनानाम् आध्यात्मिकसंस्कृतश्लोकानाम् उल्लेखानन्तरं तदाश्रितलेखः विलिख्यते। बहुषु

सन्दर्भेषु कालिदासादिकवीनां विषये प्रशंसाधिकाः समीक्षात्मकाः उल्लेखाः लभन्ते। तथा वेदार्थप्रकाशने अर्वाचीनपण्डितानां गणनायाम् अरविन्दस्य नाम अपरिहार्यमेव। एवम् अरविन्दस्य सुमहत्यां रचनावल्यां प्रतिपुटं प्रायः तत्संस्कृतज्ञानं सूचयेदिति गौरवात्, तस्य संस्कृतसम्बन्धे लेखेऽस्मिन् दिङ्मात्रमेव अग्रे प्रतिपाद्यते।

**संस्कृतप्रेमी अरविन्दः**

भारते राष्ट्रियभाषायाः चर्चायाम् अरविन्दः हिन्दीभाषापेक्षया संस्कृतभाषां देशस्य राष्ट्रभाषारूपेण ऐच्छत्। एतन्मतं तमिळमहाकविः सुब्रह्मण्यभारती स्वस्य स्मृतिलेखेषु स्पष्टं कथयति।[5] अरविन्दस्य लेखेषु च नैकानि वाक्यानि संस्कृतस्य वैशिष्ट्यं तथा भारते तदत्यन्तप्रयोजनं च सूचयन्ति- Sanskrit ought to still to have a future as a language of the learned and it will not be a good day for India when the ancient tongue ceases entirely to be written or spoken."[6]

यतः संस्कृतस्य सौन्दर्यम्, अर्थसूक्ष्मता, अर्थवैविध्यशैथिल्यं तथा समानसमये सुव्यवस्थितरूपं च संस्कृतस्य दिव्यत्वं तथा तच्छब्दार्थयोः अपौरुषेयत्वं नैसर्गिकबन्धनं च समर्थयन्ति। तथा ह्युक्तम् -

The Sanskrit language is the devabhasha….based on the true and perfect relation of Vak and artha. Every one of its vowels and consonants has particular and inalienable force which exists by the nature of things and not by development of human choice…[7]

अतः सारस्वतदृष्ट्या आध्यात्मिकदृष्ट्या चापि संस्कृतस्य फलदायकत्वं तदुत्तमकरणत्वं च अरविन्दः निर्दिशति - …(Sanskrit) is one of the most magnificent, the most perfect and wonderfully sufficient literary instruments developed by human mind…language of Yoga.[8]

अरविन्दाश्रमपरिचालिका अरविन्दयोगसाधनाग्रनेत्री श्रीमातेति विख्याता *मिरा अल्फसा* अपि अरविन्देन विवेचितं भारते संस्कृतोज्जीवनतत्त्वं तन्मतानुसारं स्ववचनेभ्यः स्पष्टयति - The Ideal would be in a few years, to have rejuvenated Sanskrit as the representative language of India, that is a spoken Sanskrit. Sanskrit behind all the languages of India and it should be that. This was Sri Aurobindo's idea…."[9]

एवम् अरविन्दमतानुसारम् आधुनिकयुगे संस्कृतभाषायाः प्राचीन-पाण्डित्याडम्बररहितं किमपि नवीनसरलरूपमपेक्षितं यत् भारतस्य सर्वभाषासु आधाररूपेण विद्येत तथा प्राचीनभारतस्य सारं शक्तिं वा परिरक्षत् देशस्य अतीतभविष्ययुगयोः विशेषसम्बन्धं कञ्चित् कारयेत् - The vital question is how we are to learn and make use of Sanskrit and the indigenous languages so as to get to the heart and intimate sense of our own culture and establish a vivid continuity between the still living power of past and the yet uncreated power of our future.[10]

एवं नैकवाक्येषु एतानि कानिचिद् वाक्यानि संस्कृतभाषां प्रति अरविन्दस्य महतीं श्रद्धां, ज्ञानं च संक्षिप्तरूपेण दर्शयन्ति। अपि तु, एकं महावाक्यं तस्य संस्कृतभाषायाः प्रगाढपरिचयं रसिकत्वं च स्फुटं प्रकाशयति - The ancient and classical creations of the Sanskrit tongue both in quality and in body and abundance of excellence, in their potent originality and force and beauty, in their substance and art and structure, in grandeur and justice and charm of speech and in the height and width of the reach of their spirit stand very evidently in the front rank among the world's greatest literatures.[11]

### संस्कृतवाङ्मये विविधक्षेत्रज्ञानम्

अरविन्दस्य गभीरसंस्कृतज्ञानं तं विशालसंस्कृतवाङ्मयस्य नैकक्षेत्रे गवेषणाय प्रैररयत्। अथ अग्रे संस्कृतवाङ्मये अरविन्देन विहितानि विविधक्षेत्रगतानि विविधकार्याणि दिङ्मात्रम् उपस्थाप्यते।

## भाषागतानुसन्धानम्

अरविन्दस्य संस्कृतज्ञानं तथा तमिळभाषापरिचयः तं भाषोत्पत्तिविषयके कस्मिंश्चिदनुसन्धाने प्राचोदयत्। तदनुसन्धानं च अरविन्देन The Origin of Aryan Speech इति शीर्षकेण प्रकाशितमासीत्, यत्र मानवजातेः वागभिव्यक्तेः मौलिकविकासश्च तमिळ-ग्रीक्-लातिन्-आदि-संस्कृतसहोदरभाषाणामाश्रयेण संस्कृतस्य धात्वादिमूलांशानां समीक्षणेन च गवेषितः।

अरविन्दस्य भाषाशास्त्रानुसारम् आदिमा भाषा काचित् देवभाषा सत्ययुगप्रयुक्ता ववृते या कालविकासक्रमेण विकृतिभूता, विविधप्रान्तीयभाषासु परिणता। तासु विकृतासु भाषासु संस्कृतभाषा देवभाषाया निकटतमा या तद्वैशिष्ट्यं रूपं च बहुशः संरक्षन्ती संस्कृतम् इति सम्यक् कृतित्वं, संस्काराप्तत्वम् भावार्थं च नाम्ना एव प्रमाणयति।

अस्याः भाषायाः भाषोत्पत्तेः मूलस्तराध्ययनम् अरविन्देन मूलधातुगतं (Embryonic) तथा स्वरूपगतं (Structured) इति भागद्वयेन विभक्तम्। एवं अनुसन्धानेऽस्मिन् अरविन्दः सुव्यवस्थितरीत्या वृकादिसामान्यशब्देषु प्रधानव्यञ्जनादारभ्य तत्स्तरीयभावार्थं, तथा द्वितीयकक्षायां तद्व्यञ्जनेन स्वरमात्रयोगात् अर्थविकासं सविस्तरं परिशील्य मानवानां भाषोत्पत्तेः आदिमस्थितिं, द्वितीयस्थितिं इत्यादि-वाक्स्तराननुसमदधात्। तथैव भाषाविकासे वागर्थयोः सम्बन्धे मनोवैज्ञानिकप्रभावमपि क्रमपूर्वकं परिशीलयति। There must be these two elements, the structure of the language, its roots, formations and the growth, and the psychology of the use of structure.[12]

यद्यपि इदमनुसन्धानमसमाप्तं वर्तते, तत्र भाषायाः धातुस्तरात् शब्दस्तरपर्यन्तं विकासः न केवलं बौद्धिकप्रक्रियामात्रेण प्रभवति अपि तु मनोविकासदृष्ट्या नैसर्गिकरीत्या उद्भवतीति भाषाविकासदर्शने प्रधानतत्त्वम् अरविन्देन स्पष्टं प्रतिष्ठितम्।

## वेदानुसन्धानम्

अरविन्दस्य वेदमन्त्रानुवादः, वेदानां च विश्वप्रसिद्धं व्याख्यानं च तन्नवीनत्वात्, विचारगौरवात् आधुनिकवेदव्याख्याकारेषु तं प्राधान्येन प्रकाशयति। अरविन्दमते वेदाः सन्ति ऋषीणां पारमार्थिकसत्यस्य काचित् दृष्टिः, किमपि समावृततथ्यं च, यत् प्रतीकात्मकतत्त्वैः वृत्तान्तैर्वा गूढाच्छन्नम् आध्यात्म्यशक्त्या अनुभवमात्रावगम्यं न तु मौलिकप्रयासप्रकाशितम्। Discovering Truth and clothing in image and symbol the mystic significances of life.[13]

एवम् अरविन्दः ऋग्वेदं विशेषतया वारं वारं गवेषयन् पूर्वानुभूतानाम् अनुभवानाम् आश्रयेण तद्वेदस्य प्रत्यक्षरं प्रतिशब्दं समीक्ष्य तदर्थचयने अर्थव्यापकत्वं यौगिकतत्त्वं च वैज्ञानिकरीत्या परीक्ष्य मन्त्राणाम् अनुवादं व्याख्यानं च सविस्तरं कृतवान्।[14] समानसमये पाश्चात्त्याधुनिकपण्डितानां दुष्टव्याख्याः तथा सायणाचार्यस्यापि कर्मकाण्डप्राधान्यां वेदव्याख्यामखण्डयत्।

अरविन्दस्य वैदिकदर्शनानुसारं प्रतिदेवता प्रतितत्त्वं च आध्यात्मिकदृष्ट्या चैतन्यस्य विविधस्तराणां तत्त्वानां च प्रतीकं भवति। उदाहरणार्थं वायुः भवति Master of Energies, सरस्वती भवति Truth-audition, ईला च Truth-vision इत्यादि[15]। एवम् अरविन्दः वेदेषु अलक्षितान् सुगूढान् गभीरयौगिकार्थान् स्वयौगिकानुभवेन सुतीक्ष्णबौद्धिकप्रवृत्त्या The Secret of the Veda, Hymns to the Mystic Fire इत्यादिप्रधानरचनासु प्राकाशयत्।

अरविन्दस्य इदं वेदज्ञानं न मस्तिष्कपरिकल्पितमपि तु साक्षाद्दृष्टम् अनुभूतं च। अरविन्दः श्रीकृष्णमेव स्ववैदिकव्याख्यानप्रेरकरूपेण वैदिकज्ञानदातृरूपेण च परिचिनोति, येन स वेदरहस्यं नवीनदृष्ट्या प्रकाशयितुं किमपि नवीनतत्त्वं निरुक्तम् - Sri Krishna has shown me the true meaning of the Vedas, not only so but he has shown me a new

Science of Philology showing the process and origins of human speech so that a new Nirukta can be formed and the new interpretation of the Veda based upon it.[16]

## उपनिषदामनुसन्धनाम्

"The Upanishads are epic hymns of self-knowledge and world-knowledge and god-knowledge"[17]इति अरविन्दस्य मतम्। तस्य दृष्ट्या उपनिषदां ज्ञानं न बुद्धिगता काचित् प्रतिपत्तिः अपि तु साक्षाद् उपलब्ध्यात्मकं ज्ञानं यत्र ज्ञातृज्ञातज्ञानेषु भेदभावः विनश्यति।[18] अरविन्दस्य उपनिषद्वर्णनात्मकेषु वाक्येषु एकं वाक्यं तन्मतगतम् उपनिषन्महात्म्यं संक्षिप्तरूपेण वर्णयति- Upanishads are at once profound religious scriptures, -for they are a record of the deepest spiritual experiences,- documents of revelatory and intuitive philosophy of an inexhaustible light, power, and largeness…spiritual poems of an absolute an unfailing inspiration inevitable in phrase, wonderful in rhythm and expression.[19]

अतः उपनिषदः न हि वैदिकप्रवृत्तिविलक्षणा अपि तु वेदानामन्तभूताः निरवच्छिन्नशेषभागाः याः वैदिकगूढार्थान् साक्षादाविष्कुर्वन्त्यः प्रतीकावरणापाकृतं वेदज्ञानं दार्शनिकरीत्या प्रकाशयन्ति। एवम् अरविन्देन वेदरहस्योन्मीलनप्रक्रिययैव उपनिषदोऽपि अनूदिताः व्याख्याताश्च। अरविन्दः उपनिषदध्ययने ईश-केन-कठ-प्रश्न-मुण्डक-माण्डुक्य-तैत्तिरीय-ऐतरेय-छान्दोग्य-बृहदारण्यक-श्वेताश्वेतर-कैवल्य-नीलरुद्रोपनिषदामध्ययनं चकार। तत्र ईश-प्रश्न-केन-कठ-मुण्डक-तैत्तिरीय-ऐतरेय-माण्डुक्योपनिषदाम् पूर्णानुवादं सव्याख्यं कृत्वा इतरोपनिषदाम् एकभागानुवादमकार्षीत्। एवमरविन्दः उपनिषदां ब्रह्मविद्यात्मकं सारज्ञानं स्पष्टं प्रकाशयन् प्रत्युपनिषत् वैशिष्ट्यं विलक्षणत्वं च स्वस्य अनुसन्धाने प्रतिपादयति।[20]

## पुराणेतिहासज्ञानम्

वेदोपनिषत्कालानुसारी खलु पुराणेतिहासयुगो यस्मिन् व्यासवाल्मीकि-विरचिते रामायणमहाभारते अरविन्दमते न वीरपुरुषचरित्रमात्रौ अपि तु जीवनस्य सूक्ष्मतमभावानां प्रौढभावानाम् उत्कृष्टनीतितत्त्वानां सौन्दर्यरसिकत्वस्य तथा आदर्शभूतनयसमाजरूपाणां पराकाष्ठान्वितां संस्कृतिं प्रकटीकुरुतः सुरमणीयरचने। तथा रामायणस्य महाभारतस्य शैली च प्रयोगाढ्या, अक्लिष्टा, सारल्यललिता, सुमधुरा तथा यत्ननिर्मितालङ्काररहिता मूलवृत्तान्तकेन्द्रिता चेति वर्णयति। अरविन्दमते इतिहासज्ञानं बौद्धिकज्ञानायोपकारि।[21] एवं रामायणस्य तथा महाभारतस्य अतिविशेषलक्षणानि परिलक्ष्यमाणानि विमर्शनात्मकानि अनेकवाक्यानि उल्लेखार्हानि च अरविन्दस्य रचनासु वर्तन्ते यानि गौरवभयादत्र नोद्धृतानि। अपि तु रामायणमहाभारतमाश्रित्य रचिताः काश्चन कृतयः अग्रे कथ्यन्ते।

रामायणे विविधकाण्डेषु बहूनां श्लोकानां, तथा कदाचित् पूर्णसर्गाणामपि अनुवादाः लभ्यन्ते। महाभारते च तथैव सभापर्वणि तथा उद्योगपर्वणि च नैकाध्यायानामनुवादः अद्य प्राप्यते। रामायणमहाभारतानुवादाः कदाचित् वटोदरायां रामायणमहाभारतयोः प्रसिद्धाङ्ग्लानुवक्त्रा रमेशचन्द्रदत्तेन दृष्टाः तस्मिन् स्वानुवादस्य बालत्वं स्मारयन्तः तत्प्रति लज्जां तथा अरविन्दानुवादान् प्रति सम्मानं चाजनयदिति कथ्यते।[22] Nala, Chitrangada, Urvasie, Ulupie, Love and Death तथा तस्य परमप्रसिद्धं Savitri इति नैककाव्यानि च महाभारतवृत्तान्ताश्रितानि। दार्शनिकक्षेत्रे च Essays on the Geeta तथा बङ्गभाषायां *गीतार् भूमिका* इति गीतोपदेशमाश्रिते विख्याते कृती च रचिते। The Notes on the Mahabharata तथा The Problem of the Mahabharata इति प्रबन्धद्वये अरविन्देन प्राक्कल्पनपुरस्सरं शोधप्रबन्धरीत्या महाभारतस्य उत्पत्तिः, रचनाकारः, रचनाकालः, श्लोकशैली, श्लोकसंख्या इति समीक्षात्मकरीत्या समस्यापरिकल्पनेन विमृष्टाः।

अरविन्देन पुराणानामध्ययनमपि गभीरतया विहितम्, अपि च पुराणेषु विष्णुपुराणस्य तथा श्रीमद्भागवतस्य सर्वोन्नतवैशिष्ट्यं च तेन स्वव्याख्यानेषु स्पष्टं समुल्लिखितमस्ति।[23]

**संस्कृतसाहित्यपरिचयः**

अरविन्दः साहित्ययुगस्य विषये तथा तत्कालस्य कवीनां विषये The Foundations of Indian Culture तथा The Future Poetry इति ग्रन्थयोः बहुषु बहुधा वर्णयति, प्रशंसते, विमर्शयति च। तत्र विशेषतया कालिदासस्य, भर्तृहरेः, माघस्य तथा भारवेः विमर्शः आधिक्येन परिदृश्यते। अपि च भास-शूद्रक-जयदेव-सोमदेव-बाणभट्ट-विष्णुशर्म-विशाखदत्त-पण्डितनारायणानाम् विषयोल्लेखान्यपि प्राप्यन्ते।[24] अपि तु अरविन्देन कालिदासस्य, तथा भर्तृहरेः माहात्म्यम्, तयोः प्रायः सर्वासां मुख्यकृतीनां विमर्शश्च सविस्तरं वर्णितः।

संस्कृतसाहित्यात् प्रेरितः अरविन्दः The Hero and the Nymph इति नाम्ना विक्रमोर्वशीयस्य अनुवादं चकार। कुमारसम्भवस्य प्रथमसर्गस्य त्रयः अनुवादाः अरविन्देन रचिताः एवं च Skeleton notes on the Kumarasambhavam: Canto 5 इति प्रौढव्याख्यानसहितस्य पञ्चमसर्गस्य प्रथमत्रयोदशश्लोकाः अनूदिताः। मेघदूतखण्डकाव्यम् अरविन्देन The most marvelously perfect descriptive elegiac poem in the world's literature[25] इति प्रशंसिता रचना कदाचित् पूर्णतया अनूदिता। अपि तु सः अनुवादः कालगह्वरलुप्तः। अन्ततः अरविन्दः कालिदासरचनानां कश्चित् विस्तृतं सप्तदशाध्यायकं शोधप्रबन्धं लिखितुं प्रस्तुतः यस्य प्राक्कल्पितविषयसारणी खलु लभ्यते। भर्तृहरेः शतकत्रयेषु नीतिशतकम् अरविन्देन The Century of Life इति मुक्तच्छन्दसा पाण्डित्यमय्याम् आङ्ग्लभाषायाम् अनूदितम्।

साहित्यं विहाय धर्मशास्त्रार्थशास्त्रादीनि, साङ्ख्यकारिका, वेदान्तसारः, शाङ्कररचनाः लक्षणग्रन्थाश्च अरविन्देन पठिता इति स्वलेखेषु ज्ञायते। एवं पूर्वोक्तं सर्वं तस्य संस्कृतभाषायामुत्तमपाण्डित्यं, संस्कृतवाङ्मये च गभीरप्रवेशं स्पष्टं प्रबोधयति।

## अरविन्दस्य संस्कृतरचनाः

यद्यपि अरविन्दः संस्कृतप्रियः संस्कृतज्ञश्च, तस्य संस्कृतरचनाः आङ्ग्ल-बङ्ग-रचनापेक्षया अत्यल्पाः। परन्तु तास्वपि गद्यं पद्यं व्याख्याः श्लोकाः इति लेखवैविध्यम् संस्कृतभाषायां अरविन्दस्य सामर्थ्यमेव प्रमाणयति। एता सर्वा अपि रचना अरविन्दस्य जीवनकाले अप्रकाशिताः, अपि तु तद्देहत्यागात् चिरकालानन्तरं तत्सञ्चिकारूपमातृकासु संलब्धाः आसन्। तथैव एता अरविन्दस्य वटोदरावासप्रवृत्तस्वातन्त्र्यसङ्ग्रामजीवनस्य तथा पुदुच्चेर्यागमन-प्रवृत्तस्य यौगिकजीवनांशस्य च विकासपर्यायं प्रमाणयन्ति। अपि च अचिरकाले एव अरविन्दस्य संस्कृतशिक्षणप्रगतिं भारतसांस्कृतिकज्ञानोपलब्धिं च स्फुटं साधयन्ति। एतासु प्रायः सर्वा अपि अपूर्णा, असंशोधिताश्च विद्यन्ते। अतः तासु बह्व्यः न प्रकाशनोद्देशेन लिखिताः अपि तु प्रायः व्यक्तिगततया अरविन्देन स्वसञ्चिकायां स्वविचाराभिव्यक्तये तत्तत्काले स्वतःस्फूर्ततया रचिताः इत्यपि अनुमातुं शक्यते। अग्रे अरविन्दस्य इमे रचनाः ग्रन्थप्रकाशकैरनुमितं तद्रचनाकालक्रमं यथाशक्ति अनुसृत्य दिङ्मात्रं वर्णिताः वर्तन्ते। *विविधाः श्लोकाः, प्राण इदं सर्वम्, भवानी भारती, तान्त्रिकसिद्धिप्रकरणम्, सप्तचतुष्टयम्, श्रीअरविन्दोपनिषत्, कैवल्योपनिषद्व्याख्या, ऋग्वेदमन्त्रव्याख्या, सा सर्वा, मन्त्राश्चे*ति अरविन्दस्य संस्कृतरचनानामुद्देशः। एता सर्वा अपि कृतयः अरविन्दाश्रमप्रकाशितस्य The Complete Works of Sri Aurobindo इति ग्रन्थावल्याम् Writings in Bengali and Sanskrit इति नवमग्रन्थे लभन्ते।

## विविधाः श्लोकाः

*न वाचो मे सार्था इति मनुजसमाख्या हि सफला*
*न वृत्तैर्बुद्ध्यर्हैर्नर इति उपपद्येत पशुषु।*
*प्रलापो यस्यार्थो न हि फलति विशिष्टं पशुषु किं*
*कृतैर्यो देवत्वं व्रजति नृषु स सिद्धो नृचरितैः॥*

एतत् पद्यं यद्यपि शिखरिणीवृत्ताश्रितमिव प्रतीयेत, तथापि प्रतिपादमेको लघ्वक्षरो आधिक्येन दृश्यते। अत्र आङ्ग्ल-ग्रीक-आदिभाषासु नवनवरीत्या वृत्तप्रयोगे समुत्सुकः अरविन्दः, प्रायः संस्कृते अपि नवीनच्छन्दः प्रयुङ्क्ते इति मन्तव्यम्।

*पतति सहसा वर्माच्छन्नो यमस्य शरैर्गृहे*
*समरशिरसि क्राम्यन्नग्नो विहन्ति न हन्यते।*
*गहनतिमिरे देवो मृत्युर्नृभिर्न विलक्ष्यते*
*विहरति चरन् हन्त्येतान्तान् जहाति च कर्मजः॥*[26]

इति एतादृशाः चतुर्पञ्चाधिका मुक्तकाः अरविन्दस्य 1900-तमवर्षात् 1903-तमवर्षान्तरं प्रयुक्तायां आङ्ग्ल-बङ्ग-संस्कृतलेखान्वितायां सञ्चिकायां पुटत्रये लब्धाः। एवं तेषु प्रतीयमाना भर्तृहरेः पद्यशैली, अरविन्दस्य भर्तृहरिविरचितनीतिशतकस्यानुवादसमयमेव प्रायः एतच्छलोकरचनाकालत्वेन अनुमापयति। तथैव भर्तृहरेः शतका हि एतेषां समुल्लासे प्रेरका इति भासते।[27]

## प्राण इदं सर्वम्

पूर्वोक्तायां समानसञ्चिकायामसौ कोऽप्यपूर्णो गद्यभागः संवादरूपोद्दिष्टो *देव उवाच* इति सङ्केतेन प्राण *इदं सर्वं व्याप्य तिष्ठति। प्राणो हि इदं सर्वम्।* इति देववचनेन आरभ्यमानः, पुटार्धं यावत् प्रवर्तते। एवं सञ्चिकायां शीर्षकहीनोऽयं लेखः *प्राण इदं सर्वम्* इति आरम्भपदात्मकेन शीर्षकेण प्रकाशितः। अस्य गद्यस्य वस्तु दार्शनिकसंवादरूपेण विवक्षितं, पाठकं योगवासिष्ठग्रन्थे लब्धानि तत्त्वानि स्मारयति, तथैव पाश्चात्त्यदार्शनिकानां विचारान्नपि सूचयति।[28]

## भवानी भारती

अरविन्दघोषस्य न्यूनासु संस्कृतरचनासु *भवानी भारती* इति खण्डकाव्यं बृहत्तमं तथैव साहित्याश्रिता कृतिर्भवति। उपजातिवृत्ते नवनवतिश्लोकनिबद्धेयं रचना अरविन्देन कदाचित् 1904-तमवर्षात् 1908-तमवर्षान्तरं देशस्य स्वाधीनतासङ्ग्रामसमये विरचिता इति अनुमीयते। यतः काव्येऽस्मिन् दृष्टान्तरीत्या

(Allegorical) आङ्ग्लशासनम् असुररूपेण वर्णयन् तथा भारतमातुः तद्युद्धपराक्रमं विजयं च शब्दैः चित्रयन् अरविन्दः तत्कालीनान्दोलनसंग्रामाय भारतीयान् समुद्दीपयति, तथैव संस्कृते स्वकवित्वमपि प्रकटयति।

1908-तमे वर्षे अरविन्दस्य कारागृहप्रवेशसमये रक्षिपुरुषैः अपहृतेषु लेखपत्रकाव्यादिविविधरचनासु इयं रचनापि अपहृता। ततः अरविन्ददेहत्यागात् पञ्चत्रिंशद्वर्षेभ्यः परमेव अलिपुरकाराबन्धनप्रसङ्गे अपहृतानाम् अरविन्दहस्त-लिपीनां रक्षणभाण्डारात् अरविन्दाश्रमेण इयं कृतिः 1904 वर्षस्य हस्तलिखितपुस्तिकायां प्रतिलब्धा।

इदं पद्यं शीर्षकहीनं तथा अपरिशीलितमेव आङ्ग्लरक्षिपुरुषैः अपहृतमासीत्। अतः 1895-तमे वर्षे प्रकाशनसमये आश्रमस्य Sri Aurobindo Archives and research तत् काव्यं *भवानी भारती* इति नाम्ना प्राकाशयत्। इदं नाम काव्यस्यास्य नैकश्लोकेषु तत्पदसाम्यत्वात्, तथा अरविन्दस्य तत्कालिके Bhawani Mandir इति लेखे,*भवानी भारती* इति पदप्रयोगात्, तल्लेखस्य काव्यस्य च समवस्तुदर्शनात् च निश्चितमासीत्।[29] तथा हि- तस्य लेखस्यायमंशः काव्यस्य मुख्यतत्त्वमेव संक्षेपेण उल्लिख्यते-

When, therefore, you ask who is Bhawani the mother, She herself answers you, "I am the Infinite Energy which streams forth from the Eternal in the world and Eternal in yourselves. I am the Mother of the Universe, the Mother of the Worlds, and for you who are children of the Sacred land, *aryabhumi*, made of her clay and reared by her sun and winds, I am Bhawani Bharati, Mother of India."[30]

इह काव्यस्यास्य केचन श्लोकाः-

प्रारम्भे भोगविलासविलीनस्य भारतसन्तानस्य दशा-

*सुखे निमग्नः शयने यदासं मधोश्च रथ्यासु मनश्चचार।*
*स चिन्तयामास कुलानि काव्यं दारांश्च भोगांश्च सुखं धनानि॥1॥*
*कान्तैश्च शृङ्गारयुतैश्च हृष्टो गानैः स छन्दो ललितं बबन्ध।*
*जगौ च कान्तावदनं सहास्यं पूज्ये च मातुश्चरणे गरिष्ठे॥2॥*

प्रपीडितायाः काराल्याः भवान्याः वर्णनम्

*नरास्थिमालां नृकपालकाञ्चीं वृकोदराक्षीं क्षुधितां दरिद्राम्।*
*पृष्ठे व्रणाङ्कामसुरप्रतोदैः सिंहीं नदन्तीमिव हन्तुकामाम्॥5॥*

जनन्याः गर्जनं स्वसन्तानाह्वानं च

*मातास्मि भो पुत्रक भारतानां सनातनानां त्रिदशप्रियाणाम्।*
*शक्तो न यान् पुत्रविधिर्विपक्षः कालोऽपि नो नाशयितुं यमो वा॥12॥*
*भो भो अवन्त्यो मगधाश्च बङ्गा अङ्गा कलिङ्गाः कुरु सिन्धवश्च।*
*भो दाक्षिणात्याः शृणुतान्ध्रचोला वसन्ति ये पञ्चनदेषु शूराः॥23॥*

भवान्याः भारत्याः वन्दनम्

*तुभ्यं नमो देवि विशालशक्त्यै भीमव्रते तारिणि कष्टसाध्ये।*
*त्वं भारती राजसि भारतानां त्वमीश्वरी भासि चराचरस्य॥73॥*[31]

## तान्त्रिकसिद्धिप्रकरणम्

तान्त्रिकसिद्धिप्रकरणम् अरविन्दस्य काचिद् अपरिसमाप्ता तन्त्रसिद्धान्ताश्रिता रचना या सूत्रपरम्परया विरचिता। अस्यां कृतौ पराशक्तेः उपासना तद्भेदप्रक्रियाश्च प्रधानविषयाः। इयं रचना अरविन्देन पुदुच्चेर्यागमनात् वर्षद्वयानन्तरं प्रायः लिखिता इति प्रतीयते। सूत्रैः लघुवाक्यैश्च रचितेयं कृतिः शब्दैः पराशक्त्याः मान्त्रिकीं शक्तिं सूचयति। यथा - न मे साधनं तवैव साधनं न मे

भारस्तवैव भारस्त्वमेहि त्वं कर्त्री शक्तिर्नाहं कर्ता नाहं शक्तस्त्वमेव साधनं कुरु कालीत्यात्मसमर्पणम् इति।

तस्य धर्माधर्मपापपुण्यमङ्गलामङ्गप्रियाप्रियविचारं परित्यज्य निश्चेष्टस्य सुखासीनस्य काली शरीरं प्रविशति।

हुङ्काराट्टहाससिंहनाददर्शनशक्तिबोधैर्ज्ञातं भवति प्रवेशनम्।
योगक्रियाप्रवर्तनेन वा॥
सा प्रविष्टाहङ्कारमपनुदति।
तामसं निकृष्टमहङ्कारमपनुदति।
राजसं तदनन्तरमहङ्कारमपनुदति।
परस्ताद्राजसतामसमिति मिश्रमपनुदति।
सात्त्विकमहङ्कारमपनुदति।...[32]

**सप्तचतुष्टयम्**

इयम् अरविन्दस्य अपरा आध्यात्मिका रचना यस्यां योगसाधन-सम्बन्धानां तत्त्वानां सप्तचतुष्टयम् अर्थात् शान्तिचतुष्टयं शक्तिचतुष्टयम् इत्यादयः तथा अष्टविंशतिः भावाश्च सूत्रपरम्परया प्रबोधिताः। चतुष्टयेऽस्मिन् केषांचित् भावानाम् अतिसंक्षिप्तोक्तिः अरविन्दस्य तल्लेखने असमाप्तिं वा तदनुपलब्धिं वा सूचयति। एषा रचनापि तान्त्रिकसिद्धिप्रकरणस्य समानसञ्चिकायां लब्धा भवति।[33]

**एकमेवाद्वितीयं ब्रह्म (अरविन्दोपनिषत्)**

इयं रचना अरविन्दस्य सप्तविंशतिवाक्ययुता सुतनुकाया दार्शनिककृतिः यस्याम् अरविन्दः स्वकीयं दर्शनम् उपनिषदां शैल्यां प्रतिपादयति। अतः अत्र ब्रह्मणः तथा जगतोऽपि सत्यतां प्रतिष्ठापयति। अस्याः नामरहितायाः रचनायाः *एकमेवाद्वितीयं ब्रह्म* इति छान्दोग्योपनिषत्प्रेरितैः प्रारम्भपदैः तथैव *अरविन्दोपनिषद्* इति उपशीर्षकेण ग्रन्थव्यपदेशः अरविन्दाश्रमस्य ग्रन्थप्रकाशकैः 1987-तमे वर्षे प्रकाशितः। इयं कृतिः वैदिकौपनिषदध्ययनार्थं 1912-1913 वर्षे प्रयुक्तायां

सञ्चिकायामलभत। सा अरविन्दर्षेः आध्यात्मदृष्ट्योपलब्धं श्रुतिवचनमित्येव भासते।[34]

अत्र अस्याः कृतेः आरम्भो विद्यते-

> *ॐ । एकमेवाद्वितीयं ब्रह्म सदसद्रूपं सदसदतीतं नान्यत्किञ्चिदस्ति त्रिकालधृतं त्रिकालातीतं वा सर्वन्तु खलु ब्रह्मैवं यत्किञ्च जगत्यामणु वा महद्वोदारं वानुदारं वा ब्रह्मैव तद् ब्रह्मैव जगदपि ब्रह्म सत्यं न मिथ्या।...*[35]

## कैवल्योपनिषद्व्याख्या ऋग्वेदमन्त्रव्याख्या

अरविन्दप्रणीतसंस्कृतव्याख्याद्वयं भवति कैवल्योपनिषद्व्याख्या ऋग्वेदमन्त्रव्याख्या च। एते व्याख्ये च स्वमूलग्रन्थस्य प्रथममन्त्रस्यैव भवताम्। तथापि ते प्रौढे सुविस्तृते च, अरविन्दस्य वेददर्शनं स्फुटं प्रकाशयतः। एताभ्यां कैवल्योपनिषद्व्याख्या 1912-तमे वर्षे प्रणीता, तथैव ऋग्वेदमन्त्रव्याख्या 1920-तमे वर्षे विहिता।

## सा सर्वा

अयम् अपूर्णः एकमहावाक्यमात्रकः गद्यांशः अरविन्देन 1927-तमवर्षे प्रयुक्तायां निबन्धमय्यां सञ्चिकायां प्रथमपुटे लभ्यते। इयं सञ्चिका The Mother इति प्रसिद्धग्रन्थस्य अन्त्याध्यायस्य प्रणयनार्थमपि प्रयुक्तासीत्। अयं लेखः ब्रह्मतत्त्वमधिकृत्य यद्यपि प्रवर्तते, अन्त्यवाक्यद्वये सा सर्वा सा सर्वमयी इति शक्तितत्त्वं सूचयतीत्येव प्रतीयते। अतः इयं लघ्वी अपूर्णा कृतिरपि सा सर्वा इति तत्प्रकाशकैः परिज्ञाता।[36]

> *ॐ तत्सद्या सः। सनातनमनन्तमनादिमध्यं सर्वं सर्वातीतं परात्परं ब्रह्म। तद्यत्परात्परं तदेव सत्सर्वम्। तत्रापि सर्वं यथात्रैव। तद्धि तत्र सर्वस्य सत्यम्। तद्ध्यत्र सर्वत्र सर्वस्य*

*भावः। सैव परात्परा यथैकाद्वितीयाकथ्यचैतन्यमयी निर्गुणानन्तगुणमय्यजानादिमध्यान्ता। सा सर्वा सा सर्वमयी। तस्यां हि सर्वं तया सर्वम्।* [37]

**मन्त्राः**

योगी अरविन्दः स्वयं मन्त्रचतुष्टयस्य द्रष्टा वर्तते। तत्र आदिमत्रयम् 1927-तमे वर्षे दृष्टम्। एवं चतुर्थमन्त्रः 1933-तमे वर्षे गायत्र्यां दृष्टः। एते मन्त्राश्च Letters on Himself and the Ashram, इति ग्रन्थे स्वहस्तलेखेन देवनागरीलिप्यां प्रकटिताः सन्ति।

*ॐ आनन्दमयि चैतन्यमयि सत्यमयि परमे*
*ॐ तत् सत् ज्योतिररविन्द*
*ॐ सत्यं ज्ञानं ज्योतिररविन्द*

**अरविन्दप्रणीतः गायत्रीमन्त्रः**

*तत्सवितुर्वरं रूपं ज्योतिः परस्य धीमहि।*
*यन्नः सत्येन दीपयेत्॥*

**अरविन्दरचितो व्याकरणप्रवेशः (लुप्तग्रन्थः)**

अरविन्दः श्रीमातरं मीरां संस्कृतमशिक्षयत्। तदानीं संस्कृतव्याकरण-शिक्षणार्थं स्वयं तस्यै सरलव्याकरणप्रवेशपुस्तिकां व्यरचयत्। अपि तु भाषाशिक्षणोद्दिष्टा सा रचना मीरायाः नौकायात्रासमये दौर्भाग्याल्लुप्ता।[38]

**उपसंहारः**

अरविन्दः संस्कृतसाहित्येतिहासस्य प्रतिस्तरं प्रतिसोपानमनुभवन् स्वरचनासु द्विसहस्राधिकसंस्कृतशब्दानां प्रयोगं कुर्वन् सप्तसहस्रवैदिकशब्दान् प्रबोधयन्, संस्कृतसौन्दर्यम् अनुवादेषु स्वरचनासु व्याख्यानेषु तथा उल्लेखेषु प्रकटयन्, संस्कृतप्रणयने विश्वस्तरीययोगदानं कृतवान्। पाश्चात्त्यजनानां

प्राच्यज्ञानस्य तद्भ्रान्त्यात्मकावगमनं संशोध्य भारतनिधिं स्वशुद्धप्रकाशेन जगति प्रदर्शयिततराम्। एवं तस्य संस्कृतसम्बद्धकार्यं काचिद् अद्वितीया देशसेवा यया भवान्याः भारत्याः यशः दिनानुदिनं विश्वेऽस्मिन् विश्वे संवर्धिष्यते इति शिवम्।

## Bibliography

*Autobiographical Notes and Other Writings of Historical Interest (*Vol. 36 of Complete Works of Sri Aurobindo CWSA*),* Sri Aurobindo, Sri Aurobindo Ashram, Pondicherry, 2006.

*BandeMataram: Political Writings 1890-1908* (Vol. 6 of CWSA)*,* Sri Aurobindo, Sri Aurobindo Ashram, Pondicherry, 2002.

*The Foundations of Indian Culture (Vol.12 of Sri Aurobindo Birth Centenary Library SABCL),* Sri Aurobindo, Sri Aurobindo Ashram, Pondicherry, 1972.

*The Hour of God (Vol.16 of SABCL),* Sri Aurobindo, Sri Aurobindo Ashram, Pondicherry, 1972.

*Hymns to the Mystic Fire (Vo.11 of SABCL),* Sri Aurobindo, Sri Aurobindo Ashram, Pondicherry, 1972.

*Letters on Himself and the Ashram (Vol.35 of CWSA),* Sri Aurobindo, Sri Aurobindo Ashram, Pondicherry, 2011.

*The Secret of the Veda (Vol.10 of SABCL)*, Sri Aurobindo, Sri Aurobindo Ashram, Pondicherry, 1972.

*Sri Aurobindo,* M.P. Pandit, Munshiram Manoharlal Publishers, New Delhi, 1998.

*Sri Aurobindo: A Critical Introduction,* Nandakumar Prema, Sterling Publishers Pvt. Ltd., New Delhi, 1988.

*Sri Aurobindo on Himself, Sri Aurobindo*, Sri Aurobindo Ashram, Pondicherry, 1958.

*The Upanishads (Vo.12 of SABCL)*, Sri Aurobindo, Sri Aurobindo Ashram, Pondicherry, 1972.

*Writings in Bengali and Sanskrit (Vol.9 of CWSA),* Sri Aurobindo Ashram, Pondicherry, 2017.

*बारदियार् करुत्तु (तमिळ्)*, सारदा नूलगम्, 2007.

*भवानी भारती*, संस्कृतकार्यालयः, श्रीअरविन्द आश्रम, पुदुच्चेरी, 2017.

## References

[1]"A vast calm…long months afterwards.", *Autobiographical Notes and Other Writings of Historical Interest* (A.N.W.H.I.), p.110
[2]*Sri Aurobindo: a Critical Introduction* (S.A.C.I.), p.10
[3]ibid., p.11
[4]*Sri Aurobindo on Himself* (S.A.H.), p.12, p.336
[5] *बारतियार् करुत्तु* (तमिळ्), पृ.333
[6]*The Hour of God* (H.G.), p.195
[7]*Hymns to the Mystic Fire*, p.449
[8]*The Foundations of Indian Culture* (F.I.C.), p.225
[9]*Sri Aurobindo and Sanskrit* (S.A.S.), p.6 (Mother 11.11.1967)
[10]*H.G.*, p.195
[11]*The Secret of the Veda* (S.V.), p.255-56
[12]ibid., p.750

---

[13] *The Secret of the Veda*, p.260
[14] *"Sri Aurobindo took up…several times over."*, S.A.S., p.21
[15] "For example, he…to the Vedic Studies.", ibid., p.22
[16] A.N.W.H.I., p.178
[17] F.I.C., p.22
[18] *The Upanishads*, p.68
[19] ibid., p.269
[20] "Sri Aurobindo has…of the Kaivalyopanishad.", S.A.S., p.26
[21] ibid. pp.290-93
[22] *SriAurobindo*, p.40
[23] S.A.S., p.37
[24] ibid., p.47
[25] ibid., p.41
[26] *Writings in Bengali and Sanskrit* (W.B.S.), p.685
[27] ibid. p.712
[28] ibid.
[29] ibid.
[30] *BandeMataram: Political Writings* 1890-1908, p.89
[31] *भवानी भारती*
[32] W.B.S., p.694
[33] ibid., p. 714
[34] ibid.
[35] ibid.,p.699
[36] ibid., p.715
[37] ibid., p.707
[38] S.A.S., p.7

## सारस्वतसाधकः भारताचार्यः श्रीहरिदाससिद्धान्तवागीशः

**डा. अमलकुमार-भट्टाचार्यः**

इह खलु संस्कृतसाहित्यसंसारे येषां वङ्गीयविवुधानाम् अचिन्त्यमवदानं भावकान् रसज्ञान् शास्त्रज्ञांश्च मोदयति नन्दयति च, तेष्वयं काश्यपकविः भारताचार्यः श्रीहरिदास-सिद्धान्तवागीशभट्टाचार्योखिलशास्त्र-निष्णातः अर्वाचीनकालोत्पन्नकविकुलललामभूतो मूर्धण्यस्तिष्ठति। परन्तु दौर्भाग्यात् संस्कृतसेविनां मध्ये बहवो विद्वांसः हरिदासस्य अत्यद्भुतसृजनविषयं न जानन्ति। तस्य एकमपि पुस्तकमुद्धाट्य न पश्यन्ति, पश्यन्तोऽपि उपेक्षन्ते। अध्यापिकायाः ऋतादेव्या महता वैदुष्येण हरिदासस्य समीक्षणम् आङ्गलभाषाद्वारेण संस्कृतसेविनां समीपे समुपस्थितमपि हरिदासस्य कृतिः सम्यग् नाराध्यते। अतोऽस्मिन् प्रस्तुते निबन्धे सांख्ययोगवेदान्तादिदर्शनाभिज्ञो धर्मशास्त्राध्यापकः स्वभावमहाकविः वाणीविलासो वङ्गगौरवः श्रीहरिदास-सिद्धान्तवागीशस्तस्य सृजनमहत्त्वञ्च आलोच्यते।

### श्रीहरिदासस्य संक्षिप्तजीवनचरितम् -

अविभक्तवङ्गदेशस्य फरिदपुरमण्डले कोटालिपाडाख्ये जनपदे ऊनशियाग्रामे ईशवीये 1876-अब्दे अक्टोवरमासस्य द्वाविंशतिदिवसे अयं महाकविः समजनि। तस्य पितुर्नाम गङ्गाधरविद्यालंकारः मातुश्च विधुमुखी देवी। पितामहस्तस्य काशीचन्द्रवाचस्पतिः काव्यव्याकरणतन्त्रपुराणवेत्ता अशेषलब्धकीर्त्तिः व्यास इव विरेजे। तस्यैव अध्यापनद्वारेण पञ्चवर्षीयबालकस्य हरिदासस्य विद्यारम्भोऽभूत्। अपि च, सामाजिकरीतिमनुसृत्य वङ्गभाषाशिक्षार्थं पाठशालामगच्छत्। पितामहसकाशात् कलापव्याकरणमधीत्य कोटालिपाडा-वास्तव्यादन्यस्मादपि पण्डितप्रवरात् सम्पूर्णं कलापव्याकरणमात्मस्थीकृत्य पञ्चवर्षीयो हरिदासः उपाधिपरीक्षायां प्रथमं स्थानमधिगम्य शब्दाचार्योपाधिना सम्मानितोऽभवत्। अत्रान्तरे अविरलप्रवाह इवास्य हरिदासस्य

असाधारणभाषानिर्माणं गद्यपद्यद्वारेण पण्डितसमाजे विस्मयं जनयति। षोडशवर्षीयेऽसौ[1] कंसवधं नाम नाटकं पञ्चसर्गात्मकं शङ्करसम्भवं च काव्यं विरच्य विबुधसमाजे कारयित्रीप्रतिभायाश्च महद्वैशिष्ट्यं प्रदर्शयति। जानकीविक्रमं नाटकं वियोगवैभवं च खण्डकाव्यम् ऊनविंशतिवयःक्रमान्तरे रचयति सः।

पितामहस्य काशीचन्द्रस्य परलोकगमनादनन्तरं हरिदासः कलिकाताम् आगत्य कियद्दिवसं जीवानन्दविद्यासागरसकाशात् काव्यविषयमधीत्य पूर्ववङ्गं प्रत्यागच्छत्। पूर्ववङ्गसारस्वतसमाजेभ्यः क्रमेण काव्यसांख्यपुराणविषये सर्वोच्चं स्थानमधिकृत्य सांख्यरत्नपुराणशास्त्री-सिद्धान्तवागीशप्रभृतिभिः उपाधिभिः भूषितोऽभवत्। पितुः सन्निधाने ज्योतिषशास्त्रमपि शिक्षयामास। पूर्वमेव प्रसिद्धं शास्त्रकारं भुवनख्यातं नैयायिकं रामनाथसिद्धान्तपञ्चाननं प्राप्य तस्मादेव न्यायशास्त्रमधीतवान्। एवं क्रमेण संस्कृतशास्त्रस्य प्रतिविभागमाक्रम्य पाठे परीक्षायां च साफल्यं लब्धवान्। अपि च, स्थाने स्थाने विद्याविवादे तर्कसभायां महाभारतपाठकर्मणि विचारकाले च हरिदासस्य वाग्मिता शास्त्रज्ञैः समादृता अभवत्। सारस्वतसमाजे हरिदासस्य यशःसौरभमपि स्वदेशमतिक्रम्य देशान्तरं प्राचलत्। 1306 वङ्गाब्दे हरिदासस्य प्रथमो पुत्रः शशिशेखरोऽजायत। ततस्तस्य पत्नी सरलामुखी दिवं गता। 1307 वङ्गाब्दे हरिदासस्य द्वितीयविवाहोऽभवत्। परन्तु तस्य सामान्यजीवनम् अतिक्रम्य ज्ञानतपस्या चिरं विराजिताऽसीत्। वाग्मिता समस्यापूरणं विचारक्षमत्वं नष्टकोष्ठीनामुद्धारश्च ज्ञानतापसस्य हरिदासस्य ख्यातिं वर्धयामासुः। प्रसन्नकुमारतर्करत्नेन सह न्यायशास्त्रविचारेण किञ्च यादवेश्वरतर्करत्नेन समम् अलंकारशास्त्रस्य विचारेण च युवा हरिदासः पण्डितसमाजे प्रतिष्ठां प्राप। पण्डितप्रकाण्डः शशधररूपः शशधरतर्कचूडामणिः हरिदासेन सार्धं विचारे प्रवृत्तः सन् तमेव भूयो प्रशस्य अभिनन्दितवान्। अस्मिन्नेव समये 1308 वङ्गाब्दे तस्य विराजसरोजिनी नाटिका प्रकाश्यं नीता।

1313 वङ्गाब्दे ऊनशियाग्रामे हरिदासस्याध्यापकजीवनं समारब्धम्। किन्तु बहुविधसमस्यया स्वग्रामं परित्यज्य उपार्जनार्थं कलिकातामागच्छत्।

ततश्च नवीपुरसामन्तस्य हरिचरणस्यामन्त्रणेन आचार्यरूपेण नकीपुरटोलस्य छात्रान् अध्यापयामास। तदानीमध्ययनमध्यापनं च समाप्य स महाकाव्यं रचयति। तदनन्तरं छात्रान् पाठयति। आहारान्ते कियत्कालं विश्रम्य पुनश्छात्रान् पाठयित्वा प्रबन्धरचनाकौशलं वाग्मितां भाषणप्रदानं वा शिक्षयति। एवमसाधारणनिष्ठया असौ हरिदासः आचार्यरूपेण तथा शास्त्रनिष्णातपण्डितरूपेण शीर्षत्वमभजत। 1316 वङ्गाब्दे हरिदासेन रुक्मिणीहरणं महाकाव्यं सम्पूर्णं कृतम्। महाकाव्यस्यास्य महत्त्वेन असौ 1341 वङ्गाब्दे श्यामासुन्दरीति पुरस्कारेण भूषितोऽभवत्। रुक्मिणीहरणादनन्तरं हरिदासेन यशोहरराजप्रतापादित्यस्य चरितमवलम्ब्य वङ्गीयप्रतापं नाटकं विरचितं, यत्र कवेः स्वदेशप्रीतिः स्पष्टतया उद्घोष्यते। मिवारप्रतापं नाटकमपि हरिदासस्य देशप्रेम्नो भावनां प्रकाशयति। अपि च, भारतवासिनां हृदये देशप्रेमदीपं प्रज्वालयितुं शिवाजीचरितं नाम दशाङ्कसमन्वितं नाटकं तेन रचितम्। हरिदाससिद्धान्तवागीशो न केवलं काव्यरचनया दिनं यापयति, संस्कृतकाव्यनाटकादीनां बहूनां नूतनटीकाभिः टिप्पन्यश्च सप्पादनं कृत्वा प्रकाशयति। मालविकाग्निमित्रम्, उत्तररामचरितं, मालतीमाधवं, दशकुमारचरितं, मेघदूतं, कादम्बरी, साहित्यदर्पणः, कुमारसम्भवं, मृच्छकटिकं, रघुवंशं, शिशुपालवधं, नैषधचरितं, मुद्राराक्षसञ्च ग्रन्थाः हरिदासकृतटीकाभिः टिप्पन्या चालंकृताः।

तस्य सर्वासु रचनासु महाभारतस्य वङ्गानुबादो भारतकौमुदी टीका च विबुधसमाजे अधिकमाद्रियेते। तस्य कारयित्री भावयित्री च प्रतिभा प्रतिष्ठानशतशैः सम्मानिता। काशीधामस्य भारतधर्ममहामण्डलः हरिदासाय 'महोपदेशक' इति उपाधिं प्रदाय सम्बर्धयामास। भारतसर्वकारेण हरिदासो ‘महामहोपाध्याय’ इत्युपाधिना अलंकृतो अभवत्। भारतीयपण्डितमहामण्डलस्तं ‘महाकवि’रिति ख्यापितवान्। शान्तिपुरस्थ-वंगीयपुराणपरिषदा हरिदास: ‘भारताचार्या’ख्योपाधिना भूषितोऽभवत्। एवं क्रमेण असौ रवीद्रपुरस्कारेण भारतसर्वकारतः ‘पद्मभूषण’मिति उपाधिना अलंकृतः। चतुर्दिक्षु आत्मनो ज्ञानतपस्याया वाग्मितायाः प्रज्ञायाश्च वार्तां विस्तारयामास सः। विश्वकविः रवीन्द्रनाथः, भाषाविद् सुनीतिकुमार:, प्रज्ञावान् हरप्रसादशास्त्री च महाभारतस्य

वङ्गीयकरणं वङ्गाक्षरेणालोक्य सिद्धान्तवागीशाय भूयोऽभिनन्दनं ज्ञापयामासुः। 1368 वङ्गाब्दस्य पौषमासस्य नवमदिवसे कर्मवीरो ज्ञानतापसो हरिदासस्तस्याक्षयकीर्तिं सारस्वतसेवकानां कृते निधाय दिवं गतोऽभवत्।

**श्रीहरिदासकृतयः**

श्रीहरिदाससिद्धान्तवागीशेन विरचितानि प्रकाशितान्यप्रकाशितानि च पुस्तकानि तावत् -

**(क) प्रकाशितमौलिकग्रन्थाः**

**महाकाव्यम्** - रुक्मिणीहरणम्।
**नाटकानि**- विराजसरोजिनी, वङ्गीयप्रतापम्, मिवारप्रतापम्, शिवाजीचरितम्।
**खण्डकाव्यानि**- वियोगवैभवम्, विद्याविक्तविवादम्।
**गद्यकाव्यम्** - सरला
**शास्त्रीयग्रन्थः-** स्मृतिचिन्तामणिः।
**अलंकारग्रन्थः -** काव्यकौमुदी
**वङ्गभाषायाम्** - युधिष्ठिरेर समय, विधावार अनुकल्प चेति

**(ख) अप्रकाशिता मौलिकग्रन्थाः -**

**नाट्यम्** - कंसवधम्, जानकीविक्रमम्।
**खण्डकाव्यम्** - शङ्करसम्भवम्।
**शास्त्रीयग्रन्थः** - वैदिकवाद मीमांसा।
**दर्शनम्** - षड्दर्शनसमुच्चयः।

**(ग) प्रकाशितटीकाः**

भारतकौमुदी (महाभारतस्य)
अभिज्ञानकौमुदी (अभिज्ञानशकुन्तलायाः)
कुमारसन्तोषिणी (दशकुमारचरितस्य)

कल्पलता ( कादम्बर्य्याः)
वसन्तसुषमा ( मृच्छकटिकस्य)
जयन्ती( नैषधचरितस्य)
चाणक्यचातुरी (मुद्राराक्षसस्य)
माधुरी टिप्पणी (शिशुपालवधस्य, मल्लिनाथकृतायाः सर्वाङ्कषाटीकायाः)
चञ्चला (मेघदूतस्य)
सर्वार्थबोधिनी (उत्तररामचरितस्य )
कुसुमप्रतिमा (साहित्यदर्पणस्य )

**घ) अप्रकाशितटीका**

सर्वार्थबोधिनी (महावीरचरितस्य)

अधुना पूर्वोक्तानां ग्रन्थानां विवरणं प्रस्तूयते -

**क). रुक्मिणीहरणम् -**

महामहोपाध्यायेन श्रीहरिदाससिद्धान्तवागीशेन भागवतपुराणाख्यानम् उपजीव्य रुक्मिणीहरणं नाम षोडशसर्गात्मकं महाकाव्यं विरचितम्। तदीयात्मजेन हेमचन्द्र-काव्यव्याकरणपुराणतीर्थेन विचित्राख्यया टीकया समलंकृतं तत्कृतेनान्वयेन वङ्गानुवादेन च सह प्रकाश्यं नीतम्।

तत्र प्रथमसर्गे रुक्मिण्याः जन्मवृत्तान्तः, द्वितीये राजपुत्राणां राजकन्यायाश्च विद्याग्रहणम्, तृतीयेरुक्मिण्याः अग्रजस्य रुक्मणो राज्याभिषेकः, चतुर्थे नारदवचनम्, पञ्चमे श्रीकृष्णं प्रति रुक्मणो विद्वेषः, षष्ठे कृष्णमुद्दिश्य रुक्मिण्याः प्रेमपत्रप्रेरणम्, सप्तमे विदर्भतो द्वारकां यावत् कञ्चुक्याः यात्रावर्णनम्, अष्टमे कृष्ण-कञ्चुकीसंलापः, नवमे रुक्मिणीहरणार्थं कृष्णस्य विदर्भं प्रति यात्रावर्णनम्, दशमे रुक्मिण्याः सखीभिः सह कृष्णस्य वार्तालापः, एकादशे शृङ्गारवर्णनम्, द्वादशे शिशुपालागमनम्, त्रयोदशे कृष्णेन रुक्मिणीहरणम्, चतुर्दशे युद्धयात्रावर्णनम्, पञ्चदशे कृष्णविजयः, रुक्मिणश्च पराजयः, षोडशे

रुक्मिणीमादाय कृष्णस्य द्वारावतीप्रत्यागमनम्, भीष्मकवसुदेवयोः समक्षं कृष्णरुक्मिण्योर्विवाह, महाकवेः वंशपरिचयश्च महाकाव्योचितरीत्या वर्ण्यन्ते।

रुक्मिणीहरणाख्यानं महाभारते, संक्षेपेण हरिवंशे, भागवतपुराणे, विष्णुपुराणे, ब्रह्मपुराणे च विस्तरेणोपभ्यते। हरिदासकृतौ नवीकृतमिदमाख्यानं समुपलब्धम्। विशेषेण श्रीकृष्णं प्रति रुक्मिण्याः प्रेमपत्रप्रदानमस्य महाकाव्यस्य शृङ्गारचमत्कारित्वं वर्धयति। तत्रोदाहरणं यथा -

‘अस्या: खलु क्षितिपतेर्दुहितुर्हितार्थं
द्वारवतीस्थितहरेर्हर पत्रमेनम्।
एषार्थना फलवती भवितेति मन्ये
नालोकनं हि विफलं पुरुषोत्तमस्य’[2]॥

अपि च, ‘तृष्णा कृष्णाभिषङ्गे भवति बलवती’ इत्यादिचरणैरपि रुक्मिण्याभिलाष: स्फुटं प्रकाश्यते महाकविना। अनुप्रासबाहुल्येनोपमाद्यर्था-लंकारसहायेन हुलुध्वनिरित्यादि-प्रादेशिकशब्दप्रयोगाद्वीरशृङ्गारादिरसपोषक-शब्दार्थयोजनेन महाकाव्यमिदं माघभारविपदम् अनुसरत् सर्वदा शास्त्रकाव्यस्योत्कर्षं धत्ते।

## ख). मिवारप्रतापम्

मेवारदेशाधिपते: प्रतापसिंहस्य ऐतिहासिकवृत्तान्तमुपजीव्य ग्रथितं वीररसप्रधानं षष्ठाङ्कं नाटकम् ईशवीये 1644 मिताब्दे। तदानीम् अस्य नाटकस्याभिनय: साफल्येन सह अभूत्। अस्मिन् नाटके राजस्थानप्रदेशस्योज्ज्वलं देशप्रेम समुपवर्ण्यते।

नाटकस्य प्रत्येकम् अङ्कस्य नामकरणमेवं कृतं कविना। प्रथमाङ्क: ‘प्रतिज्ञा’, द्वितीय: ‘कमलाकौशलम्’, तृतीय: ‘मिवारप्रयाणम्’, चतुर्थ: ‘प्रतापपराजय:’, पञ्चम: ‘वनवास’स्तथा षष्ठाङ्क: ‘द्वात्रिंशद्दुर्गविजय’ इति। प्रस्तावनायां सूत्रधारः संस्कृतभाषाया अमरत्वमुद्घोषयति[3]।

स्वदेशरक्षार्थं राणाप्रतापोऽशेषकष्टं सहमानः आकवरस्य सेनापतिना मानसिंहेन आकवरसैन्यैश्च सह संग्रामं कृत्वाऽपि हलदीघाटक्षेत्रे पराजितोऽभवत्। परिजनैः सह पार्वत्यक्षेत्रे वनान्तरं पर्यटन् स्वाभिमानं विहाय आकवरसमीपे सन्धिप्रस्तावं कृतवान्। पृथ्वीराजस्य द्व्यर्थबोधकपत्रेण उदीप्तः सन् मन्त्रिसहायेन द्वत्रिंशदुर्गमधिकृतवान्।

नाट्येऽस्मिन् स्वदेशप्रीतिरेव प्राधान्येन भासते। नायकः प्रतापो धीरोदात्तः विश्वनाथादिप्रोक्तनायकगुणैश्च भूषितः। नान्दीप्रस्तावनादिभि नाट्यलक्षणैः समृद्धमिदं रूपकम्। वीररसोऽत्राङ्गी। नाटके विदूषको नायिका च नास्ताम्। प्राकृतभाषायाः प्रयोगः, भिल्लीनां सङ्गीतम्, लोकोक्तिप्रयोगः, भारतीस्वाधीनतालाभार्थं सन्देशश्च नाटकमिदं बहुधा भूषयन्ति। आलंकारिकाणां नाट्यनिर्देशमुपेक्ष्य मञ्चे वधबन्धनादिक्रिया, तिर्यग्योनि-विशिष्टस्याश्वस्य प्रवेशोऽप्यत्र सूचितोऽस्ति।

## ग). वङ्गीयप्रतापम्

अविभक्तवङ्गदेशस्य यशोहरमण्डलाधिपतेः प्रतापादित्यस्य वीरत्वपूर्णं वृत्तान्तमुपजीव्य अष्टाङ्कविशिष्टं नाटकं बङ्गीयप्रतापं 1667 खृष्टाब्दे श्रीहरिदासेन व्यरचि।

स्वदेशान्मुघलानाम् अत्याचारं निवारयितुं शङ्करचक्रवर्तिनः सहायेन प्रतापो नवावसेनापतिं सुरेन्द्रं निहत्य मुघलसैन्येभ्यः शङ्करपत्नीं मोचितवान्। आकवरः प्रतापादित्यं 'नृप' (राजा) इत्युपाधिना भूषितवान्। वङ्गदेशस्य नवावः प्रतापेन पराजितोऽभवत्। नवराजधान्यां धूमघाटे प्रतापस्य राज्याभिषेकः सम्पादितः। जाहाङ्गीरेण प्रेषितो मानसिंहोऽपि प्रतापादित्येन पराजितोऽभवत्।

अस्य नाटकस्याङ्कानां नामानि तावत् प्रथमाङ्कः 'सहायलाभः', द्वितीयः 'विहङ्गनिपातः', तृतीयः 'कल्याणीपरित्राणम्', चतुर्थः 'राज्यलाभः', पञ्चमः 'वङ्गदेशविजयः', षष्ठः 'प्रतापराज्याभिषेकः', सप्तमः 'दुर्जननिधनम्', अष्टमः 'प्रतापविजयः'।

अस्य नाटकस्य नायक: प्रतापादित्यः युद्धवीरः देशप्रेमिकस्तथा स्वाधीनचित्त:। नाट्ये शृङ्गारवीरहास्यरसानां त्रिवेणीसङ्गमः समुपलभ्यते। स्थाने स्थाने मनोरञ्जनार्थं संगीतं योजितमस्ति। नाट्यतत्त्वदृष्ट्या वङ्गीयप्रतापमुच्चकोटिकं नाट्यं, यत्र नाट्यतत्त्वानां साधु सन्निवेश: क्रियते। अत्र देशभक्तिपरिप्लुतरसभरेण[4] श्लोका: निर्मीयन्ते। छायातत्त्वस्य सुविहितप्रयोग: सम्पाद्यते इह। इतिहासपरिशेषसंक्षेप:, प्रतापस्य बन्धनं मरणं वेति हरिदासस्य नाट्ये विवर्ज्यते।

## घ). शिवाजीचरितम्

स्वदेशप्रेम्नः अन्यतमं निदर्शनं महाराष्ट्रवीरशिवाजिचरितम्। श्रीहरिदासेन 1645 खीष्टाब्दे दशाङ्कविशिष्टमैतिहासिकवृत्तं शिवाजिचरितम् विनिर्मितम्। तत्र प्रथमाङ्कस्य नाम 'संघसंघटनम्', द्वितीयाङ्कस्य नाम 'तोरणदुर्गाधिकारः', तृतीयाङ्कस्य नाम 'साहनाथवन्दीकरणम्', चतुर्थस्य 'वन्दिविनिमयः', पञ्चमस्य 'शिवानन्दवन्दीकरणम्', अष्टमस्य 'अपक्रमोपायनिर्णयः' (तत्र गर्भाङ्कोऽपि अस्ति)। नवमाङ्कस्य़ नाम 'विजयः'', दशमाङ्कस्य नाम 'शिवानन्दराज्याभिषेकः'।

देशप्रेम देशभक्तिर्वा नाटकस्य मूलचिन्तनम्। प्रारम्भे सूत्रधारो व्रवीति - 'भारतवासिनां हृदयेषु देशप्रेमदीपनार्थमेव वयमभिनेतुमभिलषामः' इति।

नाट्येऽस्मिन् कुत्रापि ऐतिहासिकवृत्तानां विकृतिर्नास्ति। स्वदेशप्रमोद्दीपकाः सूक्तयः अनवद्यरीत्या विलिख्यन्ते 'धर धर प्रहरणं चल चल महारणम्' इतिवत्। वीररसोऽस्य नाटकस्याङ्गीरसः। अस्य भाषाः संलापा अपि वीररसौचित्येनान्विता अभिनययोग्याश्च।

## ङ). विराजसरोजिनी

ईशवीये १९०० अब्दे श्रीहरिदासेन विराजसरोजिनी नाटिका विरचिता। मालवदेशाधिपतिः हरिदश्वः वाराणसीवासिन्याः सरोजिनीनामिकायाः कस्याश्चित् कुमार्य्याः प्रेमपाशेन आबद्धोऽभवदिति मूलम् नाटिकायाः। महादेव्याः विरोधात्

प्रतिबन्धकता आविर्भूता तथा सुबाहुनामकदानवादपि विप्रतिपत्तिः जाता। हरिदश्वस्य सेनापतिना वीरसिंहेन सुबाहुः हतोऽभूत्। विदूषकसहायेन महादेव्या अनुज्ञाक्रमेण च सरोजिन्या सह हरिदश्वस्य उद्वाहः सञ्जातः। नाट्येऽस्मिन् हरिदासस्य कलाकैवल्यवादो यथा लक्ष्यते तथा वस्तुवादोऽपि। प्राकृतभाषां विहाय स्त्रीचरित्रेण संस्कृतमाश्रित्य गीतं परिवेशितम्। स्त्रीचरित्रं प्रेम्णो महत्त्वं किञ्च दरिद्रपण्डितानां शोचनीयं चित्रमपि अङ्कितमत्र। भूयो भूयः सुभाषितानां व्यवहारो रूपकमिदं भूषयति।

## च). वियोगवैभवम्

वियोगवैभवं सर्गद्वयान्वितं खण्डकाव्यं मिवारप्रतापनाटकेन सह 1354-बङ्गाब्दे प्रकाशितमभवत्। प्रथमसर्गस्य नाम यामिनीवैभवम्। अस्मिन् सर्गे द्विषष्टिसंख्यका श्लोका: विद्यन्ते। द्वितीयसर्गस्य नाम न प्राप्तम्। अत्र त्रिषष्टिश्लोका: सन्ति। अस्मिन् काव्ये नायकनायिकयो: विच्छेदवृत्तान्तो वर्णितोऽस्ति। विप्रलम्भशृङ्गाराख्यो रसोऽत्र अङ्गी। कामसूत्रोपदिष्टं मदनलीलाविलासम् अनुसृत्य रात्रिकालीनयौवनविलासवैचित्र्यमत्र वर्ण्यते। दिङ्मात्रं यथा –

'त्वदधरमधुभान्तं चुम्बितं नार्पितापि
दशति दशमाला मे द्वयं किं करोमि।
स्वयमिह खलु कर्णं वंशवंशो निनाद:
हरति हरिणाङ्क: पङ्कजञ्चाक्षि लोके'[5]॥

अथवा

'विलुण्ठितरसनान्ते चारुताम्बुलखण्डान्
चलननयनयुग्मे चञ्चले लोचने च।
पुलकितकुचकुम्भे साधु दत्वैव पाणिं
स्फुरितमधरबिम्बं नायकोऽसौ निनंसे'[6]॥

प्रसादगुणबाहुल्येन मालिनीछन्दसा श्लेषोपमार्थान्तरन्यासालंकारै: ग्राम्यतादोषविरहेन पदलालित्येन च काव्यमिदं सहृदयहृदयं हरति।

### छ) विद्यावित्तविवादम्

विद्यावित्तविवादं नाम खण्डकाण्यं 1874 ईशवीयाब्दे प्रकाशितमभवत्। अस्मिन् काव्ये द्व्यधिकशतश्लोका: वर्तन्ते। विद्यादेव्या सरस्वत्या सह वित्तदेव्या: लक्ष्म्या: विवादम् वलम्ब्य काव्यमिदं विरच्यते। काव्ये भागद्वयं विद्यते। प्रतिविभागं द्विपञ्चाशत् श्लोका: सन्ति।

### ज). सरला

1360-वङ्गाब्दे विद्यावित्तविवादाद् अनन्तरं सरला नाम गद्यकाव्यं रचितमभवत्। 1316 बङ्गाब्दे आश्विने मासि प्रलङ्करी-झाञ्झावात्या प्रादुर्भूता। तयाकुलितचित्त: हरिदास: काव्यमिदमरचयत्। गद्यकाव्यमिदं पञ्चभि: परिच्छेदैर्विभक्तम्। वात्याघातेन सरला नाम्नी नायिका नौविपर्ययेन विपदमापन्ना नायकेन चोद्धृता। तस्याः पित्रा सह मेलनं संघटितम्। अन्ततोगत्या नायक-नायिकयोः परिणयेन काव्यं समाप्तिं गतम्।

### झ). काव्यकौमुदी

श्रीहरिदासस्य भावयितृप्रतिभायाः निदर्शनमिदमपूर्वं सूत्रवृत्रिसमायोजितं काव्यतत्त्वं काव्यकौमुदीति। अस्मिन्नलंकारग्रन्थे काव्यलक्षणं, काव्यप्रयोजनं, दृश्यश्रव्यत्वभेदेन द्वैविध्यं, ध्वनिलक्षणं, गुणीभूतव्यङ्गम्, नायकनायिकादि-निरूपणम्, दोषगूणरीतिशब्दार्थालंकारादीनां विवेचनञ्च सरलया भाषया क्रियते हरिदासेन। पञ्चदशकलाभिर्विभक्तोऽयं ग्रन्थः। 1365 वङ्गाब्दे ग्रन्थोऽयं कविना प्राकाश्यं नीतः। अत्रोल्लेक्षणीयं यत् काव्यकैमुद्यां साहित्यदर्पणकारस्य सुतरां प्रभावः संलक्ष्यते।

### ञ). स्मृतिचिन्तामणिः

स्मृतिचिन्तामणिः स्मृतिशास्त्रविषयकग्रन्थः। सरलेन परं विस्तृततया वङ्गानुवादसमेतः ग्रन्थोऽयं 1319 वङ्गाब्दे नकीपुरतः प्रकाशितोऽभवत्। वङ्गीयानां नित्यनैमित्तिकमनुष्ठेयं कर्म, आचारानुष्ठानं, पूजार्चनं, जन्ममरणविवाहप्रायश्चित्तादिकञ्चेति पूर्वाचार्यस्य रघुनन्दनस्य स्मृतिविषयकं तत्त्वजातम् आलोच्यानुसृत्य च श्रीहरिदासेन विस्तरशो ग्रथितोऽयं स्मृतिग्रन्थः।

स्त्रीणां व्रतानुष्ठानं, तासामाचरणं, पूजानुष्ठानञ्चोपदिष्टान्यत्र। स्वमतस्य दृढीकरणाय विष्णुपुराणादीनां हारीतबौधायनादीनां स्मार्तकृतां वचनानि भूयो भूयः समुद्धृत्य अस्मिन् स्मृतिग्रन्थे संयोजयति शास्त्रज्ञः हरिदासः। वङ्गविबुधसंसदि ग्रन्थस्यास्य समादरऽद्यापि संदृश्यते।

वङ्गभाषया विरचितः 'विधवार अनुकल्प' इति ग्रन्थोऽपि स्मृतिशास्त्रसमर्थितः। अत्र एकादशीव्रतपालनविषये अन्नपानादीनामनुकल्पो मानविकदृष्ट्या आलोच्यते।

**हरिदासकृतटीकाग्रन्थाः**

**1) कुमारसन्तोषिणी** -

कविवरश्रीदण्ड्याचार्यप्रणीतं दशकुमारचरितं नाम गद्यकाव्यं श्रीहरिदासकृतकुमारसन्तोषिणीटीकया तत्कृतवङ्गानुवादेन सह प्रकाशितमभवत्। अस्यां टीकायां शब्दगतव्युत्पत्तिः अर्थगतव्युत्पत्तिः वाक्यगत-तात्पर्यं व्याकरणगतवैशिष्ट्यं रसस्वरूपं च उद्भासितानि। गद्यकाव्यवैशिष्ट्यस्य विचारेऽप्यत्र क्रियते। कविवृत्तान्तो यथा आलोचितः तथा संक्षिप्तकथासंग्रहोऽप्यत्र सन्निविष्टोऽस्ति। विश्वमेदिन्यभिधानचिन्तामणिप्रभृतिभ्यः कोषग्रन्थेभ्यः शब्दानामर्थं परिष्करोति हरिदासः। अलंकारविवेचनमपि अत्र सुष्ठु सम्पादितम्।

**2) चञ्चला**

यद्यपि मल्लिनाथकृता सञ्जीवनीटीका मेघदूतव्याख्याने उत्कृष्टेति कथ्यते तथापि हरिदासकृता मेघदूतस्य चञ्चलानाम्नी टीका काव्यपाठकानां कृते उत्तमेति गण्यते। तस्यां टीकायां श्रीमता हरिदासेन कविसमयनिरूपणं नायकादिनिरूपणम् तथा रसस्वरूपनिरूपणञ्च कृतानि। अत्र यक्षः धीरप्रशान्तोऽनुकूलश्च नायकः नायिका च विनयार्जवादिगुणयुक्ता गृहकर्मपरा पतिव्रता स्वीया। रसस्तु प्रवासाख्यो विप्रलम्भशृङ्गारः। श्रीहरिदासेनाभिहितम्-

'नेता धीरप्रशान्तः परममनुगुणो यक्ष उन्मत्तभावः।
भार्या अस्य स्वकीया तदभिहितगुणा नायिका चात्र मध्या।

प्राधान्येन प्रसादः प्रसरति च रसो विप्रलम्भः प्रवासः।
वैदर्भी नाम रीतिर्जगति निरूपणं खण्डकाव्यं किलेदम्'।।

**3) जयन्ती** -

श्रीहर्षविरचितस्य नैषधचरितमहाकाव्यस्य श्रीहरिदासकृता जयन्तीटीका पण्डितैः समादृता। नैषधचरितं तर्ककर्कशपाण्डित्यपूर्णम् इति कृत्वा व्याख्यागम्यमेव। एतेन प्राचीनां टीकां वर्जयित्वा श्रीहरिदासेन नव्यतमा सुगमाटीका विनिर्मिता। टीकायाः मङ्गलाचरणान्तरं तेनोक्तम्-

'प्राचीनानामलंकृतिं गतरसां लुप्तश्रियां दुर्गमां
निर्भावां विगुणां विशेषविकलां टीकावलीं वर्जयन्।
नव्यां भव्यतमां नितान्तसुगमां सालंकृतिं सद्गुणां
सद्भावां कुशलां रसज्ञ ! सरसां सेवस्व टीकामिमाम्'।।

मङ्गलाचरणरूपं 'निपीये'ति श्लोकं व्याख्याय मल्लिनाथो भणति – 'कथानायकस्य राज्ञः नलस्य इतिवृत्तरूपं मङ्गलं वस्तु निर्दिशति निपीये'ति, तत्र हरिदासेन स्पष्टीकृतम् -

'कर्कोटकस्य नागस्य दमयन्त्या नलस्य च।
ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम्'।। इति स्मृतेः।

नलनामोच्चारणस्य पुण्यजनकतयैव कलिनाशकत्वाभिप्रायात् अत्रापि नमस्कारादिवत् तस्य मङ्गलरूपत्वं बोध्यम्। इति द्वयोः महतोः टीकाकृतोऽन्तरः। १९२६ ईशवीयाब्दे श्रीहरिदासेन नैषधचरितस्य पूर्वभागस्य टीका प्रकाशिता।

**4) अभिज्ञानकौमुदी**

1921 ईशवीयाब्दे अभिज्ञानशकुन्तलाख्यस्य नाटकस्य अभिज्ञान-कौमुदीटीका श्रीहरिदासेन विरचिता। वङ्गविबुधैश्च तदानीं टीकेयं सादरं गृहीता। अस्यां टीकायां कविसमयनिरूपणम् यथा कृतम् तथा नायकादिस्वरूपनिरूपणं कृतम्। सरलया भाषया शब्दार्थौ परिष्कृतौ। अमरवैजयन्तीहेमचन्द्राद्यभिधान-

कोषेभ्यः शब्दविचारः कृतस्तेन। हरिदासमतेन 'अत्र दुष्यन्तो धीरोदात्तो दक्षिणनायकः। .....तृतीयाङ्कपर्यन्तं कन्या मुग्धा च, परन्तु स्वकीया मध्या च नायिका'। एतेन नायिकायाः क्रमोत्तरणं विश्लेषितम्। विप्रलम्भशृङ्गारः प्रधानरसः। प्राचुर्य्येण प्रसादो गुणः। वैदर्भी च रीतिः। तत्र संग्रहश्लोकस्तु

'धीरोदात्तो क्षितीन्द्रः पुरुकुलतिलको दक्षिणो नायकोऽस्मिन्
प्राक् कन्यान्ते स्वकीया मुनिवरतनया नायिका मुग्धमध्या।
शृङ्गारे विप्रलम्भे प्रथमचरणयोः पूर्वरागप्रवासौ
वैदर्भी नाम रीतिः प्रचरति बहुलं स प्रसादो गुणश्च'।।

### 5). चाणक्यचातुरी-

१९२८ईशवीयाब्दे विशाखदत्तकृतमुद्राराक्षस्य टीकेयं हरिदासेन प्रकाशिता। अस्याः टीकायाः द्वितीयसंस्करणप्रकाशकाले टीकायाः कलेवरोऽपि वर्धितोऽभवत्। तत्र नानायुक्तिजालैः विशाखदत्तस्य समयनिरूपणम् कृतम्। नाटकस्य ऐतिहासिकत्वमपि विवेचितम् तत्र भवता। संग्रहश्लोके नायकप्रतिनायकसहायरसरीतिगुणानाञ्च यथावर्णनं कृतम्।

### 6). कल्पलता

श्रीहरिदासकृता कल्पलता टीका वाणभट्टस्य कादम्बरीकथायाः सरलव्याख्यानम्। ईशवीये १९१६ मिताब्दे कादम्बर्य्याः पूर्वार्धस्य टीका सरला समूला च प्रकाशिता। अत्र प्रायेण अमरकोशादिभ्यो ग्रन्थेभ्यः शब्दार्थः परिष्कृतः। अलंकारविचारक्षमोऽयं श्लेषविरोधाभासप्रभृतीनाम् अलंकाराणाम् तथोत्प्रेक्षाप्रभृतीनाम् अर्थालंकाराणां शिक्षार्थिभ्यः सुष्ठु व्याख्यानं कृतवान्। गुणरीतिरसानामपि स्थाने उल्लेखः कृतः। वाणस्य वाणी छात्राणां कृते सुकठिना वर्तते। कल्पलताटीकया हरिदासेन काठिन्यमपि भग्नम्।

### 7). सर्वार्थबोधिनी -

भवभूतिविरचितस्य उत्तररामचरितस्य सर्वार्थबोधिनी टीका ईशवीये १९१३ अब्दे प्रकाशिता अभवत्। अस्याः टीकाया उत्कर्षत्वात् परवर्तिनि काले

द्वितीयं तृतीयञ्च संस्करणं प्रकाशितमभवत्। अस्यां श्रीहरिदासेन – 'मूलवाक्यस्य विशदविवरणम्, आवश्यकतानुसारेण शास्त्रान्तरप्रदर्शनम्, अन्तरान्तरा योग्यविषयसमालोचनञ्च विहितम्। प्रायेण साहित्यदर्पणमतम् अनुसृत्यैवालंकारादयः सन्निवेशिताः'।

भवभूतेरुत्तररामचरितं श्रीहरिदासशर्म्मणः अत्यन्तं प्रियमासीत्। तन्मते उत्तररामचरितं नाटकरत्नम्। टीकायाः उपोद्घाते भवभूतेरितिहासः आविर्भावसमयश्च विचारितौ तेन। नायकस्य रामस्य रामायणाद्भिन्नत्वमपि प्रदर्शितम्। उत्तरचरितस्य नायकोऽत्र, नितान्तदुर्बलचितकोमलहृदयः। नाटकस्य प्रत्येकमाश्रितस्य समालोचना कृता। षष्ठाङ्कस्य शब्ददुरुहयोगाद् दीर्घसमासोऽपि समालोचितस्तेन।

**8). वसन्तसुषमा**

मृच्छकटिकस्य 'वसन्तसुषमा'नाम्नी टीका श्रीमता हरिदासेन 1920 ईशवीयाब्दे प्राकाशि। टीकायामस्यां कविसमयनिरूपणं कृतम्, ततः नाटकस्य पात्राण्युल्लिखितानि। टीकारम्भे गणेशं शिवञ्च प्रणम्य नाट्यशास्त्र-दशरूपक-साहित्यदर्पणग्रन्थानां सिद्धान्तानुसरणेन विषयाणि सन्धिपताकाऽङ्गानि विचार्य श्लोकवाक्यानाम् अन्वयमुखेन व्याख्यानं कृतम्। तत्र संग्रहश्लोक एवायम् -

'नेता प्रशस्तो द्विजचारुदत्ता नेत्री च धृता च वसन्तसेना।
विभिन्नशृङ्गाररसः किलाङ्गी वैदर्भीरीतिश्च गुणः प्रसादः'॥

**9). माधुरी-**

माघकृतशिशुपालवधस्य मल्लिनाथकृत'सर्वङ्कषा'याः टीकायाः 'माधुरी'नाम्नी टिप्पणी श्रीमता हरिदासेन 1926 खीष्टाब्दे प्रकाशिताभवत्। तत्र ग्रन्थारम्भे 'अथ कविकथा' इति सन्दर्भे कवेर्मार्गस्य विवरणं पाश्चात्त्यपण्डितानां मतनिराकरणं संलक्ष्यते तदनन्तरं श्रीहरिदासेन विंशतिश्लोकैः सर्गसंक्षेपः कृतः, चान्ते नायकादिसंग्रहश्लोक एवम्-

'धीरोदात्तगुणान्वितः स भगवान् कृष्णः स्वयं नायकः
काव्येऽस्मिन् प्रतिनायकश्च बलवान् धीरोद्धतश्चेदिराट्।
टिप्पण्यां गुणरीतयोऽपि लिखिताः प्रत्येकपद्ये स्फुटं
प्राधान्यात् प्रतिपादितश्च कविना माघेन वीरो रसः'॥

अस्यां टिप्पण्यां मल्लिनाथेन यथोक्तम् तदोवोक्तं हरिदासेन-

'मल्लिनाथेन यन्नोक्तं तन्मात्रमिह वक्ष्यते।
तथापि मणिफलेव महामुल्येव टिप्पणी'॥ इति।

**10). कुसुमप्रतिमा-**

विश्वनाथकविराजकृतस्य साहित्यदर्पणस्य टीकेयं कुसुमप्रतिमा 1919 ईशवीयाब्दे श्रीहरिदासेन प्रकाशिता। प्रकाशमात्रेण अस्याः टीकायाः प्रसिद्धिः विस्तृता। काव्यलक्षणं रसनिरूपणं रसात्मकं गुणदोषविवेचनं नाट्यतत्त्वानां समीक्षणं शब्दार्थालंकाराणाम् आलोचनं यथाशास्त्रं कृतं तेन। अनया टीकया छात्राणाम् उपकारो यथा सम्पादितस्तथा अध्यापकानामपि दुर्भावो लाघ्वीकृतः। विशेषेण लक्षणा व्यञ्जनानां व्याख्याने टीकायाः महत्त्वमुपलब्धम्। लक्ष्मीटीकां तर्कवागीशटीकां च परिहृत्य वङ्गीयाः विद्वांसः कुसुमप्रतिमाम् अधुनापि भजन्ते।

**11). भारतकौमुदी** -

श्रीहरिदाससिद्धान्तवागीशस्यातुलनीया कीर्तिरद्यापि जीवति महाभारतस्य टीका 'भारतकौमुदी'। कलिकातागमनादनन्तरं १३३६-वङ्गाब्दे महाभारतस्य वङ्गानुवादो भारतकौमुदी। ततः एकविंशवर्षाणि निरवच्छिन्नसाधनया सम्पूर्णमहाभारतस्य वङ्गानुवादः कृतस्तेन, भारतकौमुदी टीका चापि विरचिता। तदानीं महाभारतस्य मूलानुगं वङ्गानुवादं सटीकम् अंशमात्रमालोक्य विश्वकविना भूयोऽभिनन्दितम्।

'दुस्तरसागरं तितीर्षुः' यथा प्रयतेत तथा श्रीहरिदासः अशेषश्रमसाध्यं सम्पूर्णमहाभारतसम्पादनं सनिष्ठं चकार। नीलकण्ठकृतया टीकया वङ्गानुवादेन स्वकृतभारतकौमुदीटीकया महाभारतमिदं परिस्कृतं वङ्गदेशस्य विबुधजनानां

किञ्च सामान्यजनानां कृते समुपस्थापितमभवत्। सत्यमिदमस्य महाकविशास्त्रज्ञपण्डितस्य दुस्तरं तपस्तस्य सामान्यजीवनमतिक्रम्य महाभारतफलरूपेण विपरिणमते।

श्रीहरिदासस्य भारतकौमुदी सरला सुबोध्या च। स्थाने स्थाने पदविश्लेषणमपि कृतम्। श्रीकृष्णद्वैपायनव्यासेन यत्र संक्षेपितं तत्तु श्रीमता व्याख्यातम्। यथा आदिपर्वणि कर्णस्य नामकरणे कवचकुण्डलकर्तनं बीजम्। तत्र श्रीहरिदासेन व्याख्यातम्, 'अङ्गादेव विशेषेण कर्त्तनात् वैकर्त्तन इति कर्णद्वयाच्च दानात् कर्ण' इति नामाभवत् इति ततस्तेन योजितम्, ''तथा च कर्त्तनं कर्त्तः ततश्च पृषोदराद्वित्वात् तकारस्य नकारः'' इति। एतद्विश्लेषणं सर्वथा विदुषां मनो रञ्जयति।

आदिपर्वणि द्रौपदीपरिचयो यथा, 'द्रौपदी त्वथ संजज्ञे शचीभागादनिन्दिता'[7] इति। तत्र भारतकौमुदी 'अथो रूपे अनिन्दिता गुणेऽपि अनिन्दिता........। वेदिमध्यात् यज्ञवेदितः संजज्ञे'। पदविश्लेषणं यथा 'सा तत्र यज्ञे सुभगा विद्युत्सौदामीनि यथा'[8]।

अगस्त्यवृत्तान्ते अत्र श्लोके विद्युत्सौदामिनी इति पदं श्रीहरिदासेनैवं व्याख्यातम्, 'विद्युति सन्ध्यायां सौदामिनी तडित् विद्युत् सौदामिनी। सन्ध्याकाले तडितो विशेषद्युतिद्योतनार्थं विद्युत्पदम्' इति टीकायाः स्पष्टीकरणमतीव सरलया रीत्या सम्पाद्यते।

श्रीहरिदासस्य अप्रकाशिताः टीकाः ग्रन्थाश्च अस्मिन् निवन्धे अस्माभिर्नालोच्यन्ते। टीकासु ग्रन्थेषु च ग्रन्थकारस्य यद्वैदुष्यं परिदृष्टं तत्तु विस्मयावहम्। ग्रन्थादिरचनाकाले ग्रन्थारम्भे शिष्टाचारपरिगृहीतं मङ्गलं सर्वथाऽचरितम्। भाषाव्यवहारे क्वचित् क्वचिन्माघभारविश्रीहर्षादीनां छाया समुपलभ्यते। ऐतिहासिकविवरणेषु तस्य देशभक्तिः स्फुटं राजते। प्रायेण सारल्यमाश्रित्य नाट्यसंलापास्तेन विरचिताः। सर्वमेतद्गवेषकैस्तत्र तत्रानुसन्धेयम्।

संस्कृतजीवोऽयं दरिद्रः पण्डितः हरिदासः स्वजीवने ब्राह्मणवृत्तिमनुसरन् सारस्वतसाधनायां नियुक्त आसीत्। तस्य इष्टदेवः शिवः सर्वत्र ग्रन्थेषु टीकासु च विघ्नविघाताय स्तुतः। यथा, रुक्मिणीहरणे –

'शिवः शिवापदतलगः शवोऽपि सन्
भवन्महास्वरमपि यो निरम्बरः।
रसार्धभाक् तनुरपि मारमारकः
स वो भवो भवतु विभुर्विभुतिदः'[9]॥

एवं स्मृतिचिन्तामणौ 'वितरतु चिरकालं वः शिवं श्रीशिवः सः'। एवमन्यत्रापि। केवलं नैषधटीकायाः मङ्गलाचरणम् – 'गङ्गातरङ्गरमणीय-जटाकलापमिति' वाराणसीपुरःपतिस्तोत्रं स्मारयति।

संस्कृतभाषां प्रति हरिदासस्य महती स्वता वर्तते। भारतीयभाषाणां मूलं हि संस्कृतमिति तस्याभिमतम्। तेनोक्तं – 'भाषाणां भारतीयानां मूलमेकं हि संस्कृतम्' इति। मिवारप्रतापे तस्य प्रार्थना सर्वेषां वहुमानिता। तत्तु

'संस्कृतभारती भारतसंस्कृतिरुदयतु पुनरपि भारतवर्षे।
भवने भवने वदने वदने खेलतु संस्कृतभाषा।
वयमपि हरिदासमाश्रित्य एवं प्रार्थयामः'॥

## तथ्यसूत्राणि

[1] आदौ मया षोडशवर्षवर्तिना विनिर्मितं कंसवधाख्यं नाटकम्।
काव्यं ततः शङ्करसम्भवं परं श्रीजानकीविक्रमनाटकम् ॥ (*वियोगवैभवम्*, 12)

[2] *रुक्मिणीहरणम्* (6.62)

[3] 'वेदादिशास्त्रनिचयस्फुटदिव्यमूर्तिः सा वाक् किमन्यवचनादमरा म्रियेत।
मध्याह्ने सूर्यकिरणो हि यदि ब्रवीति रात्रिः किलेयमिति हन्त स एव मूढः' ॥ (*मिवारप्रतापम्*)

[4] 'जीवनमेकैकस्य जन्मभूमिस्तु सर्वस्यैव स्नेहस्थानम्।
जन्मभूमौ अरक्षितायाम् देहरक्षा निष्प्रयोजनैव'॥ (*वङ्गीयप्रतापम्*)

[5] *वियोगवैभवम्* (1/6)

# महामहोपाध्यायानां पाण्डुरङ्ग-वामन-काणे-महोदयानां जीवनचरितम्

डा. सन्तु-सिंहः

## जनिवृत्तम् -

तत्र भवतां सुगृहीतनामधेयानां कोविदचक्रचक्रवर्तिनां महामहोपाध्याया-दिविविधविरुदावलीविभूषितानां पाण्डुरङ्ग-वामन-काणे-महोदयानां नाम गीर्वाणवाणीसेवकमण्डलेषु कस्याविदितमस्ति? अस्ति खलु भगवता रेणकापुत्रेण परशुरामेण रत्नाकराद् बलाद्वशीकृता बहुरत्नप्रसवा कोङ्कणभूः। यां न परित्यजति कदापि विदुषामारामो रामो जामदग्न्यः। तत्र हि वसिष्ठप्रमुखगोत्रा गोत्राधारभूता नैके ब्राह्मणाः प्रतिवसन्ति स्म। तत्रैव काणे इत्युपनामका ब्राह्मणा अप्यासन्। तत्कुलसम्भूतो हि पाण्डुरङ्गवामनकाणेजनकः वामनकाणेमहोदयः। वैदिकब्राह्मण-वंशजेनाप्यनेन आङ्गलमध्येतुं बाल्यमित्रेण शङ्करबालकृष्ण-दीक्षितेन सह पुण्यपत्तनं प्रतीतम्। अयं शङ्करबालकृष्णदीक्षितो हि पश्चाज्ज्योतिर्विज्ञाने लब्धकीर्तिर्जातः। मेट्रिकुलेशन्-परीक्षामुत्तीर्य वामनराओ-महोदयः वस्वश्वभोगि-भूभूषिते 1878 ईशवीयाब्दे रत्नगिरिमण्डलस्य दापोलिस्थाने नीतिवृत्तिमभ्यस्यन् तत्रैवोवास। एतस्माद्धि खवसुभोगिभूमितस्य 1880ईशवीयाब्दस्य मै-मासस्य सप्तमे दिनाङ्के मातुलगृहे रत्नगिरिमण्डलस्य पाधेम् – ग्रामे (परशुरामग्रामे) ज्येष्ठपुत्रत्वेन पाण्डुरङ्गवामनानां जनिः समजनि।

## शैक्षिकजीवितवृत्तम् -

पाण्डुरङ्गेण बाल्यात्तत्पितुः सकाशाद्धि स्वशिक्षा प्रारब्धा। द्वादशहायनेनैतेन बालेन अमरकोषग्रन्थस्य 400 श्लोकाः कण्ठस्थीकृताः। भूग्रहवसुभूमिते 1891खृष्टाब्दे एष दापोलिस्थाने S.P.G Mission’s English

School इति विद्यालये प्रविष्टः। ततश्च वाजिग्रहवसुभूभूषिते (1897) खृष्टाब्दे अधिकाङ्कान् आदाय बोम्बे-विश्वविद्यालयस्य मेट्रिकुलेशन्-परीक्षायामुत्तीर्णः। अस्मिन् समये पाण्डुरङ्गः आम्लरुजाक्रान्तो जातः। परवर्तिनि काले तस्यायमामयः डिओडोनाल् आल्सार इति रूपेण परिवर्तितः सन् आजीवनं तम् अपीडयत्। अस्माद्धि आमयात्स बाणग्रहभोगिभूमिते (1895) खृष्टाब्दे विद्यालयम् गन्तुं न शशाक। तदीयदैहिकास्वास्थ्यात् वाजिग्रहवसुभूभूषिते (1897) खृष्टाब्दे बोम्बे-प्रदेशे विउवोनिक् प्लेग् इति महामार्याः प्रसाराच्च पाण्डुरङ्गपिता न तस्मै दापोलितः क्वापि गमनानुमतिं ददौ। परम् ऐकान्तिकेच्छावशाद्धि तेन पाण्डुरङ्गेण उइलसन्-महाविद्यालये प्रवेशार्थं Dr. Machichan- इति अध्यक्षं प्रति महाविद्यालयीयशिक्षाशुल्कत्वेन सावेदनं 36 रूप्यकाणि प्रेषितानि। दैवाद् अध्यक्षादाप्तानुमतिरयं साक्षाद् द्वितीयसत्रे तस्मिन्नेव महाविद्यलये स प्रविष्टः। एष वसुग्रहभोगिभूमिते (1898) खृष्टाब्दे परीक्षायां समुत्तीर्णः सन्नधिकाङ्कप्रापकत्वेन 175 रूप्यकाणि विशेषपुरष्कृतितया 100 रूप्यकाणि चासादितवान्। स संस्कृतस्नातकः सन् संस्कृतदक्षतायै भाउदाजि–पुरष्कारेण पुरस्कृतः। पक्षखग्रहभूभूषिते (1902) खृष्टाब्दे प्रथमश्रेण्यां एल्.एल्.वि – परीक्षायाम् उत्तीर्णः। ततश्च नेत्रखग्रहभूमिते (1903) खृष्टाब्दे संस्कृतभाषायाम् आङ्गलभाषायाञ्च स्नातकोत्तरपरीक्षायां समुत्तीर्णः सन् जालावेदान्तपुरस्कृतितया 400रूप्यकाणि प्राप्तवान् सः।

**कर्मजीवतेतिवृत्तम् -**

आर्थिकं प्रातिकूल्यं तं वेदखग्रहभूसम्मिते (1904) खृष्टाब्दे रत्नगिरिमण्डलस्य सर्वकारीयविद्यालये सहायकशिक्षकवृत्तौ प्रेरितवत्। तत्र मासिकवेतनमासीत् 60 रूप्यकाणि। अत्र तेन सप्त विषयाः पाठिताः। तत्र शिक्षककृत्यं महत्या योग्यतया निरुवाह। ततश्च बाणखग्रहभूभूषिते (1905) खृष्टाब्दे स S.T.C. Examination इति परीक्षायाम् बोम्बेप्रदेशे समग्रे प्रथमस्थानं समुपार्जितवान्। पाण्डुरङ्गमहोदयेन अस्मिन् समये महाकाव्ये (रामायणे महाभारते

च) वर्णितम् आचारं नीतिबोधं चाश्रित्य किञ्चन स्वकीयं शोधकार्यं प्रारब्धम्। अस्मिन् विषये एव प्रबन्धं प्रणीय बोम्बेविश्वविद्यालये समर्पितस्तेन। तत्प्रबन्धस्यौत्कर्ष्यात्तेन मण्डलिकस्वर्णपदकं प्राप्तं तथा पुरष्काररूपेण 400रूप्यकाणि प्राप्तानि। पुनश्च, बाणखग्रहभूमिते (1905) खृष्टाब्दे बोम्बेविश्वविद्यालये अलङ्कारसाहित्येतिहासं समाश्रित्य कञ्चन प्रबन्धं विरचय्य समर्पितः। तदर्थं पुनस्तेन भि.एन.मण्डलिकस्वर्णपदकं प्राप्तम्।

अथ पाण्डुरङ्गमहोदयः वाजिखग्रहभूमिते (1907) खृष्टाब्दे स्वेच्छया स्थानान्तरणं स्वीकृत्य बोम्बेप्रदेशमागतः। तत्र च **एल्फिन्स्टोन् हाइ स्कुल्** इति विद्यालये शिक्षकता तेन प्रारब्धा। अस्मिन्नेव वर्षे डेकान्-कलेज् इति महाविद्यालयस्य संस्कृतविभागे सहायकाध्यापकपदं तन्महाविद्यालयीयाधि-कारिकैर्योग्यतमायापि पाण्डुरङ्गवामनायाप्रदाय अयोग्याय तद्विद्यालयीयाय कस्मैचिच्छिक्षकाय प्रादायि। एतादृशम् अनाचारम् असहमानः स सर्वकारीयवृत्तिं त्यक्त्वा स्वाधीनां वृत्तिं प्रारब्धुं प्रतिजानीते स्म। ततश्च वसुखग्रहभूपरिमिते (1908) खृष्टाब्दे तेन द्वितीयवारं एल्. एल्. वि इति परीक्षायामुत्तीर्णः। ग्रहखग्रहभूसम्मिते (1909) ईशवीये बोम्बेप्रदेशस्थे एल्फिन्स्टोन् कलेज् इति महाविद्यालये संस्कृतविभागे सहायकाध्यापकपदमुपाददे पाण्डुरङ्गमहोदयः। परं स सर्वकारीयवृत्तिं तृणाय मत्वात्याक्षीत्। ततश्च तेन बोम्बेप्रदेशस्य उच्चन्यायालये व्यवहारस्य (न्यायस्य) अनुशीलनं प्रारब्धम्। खभूग्रहभूमितस्य (1910) खृष्टाब्दस्य जुन्-मासि विद्यालयीयग्रन्थद्वयं प्रकाशयांचक्रे। गद्यावली इत्येकः ग्रन्थः, अपरश्च साहित्यदर्पणः। काणे-महोदयेन सत्स्वपि नैकेषु संस्कृतशिक्षार्थं ग्रन्थेषु तदीयग्रन्थस्य वैशिष्ट्यं भूमिकायां सविशदं विवृतम्। विद्यालयीयसंस्कृतशिक्षामहाविद्यालयीयसंस्कृतशिक्षयोर्व्यवधाननिधनायैव गद्यावलीति ग्रन्थो ग्रथितः। तथाहि उक्तं तेन – Even ordinary students were formerly anxious to make themselves familiar with the works of such masters of Sanskrit as Kalidasa, Baṇa and

others. Now, however, ordinary students do not care even to glance at such standard works as the Raghuvaṁśa and content themselves with the perusal of a few pages of the Hitopadeśa or the Pañcatantra. The result is that when they enter college, they seem to move in a new atmosphere altogether. In the Previous class they have to read the S'akuntala or the Veṇisamhāra and such highly elaborate poems as the Jānakiharaṇa. The gulf between the standard of Sanskrit Literature required at the Matriculation and that at the Previous is thus a wide one.[1] तत्रैव केवलाद्धितोपदेशपञ्चतन्त्रपाठात् संस्कृतदाक्ष्याप्तिः सुकठिनेति तयोर्दोषप्रदर्शनमुखेन विवृतं काणे-महोदयेन। तथा चोक्तम् – The Hitopadeśa and the Pañcatantra have, more- over, some drawbacks of their own. Both of them are written in a rugged and unpolished style, use expressions and constructions that are rarely met with in classical writings, are positively ungrammatical in many cases and prove uninteresting to the student by their sententious morality and the monotony of their subject-matter.[2] किञ्च, तत्र महाभारतपठनप्रयोजनमपि सयुक्ति सुष्ठु प्रत्यपादि – Many passages from the Maha- bhārata, the great epic of India, have been included with the object of making the student familiar with the chaste and inspired muse of Vyāsa. As morality is far better inculcated by example than by precept, I have given the stories of such exemplars of virtue as Bhishma, Puru, Dhruva and others drawn from works held in universal esteem. I hope that the book, besides placing before the student pure and classical models of Sanskrit, will give him an insight into the life and thought of ancient and medieval India.[3] ततश्च स इन्टार्मिडियेट्-आर्ट्स्-परीक्षायां संस्कृतपरीक्षकत्वेन नियुक्तः सः। वयस द्वात्रिंशे वर्षे

सूर्यखग्रहभूमिते 1911 ईशवीये असौ व्यवहारविद् इति पदमाश्रित्य स्ववृत्तिमारब्धवान् बोम्बेप्रदेशे उच्चन्यायालये।

**शोधकृतिविवृतिः -**

सूर्यखग्रहभूमिते (1911) खृष्टाब्दे एल्.एल्.एम्-परीक्षायां हिन्दुविधौ तथा महम्मदीयविधौ समुत्तीर्णः सः। काणे-महोदयस्य वैदग्ध्यं बोम्बेविश्वविद्यालयीयकर्तृपक्षीयाणां मानसं समाकर्षत्। तस्मात् स विश्वविद्यालयीयकर्तृपक्षेण **उइल्सन् फिलोलजिकेल्-भाषण**दानार्थं समाहूतः। तेन काणे-महोदयेन आङ्गल-संस्कत-पालिभाषाभिः षड् भाषणानि प्रदत्तानि। अस्मिन्नेव वर्षे स बोम्बेप्रदेशस्य रयेल्-एसियाटिक्-सोसाइटि इति संस्थायां साधारणसदस्यपदं जग्राह। तेन वर्षद्वयानन्तरञ्चाजीवनसदस्यपदं चाङ्गीकृतम्। बाणसूर्यग्रहभूपरिमिते (1915) खृष्टाब्दे बोम्बेविश्वविद्यालयीयकर्तृपक्षैः महताग्रहेणाहूय सादरं तस्मै **स्प्रिङ्गार्-रिसर्च-स्कोलार्** इति पदं प्रादायि। वर्षद्वयं यावत्स प्राचीनभूगोलमश्रित्य शोधकार्यं कृतवान्। रससूर्यग्रहभूभूषिते (1916) खृष्टाब्दे स उइल्सन्-महाविद्यालये एइच्.एम.भण्डरकारमहाभागानां शारीरकास्वास्थ्यात् तत्स्थाने साम्मानिकम् अध्यापकपदं मण्डयामास। नेत्रभूग्रहभूभूषितात् (1913) खृष्टाब्दतः रससूर्यग्रहभूमितं (1916) खृष्टाब्दं यावत् स उच्चन्यायालये व्यवहारवित्पदलाभनिमित्तपरीक्षार्थिनः पाठयामास। तेन स विविधजटिलविषयेषु दाक्ष्यमाप्तः। ततश्च स 1917 खृष्टाब्दतः 1928 खृष्टाब्दं राजकीयविधिविद्यालये विधिविभागीयाध्यपकपदमलङ्चकार। इयं नियुक्तिः आसीत्तस्य मेधाधीना।

उच्चन्यायालये तेन स्वीयनैपुण्यं महताडम्बरेण प्रदर्श्य महत्साफल्यम् आसादितम्। स्वल्पे एव समये तेन हिन्दुविधिविभागे स्वदाक्ष्यं प्रकाशितम्। तेन त्रिंशद्वर्षाणि विधिविभागे सनैपुण्यं कृत्यं कृतम्। तेन धर्मशास्त्रस्येतिहास इति

ग्रन्थस्य पञ्चमे भागे केषाञ्चिद् ऐतिहासिकानां व्यवहाराणां (विचारयोग्यविषयाणाम्) अपि सयुक्ति विवरणम् उपस्थापितम्।

वस्तुतः बोम्बेविश्वविद्यालयेनैव काणे-महोदयो भारतविद्याया अनुसन्धानकर्मणि प्रचोदितः। रसखग्रहभूमिते (1906) खृष्टाब्दे अलङ्कार-शास्त्रेतिहासप्रबन्धार्थं प्राप्तं भि.एन.मण्डलिकस्वर्णपदकमेव तस्य शास्त्रीयपाण्डित्यं सर्वत्र प्राकाशयत्। खसूर्यग्रहभूपरिमिते (1910) खृष्टाब्दे तेन विश्वनाथस्य साहित्यदर्पणः सानुवादः सव्याख्यानः प्रकाशितः। एतदधीत्य फ्रान्सदेशीयेन भारतीयनाट्यविदा सावान्त-सिलभान्-लेभि-महाभागेन सन्तुष्टेन सता सम्पूर्णस्य अलङ्कारशास्त्रेतिहासस्य प्रणयनार्थं काणे-महोदयः अनुरुद्धः। ततश्च काणे-महोदयेन गुणनेत्रग्रहभूमिते 1923खृष्टाब्दे अलङ्कारशास्त्रेतिहाससमेतस्य साहित्यदर्पणस्य द्वितीयं संस्करणं प्रकाशयाञ्चक्रे। पुनश्च, भूरसग्रहभूपरिमिते (1961) खृष्टाब्दे तेन पृथक्तया अलङ्कारशास्त्रेतिहासस्य नूत्नमेकं संस्करणं 446पृष्ठात्मकं प्राकाश्यमानीतम्।

काणे-महोदयैः बोम्बे-सर्वकारीयसंस्कृतसिरिज इत्यस्य सम्पादकानां एस्.आर्.भण्डरकारमहाभागानां निदेशेन भूभूग्रहभूमिते (1911) खृष्टाब्दे नीलकण्ठकृतस्य व्यवहारमयूखग्रन्थस्य सम्पादनकर्मणा धर्मशास्त्रे स्वीयं शोधकार्यं प्रारब्धम्। परवर्तिनि काले इयमेव संस्था भण्डरकार-ओरियेन्टल्-रिसर्च-इन्स्टिटिउट् इति रूपेण परिवर्तिता सती वाजिभूग्रहभूसम्मिते (1917) खृष्टाब्दे पुणे-मध्ये प्रारब्धा। काणे-महोदयस्य प्रकाशितग्रन्थत्रयाश्रितं तथा मातृकाष्टकाश्रितं तत् धर्मशास्त्रीयं समालोचनात्मकं सम्पादनकार्यं रसनेत्रग्रहभूभूषिते (1926) ईशवीयाब्दे प्रकाशितं सत् तस्मै सुदक्षसमालोचकपदं प्रापयत्। तस्यैव सम्पादनस्य भूमिकायां तेनोद्घोषितं व्यवहारमयूखसम्पादनार्थं कृतमनुसन्धानं हि तं धर्मशास्त्रेतिहाससम्पादनकर्मण्यप्रेरयत् - This edition of the Vyavahāramayūkha was entrusted to me by the late Prof. S. R. Bhandarkar. I am very sorry that the edition took so many years. But, owing to various causes over many of which I had no

control, I could not finish the work quickly. At one time I had almost made up my mind to give up the undertaking altogether. For one reason I do not regret the long delay that has occurred. The years that I spent in collecting materials have been of great help to me in making the annotations exhaustive and have also induced me to undertake another work, viz. the history of Dharmas'astra Literature.[4] तद्रचितः आङ्गलभाषामयो धर्मशास्त्रेतिहासग्रन्थो ह्यमूल्यसम्पत्। धर्मशास्त्रेतिहासग्रन्थस्य प्रतिभागं विषयास्तु इत्थमासीत् –

**प्रथमभागे** काणे-महोदयेन प्रसिद्धानां तथा अज्ञातानां धर्मशास्त्राकृतां विषये अपूर्वमनुसन्धानकार्यं समुपबंहितम्। अयं च भागः 1930 खृष्टाब्दे बोरि (BORI) इत्यतः प्रकाशितः।

**द्वितीये भागे** वर्ण-आश्रम-संस्कार-आह्निक-आचारादीनां वर्णनं विततम्। अयं च भागः 1941 खृष्टाब्दे प्रकाशितः। एकषष्टिहायनस्तदा काणे-महोदयः।

**तृतीये च भागे** तेन राजधर्म-व्यवहार-सदाचारदिविषयाः निबद्धाः। अस्य भागस्य रचनार्थं पत्राभावात् काणे-महोदयेन त्रिसहस्रं रूप्यकाणि गृहीतानि। अयं च भागः सप्तषष्टितमे वयसि तेन रचितः।

**चतुर्थे भागे** तेन सूक्ष्मेक्षिकया धर्मशास्त्राणां तथा धर्मशास्त्रीयमातृकाणामध्ययनं कृत्वा मूलविषया निबद्धाः। अयं भागस्तु 1953 ईशवीयाब्दे प्रकाशितः।

**पञ्चमश्च भाग** विभागद्वयोपेतः। तत्रापि प्रथमे विभागे व्रत-उत्सव-कालविषयकदार्शनिकविचार-भारतीयज्योतिर्विद्यादयः चर्चिताः। अयं च

भागः1958 खृष्टाब्दे प्रकाशितः। द्वितीये च विभागे धर्मशास्त्रसम्बद्धाः पुनर्जन्मविषयकाश्च शान्ति-पुराण-तन्त्र-सांख्य-योग-तर्काश्च विवृताः। अयं विभागः 1962 ईशवीयाब्दे प्राकाश्यमानीतः।

अयं हि पञ्चमभागोपेतः धर्मशास्त्रेतिहासग्रन्थो धर्मशास्त्रसम्बद्धान् सर्वविधान् विषयान् पर्यालोचयति। ग्रन्थस्य अस्य विरचनार्थं बहूनां धर्मशास्त्रविषयकाणां मूलग्रन्थानां मातृकाणाञ्च अध्ययनं कृतम्।

**विविधविरुदाप्तिविवृतिः -**

काणे-महोदयः 1913 खृष्टाब्दतः 1928 खृष्टाब्दं यावत् वोर्ड् अफ् ल स्टाडिस् इत्यस्य सदस्यपदम् अलङ्चकार। 1919 खृष्टाब्दतः 1928 खृष्टाब्दं यावत् स बोम्बेविश्वविद्यालयस्य शोधार्थी अपि आसीत्। 1947 खृष्टाब्दे काणे-महोदयः बोम्बेविश्वविद्यालयस्य कुलपतिपदं विभूषयामास। परं काणे-महोदयो वर्षद्वयं तत्कृत्यं महता श्रमेण सम्पाद्य स्वेच्छया धर्मशास्त्रेतिहाससम्पादनार्थं तत्पदं परितत्याज।

1942 खृष्टाब्दे आङ्गलसर्वकाराः काणे-महोदयं महामहोपाध्याय इत्युपाधिना विभूषयाञ्चक्रुः। इलाहावादविश्वविद्यालयेन, पुणे-विश्वविद्यालयेन, बोम्बेविश्वविद्यालयेन साम्मानिक डक्टर् इति उपाधिः तस्मै प्रादायि। 1946 खृष्टाब्दे नागपुरे समनुष्ठितस्य अल् इण्डिया ओरियन्टाल् कोन्फारेन्स इत्यस्य अध्यपदमलमकारि काणे-महोदयेन। 1948 खृष्टाब्दे भारतसर्वकारैः स प्राच्यविद्यायाः प्रधिनिधित्वेन प्रेषितः पेरिस्-देशे समनुष्ठितायां इन्टरनेशनल् कंग्रेस अफ् ओरियेन्टलिस्टस् इति सभायाम्। ततश्च 1951 ईशवीयाब्दे तथा 1954 ईशवीयाब्दे प्राच्यविद्याया आन्तराष्ट्रियसम्मेलने भारतीयप्रतिनिधिनां नेतृत्वपदमलञ्चकार काणे-महाभागः। किञ्च, प्रोफेसर् लअ-महोदयेन बोम्बेप्रदेशस्थ-रयेल्-एसियाटिक्-सोसाइटिसंस्थातो योग्यशोधार्थी महामहोपाध्याय-पि.भि.काणे-स्वर्णपदकेन पुरस्क्रियते स्म।

भारतविद्यानुसन्धानार्थं तस्मै काणे-महोदयाय दा लण्डन स्कुल् अफ् ओरियेन्टल् इति संस्थया आफ्रिकान् स्टाडिज् इति संस्थया च साम्मानिकं स्मारकं प्रदत्तम्। भारतसर्वकारस्य राष्ट्रपतिना प्रथमवारं 1953 खृष्टाब्दे द्वितीयवारं च 1958 खृष्टाब्दे राज्यसभायाः सदस्यत्वेन चितः। तस्मिन् समये काणे-महोदयः विविधासु समितिषु विविधपदं गौरवान्वितं चकार। भारतसर्वकारैश्च काणे-महोदयस्य भारतविद्यायामवदानम् आधारीकृत्य स 1958खृष्टाब्दस्य अगस्तमासस्य 15 दिनाङ्के भारततत्त्वस्य जातीयाध्यपकत्वेन नियुक्तः। किञ्च, भारतसर्वकाराः काणे-महोदयं महता समारम्भेण भारतरत्न-विरुदेनैनं विभूषयाञ्चक्रुः। किञ्च, 1956 खृष्टाब्दे साहित्य-एकादेमि इति संस्थया धर्मशास्त्रेतिहासग्रन्थस्य चतुर्थभागस्य कृते काणे-महोदयः पारितोषिकरूपेण 5000सहस्ररूप्यकैः पुरस्कृतः।

एवमेतै रचिताः सम्पादिताश्चोपलब्धा ग्रन्था अधो निर्दिश्यन्ते –

1. *संस्कृतगद्यावली* – विश्वविद्यालयीयपाठ्यक्रमानुसारं रचितेयं 1910 ईशवीयाब्दे।
2. *साहित्यदर्पणः* – विश्वविद्यालयीयपाठ्यक्रमानुसारं रचितोऽयं ग्रन्थः1910 ईशवीयाब्दे। आङ्गलभाषयानूद्य व्याख्यानेन प्रकाशितः।
3. *उत्तररामचरितम्* – 1913 ईशवीयाब्दे आङ्गलभाषयानूद्य व्याख्यानेन प्रकाशितम्।
4. *कादम्बरी* (प्रथमभागात्मिका) 1911 ईशवीयाब्दे आङ्गलभाषयानूद्य व्याख्यानोपबृंहिता प्रकाशिता। कादम्बरी (द्वितीयभागात्मिका) 1918 ईशवीयाब्दे आङ्गलभाषयानूद्य व्याख्यानसहिता सम्पादिता।
5. *हर्षचरितम्* (प्रथमभागात्मकम्) 1918 ईशवीयाब्दे आङ्गलभाषयानूद्य व्याख्यानसहितं प्रकाशितम्। हर्षचरितम् (द्वितीयभागात्मकम्) 1921 ईशवीयाब्दे आङ्गलभाषयानूद्य व्याख्यानसहितं प्रकाशितम्।

6. *संस्कृतकाव्यशास्त्रेतिहासः* – 1921 ईशवीयाब्दे आङ्गलभाषामयः प्राकाश्यमानीतः।
7. *व्यवहारमयूखः* – 1926 ईशवीयाब्दे सानुवादः सव्याख्यानः प्रकाशितः।
8. *धर्मेशास्त्रेतिहासः* (पञ्चभागात्मकः) 1930 ईशवीयाब्दतः 1962 ईशवीयाब्दं यावत् प्राकाश्यमानीतः।
9. *तीर्थानां सूची* – 1953 ईशवीयाब्दे अयं ग्रन्थः प्रकाशितः।

अथ गच्छतानेहसा शरीरस्य शीर्णत्वात् संस्कृतमातुर्दौर्भाग्यात् नियतेरवश्यं भावित्वाद् अम्लादिभिरनेकैरामयैर्ग्रस्तो राहुग्रस्त इन्दुरिवायं सारस्वतेन्दुः पाण्डुरङ्गवामनः नेत्राश्वग्रहभूभूषितस्य (1972) ईशवीयाब्दस्य एप्रिल्मासस्य अष्टादशदिनाङ्के इष्टदेवं ध्यायं ध्यायं करालकलिकाल-कलङ्कितममुं लोकं साकं जराभरजर्जरितेन रोगग्रस्तेन स्वीयकलेवरेण तत्याज।

**सहायकग्रन्थपञ्जी**

*History of Dharmashastra* (Vol-II & Part – I), P.V. Kane, BORI, 1941, Poona.

…………………… (Vol – IV), P.V. Kane, BORI, 1953, Poona.

……………………. (Vol – I), P.V. Kane, BORI, 1930, Poona.

*Samskritagadyavali*, P.V.Kane, Macmillan and Co, Bombay, 5th edition, 1919, Poona.

*The Vyavaharamayukha of Bhatta Nilakantha*, ed. P. V. Kane, 1926, BORI, Poona.

## तथ्यसूत्राणि

[1] *संस्कृतगद्यावली*, (भूमिकाभागे), पृ. - II

[2] तत्रैव

[3] तत्रैव

[4] *दा व्यवहारमयूख*, (भूमिकाभागे), पृ. - 1

# Contribution of Shri C. D. Dalal to Manuscript Studies

**Dr. Sweta Prajapati**

## Introduction

The development of Indological studies in the western region of India commences systematically with the establishment of various research institutes like the Literary Society of Bombay in 1804, the Hindoo College in Pune in 1821. Many Western and Indian scholars worked together for bringing to light the history, culture and intellectual heritage of India. Later on in the first half of the 20th century many research institutes were established to carry research in ancient Indological subjects. In Maharashtra, Bharat Itihas Samshodhak Mandal in 1910, Bhandarkar Oriental Research Institute in 1917 in Pune, Bharatiya Vidya Bhavan and Gujarat Research Society in Mumbai in 1938, in Gujarat Oriental Institute in Vadodara in 1927 L.D. Institute of Indology and B.J. Institute of Learning and Research in 1955 were established. These institutes started working with great zeal and contributed immensely with new approaches to bring to light the unknown and less known matters of history of India. After Independence of the nation also all these institutions continued the Indological studies with the same enthusiasm and spirit. Oriental Institute at Baroda is one among such institutes which has made its proud existence in the field of oriental studies with the publications of critical editions of *Ramayana*, *Natyasastra*, Buddhist Tantra and

many other works under the world famous Gaekwad's Oriental Series.

Shri Chimanlal Dahyabhai Dalal commonly known as C.D. Dalal (1881-1918), like other stalwarts namely Binoytosh Bhattacharya, Anantakrishna Sastry, L.B. Gandhi, G. H. Bhatt, K. S. Ramaswami Sastry, M. R. Kavi, occupies an honoured place in the field of Manuscript studies and critical editing. In terms of both originality in editing ancient rare Sanskrit texts and in collecting and cataloguing palm-leaf and paper Manuscripts for posterity, Shri Dalal stands foremost in early 20$^{th}$century in Gujarat. Dalal's Indological scholarship is clearly reflected in the works he edited and the critical introductions he wrote to his works. His works covered varied topics like Sanskrit philology,literary texts with historical importance like epics, dramas, narratives; poetics and catalogues of Manuscripts.

The collection of Manuscripts as source materialsin Baroda begun with the efforts of Maharaja Sayajirao Gaekwad III in the early 20$^{th}$ century. Shri Dalal was one among various *Pandits* appointed in the mission of collecting and cataloguing the Manuscripts as important source material for exploring ancient intellectual heritage. His laborious and selfless efforts spread over several years in the early 19$^{th}$ century and he went to various places like Patan in Gujarat and Jesalmer in Rajasthan. This resulted in the collection of a vast number of manuscripts. Shri Dalal just did not made efforts for collection and classification of manuscripts but he also edited and studied some of the important Sanskrit and

Prakrit works on the basis of Manuscripts. The rich introductions to his works like *Rastraudhavamsamahakavya, Parthaparakramavyayoga*, *Naranarayanananda*, *Vasantavilasa*, etc. through light on early 12th-13th century history of Gujarat. The publication of his edited volumes in early 20th century were important not only for its literary qualities but also for the historical information they carry. He showed unique and extraordinary abilities in handling original source materials, their collection, preservation, cataloguing, classification, detailed description, editing and analysis. We can say confidently that research in the form of preparing critical editions of Sanskrit, Prakrit, Apabhramsa texts on the basis of Manuscript material began in Gujarat, specifically in Baroda with Shri Dalal.

Shri C. D. Dalal is a brilliant star in the firmament of Sanskrit and Prakrit studies. As a great pioneer of original research based on Manuscripts, he is well known to the veteran scholars all over the world working in this field. He had taken great trouble in exploring valuable Manuscripts and preparing the editions of diverse works by which the scholarly community is highly benefited. Truly speaking he recovered the valuable cultural and literary treasure and became a strong instrument in presenting it to the intellectuals of outstanding merits. Even today we get inspiration and insights from his outstanding editions which make a mark in the field of Manuscript studies. I have tried to make complete assessment of his works and tried to present the result of my study before this learned audience.

## Personal Information

Shri Dalal was born in 1881 at Kheda district of Gujarat in a middleclass Gujarati Svetamber Jain family.[1],[2] His family originally came from Patan, a city in North Gujarat to Kheda district and got engaged in the business of cotton brokers. Though he belong to business family, since his childhood he expressed his inclination for knowledge through constant reading and discussion with Jain monks.He was attending religious discourses of Jain monks and regularly went to *Upasrayas*to acquire knowledge in different disciplines. When he began college education he already had good command over Sanskrit and Prakrit languages. He was a brilliant student of Anandasankara B Dhruv at Gujarat College, Ahmedabad. After passing B.A. honours with Sanskrit and English from Bombay University in 1908 he got Dakshina Fellowship. He did M. A. with Sanskrit grammar. His article written in college days on 'Jainas at the court of Akbar' was highly appreciated by historian Vincent Smith, who later on wrote paper on 'Jain teachers of Akbar'. To intensify this knowledge further and to enter into the ocean of Sanskrit and Prakrit literature he was in constant touch with the stalwarts of Jains and enriched himself with discussions and discourses. During this time Maharaja Sayajirao Gaekwad III was organising the central library at Baroda under the guidance of Mr Borden, an American expert. Dalal was appointed as staff on this central library. After working in various capacities, he was finally appointed as Sanskrit Librarian. Dalal was Associate Editor of *Library Miscellany*, a first Journal on library science in India published by the central Library, Baroda. His carrier as Sanskrit scholar

started when he was working for Sanskrit section where 10000 manuscripts were collected.

Quite early, before the formal establishment of Oriental Institute,Shri Dalal was among those few Orientalists who could sensitively felt the need of collecting, preserving and studying the Manuscripts.While working in the Central Library of Vadodara during early 20th century, he was the first person to dream of the research Institute.

**His Works:**

Most of the initial works published under Gaekwad's Oriental Serieswere edited by Shri Dalal and nearly 25 works are the result of his planning. He travelled to Patan and Jesalmer for preparing the descriptive catalogues of Manuscripts and during this exercise he explored many important manuscripts and started editing them. His exploration of rare and important works in Sanskrit, Prakrit and Apabhramsa shows his insight and critical acumen. ShriDalal has not referred in any of his writings about to whose method he follows in preparing the critical edition of Sanskrit texts. Rather no principles and methodological guidelines were readily available during his time for preparing critical editions on the basis of Manuscripts. In such situation he edited number of Sanskrit, Prakrit and Apabhramsa works. Howeverhis method appeared quite scientific and logical. Following his path many Pandits inspired by his critical scholarship began editing Sanskrit texts resulted into valuable publications under Gaekwad's oriental Series. He was the first to think of starting the Gaekwad's Oriental Series for the publication of critical

गुणकर्महेतुतः तिमिरं द्रव्यमिति मतिः। चापरे लाघवप्रिया तद्भावं मदतः प्रचक्षते। ते कथयन्ति दोषसम्भवां गुणकर्माधिगतिं तमोगताम्। विरहेण समं प्रतियोगी विरोधभाग् नियतं व्यवस्थितः। तत एव तथा तमस्त्विषोर्वैरमभूच्चिरन्तनं प्रथितं जगतीतले। तमसः कारणात्सर्वेषां मानवानामसौविध्यं कविनात्र वास्तवोदाहरण-मुखेनोपस्थापितम्। पथिकाः पथि दृप्ततामसे पदमर्शसूचिते मृदुगत्या प्रतिपदं विपदापतनं दृढमुत्प्रेक्ष्य दुःखिताश्चलन्ति। तिमिरकारणाच्चौरा निर्भयं परवित्तानि हरन्ति। एवमालोकः सपरिकरं गुणाभिमानादित्येवं वीर्यदीप्तं वचनमुदीर्य प्रम्लानं तिमिरमवेक्ष्य लज्जयैव विजयभवश्रियं व्याकोचां प्रपेदे।

आलोकेन तिमिरं बहुधा निन्दितम्। ततो मानसविप्लवादिव खरशान्तसयुक्तिकोक्तिभिस्तिमिरमुखेनालोकयशो रोचिष्णुतया कविना खण्डितम्। तथाह्युक्तम् –

"अयि किन्नु विरत्थसे मुधा कथया ते व्यथते मनः सताम्।
अपराधलवेन विच्युते मयि ते द्वेषमतिः किमीदृशी" इति॥

आलोकः सर्वदा गवाक्षवर्त्मना तिमिरमपसार्य वीर्यभाग् भवति। परं तिमिरं द्रुलताद्यवकाशवर्त्मना हृदि शिवास्पदं सम्भाव्य गहनं विशति। तथाहि तत्र तं दुनोति विशन् आलोकः आलोकस्य भिया क्रमादधिकारं विजहेत्। ततस्तिमिरं गिरिगह्वरमेव संश्रये यथा क्षुद्रधराधिपो विजितो भवति। इत्थमालोकेनोत्थापितां युक्तिं स्ववचोभिः खण्डयित्वा स्वमाहात्म्यं प्रतिष्ठापयति तिमिरम्। स तिमिरं ब्रुते – दोषशते सत्यपि साधवो न हीतरस्य निन्दां कुर्वते। खलु एवान्यस्य सद्गुणानपसार्य दूषणं प्रतनोति। क्षुधया तृष्णया च मानवा दुर्बला बलवन्तोऽपि पुराद्बहिः स्थिता निशि तिमिरमुपगम्य सुखेन साहसं मङ्गलं समुपायान्ति। सुप्तमानवे नगरे भीतिबलेन ते वर्जिताः प्रविशन्ति जनयन्त्यपि च पृथग्विधैर्निजकाम्यैरनिशैश्चित्ततर्पणम्। निशि सुप्तवतां गेहे भवति न कापि विपद्, ततः परमप्रमादिनां कथमन्यः खलु दोषभाग् भवेदिति प्रश्नस्तिमिरस्य। बहुकल्याणफलप्रदायिनां श्रुतिबोधितयागकर्मणां हिंसनदोषचिन्तया विबुधा निन्दनमाचरन्ति। अकल्याणस्य लवो हि तिमिरस्य कृते शिवसङ्गे सुतरां प्रलीये।

ललितोज्ज्वलभूरिदीधितो हरिणाङ्के हरिणो न गण्यन्ते। परदोषकथनातिरोहिता यदि स्वदोषः स्यात्तर्हि परदोषवार्त्तया निजदोषान् परिचिन्तयात्मनालम्। तथाहि तिमिरं कथयति यदसतां नयोऽयं यदिमे निजदोषे अन्धदृष्टयः सर्वतः परं परदोषेषु सहस्रलोचनाः परगौरवबोधवर्जिताः। इत्थं तीक्ष्णशान्तं वचनमुदीर्य त्वरितं महाद्रिकुक्षिं तिमिरमगात् – "लघु चरितमहर्षिवैरिभीता सहदनुगा हि भवन्ति बुद्धिमन्तः"।

## आशुतोषावदानम्

'वङ्गदेशस्य व्याघ्र' इत्याख्यया सुपरिचितस्य आशुतोष-मुखोपाध्यायस्य समुत्साहव्यञ्जकजीवनवृत्तमाधारीकृत्य 'आशुतोषावदान'मिति खण्डकाव्यं काश्यप-कविना निरमायि। विलसति काव्यस्यास्य प्रतिच्छत्रं आशुतोषमुखोपाध्यायस्य वङ्गवास्तव्यान् प्रति महद् योगदानम्। काव्येऽस्मिन्वीर्यवतो मुखोपाध्यायस्य दृप्त-परहितैषि-महानुभवादिवैशिष्ट्योपेत-चरित्रं किंवदन्त्याश्रयेण वीररसाङ्गिपदत्वेन कालीपदस्य कल्पनालोकेन च रोचिष्णुतया काव्यायितं वर्तते। काव्यमिदम् अद्यापि अप्रकाशितम्।

## कालीपदस्यानुवादसाहित्यम्

इदानीन्तनमनूदितसाहित्यं स्वकं नवनवीनं भव्यञ्च प्रस्थानं निर्माति इतरभाषाणां निरवद्यकाव्यास्वादने तत्पर्यायवाचकशब्दप्रयोगचमत्कारेण च वङ्गदेशेऽधुना क्वचिदधिकतया अनूदितसंस्कृतसाहित्यं प्रसरति। अनुवादकर्मणि अस्मिन् कालीपदस्य सविशेषं योगदानं वर्तते। अनेन गीताया, चण्ड्याः तथा च गीताञ्जलेः अनुवादो विहितः।

## गीताञ्जलिच्छाया

रवीन्द्रनाथेन प्रणीतो 'गीताञ्जलि'रिति काव्यग्रन्थः समग्रे प्रपञ्चे प्रसिद्धिं प्राप्तोऽस्ति गीताञ्जलिकृत्यैव रवीन्द्रनाथो नोवेलविरुदेन सभाजितो

अभवत्। गीताञ्जलेः प्रथमप्रकाशकालः १९१० खृष्टवर्षोऽभूत्। आङ्गलसंस्करणं १९१२ ईशवीयाब्दे प्रकाशितम्। इदमपि किञ्चन स्मरणीयं तथ्यं यत् आङ्गभाषया गीताञ्जलेरनुवाद एव नोवेलप्रशस्तये विवेचितः सम्मानितश्च। अयञ्च न तु मूलभाषया नाम वङ्गभाषया लिखितो ग्रन्थः। 'गीताञ्जलिः', 'नैवेद्यम्', 'शिशुः', 'खेया', 'गीतिमाल्यम्', 'चैतालिः', 'कल्पना', 'स्मरणम्', 'उत्सर्गः', 'अचलायतनम्' इत्येतेभ्यः कविकृतकाव्य-संग्रहेभ्यः काश्चन कविताः संगृह्य गीताञ्जलेराङ्गलानुवादो रवीन्द्रनाथेनैव कृतः। अनन्तरं तस्यानुवादकर्मणः परिष्कारं विधाय प्रकाशनं जातम्। अनन्तरकाले विश्वस्य विविधभाषाभिर्गीताञ्जलेरनुवादकार्यं सातत्येन प्रचलदस्ति।

न केनापि मूलगीताञ्जलेः संस्कृतानुवादः सम्पूर्णतया संसाधितः ऋते कालीपदतर्काचार्यात्। जीवनसायाह्नमुपागतेन कालीपदेन विविधकर्मसु व्यापृतेनापि कविगुरुवर्यस्य पद्यानि विशेषेण गीताञ्जलिकाव्यसंग्रहस्य पद्यानि गीर्वाणवाण्यामनूद्य न केवलं वङ्गीयानामपि चावङ्गीयानां संस्कृतसेविनां रवीन्द्रसाहित्यावबोधनाय सौकर्यं संसाधितम्। महाकवेरशेषश्रद्धास्पदभूतायाः सुरभारत्याः सौभाग्यं भृशं वर्धितम्। अनुवादस्यास्य विशेषत्वमत्रैव यत्कालीपद-तर्काचार्येण अनुवादकेन सर्वाण्येव पद्यानि गद्यच्छन्दसा सुरचितच्छन्दसा सज्जीकृतानि। तत्रत्यानि पद्यानि 'प्रार्थना', 'दया', 'पाषाणप्रतिमा', 'अपमानमहिमा', 'अधिकारी' चेत्यादीनि। तथा च व्याकरणशास्त्रस्य कठोरशासनशतैः शासितोऽपि छन्दःशास्त्रस्य गुरुलघुमात्रानिशितपथेन न गच्छतानुवादकेन मुलकवेर्हृद्भावानुगुणं भाषान्तरकरणरूपानुवादलक्ष्यान्न भ्रष्टम्। क्वचिद्वाक्षरशोऽनुवादोऽपि तेन कृतः। किन्तु सहृदयहृदयानां सकाशे कवेर्भावान् उपस्थापयितुमाधिक्येन विहितो भावानुवादः।

गीताञ्जलिगतं १०६ संङ्ख्यकं गीतम् – 'हे मोर चित्त, पुण्यतीर्थे जागो रे धीरे...' इत्यादिकं बहुभिरनूदितम्। तत्र कालीपदेन विहितोऽनुवादो समधिकमूलानुगतया प्रतिभाति।

तर्काचार्यस्यानुवादः –

"हे मम मानस पावनतीर्थे, मन्दं जागृहि रे,
एतद्भारतमहिमसमन्वितमानवसागरतीरे।
अत्र स्थित्वा प्रसार्य बाहू, नरदैवतमभिवन्दे,
समहाच्छन्दः परमानन्दं, तद्वन्दनमनुविन्दे"॥ इति।

तर्काचार्येण मुक्तकच्छन्दसानुवादो विहितः, अन्यैः वसन्ततिलकवृत्तेन। 'जागो' इत्यस्यानुवादे 'सर्वैर्जागृही'ति पदं व्यवहृतम्। तर्काचार्येण 'चित्ते'ति पदस्य 'मानसे'ति अनुवादः कृतः। 'धीरे' इत्यस्यानुवादे तर्काचार्येण 'मन्द'मिति पदं गृहीतम्। 'रे' इति द्वितीयं मूलस्थितं सम्बोधनसूचकं पदं तर्काचार्येण विहाय सर्वैरन्यैरनुवादकैः परिहृतम्। तर्काचार्येण 'पावनतीर्थे' इत्यनुवादो विहितः 'पुण्यतीर्थे' इति पदस्य। 'ए भारतेर महामानवेर सागरतीरे' इत्यस्यानुवादे 'प्राचीने'ति पदमधिकं पूरितं धीरेन्द्रनाथेनानुवादकेन। परम कालीपदेन 'एतद्भारतमहिम' इत्यनुवादः कृत इति कृत्वानुवादोऽयं प्रशस्यतर इति मन्ये। 'हेथाय दाँडाये' इत्यादिपंक्तिद्वितयस्यानुवादे तर्काचार्यः प्रशस्यतमः प्रतिभाति।

अस्मिन्ननुवादे मौलिको भावः शब्दविन्यासश्चाव्याहतौ वर्तेते प्रायेण। अनूदितपद्यस्य भाषा सुरगीरप्यतीव सुषमा, मञ्जुला, सरला च। प्रतिभात्यनुवादोऽयं सर्वोत्तमतया। काश्यपकवेरयमनुवादः सत्यमेव मूलगीताञ्जलेः छायाविशेषः। तथाह्यनुवादस्य नामकरणमपि यथार्थमिति मामकी मतिः। एतन्निश्चप्रचमभिधातुमलं यदनुवादकत्वेन कालीपदः ध्रुवमेव विशिष्टस्थानमधिकरोतीत्यत्र नास्ति संशयलवः कश्चित्।

## गीताप्रतिच्छाया

न केवलं संस्कृतानुवादे कालीपदस्य विशेषत्वं वरीवर्ति, अपि च श्रीमद्भगवद्गीतायाः 'Blank Verse' इति नव्यच्छन्दसा कृतो मूलानुरूपो वङ्गानुवादः खलु 'गीताप्रतिच्छाये'ति। अनुवादोऽयं देवयानपत्रिकायां

प्रचरद्रूपतां गतः। अनुवादकेन श्रीमद्भगवद्गीताया भावसम्पत्तिं मनसिकृत्य प्रेक्षापटञ्च सम्यक्तयावबुध्य क्वचिद्भावानुवादः क्वचिच्चाक्षरशोऽनुवादः कृतः। ये खलु वङ्गीयाः संस्कृतं न जानन्ति, गीतार्थविबोधनाय गीताञ्च मातृभाषयानूद्य सौकर्यमनेन संसाधितम्। इह अनुवादे परिस्फुरन्ति काश्चन मौलिकसौन्दर्यच्छटा, शब्दविन्यासचारुत्वं भङ्गिभणितिवक्रिमा चेति।

**श्रीश्रीचण्डीप्रतिच्छाया -**

कालीपदविरचिता 'श्रीश्रीचण्डीप्रतिच्छाया' हि मार्कण्डेयचण्डी-ग्रन्थानुवादो, यश्च 'Blank Verse' इति छन्दसा लिखितो वङ्गभाषामयः। तेनानुवादोऽयं सरलवङ्गभाषया भावसम्पत्त्याः पूर्णप्राधान्यं विधाय कृतः। सुदर्शनपत्रिकायामंशतः प्रकाशितोऽनुवादोऽयम्।

**कालीपदस्य दर्शनशास्त्रलब्धप्रतिभा -**

पितुर्हरिदासस्याभिप्रायानुसारिणि पाश्चात्त्यविद्याशिक्षाकर्मणि प्रवृत्तोऽपि भविष्यति तस्मान्निवृत्तो भूत्वा पितुः सम्मतिमादाय च कुलधर्मानुसारं संस्कृते स रतिं श्रित्वा तत्प्रशिक्षणमारेभे। अंशतः शब्दशास्त्रमधीत्य पुनः कलिकातामागत्य पण्डितस्य भुवनविद्यारत्नस्य सकाशे तत्पाठं समाप्याचिरेणैव व्याकरणतीर्थोपाधिपरीक्षामुत्तीर्णः। पिता यस्य नैयायिकोत्तमस्तस्य न्यायशास्त्रे स्पृहा स्वाभाविक्येव। विधातृनिर्देशवशमापन्नेव निःसङ्गं तप इव मूलाजोडसंस्कृतविश्वविद्यालये महानैयायिकेभ्यः शिवचन्द्रसार्वभौमेभ्योऽधीत्य विधिवन्न्यायशास्त्रं कालीपदतर्काचार्य्याख्यां लब्धवान्। तथाहि तेन स्वयमेव 'कविवंशादिनिवेदनमिति' छिन्नपत्रावल्ल्यामुक्तं -

"अथ तत्रैव यत्नेन सार्वभौमाद् गुरोश्चिरम्।
अधीत्य तार्किकीं विद्यां प्रतिष्टां महतीमगात् ।।इति।

ततः परं तत्रैव स श्रीशिवचन्द्रसार्वभौमभट्टाचार्येभ्य एव नव्यन्यायशास्त्रीयतीर्थपरीक्षायां पाठ्यभूतान् ग्रन्थान् साभिनिवेशमध्येतुमारेभे।

सांख्यशास्त्रीयग्रन्थानवसरसमयेनाधीत्य समुत्तीर्णश्च सांख्यशास्त्रीयमध्यम-परीक्षायाम्। पाठसमाप्तानन्तरं स कलिकातानगर्य्यां राजकीयसंस्कृतविद्यालये न्यायविभागे प्राध्यापकपदमलंचकार। न्यायशास्त्रे असामान्यप्रतिभायै श्रीङ्गेरीमठाधीशः शङ्कराचार्यस्वामी तस्मै तर्कालंकारः इत्युपाधिं प्रददौ। अध्ययनावसानेऽपि प्रपञ्चस्य पीतशास्त्रसारैः सारमञ्जरीसारार्थदार्शनी-सांख्यसारदीपन्यादयो असंख्याताः विद्यार्थिनामुपकारका ग्रन्थराशयोऽनेन विरचिताः। वङ्गदेशे यत्र यत्र यदा यदा शास्त्रविचारः समभवत्तत्र विचारकर्मणि तर्काचार्यं विहाय नेतरः कोऽपि यो माध्यस्थत्वेन व्रियते स्म। अथैकदा दूरदेशागतान् विदग्धजनान् प्रसङ्गतः आन्वीक्षिक्याः तर्ककर्कशावरणान्तर्वर्ति-मधुररस-श्रवणोल्लासितमानसान् कियत्या बोधनकौशलशक्त्या तर्कशास्त्राणि व्याख्यातवन्तो महात्मनः कालीपदाः तत्तु किंवदन्त्येव। तं विहाय एकोऽपि शास्त्रविचारः सम्यङ् न भवति वङ्गभूमौ। तस्येदृशं ज्ञानमासीद् यत् सांख्यवेदान्तादिविषयिण्या यस्याः कस्या अपि समस्यायाः स्वल्पक्षणेनैव समाधानं कुर्वन्नासीत् कालीपदः।

**दार्शनिकसत्तायाः प्रमापिकाः ग्रन्थततयः**

तेन विरचिताः दर्शनग्रन्था अधस्तादीक्षणदिशा समुल्लिख्यन्ते-

1) जातिवाधकविचारः
2) मुक्तिदीपिका
3) मुक्तिलक्ष्मीः
4) रत्नलक्ष्मीः
5) मुक्तिदीपिका
6) भाषाप्रभा
7) सारदीपिका
8) सारप्रभा
9) सुप्रभा
10) न्यायपरिभाषा चेति।

**दर्शनशास्त्रीयग्रन्थेषु कालीपदस्य दार्शनिकी प्रज्ञा** –

वंशपरम्परया न्यायशास्त्रे अधिगतवेदितव्योऽयमादावेव '**जातिवाधकविचारो**' नाम निबन्धमालां विरचय्य नैयायिकसंसदि

लब्धप्रतिष्ठोऽभूत्। निबन्धोऽयं दीर्घकालं यावत् संस्कृतसाहित्यपरिषत्पत्रिकायां प्रकाशतां गतः।

**गदाधरकृतो नवमुक्तिवादः** (संस्कृतसाहित्यपरिषद्, कलकाता) – १३३१तमे वङ्गाब्दे कालीपदेन प्रकाशितः साहित्यपरिषद्ग्रन्थमालायां शिवरामकृतटीकया सह 'गदाधरकृतो नवमुक्तिवादः'। तेन संयोजिता मूलटीकयोः प्रतिपाद्यविषयाणां भावार्थनिरूपणात्मिका 'मुक्तिदीपिकानाम्नी' टीकापि। वङ्गभाषामयं तात्पर्यविवरणञ्चापि तेन संयोजितमनेन ग्रन्थेन समम्। तत्रैका महती भूमिका प्रस्तुता, यत्र दर्शनशास्त्रीयनैपुण्यं कालीपदस्य प्रकटितम्। मुक्तिस्वरूपं मुख्यतया ग्रन्थस्यास्य मूलम्। भूमिकायां चार्वाक-बौद्ध-जैन-मीमांसा-सांख्य-वेदान्तादिसम्मतमुक्तिस्वरूपं सरलया भाषया प्रतिपाद्य गदाधरोक्तमुक्तेरुपन्यस्तं स्वरूपम्। ग्रन्थकृत् आवश्यकताविषये (Necessity) युक्त्या व्याख्याति। आवश्यकतायाः भागद्वयम् स्वतः-गौणभेदात्। उभयावश्यकतास्वरूपमपि प्रपञ्चितम्। ग्रन्थस्यास्य वैशिष्ट्यमत्रैव यत् मुक्तिविषयकाः पतञ्जलि-कपिल-भर्तृहर्यादीनां दार्शनिकानां राद्धान्ता अपि सविशदं व्याख्याताः वर्तन्ते।

**हरिरामतर्कवागीशविरचितो मुक्तिवादविचारः** (संस्कृतकलेज्, कलकाता, 1959) – अस्मिन्नपि ग्रन्थे मुक्तिविषये विमर्शो वर्तते। कालीपदो ग्रन्थस्यास्य सम्पादकः, टीकाकारोऽपि। मुक्तिलक्ष्मी तट्टीकाया नामेति। ग्रन्थस्यास्य मुख्यो विषयस्तावदेकः प्रश्नः। स च स्थायिदुःखनिवृत्तिरेव मुक्ति इत्युच्यते चेत् किञ्च स्थानिनिवृत्तिर्नाम अत्यन्ताभाव इत्यङ्गीक्रियते चेन्मुक्तेर्नित्यत्वमापतति। मुक्तिर्नित्या चेत् सर्वे मुक्तावस्थायामेव राजमानाः स्यु इति प्रश्नः। हरिरामेण यदुक्तं कालीपदेनापि तदनुसारि व्याख्यानमकारि। तत्र सारो हि स्थायी निवृत्तिः इत्यस्य ध्वंसाभाव इत्यर्थः। ध्वंसाभावोऽनित्यः कालजन्यश्चेति। ग्रन्थस्यास्य वैशिष्ट्यं तावत् न्यायवैशेषिकपरम्परागतां धारणां त्यक्त्वा स्वतन्त्रतया हरिरामकालीपदाभ्यां मुक्तिस्वरूपं व्याख्यातम्। तयोर्नये तु मुक्तिः पापस्य स्थायिनिवृत्तिः, न तु दुःखस्य। द्वितीयं मतं साधारणैरङ्गीक्रियते। परं हरिदासकालीपदाभ्याम् अस्य मतस्य विरोधः कृतः।

'**गदाधरकृतो मुक्तिवादः**' प्रायेण गङ्गेशोपाध्यायस्य अनुमानग्रन्थानगतस्य मुक्तिप्रकरणस्यानुकरणमेव। तर्काचार्यनये सामान्यनिरुक्तिग्रन्थेषु गदाधरस्य यादृशः प्रतिभाप्रकर्षो न तादृशो नवमुक्तिवादग्रन्थीयविषयेषु। मुक्तिदीपिकायां गदाधरपङ्क्तिमनुसृत्य व्याख्यातं, पश्चात् शिवरामटीकाया अतिसंक्षिप्तत्वात्तस्या अपि निष्कर्षः प्रदत्तः तेनादौ।

कालीपदस्यापरा कृतिर्दर्शनशास्त्रीया '**मुक्तिदीपिका**'। जगदीशतर्कालंकारस्य प्रशस्तपादभाष्यटीका मुक्तिनाम्नी, तदुपरि मुक्तिदीपिकानाम्नीं विवृतिं विन्यस्य वङ्गभाषामयं भाषातात्पर्यञ्च सन्निवेश्य सम्पादितानेन। टीकेयं संस्कृतसाहित्यपरिषद्ग्रन्थमालायां प्रकाशिता १३३२वङ्गाब्दे। भूमिकांशे प्रशस्तपादभाष्यस्य वैशिष्ट्यमनेन प्रपञ्चितं सुष्ठुतया। जगदीशतर्कालंकारः काव्यप्रकाशटीकाकृज्जगदीशतर्कपञ्चाननतो भिन्न एवेत्यनेन प्रतिपादितम्। किरणावली-न्यायकन्दल्यादिग्रन्थाननुसृत्य जगदीशेन मुक्तिर्विरचितेति उपादितम्। दीपिकेयं नव्यन्यायशैल्या विरचिता।

**कणादतर्कवागीशकृतं भाषारत्नम्** (संस्कृतसाहित्यपरिषद्, कलकाता, 1936) - न्यायदर्शने अन्यतमः प्राचीनग्रन्थस्तावत् भाषारत्नम् इति। ग्रन्थस्यास्य सम्पादनावसरे कालीपदः स्वस्य व्याख्यानमपि संयोजितवान्। न्यायदर्शने स्वीकृतानि द्रव्याणि कालीपदेन स्वयुक्त्या विश्लेषितानि। न्यायदर्शने अङ्गीकृतानां प्रमाणानां विषये व्याख्यानमपि तेनैव विहितम्। शब्दप्रमाणव्याख्यानावसरे शक्त्याकाङ्क्षादिविषयान् उपरि कालीपदस्य व्याख्यानपद्धतिः नितान्तं प्रशंसार्हा। कणादतर्कवागीशकृतस्य भाषारत्नग्रन्थं सम्पाद्य **रत्नलक्ष्मी**नाम्नी टीकाप्यनेन रचिता। त्रीणि हस्तलिखितपुस्तकानि लब्धान्यनेन सम्पादनविधौ। तत्र पाठान्तराण्यपि विनिवेशितानि। परं समीचीनपाठः मूलपाठत्वेन योजितः। अत्रेदमुल्लेख्यं यत् स्वपत्न्याः स्मृतिहेतवे रचितेयं संस्कृतभाषामयी टीकातिसरला सुबोध्या महत्युपकारिणी शिक्षार्थिनां कृते। भूमिकांशे न्यायवैशेषिकतत्त्वानां विमर्षः, भाषारत्नग्रन्थस्य वैशिष्ट्यानि, नव्यन्यायपारिभाषिकशब्दानाम् आशयाश्च विषयाः सरलसुरगिरा कालीपदेन

प्रतिपादिताः। प्रतियोगित्वानुयोगित्वावच्छेदकत्व-पर्याप्तिसम्बन्धादीनां पारिभाषिकशब्दानां ज्ञानमन्तरेण नव्यन्यायशास्त्रं सर्वथा दुर्बोध्यमिति मत्वा तत्त्वत्पदार्थानां विचारः सन्निवेशितस्तेन।

न केवलं न्यायशास्त्रे, सांख्ययोगादिप्रस्थानेऽपि स्वतन्त्रोऽयं विज्ञानभिक्षुकृतस्य सांख्यसारग्रन्थस्य '**सारप्रभाख्यां**' टीकां निर्मितवान्। वङ्गभाषामयानुवादेनेयं १९३०ईशवीयाब्दे प्रकाशिता। सांख्यकारिकाया गौडपादभाष्यस्य बहुषु स्थलेषु दुर्बोध्यतया 'भाषाप्रभाख्यटीकां' निर्माय कारिकाया वङ्गभाषायामनुवादेन चालंकृत्यानेन सांख्यकारिकां सम्पाद्य प्राकाशि। पातञ्जलयोगसूत्रस्य मणिप्रभाविवृत्याः '**प्रभाप्रकाश**नाम्नी' टीप्पनी विस्तृतवङ्गानुवादसमेतं प्रकाशिता कालीपदेन। विद्यार्थिनां सुखबोधायैव व्यरचि टीकारत्नत्रयम्।

**नव्यन्यायभाषाप्रदीपः** (संस्कृत कलेज्, कलकाता, 1973) – महेशचन्द्रन्यायरत्नेन विरचितस्य Brief Notes on the Modern Nyāya System of Philosophy and its Technical Terms इति ग्रन्थस्य बङ्गानुवादो भवति नव्यन्यायभाषाप्रदीपः इति ग्रन्थः। यद्यपि ग्रन्थकृता ग्रन्थस्यास्य किमपि संस्कृतभाषामयं नाम नोपदिष्टं तथापि तदुक्तस्य ग्रन्थस्य आङ्गलभाषामयवाक्यविशेषस्यानुसारेण नव्यन्यायभाषाप्रदीपः इत्येव संस्कृतभाषामयं नाम विहितमस्माभिः, विवृत्तेरपि तदनुगतं नाम सुप्रभेति। अर्थात् कालीपदतर्काचार्येण ग्रन्थस्यास्य न केवलम् अनुवादो विहितश्चापि सुप्रभाख्यं स्वरचितामेकां टीकां तत्र संयोजयामास।

अत्रेदम् अवधेयं यत् ग्रन्थस्यारम्भस्तावत् पदार्थस्य धर्म इत्युक्ते कोऽर्थः इति क्रमेणैव। धर्मश्च जात्युपाधिभेदेन द्विधा विभाजितः। उपाधिश्च सखण्डाखण्डभेदेन द्विधा। सम्बन्धविषये जगदीशतर्कालंकारेण यल्लक्षणं उक्तं तस्य व्याख्यानकाले कालीपदेन खलु साक्षात्परम्पराप्रसङ्गो विस्तरशो व्याख्यातः। तत्र वृत्तिनियामक-वृत्त्यनियामकत्वविषयेपि आलोचनं वरीवर्ति। पर्याप्तिसम्बन्धविषये ग्रन्थे उक्तं यत् सम्बन्धोऽयं द्वित्वरूपाधिकरणे तिष्ठति, परं

स्वगतदृष्ट्या पर्याप्तिसम्बन्धो न हि द्वित्वरूपः, एक एव। विषयता-विषयिता-अधिकरणतादिविषयाणां विस्तृतमालोचनम् अलक्षि। प्रतियोग्यनुयोग्यभावादि-विषयान् आदाय तथ्यभूयिष्ठम् आलोचनं वरीवर्तते। श्रीधरकृतन्यायकन्दली-ग्रन्थस्य वङ्गानुवादेन समं विवृतिस्तेनारब्धा। ग्रन्थोऽयं दुर्बोध्य इति कृत्वा तात्पर्यविश्लेषणार्थं महान् प्रयत्नः कृतस्तेन।

कालीपदेन रचितायां सुप्रभाख्यायां टीकायां मूलाधिकारेण अस्माकं विशेषतो वक्तव्यानि सर्वाणि वस्तूनि समुपन्यस्तानि। यथासम्भवं विषयविशेषेषु तत्तद्वस्तुसाम्यवैधर्म्यादिनिवेदनाय पूर्वाचार्यमतान्यपि संगृह्य सन्निवेशितानि।

अत्र ग्रन्थे मूलकारेण ये न्यायशास्त्रीयपारिभाषिकशब्दाः व्याख्येयत्वेन परीगृहीताः तद्व्यतिरिक्ता अपि केचन सुप्रसिद्धास्ते परिशिष्टप्रकरणत्वेन किञ्चित् स्वतन्त्रं प्रकरणं प्रकृत्य तत्रास्माभिः समासेन व्याख्याताः। तदनुषङ्गेण ग्रन्थस्यास्य साङ्गतासङ्गतिमूलो न्यूनतापरिहारः सम्भविता।

यद्यप्यत्र ग्रन्थे व्याख्यानार्थम् उपात्तेषु पदेषु धर्मादयः केचन शब्दाः न केवलं नव्यन्यायसम्बन्धिन एव तथापि तेषाम् अर्थविरणस्य नव्यन्यायनयम् आश्रित्यैव कृतत्वेन प्राधान्यतो व्यपदेशा भवन्तीति न्यायेन च नास्य प्रकृतनामार्थसङ्गतिः विघटते।

नव्यन्यायभाषाप्रदीपाख्यग्रन्थमुपजीव्य आमेरिकादेशस्य हार्भार्डविश्व-विद्यालयस्य प्रतीच्यपण्डितवर्यैः डा.ईङ्गलस्महोदयैः स्वस्य 'Meterials for the study of Navyanãyalogic' इति ग्रन्थे नव्यन्यायस्य पारिभाषिक-शब्दानां विमर्षः प्रस्तुतः। स च सुदीर्घपन्थानमतिक्रम्य कलिकातामागत्य कालीपदतर्काचार्यस्य सविधे पुंखानुपुंखतया नव्यन्यायशास्त्रमधीतवान्। तस्य ग्रन्थस्य आङ्गलभाषामये भूमिकांशे सश्रद्धं यत्तेनोल्लिखितं तदत्रास्माभिरुल्लिख्यते - "तर्काचार्यः खलु विशालो ज्ञाननिधिः। समग्रजीवनं तस्य चरणतले निषण्णेन मया यदि पाठाभ्यासं कर्तुं शक्येत, तदाहं सुखी अभविष्यम्। कतिवर्षैः स्वल्पं यत्किञ्चित्तस्मादाहृतं मया तदेव ग्रन्धेऽस्मिन् प्रकाश्यते। तत्सविधे ऋणं मेऽपरिशोध्यम्" इति।

वङ्गभाषया कालीपदेन विरचितो न्यायशास्त्रीयग्रन्थो न्यायपरिभाषेति। काशीसंस्कृतविश्वविद्यालये प्रचारिता न्यायवैशेषिकदर्शनसम्बन्धिनी वक्तृतामाला कालीपदेन। सा च सारस्वतीसुषमापत्रिकायां प्रचरद्रूपतामिता।

**अक्षपाददर्शनम्** (संस्कृत कलेज्, कलकाता, 1975) - कालीपदतर्काचार्येण इह ग्रन्थे न्यायदर्शनोक्तदिशा कथं तत्त्वज्ञानात् (पदार्थस्य स्वरूपविषयकज्ञानात्) मुक्तिलाभः (निःश्रेयस्प्राप्तिः) भवतीत्युक्तम्। तत्त्वज्ञानं नाम आत्मादिषोडशप्रमेयपदार्थानां ज्ञानमत्रावधेयम्। प्रमेयज्ञानं प्रमाणज्ञानजन्यं भवति। न्यायदर्शनोक्तप्रमाणानां प्रत्यक्षानुमानोपमानशब्दानां विषये विस्तृततया विवरणपरकोऽयं ग्रन्थः। अत्र यद्यपि मुक्तिलाभोपाय एव मुख्यतया आतन्वितस्तथापि ग्रन्थस्यास्य नाम न्यायशब्देनाभिहितम्। कस्यापि विषयस्यानुमानेन साधनमेव न्यायशब्दस्य आशयः। इदमेव कारणं यत् सर्वेषां शास्त्राणां विद्यानां वा मूलं न्यायशास्त्रे ग्रथितं विद्यते। श्रवणमनननिदिध्यासनैः च यदा कोऽपि आत्मज्ञानं लभते, तदा स निःश्रेयोवान् भवतीत्येतदेव न्यरूपि दार्शनिकप्रवरेण कालीपदेनेह ग्रन्थे।

**वैशेषिकदर्शने प्रशस्तपादभाष्यम्** (संस्कृतसाहित्यपरिषद्, कलकाता, अनुल्लिखितः प्रकाशकालः) प्रशस्तपादभाष्यान्तर्गतं द्रव्याध्यायम् आधारीकृत्य इह ग्रन्थे दर्शनसम्मतमालोचनं विहितम्। दार्शनिकप्रवरैः स्वव्याख्यानं **युक्तिदीपिके**ति नाम्नाख्यायितम्। व्याख्यायामस्यां तत्त्वज्ञानस्वरूपं, द्रव्य-गुण-कर्म-सामान्यादिद्रव्यविभागः, विशेष-समवायादिस्वरूपम् आदाय च तथ्यप्रपूरितं सविशेषं वर्णनमुपलभ्यते। वैशेषिकसम्मतानां पृथिव्यप्तेजोवाय्वाकाशानां गभीरतया विश्लेषणम् अत्र विद्यते। नवद्रव्येषु कालविषये कालीपदस्य विस्तारः नितराम् उल्लेख्यार्हः।

**भवानन्दसिद्धान्तवागीशकृतः तत्त्वचिन्तामणिदीधितिप्रकाशः** (एशियाटिक् सोसाइटि, कलकाता, 1963)– नव्यन्यायप्रस्थानस्य ग्रन्थोऽयं अत्यन्तकुशलतया कालीपदेन सम्पादितः। तत्त्वचिन्तामणेः तर्कप्रकरणात् पक्षताप्रकरणपर्यन्तं पर्यालोचनं सविशदम् अस्मिन् ग्रन्थे समुपलभ्यते।

तर्कस्वरूपमाधारीकृत्य अस्मिन् ग्रन्थे विस्तृतं विवरणमस्ति। व्याप्तिस्वरूपस्यापि विश्लेषणमत्र विद्यते। सामान्यलक्षणं किमिति विषये नव्यनैयायिकानां यन्मतानैक्यं वर्तते, तदप्यालोचितं तेन। ग्रन्थान्ते उपाधि-पक्षतयोरालोचनं वरीवर्ततेऽत्र।

**जयकृष्णतर्काचार्यकृता सारमञ्चरी** (सदेश, कलकाता, 1405) – सारमञ्जरी इत्यस्य सम्पूर्णं नाम शब्दार्थसारमञ्जरीति। अयं व्याकरणसम्बन्धितो ग्रन्थः। अत्र व्याख्यानं न्यायदिशास्तीति स्पष्टं प्रतीयते। तत्रासीन्मूलग्रन्थः अष्टमशतकस्य अन्तिमभागे विरचितः। कालीपदेन अस्मिन् ग्रन्थे काचन टीकाकारि। व्याकरणनयं समर्थयितुं बहुत्रैव कालीपदस्य न्यायमार्गः अनुसृतः। अत्रैव शब्दार्थयोस्तथा च शाब्दज्ञानस्य स्वरूपविषये दार्शनिकप्रवरेण कालीपदेन विस्तरशो विवृतम्। समासोपसर्गादिव्याकरणतथ्यान्यालोचितान्यत्र।

**उपसंहृतिः**

पश्चिमवङ्गस्य न्यायशास्त्रचर्चायां कालीपदो मध्याह्नकालीनारुणवद्राजते। दीननाथत्रिपाठिना 'परमपूज्यपादतर्काचार्यचरणयोः प्रसूनाञ्जलिः' इति प्रबन्धे तर्काचार्यस्य तर्कशास्त्रज्ञानगभीरत्वं तत्त्वज्ञानविश्लेषणेन श्रोतृवर्गाणां मनोहरणञ्च प्रतिपादयता कथितम् - "सत्स्वपि चैतेषु विद्वत्तमेषु दृष्टिरेवात्रापकृष्यत। बहुच्छात्रपरिवेष्टितो मथुरानाथतर्कवागीश इव कुन्दावदात इव शरच्छशिरश्मिधौताकाश इव प्रसन्नहास्यच्छटाविच्छुरितगृहान्तः प्रान्तकैलासपुरावस्थितगिरिश इव ज्योतिष्मान् अङ्गकान्त्या विद्यामन्दिरं सर्वतः प्रदीपयन् निष्कोशितप्रतिशब्दार्थगूढभावः सरलया भाषया तर्कशास्त्राणि व्याचक्षाणः शिष्यजनगणमनांसि हरति"इति। दृश्यन्तेऽनेके तार्किकाः काव्ये नीरसाः, तत्र भवन्तस्तु सदातनरसभाण्डमित्युक्तेऽपि मन्ये नातिरिच्यते तद्वाक्यम्। कविरियम् आत्मानो दार्शनिकसत्तापेक्षया कविसत्तायै रोचते।

परिशेषे वक्तुमलं यत् कालीपदतर्काचार्यः समासीत् कश्चन महान् कारयितृप्रतिभासम्पन्नः पण्डितप्रवरः महाकविः।[15] नान्यथा श्रव्यकाव्यानि

अनायासेन विरचयितुं नार्होऽभवत्। तस्य सर्वाणि काव्यानि विश्वनाथाद्यालंकारिकैर्विहितानि वैशिष्ट्यान्यनुसृत्य ग्रथितानि। भाषायाः काठिन्यमपि काव्यानां प्रतिपदं परिलसति। वैदर्भीरीत्याः प्रभावो दरीदृश्यते। कवेरसाधारणप्रतिभादीप्त्या सामान्यः शब्दो वार्थो वा विच्छित्तिमहिम्ना महिमान्वितो भवति। प्रसङ्गेऽस्मिन् मनसि नीलकण्ठदीक्षितस्योक्तिरायाति

"यानेव शब्दान् वयमुच्चारयामो यानेव चार्थान् वयमुल्लिखामः।
तैरेव विन्यासविशेषभव्यैः सम्मो[16]हयन्ते कवयो जगन्ति"॥ इति।

कालीपदस्य संस्कृतकाव्येषु प्राचीनशब्दानां व्यङ्ग्यपरकतया विशिष्टप्रयोगा दृश्यन्तेऽस्माभिः। गुणालंकारभावरसैः काश्यपकवेः काव्यानि रसाप्लुतान्यभवन्। किञ्च, "पुराणमित्येव न साधु न चापि काव्यं नवमित्यवद्यम्" इति कालिदासभणितिं शिरसा निधाय शक्यवचं यत् कालीपदः पुराणं काव्यवस्तु स्वमनसो माधुरीं मेलयित्वा तथा च वस्त्वाङ्गिकादिभिर्नवीनं वृत्वा सहृदयहृदयेभ्यः उपायनीकरोति।

## सहयकग्रन्थपञ्जी

तर्काचार्यः, कालीपदः.

*सत्यानुभावम्*. कलिकाता. संस्कृतसाहित्यपरिषत्.1967।

*मन्दाक्रान्तावृत्तम्*. कलिकाता.संस्कृतसाहित्यपरिषत्।

*नलदमयन्तीयम्*. कलिकाता, संस्कृतसाहित्यपरिषत्, 1926।

*माणवकगौरवम्*. कलिकाता, संस्कृतसाहित्यपरिषत्, 1958।

उपाध्यायः, रामजी. *विंशशताब्दिकं संस्कृतनाटकम्*. चौखाम्बा विद्याभवन, वाराणसी, 2005।

भट्टाचार्य, हेमचन्द्र. *वङ्गीय महामहोपाध्याय जीवनी*. कोलकाता, 1652 (वङ्गाब्द)।

शास्त्री, श्रीरामधनः. *संस्कृतसाहित्यपरिषत्पत्रिका* (Vol.LVI (1-3).सम्पा. संस्कृतसाहित्यपरिषत्, कोलकाता, 1973।

## तथ्यसूत्राणि

---

[1] *काव्यानुशासनम्*, 316, पृ.- उद्धृताः

[2] द्विवेदी, कपिलदेवः,*संस्कृतनिबन्धशतकम्*, पृ.- 143

[3] *नलदमयन्तीयम्*, पृ. – २।

[4] तत्रैव, १।२।

[5] *तत्रैव*, पृ. – १४५।

[6] *तत्रैव*, पृ. – ६५।

[7] तत्रैव, पृ. – ७३।

[8] तत्रैव, पृ. – ७३।

[9] *साहित्यदर्पणः* (षष्ठः परिच्छेदः)।

[10] *प्रणवपारिजातः* (प्रथमवर्षः दशमसंख्या), पृ. – २०१।

[11] *सत्यानुभवम्* (भूमिका)।

[12] *तत्रैव* (वस्तुसंक्षेपः)।

[13] *मन्दाक्रान्तावृत्तम्* (१।१११)।

[14] तत्रैव (४।८७)।

## नूतनसम्भावनानाम् अभिप्रेरकाः – भट्टमथुरानाथकविवराः

**डा. सरोजकौशलः**

धन्येयं राजस्थानधरा यत्र नैकाः साहित्यकाराः आजीवनं सर्जनामाध्यमेन नवनवोन्मेषेण चमत्काराः प्रदर्शितवन्तः। तेषां वैदुष्यमेव विशिष्टं वर्तते। संस्कृत-भाषायाः समृद्ध्यै, समुन्नत्यै, प्रचाराय, प्रसाराय च निर्व्याजं प्रवर्तन्ते संस्कृतकवयः।

राजस्थानप्रान्तस्य वैशिष्ट्यमेव यत्तत्र काले-काले कविकर्मकवन-परायणानां सरस्वत्याः भगवत्याः वरदपुत्राणां आविर्भावः समजायत। तेष्वन्यतमो राराजते मञ्जुनाथापरनामधेयः भट्ट-मथुरानाथशास्त्रिमहोदयः। श्रीमता धीमता भट्टमहाभागेन संस्कृतं मृतभाषा इति कटाक्षयतां विद्वन्मन्यानां मुखानि नितरां मुद्रितानि स्वकीयया नवीनया शैल्या नूतनेन च प्रयोगेण। कविरयं न केवलं कविताः, उपन्यासाः, लघुकथाः नाटकानि, निबन्धादयो अरचयत् परममुष्य सर्जनाकर्मणि समाचारः, समीक्षा, सम्पादनं विनोदकणिका अपि स्थानभाजः। कविशिरोमणिना अमुना सर्वथा प्रमाणितं यत् संस्कृतभाषा युगानुकूलं साहित्यनिर्माणे सर्वथा समर्था जाता। काव्यस्य क्षेत्रे भट्टकविना ये नवीनाः प्रयोगाः कृतास्तेषु कथ्यस्य शिल्पस्य चेत्युभयविधक्षेत्रयोर्नूतनता समायोगः दृश्यते। अनेन कविना मुक्तक-कुलकादिरचनासु अभिनिवेशविशेषः प्रदर्शितः जयपुरवैभवम् नाम्नि काव्ये। ये वर्ण्यविषयाः ब्रजभाषायाः कविभिर्प्रातिस्विक-रूपेणाङ्गीकृताः, संस्कृतसाहित्येऽपि ते युगानुकूलतयाऽवश्यावश्यं ग्रहीतुं शक्यन्ते। जयपुरवैभवं ग्रन्थेऽस्मिन् ब्रजभाषा-परिगृहीताः समेऽपि प्रकाराः हृदयावर्जकरूपेण समायोजिताः। तां शैलीमधिकृत्यैव पूर्वं नगरी-नगर-स्थान-वर्णनतो राज्ञो राजसभायाः ततो नागरिकाणामुत्सवानाञ्च निरूपणं, तदनन्तरं राज्ञोऽभिनन्दनस्याशीर्वादादेश्चोपनिबन्धनम्। काव्यमिदं 'जयपुरनिर्देशिकेति' व्यपदेशेन निर्दिश्येत चेदत्र नास्ति कोऽपि अतिशयोक्तिः।

ग्रन्थोऽयं विविधमुक्तकानां कोषभूतस्तथापि वर्णनाक्रमेण विभिन्न-वीथीषु प्रकरणेषु च विभज्यमान-सकलमुक्तककाव्यस्य रसास्वादमास्वादयति। पूर्वापरनिरपेक्षत्वे सत्यपि वीथ्यादिषु निबन्धनमेतेषां मुक्तकस्य प्रामुख्यम्। मुक्तककाव्यस्येयं प्रथमाऽऽवश्यकता, यदस्य प्रत्येकं पद्यं पारस्परिक-सम्बन्धैर्विमुक्तं सन् रसचर्वणायां चमत्कारजनने सर्वथा समर्थं वरीवर्तु। कठेः मञ्जुनाथस्य समेष्वपि मुक्तकेषु विशेषतेयं सहजतया दृग्गोचरीभवति।

जयपुरवैभवस्य प्रत्येकं पद्यं जयपुरस्य वैभवं विशदीकरोति। जयपुरनगरस्य विश्वतोमुखवैभवस्य साङ्गोपाङ्गचित्रणेन काव्यमिदमन्वर्थतां भजते। वर्ण्यविषयदृशा काव्यमेतद् अष्टसु वीथीषु विभक्तम्। आमुखवीथी, नगरवीथी, राजवीथी, उत्सववीथी, नागरिकवीथी, उद्यानवीथी, अभिनन्दनवीथी व्रजकवितावीथी च। विशालैः देवमन्दिरैः अलङ्कृतायाः जयपुरनगर्याः समक्षमलकापुरी अपि कनीयसी भगिनीव प्रतीयते -

शोभावैभवेऽस्याः पुनरलका कनीयसी
..... जयनगरीयं सर्वनगरी गरीयसी।।[1]

उद्यानां वृक्षवाटिकादीनां हरीतिम्ना शृङ्गारितं जयपुरं पेरिसनगरीव रम्यतामदधानं भूरिभागधेयतां समालिङ्गतीति।

भारतीय- 'पेरिस' पुरीव परिलोक्या भृशं,
जयपुरपुरी मे भूरिभाग्यैरभिधेयाऽसौ।।[2]

संस्कृते भाषाप्रसङ्गे कवेरस्यानितरसाधारणं वैशिष्ट्यम्। व्याकरणेऽगाधगतय भट्टमहाभागाः समासप्रयोगेण, तद्धितेन, सतिसप्तम्यादिभिः महांश्चमत्कारः क्रोडीकृतः। भट्टकविना स्वप्रज्ञापरिपाकेण ब्रजभाषा - प्रचलितानिच्छंदांसि, उर्दूभाषाप्रचलितानिच्छंदांसि काव्यसौन्दर्यं समानतया अङ्गीकृताः। यस्यामपि विधायां कविवरेणामुना स्वलेखनी प्रवृत्ता सैव साहित्यिकी विधा चमत्कारातिशयमावहतीति।

भट्टकवेः 'साहित्यवैभवं' सर्वातिरिक्तशोभया प्रतिभाति। अनेन काव्येन तु प्रथमं संस्कृत-भाषायाः सामर्थ्यं विज्ञाप्यते। आधुनिका विचाराः, नूतनच्छन्दसु संस्कृतभाषायां अवतारयितुं शक्यन्ते, इति प्रथमः सन्देशः प्रतीयते कवेः। एतदर्थं अन्वर्थसञ्ज्ञा 'साहित्यवैभवम्' इति मन्ये। येन कौशलेन बिहारिकविः दोहाछंदांसि लिखति तथैव संस्कृतभाषायामपि दोहाछन्दसां मुक्तककाव्यरूपेण निर्मितिः कर्तुं शक्यते इत्येवात्र प्रदर्शितम्।

भट्टकविना अस्य काव्यस्य मञ्जुकवितानिकुञ्जमित्येव नामधेयं विहितम्। अस्य निकुञ्जस्य विभागः वीथिभिः चत्वरैश्च कृतः। अस्मिन् काव्ये ब्रजभाषाया रीतिसाहित्यमवतीर्णम् घनाक्षरी-सवैयाकुण्डलियादिछन्दःसु अनुप्रासस्य प्रयोगेण कोऽपि नवीनमार्गः स्थापितः कविना प्रातिस्विकसौन्दर्यः संस्कृतभाषायाः कवेश्च प्रतिभा द्वयमेव नितरां अभिनन्दनीयम् -

चञ्चच्चारुश्चलाचकासितरुचिररुचि
सलिलमुचामचारिसंचयो विभासते।।[3]

कुण्डलियाछन्दसः प्रयोगः अस्य काव्यस्य कुण्डलियाचत्वरे विभाति। भट्टकवेः चातुर्यं सहृदयानां हृदयमावर्जयति -

दीपकं प्रति कवेरन्योक्तिर्नितरामभिनन्दनीया-
दीपक! दीपयसे समं राजरङ्कभवनानि।
न च कञ्चिद् भेदं वहसि, किं त्वामभिनन्दानि।।
किं त्वामभिनन्दानि निश्चलः पश्यसि सर्वम्,
लोके सकलविभासकोऽहमिति न वहसि गर्वम्।
किन्तु वसति तव तले तिमिरमयि तमः प्रतीपक!
सेयं कीर्तिः केन लंघनीया तव दीपक!।।[4]

काव्येऽस्मिन् सर्वातिशायि वैभवं बिभर्ति गीतिवीथी, तत्रापि उर्दूभाषाचत्वरः।

विरहाऽऽपगा तटमुत्तरं पुनरागमिष्यति वा न वा।
अपि मानसी मम वेदना विषमा गमिष्यति वा न वा।।[5]

साहित्यवैभवस्य भूमिकायां संस्कृतभाषायाः प्रचारार्थं लोकरञ्जक-गीतादि सामग्र्या आवश्यकता प्रतिपादिता।

'साहित्यवैभवम्' नाम्नि ग्रन्थे कविरयं ऋतुवर्णननायिका-भेदनवरसनिबन्धनादि-परम्परां सम्वर्धते। नवयुगवीथ्यां रेलशकटिः वायुयानम् विद्युत्तन्त्री ग्रामोफोनः रेडियो इत्यादीनि यन्त्राणि काव्ये निबद्धानि। तेषां ग़ज़लगीतयः समकालीन-संस्कृतसाहित्ये नूतनतां आदधाति -

नवीना वेदना काचिद्वियोगे हन्त जातेयम्।
अलं मे वैद्य! विश्वासैरिहाऽऽयासो वृथा तेऽयम्।
मुहुर्मे मानसे सोऽयं समिन्धे पातको बाढम्।
हिमानीवारिधारिभिः क्षणं ज्वाला न यातेयम्।।[6]

विरहे काचिन्नवीनेव वेदना जाता। अत एव हे मे वैद्य! मम विश्वासदानैरलम्, ते अयं चिकित्सायाः आयासो वृथा। समिन्धे समिद्धो भवति। महतो हिमस्य जलधाराभिः क्षणमपि ज्वाला न गता।

इत्याकारकाः विविधाः ग़ज़लगीतयः संस्कृतभाषां सर्वथां युगबोधाभि-व्यक्तये समर्थां प्रतिपादयन्ति।

मञ्जुनाथकविः 'मनोलहरी' इति नाम्नि काव्ये विंशतिशिखरिणी-पद्यानि रचितवान्। रचनायां संकल्पविकल्पात्मिकानां मनसो लहरीणां चित्रणं वर्तते। मुक्तकत्वेनात्र नानाभावानां सत्ता। विनम्रतां प्रदर्शयन्नाह कविः -

स्वभावादुन्मीलन्ललितपदभङ्गः सुकविता।
तरङ्गैराघूर्णन् कवयति कविः किञ्चिदतुलः।।[7]

सम्पादनं कर्म भट्टमहाभागस्य प्रियं कर्म आसीत्। भट्टमहाभागेन 'संस्कृतरत्नाकर' नाम्ना विख्यातायाः सर्जनात्मकपत्रिकायाः चिरकालपर्यन्तं

सम्पादनं कृतम्। संस्कृतरत्नाकरे एकतः प्रौढपाण्डित्यं अपरतः नवनवाः स्तम्भास्तत्र निवेशिताः भट्टमहाभागेन, येषु प्रहेलिकाः, शब्दनिर्वचनं, विनोदकणिकाः वृत्तवाटिकाश्च विशेषतः उल्लेखनीयास्सन्ति। तेन स्वयमेव सम्पादनकर्मणः औदात्यं निरूपितम्।

'सम्पादको योगी भवेत्, स तथ्यान् प्रकाशयेत्, अर्थं विशदयेत्, सन्देहजातं च ग्रन्थानामपाकुर्यादिति सम्पादकानां धर्मः।'

भारतीपत्रिकायाः सम्पादनमपि तैः समारब्धम्। न केवलं पत्रिकाणां सम्पादनं कृतं तेन परं संस्कृतग्रन्थानां प्रणयने, भूमिकालेखने, टीकानां प्रणयने, पादटिप्पणीलेखनं, सम्पादनं च तेषां लोकविश्रुतिं वर्धयामासुः।

संस्कृतगद्येऽप्यस्य लेखनं विपुलमस्ति। शताधिकाः संस्कृतलघुकथाः, दशाधिका उपन्यासाः, बहवो ललितनिबन्धाः, यात्रावृत्तान्ताः, व्यङ्ग्यलेखाः अन्यासु च विधासु लिखिताः गणनातीताः।

विंशतिशतकस्य प्रारम्भकालादेव संस्कृतसाहित्ये निबन्धविधा प्रसृतिं प्राप्तवती। भट्टमहाभागानां शताधिका निबन्धाः संस्कृतरत्नाकरादिपत्रेषु प्रकाशिताः आसन्। ललितनिबन्धेषु 'किन्तोः कुटिलता' नाम्नि निबन्धे जीवनदर्शनस्य निरूपणं वस्तुतस्तु सर्वजनशिक्षायै जातम् -

'बहून् वारान् दृष्टवानस्मि यत्कार्यं सर्वथा सज्जं सम्पद्यते, सर्वप्रकारैः सिद्धिर्हस्तगता भवति, यथैव सफलताया मूर्तिः सम्मुखमागच्छन्ती विलोक्यते तथैव क्रूरोऽयं किन्तुर्मध्ये प्रविश्य सर्वं कार्यं विनाशयति।'[8]

निबन्धेऽस्मिन् जीवनस्य यथार्थं निरूपयन् किन्तोः प्रहाराः प्रदर्शिताः मञ्जुनाथकविना। सर्वत्र पृथक्-पृथक् भाषिकविच्छित्त्या चमत्कारमातनोति कविः -

(i) कदाचित् कदाचित्त्वयं क्रूरः किन्तुः मुखस्य कवलमप्याच्छिनत्ति।

(ii) अयं 'किन्तु' रङ्गेऽपि भङ्गसम्पादकमेकव्यर्थं शस्त्रम्।

(iii) परमयं क्रूरः 'किन्तु' सिंहस्य रूपं धृत्वा प्रतिसमयं मां मिलितुमिवाग्रेसरोऽभवत्।

(iv) मयाऽनुभूतमस्ति यदयं 'कुटिलः किन्तुः' नानादेशेषु नानारूपाणि सन्धार्य गुप्तं विचरति।

(v) अधुना विकटतम 'बटजटासु' निरुद्धा वयं गृहं प्रति परावर्तनमन्तरा किं वाऽन्यत्कर्तुं शक्नुयाम?

(vi) एवं प्रकारैरयं 'किन्तुः' भिन्नभिन्नदेशेषु भिन्नभिन्नरूपाणि निर्माय स्वस्य प्रकटपरिचयं प्रददत् परिलोक्यतेऽस्माभिः।

(vii) किन्तु कराघातात् कदाचित् रक्षितोऽप्यभूवम्, परमस्मिन् वारे एतस्य 'मगरस्य' मुखात् रक्षा सुतरां कठिनेति निश्चितं मया।[9]

किन्तुविषये नैकाः कथानकाः निबद्धाः तेन। वस्तुतस्तु जीवनस्य अर्थान्तरन्यासोऽयं 'किन्तु' रूपेण विशदीकृतं भट्टमहोदयेन।

'मकार-महामेलकम्' अस्य कवेः अपरः चमत्कारः। निबन्धेऽस्मिन् प्रत्येकपदः मकारेण आरभ्यते। ईदृशः प्रयोगः संस्कृत-भाषायामेव सम्भावनीयः। भाषिकचमत्कारेण कौतुकं रचयति कविः।

माधव-मुनीन्द्र-मन्मथादयो मकारमग्र्यमादायैव मानवानामभ्यर्हणाम् अर्हन्ति। महेश्वर-महेन्द्र- महासेन-महाशयानामेव मा मन्यध्वम्, महत्त्वमात्रमधीनम् एतस्या मौलिकमहत्त्वमिदमालोचयन्तु मनाक्, मङ्गलमिव मरणमपि मुष्टिगतम् एतस्य मकारस्य।

एवं विविधरूपिणी महत्ता मकारस्य प्रदर्शिता निबन्धेऽस्मिन्। एतत्तु भट्टकवेः काऽपि अनिर्वचनीया प्रतिभा दृष्टाऽत्र।

'गन्धर्वसेनस्य स्वर्गयात्रा' इति शीर्षकेण लेखमेकं लिखित्वा संस्कृतस्य मृतभाषात्वप्रवादस्य निःसारतामेते स्फुटीचक्रुः। नैकाः शोधात्मका निबन्धाश्च रचिताऽनेन। 'हंसवाहना सरस्वती मयूरवाहना कथं जाता' निबन्धेऽस्मिन् या शोधात्मिका प्रवृत्तिः प्रदर्शिता प्रयोगः शोधस्यैतत्। हीरकः मृत्यो! त्वमागतोऽसि

निबन्धौ जीवनदर्शनस्य व्याख्यातारौ। ललितशैल्या दर्शनपर्यवासियत्वं प्रापितं कविना। 'गद्यं कवीनां निकषं वदन्ति' सुप्रथिता भणितिरियं भट्टमथुरानाथम् अधिकृत्य सुपूर्णा सुसंगता भवति।

सुष्ठूक्तं 'पुरोवाक्' प्रसङ्गे आचार्यराधावल्लभत्रिपाठिना - 'नवनवविधानां चैदम्प्राथम्येन संस्कृतसाहित्ये प्रचारः इति एतेषामेव स्पृहणीयं कार्मण्यमभवत्। एते तर्केषु कर्कशधियो वयमेव नान्ये काव्येषु कोमलधियो वयमेव नान्य इति प्राचीनानां वचः क्वचित् प्रमाणीकुर्वन्ति।'[10]

देवर्षिभट्टमथुरानाथशास्त्रिपादानां सन्दर्भे तेषामवदानं रेखाङ्कितं तदीयपुत्रेण स्वनामधन्य सर्जकेण देवर्षिकलानाथशास्त्रिणा सम्पादकीयनिवदने -

'एवंविधा एव साहित्यसर्जका अभूवन् मम पितृचरणाः कविशिरोमणिभट्ट – श्रीमथुरानाथशास्त्रिपादाः यै संस्कृतकाव्यसर्जनायां नूतनच्छन्दसां नूतनशैलीनां नूतनकथ्यानां चावतारणा कृताऽभूत्, ग़ज़लगीतिरचनायाः प्रवर्तनं कृतमभूत्, ललितनिबन्धा जनिता अभूवन् कथासर्जनस्य नैकाः विधाः प्रावर्त्यन्त, विनोदोक्तीनां प्रकाशनं प्रारब्धमभूत्, ग्रन्थसमीक्षणं प्रवर्तितमभूत्'[11]।

भट्टमहाभागानां कृतित्वमतितरां विस्तृतं वर्तते। आश्चर्यं जनयति तेषां कवित्वकौशलम्। प्राचीनपरम्परापाटवं अत्याधुनिकानपि विषयांश्च निरूपणं द्वयमेकत्र सुगुम्फितं कविवरेणानेन। केनचिदेकेन साहित्यकारेण एतावतीषु विधासु समं दक्षतया रचनापाटवं प्रतिभाप्रागल्भ्यं च न प्रकटीकृतं अस्मात् पूर्वं प्रतीयतैतत्। अस्य महाकवेः साहित्यं सम्भावनानां नूतनद्वाराणि अनावृत्तानि मन्येऽहम्।

## सहायकग्रन्थपञ्जी

*जयपुर की संस्कृत साहित्य को देन* - डाँ प्रभाकर शास्त्री, हंसा प्रकाशन, जयपुर, 2008।

*संस्कृत वाङ्मय का बृहद् इतिहास* (सप्तम खण्ड) - सम्पादक डाँ जगन्नाथ पाठक, उत्तरप्रदेश संस्कृत संस्थान, लखनऊ, 2008।

*मञ्जुनाथग्रन्थावलिः* - सम्पादकाः राधावल्लभत्रिपाठी, देवर्षिकलानाथशास्त्री रमाकाण्डपाण्डेयः, राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली, 2010।

*राजस्थान के संस्कृत कृतिकार* - शङ्करलाल शास्त्री, राष्ट्रिय संस्कृतसाहित्य केन्द्र, जयपुर, 2005।

*कविशरोमणिभट्टश्रीमथुरानाथशास्त्रिणः कृतित्वसमीक्षणम्* - सम्पादकः प्रो. प्रभाकरशास्त्री, राजस्थानसंस्कृत-अकादमी, जयपुरम्।

## तथ्यसूत्राणि

[1] *जयपुरवैभवम्*, पृ. 30-31

[2] तत्रैव, पृ. 20

[3] *षड्ऋतुवीथी*, 37

[4] *कुण्डलियाचत्वरः*, 48

[5] *उर्दूभाषाचत्वरः*, 18

[6] *साहित्यवैभवम्*, पृ. 278

[7] *संस्कृतचन्द्रिका*, सम्पादकधर्माः 1905-2

[8] *मञ्जुनाथग्रन्थावलिः*, द्वितीयखण्डे, पृ. 153

[9] तत्रैव, निबन्धा ललितनिबन्धाश्च, पृ. 153-164

[10] तत्रैव, प्रथमभागे, पुरोवाचि

[11] तत्रैव, सम्पादकीयनिवदने, XIII

# आधुनिकसंस्कृतकवयित्री पण्डिता क्षमाराव:

**मिठु-विश्वासः**

प्रसन्ना सरसा वाणी क्षमादेव्या गुणान्विता।
सूक्तिभिर्विमण्डिता नूनमलङ्कारैर्विभूषिता[1]॥

## भूमिका

यं प्राचीनसाहित्यमाधारीकृत्य भारतीयसाहित्यं सम्पुष्टमभूत्, तेषु संस्कृतसाहित्यमेव भावगाम्भीर्येण महत्त्वेन च सहृदयानाञ्चित्तं विमोहयति। यद्यपि साहित्यसृष्टौ पुरुषकविभिः कृतग्रन्थेभ्यः कवयित्रीणां रचितग्रन्थाः स्वल्प-संख्यकाः समुपलभ्यन्ते, तथापि तासां स्त्रीकवीनां कृतिभिः संस्कृतसाहित्यस्य क्षेत्रमधिकतया ऋद्धमभूत्। वैदिकवाङ्मयं अपाला-घोषा-विश्ववारा-गार्गी-मैत्रेयी-लोपामुद्राप्रभृतयः ऋषिकाः स्वस्वदृष्टैर्मन्त्रैर्व्यभूषयन्। ततः लौकिकसंस्कृत-साहित्ये विज्जका-मारुला-मोरिका-शीलाभट्टारिकादीनां प्राचीनमध्ययुगीयानां कवयित्रीणां स्फुटकविताः आप्यन्ते, याभिः संस्कृतसाहित्यस्य श्रीवृद्धिरभवत्। पूर्वापेक्षया विंशशताब्द्यामेवाधिकतया संस्कृतकवयित्र्यः स्वकारयितृप्रतिभा-बलादेव काव्यनाटकादीनि कुवन्ति स्म। आधुनिकसंस्कृतस्त्रीकविषु पण्डिता क्षमारावोऽद्वितीयेति निश्चप्रचम्। तया रचितानि मौलिककाव्यानि संस्कृतसाहित्ये विशेषरूपेण समालोचकैः समादृतानि।

## व्यक्तिजीवनपरिचयः -

क्षमारावमहोदयायाः जनिः १८९० ख्रीष्टाब्दस्य जुलाइमासस्य अष्टम-दिनाङ्के महाराष्ट्रस्य पुणानगर्य्यां बभूव। तस्याः पिता शङ्करपाण्डुरङ्गः, माता उषादेवी। शङ्करपाण्डुरङ्गः खल्वासीत् संस्कृतानुरागी। पितृसंस्कारवशादेव क्षमायां सुतरामेव संस्कृतप्रीतिरजनीत्यस्मिन् विषये संशयो नास्ति। विशेषप्रतिभाया अधिकारिणी क्षमा विद्यार्जनेन भाषाभ्यासेन च सर्वोत्तमासीत्। बाल्यावस्थायां तयाधिकः समयः राजकोट्स्थाने व्ययितः। बाल्यावस्थायां

पितुर्मृत्योः परं षडभिः भ्रातृ-भगिनीभिर्वेष्टितस्य संसारजीवनस्य भारो तस्यां तथा च मातरि उषादेव्यां न्यस्तो बभूव। विद्याभ्यासावसरे तस्याः परिवारस्य आर्थिकावस्था स्वच्छला नासीत्। तस्मादेव विविधप्रतिकूलताम् अतिक्रम्य सा विद्याचर्चायामात्मनिमग्ना सती अग्रेसरति स्म।

क्षमा आसीन्मेधाविनी तथा चाध्ययनाय तस्या इच्छा जागरुकावर्तत। विद्यालयं न गत्वा केवलं भ्रातृद्वयस्य पाठं श्रुत्वा क्षमा कण्ठस्थीकुर्वन्ती आसीत्। परवर्तिनि काले माध्यमिकपरीक्षायां संस्कृताङ्गलभाषयोः सा प्रथमस्थानम् अर्जितवती। तदनन्तरं बोम्बाईस्थिते (सम्प्रति मुम्बाइ) विल्सन्-महाविद्यालये इण्टारमिडियेट्-कलाविभागे लब्धप्रवेशा क्षमा महामहोपाध्यायस्य वामनकाणे-वर्यस्य सकाशात् वर्षद्वयं व्याप्य पाठं गृहीतवती। स्नातकस्तरीयपाठोऽपि न पूर्णतामितः केवलं षोडशवयसि ब्राह्मणेन राघवेन्द्रेण समं विवाहकारणात्। आसीत् राघवेन्द्रोऽपि उच्चशिक्षितः लण्डनस्थितात् प्रतिष्ठानादेव एम्. डि. इति तथा च डी. एस्. सी. इति उपाधिभ्यां भूषितः। आसीत् स प्रख्यातश्चिकित्सकः तथा दयालुः। फलतः, विवाहात् परं क्षमा प्रभूतैश्वर्यमवाप। किन्तु विवाहात् परमपि सा पतिगृहं स्थित्वैव मराठी-संस्कृत-आङ्गल-जर्मन्-फ्रेञ्च-गुजरातीप्रभृतिभाषा-शिक्षां कुर्वन्ती परमप्रावीण्यम् अर्जितवती। दशवर्षेभ्यः सा संस्कृताङ्गल-भाषाभ्यां लिखितुमलम्। परमुल्लेखार्हं यन्न केवलं शिक्षायां, टेनिस्क्रीडां प्रत्यासीत् तस्या महानाग्रहः। पियानो-वादने अश्वारोहणे चापि सा नैपुण्यम् अर्जयामास।

## स्वाधीनतानन्दोलने क्षमाया अंशग्रहणम्

क्षमायाः साहित्यिकजीवनस्य व्याप्तिरासीत् 1920-ईशवीयाब्दात् 1930 तमवर्षं यावत्। अस्मिन् कालखण्डे तया आंग्रेजीरचनाः विविधपत्रिकासु प्रकाशिताः। तदा समस्ते देशे पूर्णस्वराजस्यान्दोलनं प्राचलत्। महात्मा गान्धी दक्षिणाफ्रीकातः प्रत्यागतः। क्षमापि कांग्रेसदलस्य कर्मधारया समम् आत्मानं संयोजयितुमियेष। सा गुजराटप्रदेशस्य सावरमतीनामके आश्रमे गान्धिना सह मिलित्वा देशसेवायै आत्मानम् उत्सर्गीकर्तुं स्वेच्छां प्रकटितवती। सत्याग्रह-

गीतायामपि सा स्वयमेव कथयन्ती आसीद्यत् सा कंग्रेसदलपक्षतः वोर्सदग्रामे समनुष्ठिते शिविरे आहतानां देशसेवकानां स्थितिदर्शनार्थं गता। तत्र गत्वा स्वयंसेविकाभिः तथा च ग्रामस्त्रीभिश्च समं वार्तालापः कृतो वर्तते। तस्याः यात्रानुभवः ग्रामज्योतिस्तथा च कथापञ्चकमिति कथासंग्रहे प्रतिबिम्बितः अस्ति। विविधैः विद्वद्भिः सह सम्पर्केण तस्याः काव्ययात्रा सुतरामेव स्फुरिता जाता। भि. राघवन्, पी. भि. काणे, क्षितीशचन्द्रच्याटार्जी, नागप्पाशास्त्री चेत्यादिभिः समं तस्याः सम्पर्कः आसीत्। तस्याः जीवनयात्रायां परम्परया सह आधुनिकतायाः संमिश्रणं दृश्यते।

भारतीयसंस्कारस्तस्यामनुस्यूतोऽवर्तत। धार्मिककर्मकाण्डेषु यथासीत् आस्था तथैव राष्ट्रं प्रति तस्या अनुरागः सर्वदासीज्जागरूकः। आसीत् सा कृष्णानुरागिणी। श्रीमद्भगवद्गीता खलु तस्याः प्रियो धर्मग्रन्थः। सा नित्यं गीतपाठं कुर्वती आसीत्। गीतायाः श्रीकृष्णसंवादस्तदन्तोऽनुगुञ्जितः सर्वदा –

तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः।
तस्माद् युद्धाय युज्यस्व ..................॥

श्रीमद्भगवद्गीतायाः प्रभावः कियान् तस्या जीवने, स तु प्रमाणीभवति क्षमादेव्याः सत्याग्रह-उत्तरसत्याग्रहगीतादिरचनासु। प्रथमवारं सत्याग्रहान्दोलने भागं गृहीत्वा क्षमादेवी राष्ट्रियान्दोलनेन प्रभाविता सती सत्याग्रहगीतेति महाकाव्यं रचितवती। अत्र गान्धिनः आत्मबलिदानपर्यन्तं समस्तं जीवनमपि चित्रितमास्ते। संस्कृते निम्नवर्गीयानां मानवानां जीवनमुपजीव्य मार्मिककथाः प्रस्तौति सा निरवद्यभाषया। जीवनचरितस्य तथा यात्रावृत्तस्य नवाविष्कारमपि साधितवती क्षमादेवी।

**क्षमारावस्य मौलिककाव्यविश्वम् -**

क्षमाराव-महोदयया विरचिता ग्रन्थास्तावत् –

१) सत्याग्रहगीता (१९३२ ख्रीः, महाकाव्यम्)
२) कथापञ्चकम् (१९३३ ख्रीः, कथासाहित्यम्)

३) विचित्रपरिषद्यात्रा (१९३९ ख्रीः, यात्रावृत्तम्)
४) शङ्करजीवनाख्यानम् (१९३९ ख्रीः, जीवनचरितम्)
५) मीरालहरी (१९४४ ख्रीः, खण्डकाव्यम्)
६) उत्तरसत्याग्रहगीता (१९४८ ख्रीः, महाकाव्यम्)
७) श्रीतुकारामचरितम् (१९५० ख्रीः, महाकाव्यम्)
८) श्रीरामदासचरितम् (१९५३ ख्रीः, महाकाव्यम्)
९). स्वराज्यविजयः (१९६२ ख्रीः)
१०). कथामुक्तावली (१९५५ ख्रीः, कथासाहित्यम्)
११) ग्रामज्योतिः (१९५५ ख्रीः)
१२) श्रीज्ञानेश्वरचरितम् (१९५३ ख्रीः)

एतत्साहित्यानि विहाय अनया नैके प्रबन्धाः प्रकाशिताः विविध-पत्रिकासु। 'महाकविः कालिदासः' इति प्रबन्धस्तस्याः मधुरवाणीपत्रिकायां मुद्रापितोऽभूत्। 'शब्दशासनानुरोधेन संस्कृतस्य नवीकरणयोजना' इति शीर्षकं प्रबन्धं सा 1943-44 मिते वर्षद्वयमध्ये प्राच्यविद्यासम्मेलनस्य कृते लिलेख। 'विक्रमादित्यकालिदासयोः सम्बन्धः' तथा 'महाकविकालिदासस्य कृतयः' इति नाम निबन्धद्वितयं साप्ताहिकसंस्कृते प्रकाशितम् क्षमया।

## ग्रन्थानां विषयवस्तु

### (१) सत्याग्रहगीता

क्षमारावमहोदया गान्धिनः अहिंसानीत्या अनुप्राणिता सती स्वनिर्मितेन साहित्येन राष्ट्रभक्तिं प्रतिपादयामास। महात्मगान्धिनः अनुप्रेरणया तया सत्याग्रह-गीता इत्याख्यात्मकं महाकाव्यं व्यरचि। अनुष्टुप्छन्दसि रचितमिदं महाकाव्यं श्रीमद्भगवद्गीतावदष्टादशसर्गैर्विभक्तम्। अस्मिन् महाकाव्ये ६५९ संख्यात्मकैः श्लोकैः गान्धिनः सत्याग्रहान्दोलनस्य वर्णना कृतास्ति। ऐतिहासिकराजनैतिक-सन्दर्भमाश्रित्यैव इदमुच्चकोटिकं महाकाव्यम्।

उक्तेऽस्मिन् ग्रन्थे श्रीमद्भगवद्गीतावदस्माभिः निष्कामकर्मयोगः पालनीयः इति विषयः पर्यालोचितः। गीता-सत्याग्रहगीतयोः केषाञ्चन श्लोकानां सादृश्यं विद्यते नाम। तद्यथा धर्मस्य हाने सति तस्योन्नत्यर्थं दुष्टदमनार्थं च गीतायां भगवता प्रतिज्ञातम् –

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥"[2]

तद्वदेव दुष्टदमनार्थं साधूनां परित्राणाय च प्रतिज्ञाबद्धः महात्मा गान्धी स्वयं विष्णुरूपेण भूवमवततार -

"अस्मद्धर्मनाशाय प्रशान्तेः स्थापनाय ।
गान्धिरूपेण भगवानवतीर्णः विष्णुस्स्वयम्॥"[3]

एवञ्च –

"वीतरागो जितक्रोधः सत्याहिंसा व्रतो मुनि।
स्थितधीर्नित्यसत्त्वस्थो महात्मा सोऽभिधीयते॥"[4]

एतादृशैः श्लोकैः महात्मगान्धिनः महात्मत्वसत्यत्वाहिंसादिव्रतानि वर्णितानि सन्ति।

सत्याग्रहगीतायाः प्रथमसंस्करणं १९३२ ख्रीष्टाब्दे पैरिस् इत्यत्र प्रचरद्रूपताम् इतम्। अस्मिन् महाकाव्ये क्षमारावः लालाराय-मोतिलाल्नेहेरु-महोदययोश्चरित्रं संक्षेपेणालोचितम्। सत्याग्रहगीताया: प्रारम्भे क्षमादेवी कविकुलगुरुकालिदास इव कथयति

'गम्भीरो विषयः क्वायं श्रेष्ठः सत्याग्रहात्मकः।
कृत्स्ने जगति विख्यातः क्व मे लघुतमा मतिः॥
शब्दगौरवहीनाऽहं युद्धस्यैतस्य गौरवम्।
व्याख्यातुमसमर्थास्मि गुणैर्दिव्यैर्विभूषितम्॥

तथापि देशभक्त्याऽहं जातास्मि विवशीकृता।
अत एवास्मि तद्गातुमुद्यतां मन्दधीरपि॥
दुहिता शङ्करस्याहं पण्डितस्य क्षमाभिधा।
अक्षमा कवेमार्गे श्रोतव्या वस्तुगौरवात्'[5]॥

सत्याग्रहगीतायाः प्रारम्भिकेषु पञ्चमसर्गेषु देशे संघटितानाम् उच्चावच्चप्रवाहाञ्चानाञ्चित्रं समस्ति। साइमन-कमिशनस्य, अपि च देशे व्यापकविरोधात्मिकायाः प्रतिक्रियायाश्चित्रणमपि तया ग्रन्थेऽस्मिन् साधु कृतम्। क्षमारावः तस्मिन् समये मुम्बाई-नगर्याम् आसीदिति कृत्वा मुम्बई-नगरस्य चित्रमपि सा सप्रसङ्गम् कृतवती -

'सैमनीयस्य सङ्घस्य जिज्ञासोर्भारतस्थितम्।
वहिष्कारः कृतो लौकैर्निश्चितं नायकैर्यथा॥
सैमनप्रमुखे सङ्घे मुम्बापुरमुपागते।
श्मशानमिव साक्षात् तत् कृष्णध्वजमयं वभौ॥
बद्धवातायनद्वारां निवृत्तनिखिलोद्यमाम।
पुरीं शून्यामपश्यंस्ते दग्धां पाम्पेपुरीमिव'[6]॥

नवमे सर्गे राजप्रतिनिधि-इर्विनस्य सन्देशोऽपि च कांग्रेसप्रमुख्यानां प्रतिक्रिया अत्रोपवर्णितौ। दशमे सर्गे गान्धिद्वारा राजप्रतिनिधिं (Viceroy) प्रति लिखितपत्रस्य प्रभावशाली अनुवादः कृतः। सत्याग्रहदर्शनस्य सारः क्षमाराववर्यया अत्र स्वसुललितैः शब्दैः प्रस्तुतः -

'दुर्बला ननु गण्यन्ते शान्तिमार्गावलम्बिनः।
परं सत्याग्रहाद् विद्धि नास्ति तीव्रतरं बलम्'[7]॥

एकादशसर्गे दाण्डीयात्रायां गान्धिप्रस्थानस्य तेजोभास्वरं चित्रं सन्निविष्टं वर्तते। गान्धिमहात्मनः लवणसत्याग्रहस्य सफलतया सह सा कारागारे वन्दीदशां प्राप्नोत्। द्वादशे सर्गे सत्याग्रहिणामुपरि अकथ्यात्याचारस्य प्रत्यक्षं विवरणमत्र प्रदत्तम् -

'तीव्रसंवेगतो यत्नः क्षारनिर्माणकर्मणि।
मुम्बापुर्यां च सोत्साहैः सत्याग्रहिभिराश्रितः।।
सर्वात्मना निमग्नोऽभूत्कार्ये तस्मिन्नहर्निशम्।।
एकचित्ततो जनः कृत्स्नो निरस्तविषयान्तरः।।(1-2)
प्रत्यहं शतशो लोका गृहीताः पुररक्षकैः।
तथापि नरनारीणां श्रेणयः सर्वतोऽचलन्।।
अनुवृत्तं परं कष्टं कारासु बहुभिर्जनैः।
अदृष्टपूर्वसङ्क्लेशैर्विभवोत्तरजीविभिः।।(5-6)
मस्तके ताडिताः केचिदुरसि प्रहृताः परे।
केचिद्भग्नास्थिकाश्चान्ये निष्कृष्टोपस्थमागकाः।।
हृतवस्त्राः परे केचिद्गुदे निष्ठुरताडिताः।
धरण्यां मूर्च्छिताः पेतुः प्रशान्ता देशसेवकाः।।(10-11)
अहो सत्याग्रहस्यायं प्रभावः परमोर्जितः।
यः पाशववलं शत्रोर्ध्रुवं परिभविष्यति।।
स्वराज्यैकाग्रचित्तानां मुम्बापुरनिवासिनाम्।
प्रवृत्तिः शासनं भङ्क्तुमतिभूमिं गताऽञ्जसा।।
निषिद्धेष्वपि सर्वत्र सभासम्मेलनादिषु।
सर्वतः सम्मिलन्ते स्म राष्ट्रीयाः कार्यसाधकाः'।।(23-25)

एवं लवणसत्याग्रहस्य प्रभावः समग्रदेशे कथमासीत् तथा तत्कारणम्, घटनायाः चित्रणञ्च द्वादशे सर्गे समुल्लिखिते। क्षमादेवी वम्बाइनगर्यां स्थित्वा काव्यमिदं रचितवतीति तत्र संघटितवृत्तस्य आमूलचूड़ं वर्णनं प्रत्यक्षेणैव सा कृतवती। त्रयोदशे सर्गे निःशस्त्रं भारतीयान् उपरि गोलिकाचालनार्थं सैनिकानां विरोधो वर्णितः क्षमया। पेशावरे तेषां सहानुभूतिनिमित्तं जनानां शोभायात्रायां गोलिकावर्षणं सा काव्यरूपवाङ्माध्यमेन विनिन्दन्ती आसीत्। चतुर्दशे सर्गे शोलापुरे जनान्दोलनम्, अंग्रेजशासकैः न्यायस्य पताकां स्थापयित्वा निर्दोषनराणाम् उद्बन्धनं (फाँसी) करुणरसेन आर्द्रीकृत्य वर्णयति सा। पञ्चदशे अध्याये कवयित्री वम्बाइनगर्यां दण्डप्रहारघटनावर्णनेन सह देशसेवकेषु

वर्वरात्याचारस्य मर्मन्तुदचित्रणं चकार। षोडशे सर्गे वैदेशिकवस्त्रव्यापारावरोधेन स्वयंसेवकद्वारा मालवाहनस्य सविशदं वर्णनं विद्यतेऽत्र। सप्तदशे सर्गे स्वाधीनतासंग्रामे नारीणां पूर्वसाहसस्य वर्णनमस्ति। विवरणमिदमात्मकथापरकम्। क्षमादेवीं नेतारः वोर्सद-नामके ग्रामे दशसेविका उपरि अत्याचारस्य तासां वर्तमानस्थितेश्च दर्शनाय प्रेषितवन्तः इति पूर्वमेवोल्लिखितम्। अष्टादशे सर्गे पूनानगर्यां गान्धिनः आगमनं तथा भारतीयानाम् अपारमुत्साहम्, गान्धिदर्शनञ्च सा अपृथग्-यत्ननिर्वर्त्येन च वर्णयति। गान्धिनः अलौकिकविग्रहं क्षमादेवी मनसि निधाय पूर्णरूपेण प्रस्तुतवती महाकाव्यमिदम्। क्षमारावः काव्यस्य समाप्तिमेवमेव कृतवती -

'सत्यं विजयतां लोके मुक्तं भवतु भारतम्।<br>
नन्दन्तु सुखिनः सर्वे देशजाश्च विदेशजाः'[8]॥

श्रीमद्भगवद्गीतावचनं स्मारयन्ती क्षमादेवी लिखति – 'स्वधर्मः परमो धर्मः न त्याज्योऽयं विपद्यपि'[9]। अपि च, दलितानां दयनीयदशां विलोक्य गांध्युद्गारान् प्रकटयति –

शूद्रो वा ब्राह्मणो वापि क्षत्रियो वा कृषीवलः।<br>
देवदृष्ट्या समाः सर्वे विकृतिस्तु नरोद्भवा[10] ॥

सत्याग्रहगीतायाः एकस्मिन् पक्षे क्षमा गीताशैल्यां गान्धिसंवादस्य सन्देशं व्याख्याति, अन्यस्मिन् पक्षे कालिदासशैलीमप्यनुकरोति। कल्हणस्य राजतरङ्गिणीति ऐतिहासिको ग्रन्थ इव "सत्याग्रतगीता" इत्यस्य कविः समसामयिककालस्य वृत्तं विवृणोति अनवद्यशैल्या।

## (२) उत्तरसत्याग्रहगीता

सत्याग्रहगीतावत् उत्तरसत्याग्रहगीता अनुष्टुप्छन्दसा विरचिता क्षमादेव्या। अस्मिन् ग्रन्थे ४७मिताध्यायाः, १९८९संख्यकाः श्लोकाः राजन्ते। उत्तरसत्याग्रहगीता १९३१ईशवीयाब्दात् १९४४ख्रीष्टाब्दं यावत् गान्धिनः जीवन-भारतीयराष्ट्रियजीवन-स्वाधीनतासंग्रामादिविषयैः प्रपूरिता।

अत्र प्रथमाध्यायादष्टाविंशतितमाध्यायं यावत् दाण्डीयात्राया अनन्तरं देशे विकसितनवचेतनाया निरूपणञ्चकार कवयित्री। ऊनत्रिंशत्तमेऽध्याये मन्दिरे अस्पृश्यप्रवेशः, त्रिंशत्तमेऽध्याये चम्पारणसत्याग्रहः, एकत्रिंशत्तमेऽध्याये गान्धिनो वृन्दावनयात्रा, द्वात्रिंशत्तमेऽध्याये राष्ट्रियध्वजस्वरूपं, त्रयस्त्रिंशत्तमेऽध्याये विश्वयुद्धघोषणं, चतुस्त्रिंशत्तमेऽध्याये रियासत-विद्रोहः, पञ्चत्रिंशत्तमेऽध्याये पौलेण्ड-आवेदनं, षड्त्रिंशत्तमेऽध्याये कांग्रेसघोषणापत्रं, सप्तत्रिंशत्तमेऽध्याये ब्रिटिशनीतिः, अष्टत्रिंशत्तमेऽध्याये गान्धिनः शान्तिनिकेतनयात्रा, ऊनचत्वारिंशत्तमेऽध्याये विश्वयुद्धः, चतुर्विंशतितमेऽध्याये कांग्रेसस्य रामगढसम्मेलनं, एकचत्वारिंशत्तमेऽध्याये महम्मदालि-जिन्नायाः महम्मदीयानाम् आह्वानं, द्विचत्वारिंशत्तमेऽध्याये क्रिप्स-भारतयात्रा, त्रिचत्वारिंशत्तमेऽध्याये भारतत्यागान्दोलनं, चतुश्चत्वारिंशत्तमेऽध्याये बङ्गदुर्भिक्षः, पञ्चचत्वारिंशत्तमे अध्याये गान्धिनः कांग्रेस-समर्थनं, षड्चत्वारिंशत्तमेऽध्याये गान्धि-जिन्नावार्ता तथा सप्तचत्वारिंशत्तमेऽध्याये गान्धिनः सेवाग्रामप्रत्यावर्तनं सरसतया निरूपितानि कवयित्र्या क्षमया। विरोधालंकारेण गान्धिनो वर्णनमनवद्यं निश्चप्रचमेव -

क्रशीयानपि तेजस्वी दीनोऽपि प्रभावान्वितः।
एकदन्तोऽप्यवक्रास्यः श्रुतौ साक्षाद्विनायकः।।

भारतीयराजनैतिक-सामाजिकार्थिकविषयैः साकम् महात्मगान्धिना समम् अन्येषां महापुरुषाणां साक्षात्कारः, गान्धिनः भाषण-लिखितपत्रजीवन-वृत्तानामपि आमूलं वर्णनमस्मिन् महाकाव्ये विद्यते। काश्चन अत्यधिक-शोकात्मकघटनाः अपि वर्णिताः सन्ति उक्तेऽस्मिन् ग्रन्थे यदध्ययनेन वयं समुत्कण्टकिताः भवामः। यथा – बिहारप्रदेशस्य भूमिकम्पनम्, बङ्गप्रदेशस्य दुर्भिक्षश्चेति। तस्मिन् समये बिहारस्य भूमिकम्पनस्य मर्मविदाराकात्मकं वर्णनं तया विदुष्या क्षमारावमहोदयया रोचिष्णुतया प्रपञ्चितम्। तदुक्तं तया -

"तडागानां सहस्राणि दशक्षोत्तरा गृहाः।
क्षेत्राणां दशलक्षाश्च विकृतध्वस्तस्तां ययुः।।"[11]

भूमिकम्पनकारणादेव बहवः जलाशयाः गृहाणि च विनष्टानि। मानवानां दुःखसंमूढावस्था अनया चित्रिता। तस्मिन् काले विविधाभिः लोकहितसंस्थाभिः ग्राहकशुक्लमादाय लक्षाधिकरूप्यकाणि संगृहीतानि विहारवास्तव्यानां त्राणनिमित्तम्। बहवो नेतारः कार्यकर्तारश्च भारतस्य विविधेभ्यः प्रदेशेभ्यः तथा प्रान्तेभ्यः आगतानामार्तानां प्रपीडितानां कृते साहाय्यं कृतवन्तः। बिहारनिवासिनः कार्यकर्तारो भूमिकम्पन-प्लवनाभ्यामुत्पन्नायाः कठिन-परिस्थितितः सर्वान् बिहारप्रदेशवास्तव्यान् निवर्तितुं सक्षमाः बभूवुः। महात्मगान्धी तदानीम् मासाधिककालं यावत् तेषां कृते पथप्रदर्शकत्वेन महद्गुरुत्ववहां भूमिकां पालितवान्। गान्धी विविधप्रतिनिधिभिः सह मिलित्वा मानवसेवायै नाम निपीडीतानां कष्टनिवारणाय कार्यसञ्चालनार्थं केन्द्रीयत्राणसमितेः (सेन्ट्राल् रिलीफ कमिटि) निर्माणञ्चक्रे इति वृत्तम् क्षमया आलिखितम्।

अस्मिन् महाकाव्ये अपरामेकाम् उद्ध्वंसनघटनामुल्लिखितवती पण्डिता क्षमारावमहोदया। यदा ब्रह्मदेशे महायुद्धः प्रवर्तनमानः आसीत् तदा बङ्गदेशे भयङ्करो दुर्भिक्षः प्रादुर्भूतः। शासकाः स्वव्यवहारार्थं नावम् अपहृतवन्तः। ताः नौकाः साधारणानां मनुष्याणां जीविकानिर्वाहार्थम् उपकारका आसन्। स्वाभाविकगत्या साधारणानां महदसौविध्यं संसाधितमभूत्। तथाहि क्षमया वर्णितम् -

"वाणिज्यप्रसरे रुद्धे नौकानामपहारतः।
प्रजानां जीवनक्लेशः प्रतिक्षणमवर्धत॥"[12]

क्षुत्पिपासापरिश्रान्ताः निपीडिताः मनुष्याः ज्ञानरहिताः सन्तः इतस्ततः भ्रमन्ति। बहवः जनाः क्षुत्तृष्णान्विताः सन्तः मृताः। महात्मगान्धिमहोदयः तेषां भीतानां मरणापन्नानां मनुष्याणां करुणविलापान् श्रुत्वा तेभ्यः सहायतां कर्तुं प्रयत्नञ्चकार। अस्याः घटनायाः वर्णनावसरे पण्डिता क्षमारावः करुणरसम् आश्रयते।

### ३. ग्रामज्योतिः

क्षमारावमहोदयया विरचितः 'ग्रामज्योतिः' इत्येको राष्ट्रिय-भक्तिपरकस्तथा स्वाधीनतासंग्रामीयचेतनापरकश्च ग्रन्थः। अत्र आदर्श-त्याग-बलिदानादीनां वर्णनं समस्ति। काव्येऽस्मिन् भारतीयस्वाधीनतासंग्रामे गुजराट्ग्रामवासिनां त्याग-बलिदानसन्दर्भपरकाः तिस्रः घटनाः रोचिष्णुतया वर्तन्ते। तद्यथा i) रेवाया कथा, ii) कटुविपाककथा, iii) वीरभा चेति। एतस्य काव्यस्य श्लोकाः अनुष्टुप्छन्दसि विरचिताः सन्ति। अस्य सर्वाः कथा उज्ज्वलादर्शैः सुप्रतिष्ठितास्ति। वीरभायाः आदर्शवाक्यं खलु, यथा - "दुर्जनोऽपि सतां सङ्गादभवत्येव हि सज्जनः"[13]।

कथात्रयमेकत्रीकृत्य 'ग्रामज्योतिः' इति शीर्षकस्य नामकरणं यथोपयुक्तमस्तीति मन्ये, यतो हि गूढान्धकारात् प्रकाशाभिगमनवत् पराधीनता-मूलकात् तमसः प्रकाशरूपं स्वाधीनताभिगमनमेवात्र लेखिकया प्रस्फुटितम्। 'ज्योतिः' इति शब्दसंयोजनेन 'ग्रामज्योतिः' इति शीर्षकस्य नामकरणं तात्पर्यपूर्णम्, यतो हि एतावत्कालपर्यन्तं ग्रामवासिनः पराधीनतायाः बन्धनेन आबद्धाः इति कृत्वा ते तमसाच्छन्ना आसन्। किन्तु अधुना स्वाधीनतया पराधीनतारूपान्धकारस्य क्रमेण विनाशो जातः। एवंरूपेण ग्रामवासिषु स्वदेशप्रीतिरूपो राष्ट्रप्रीतिरूपो वेत्यालोकः समुद्भासितः।

एताः तिस्रः कथाः राष्ट्रियभावनया सह अङ्गाङ्गिरूपेण सम्बद्धाः। एताभिः कथाभिः अन्याय्यं प्रति न्यायसंघर्षं क्षमादेवी प्रदर्शयन्ती मनुष्याणां मनोबलवृद्ध्यर्थम् उत्साहितवती। तिसृषु कथासु रेवा-दारिका-वीरभाराणां चारित्रिकादर्शस्य ज्वलदुदाहरणं प्रतिबिम्बितमालोक्यते।

### ४). स्वराज्यविजयः

'स्वराज्यविजयः' राजनैतिकसन्दर्भे विरचितमेकं महाकाव्यम्। अस्मिन् ग्रन्थे महात्मगान्धिनः सम्पूर्णेन जीवनवृत्तान्तेन सह भारतीयमुक्त्यान्दोलनस्य इतिहासोऽप्यत्र वर्णितः। पञ्चचत्वारिंशदध्यायात्मकमिदं महाकाव्यं १९६२

ख्रीष्टाब्दे मुम्बइनगर्यां प्रकाशितमभूत्। सत्यैतिहासिकतथ्यान्याधारीकृत्यैव महाकाव्यमिदं व्यरचि। यदा अस्माकं मातृभूमिः आङ्गलजनानां दासत्वशृङ्खलापाशेनाबद्धा, तदानीन्तनीयाः काश्चन घटनाः तथा स्वाधीनतापरवर्तिनि कानिचिद्वृत्तान्यवलम्ब्यैव काव्यमिदं रचितम्। महात्मगान्धिनस्तथा जनसमाजस्य प्रचेष्टया कथं भारतवर्षस्य विजयो जातः, गान्धिमहोदयेन परिकल्पितं रामराज्यं ग्रन्थेऽस्मिन् निबद्धम्। ग्रन्थेऽस्मिन् जीवन-शिक्षा-धर्मेश्वरानुशासनादिविषया गूढतया चर्चिताः।

अस्मिन् महाकाव्ये गान्धि-जिन्नयोर्वार्तालापः, द्वितीयविश्वयुद्धे हिट्लारस्य मृत्युसंवादः, मित्रराष्ट्रस्य विजयः, ब्रिटेन् इत्यत्र नवनिर्वाचनम्, औद्योगिकविकाशस्य विजयश्चेत्यादयो विषयाः सम्यग्रूपेण समावेशिताः सन्ति। १९४७ ख्रीष्टाब्दे लर्ड्-माउण्ट-वेटन्-महोदयेन कृतं भारतविभाजनं, नाथुराम-गोड्से-महोदयेन महात्मगान्धिनो हननञ्चेत्यादयः प्रमुखाः घटनाः एतस्मिन् महाकाव्ये पण्डितया क्षमाराव-महोदयया स्वप्रतिभया चारुतयोपवर्णिताः।

अत्र गान्धिन उच्चविचार-दर्शन-भक्ति-व्यवहारादीनाम् उत्कृष्टविचाराणां निदर्शनं समुपलभ्यते। स्वराज्यप्राप्त्यर्थं महात्मगान्धिना कृतं विचारविवेचनादिकं विदुषी क्षमराव-महोदया अतिसुन्दरतया प्रस्तौति स्म

'स्वराज्यप्राप्तये नूनं देशस्यावश्यकं त्रयम्
पूर्वमस्पृश्यताव्याधेर्निर्मूलनमशेषतः॥
द्वितीयं सर्वजातीनामैकमत्येन वर्तनम्।
तृतीयमादिवासिभ्यः समभोगाधिकारिता'॥[14]

'सत्याग्रहगीता', 'उत्तरसत्याग्रहगीता', 'स्वराज्यविजयः' चेति त्रीणि महाकाव्यानि एकत्र सज्जीकृत्य 'सत्याग्रहकाव्यम्' इत्याख्यायते।

### ५). श्रीरामदासचरितम्

ऐतिहासिकतथ्यसमृद्धमिदं 'श्रीरामदासचरितम्' महाकाव्यं क्षमया व्यरचि। अत्र कवयित्री क्षमादेवी श्रीरामचन्द्रं प्रति रामदासस्य भक्तिप्रीती

महाकाव्यं न हि केवलं माधवसम्प्रदायस्य प्रतीकरूपम्, जयदेव-श्रीहर्षाभ्याम् अनुपालितस्य धाराद्वयस्य साहित्यिकं समन्वयात्मकमिति।

कालिदासोत्तरयुगे महाकाव्यानां विषयवस्तु साधारणतया महाभारतात्संगृहीतम् अभूत्। वीररसश्चासीत्तेषां काव्यानाम् अङ्गी। अस्य सम्भाव्यकारणमेतद्यन्महाकवयो जैनेभ्यो बौद्धेभ्यश्च भीतवन्तः। ते खलु कालिदासस्य शृङ्गारितत्त्वं सम्यक्तया समालोचितवन्तः। जयदेवस्य ख्यातिं दृष्ट्वा श्रीहर्षोऽपि "कुमारसम्भव"स्य शृङ्गारितत्वं स्वकमहाकाव्ये संपुस्फोट। महाभारताच्चानेन विषयो गृहीतः। यतिराजो जयदेवस्योच्चशृङ्गारितत्त्वं श्रीहर्षस्य च स्पष्टतया सुपरिमितशैलीमेकत्रीचकार काव्येऽस्मिन्। तस्मिन् यतिराजाचार्ये श्रीहर्षस्य महान् प्रभावो विलसतीति तस्य रचनावैशिष्ट्यादेव परिज्ञायतेऽनायासेनैव। श्रीहर्षवत् स प्रतिसर्गान्तम् आत्मपरिचयं ददौ। यथा तेन नवमसर्गान्ते कथितम् –

"आसीद्गौतमवंशदुग्धजलधेर्मुग्धेन्दुलीलायित-
श्रीनारायणसूरिरायतनयश्रीमोहनाचार्यजः।
विस्फुर्जज्जरडानरेशपरिषद्विद्वद्वरो भूसुरः
शूरः श्रीयतिराजपण्डितवरः श्रीशप्रपत्यादरः।।
साहित्यत्रिविधागमान्तनिगमाचारोक्तिशब्दाश्रया
वाणीकाणभुजी च यस्य वदने स्वैरं नरीनृत्यते
भव्येनव्यतरे च माधवविलासाख्ये सुकाव्येऽधुना
तस्यायं नवमो जगाम नितरां सर्गो निसर्गोज्ज्वलः"।।[6]

अस्यार्थोऽयमेव यज्जरडादेशस्य वीरनरेशस्य सभायाम् असामान्यो ब्राह्मणस्तथा विद्वान् अभूत्, य एव श्रीनारायणपुत्रस्य श्रीमोहनाचार्यस्य पुत्र आसीत्। सोऽपि यथा गौतमवंशस्य दुग्धसागरे आनतः खलु सुन्दरश्चन्द्रः। सभायाम् असौ विद्वत्सु प्रधानः। विष्णुभक्तिं प्रति प्रगाढमाग्रहं पोषयन्नेको महामानवस्तावत् श्रीयतिराजः। तन्मुखे स्वेच्छया देवीसरस्वती नरीनृत्यत इति। तथा च, काव्यिकशब्दावली, वेदाः, वेदाङ्गानि, उपनिषदस्तथा पाणिनीय-

व्याकरणस्यांशविशेषा भर्जिततण्डुलाकारेण यतिराजस्य मुखे राजन्ते स्म। इत्थं कवेरस्य महतः पाण्डित्यस्य प्रकाशो "माधवविलासम्" इति महाकाव्यस्य नवमे सर्गेऽलक्षि। महाकाव्यमिदं सूक्ष्मेक्षिकया विचार्य शक्यवचं यन्महाकविः यतिराजाचार्यो विस्मयकरपाण्डित्यस्य तथा शान्तरसिकस्य चाधारविशेषः खलु। शब्दानां यथार्थतया प्रयोगमकार्षीदयं विद्वत्प्रवरः। शब्दप्रयोगस्य नियन्त्रणं प्रेक्ष्य केवलं मनसि संस्मर्यते श्रीहर्षस्य शब्दपरिपाकः।

इदं नाप्रकाशितं यन्महाकविरयम् अनान्दनिकानाम् अपण्डितानाञ्च समीपाच्छब्दावरणेन रसप्रवाहं रक्षितुमियेष। अपि च, यतिराजस्य काव्यप्रपञ्चे यादृशं वक्रतावैविध्यम्, कल्पनातिशय्यं, शब्दझंकारस्य परिवेषणञ्चालक्षि, तच्च श्रीहर्षादुत्तरवर्तियुगस्य विद्वत्संसदि काव्यशास्त्रविदाञ्च मध्येऽलक्षित-चरमेव। तथ्यप्रदर्शनाय कवेरस्य महाकाव्यगतो यः कोऽपि श्लोकः सुखपाठ्यश्चानायासबोध्यः। प्रथमसर्गगते प्रथमश्लोके कवेराध्यात्मिकगुरुं पितामहं चोल्लिख्य नारायणचरणारविन्दमुद्दिश्य कथ्यते -

"नमन्निलिम्पावलिमौलिविस्फुरत् किरीटमाणिक्यमरीचिरोचिभिः।
चिराय नीराजनराजिराजितं स्मरामि नारायणपादसारसम्"॥[7]

एवं कवेरस्यानुप्रासधर्मिणी मोहिनी काव्यिकशक्तिस्तथा अनायास-बोध्यताद्धा प्रशंसार्हा। प्रथमश्लोकेऽनुप्रासालंकारेण कवयिता स्वदाक्ष्यं प्रदर्श्य द्वितीयेऽस्मिन् यमकानुप्राणितया ध्वनिवैभवेन चारुतया च रमणीयतरम् अपरमेकञ्चित्रं प्रस्तौति, यत्र देवीं सरस्वतीं प्रति नमो विनिवेद्यते। वाग्वाण्या अपारानुग्रहस्तावत्कवेः यतिराजस्य काव्यनिर्मितावनुप्रेरको नाम। तथाह्युदितम् -

"सरस्वतीपादसरोरुहोदरस्फुरत्-परागप्रसरप्रसादतः।
भवे भवेयं कवितावितानकः प्रकल्पनारम्भविजृम्भिताननः"॥[8]

कविरयं बभूव अनुप्रास-यमकादिशब्दालंकाराणां प्रयोगे यथा सुनिपुणस्तथैवार्थालंकाराणाम्। काव्यस्यास्य प्रतिपदं व्यङ्ग्यार्थो लसतीति ध्रुवम्।

तस्य वाग्शैली, शब्दपरिपाकश्च प्रायेणैवाबाधितौ स्वच्छन्दश्चारिणौ। महाकवेः यतिराजस्य शब्दालंकारा अपृथग्-यत्ननिर्वर्त्यतया प्रवाहधर्मितया अहंपूर्विकया स्वयंक्रियभावेन चार्थान् काशयितुमलम्। अर्थसौन्दर्यप्रकाशे शब्दसौन्दर्यप्रयोग-दक्षतायै व्रजनगरीवर्णनम् अद्धा पाठकानां मनो हरति। सहृदयहृदयाः पाठका माधवविलासस्य श्लोकोच्चारणं कुर्वन्तोऽलौकिकमानन्दमाप्नुवन्ति। कवेर्लेखनी-शैल्या व्रजनगर्य्या राजानन्दोऽत्रोपवर्णितः -

"पुरन्दरोदारमहामहातपा धनाधिपश्रीः पृथुतुन्दसुन्दरः।
अमन्दजानन्दथुरत्र वन्दितो ननन्द नन्दाख्यमहीपुरन्दरः"।।[9]

यद्यपि प्राञ्चः आलंकारिका महाकाव्यवैशिष्ट्यरूपेण पुत्रजन्मादिवृत्तम् उल्लिखितवन्तः "विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः", "रणप्रयाणोपयममन्त्र-पुत्रोदयादयः" चेति, तथापि गर्भवत्या नार्या वर्णनं संस्कृतमहाकाव्येतिहासे प्रविरल एव। यतिराजेनातीव नान्दनिकतया देवकीगर्भधारणं प्रपञ्चितमास्ते। श्वासप्रश्वासौ द्रुतं कृता पद्मलोचना देवकी समधिकतया प्रदीप्तेति। तस्या उदरं क्रमेणैव विवृद्धिं गतम्। नितरां क्लान्तावस्थायां सा स्वकशाटिकाप्रान्तं विस्तीर्य शयनस्थानं निर्माय च कोमलाङ्गैः भूतले शयितुमैच्छत्[10]।

यतिराजस्तस्य महाकाव्ये प्राकृतिकसौन्दर्यं प्रेममूलकरूपञ्च चित्रयितुमियेष। अलौकिकास्वादो भूयो भूयः अनुभूयते आचार्यवरस्यास्य शब्दार्थयोः सुसमञ्जस्यप्रयोगविधौ। दिङ्मात्रमुदाहरणं खलु –

"स्फुर्जथुस्फुरणविस्फुटवीर्ये वारिदे जयति हन्त नभोऽन्तः।
अध्वनीनकुलपीनकुचानां मीनकेतुकृतदीनदशासीत्"।।[11]

मेघो यदा वज्रपातेन विद्युत्स्फुरणे न च तस्य पराक्रमं प्रदर्शयितुं गगने आविर्भूतस्तदा दूरस्थप्रेमिकानां स्थूलपयोधरविशिष्टानां रमणीनां हृदये मदनाख्यप्रेमदेवतया दैन्यमयी दशा सृष्टेत्यर्थो द्योतित इह श्लोके।

इत्थं कालिदासीयं मेघदूतकाव्यगतं श्लोकं (पूर्वमेघः, 32) संस्मृत्य कविः आवेगमथितो भूत्वा शृङ्गारितमनोभावनास्वादेन प्रातः कालं रमणीयतया वर्णयति। सोऽलंकारयुतैः शब्दैः शान्तरसास्पदं काव्यं निर्माति च -

"फुल्लसूमवनधूननशीलः शीतरश्मिकरसङ्गमशीतः।
प्रातरत्र पवनो जवनोऽसौ वाति रतान्तसुरतश्रमहारी"।।[12]

महाकाव्यस्यास्य त्रयोदशसर्गे उदीयमानचन्द्रवर्णनं तावत् श्रीकृष्णेन सह गोपबालानां रासलीलायै उद्दीपनविभावो नाम -

"पौरन्दरीदिग्वनिताङ्गसङ्गस्फुटाङ्गरागारुणचारुमूर्तिः।
नक्षत्रमालारुचिरोऽम्बरश्रीः रराज राजा निजमण्डलाढ्यः"।।[13]

एवं सम्पूर्णमहाकाव्यं व्याप्य यतिराजस्तावद् आख्यानविकाशाय निरवच्छिन्नतया आवेगान् कृत्रिमप्रवृत्तिञ्च न संयुज्य स्वमनोगतान् काव्यिक-शब्दान् ध्वन्यलंकारादिभिर्निर्मथ्य स्वादुतया प्रकाशञ्चक्रे काव्यविलासम्। किञ्च, स एव कवितां देवीरूपेण प्रपूजयति स्म। ताञ्च सुन्दरशब्दालंकारैः अलंकृत्य अनिर्वचीनानन्ददानाय प्रस्तौति सहृदयहृदयानां सविधे। पाठकानन्दो हि काव्यसौन्दर्यस्य मूलाभिप्रायः। तेन तु पाठकेभ्यः काव्यशिक्षादानाय महान् प्रयत्नः कृतः। यावत्संस्कृतकविता मनुजनेभ्यो यथार्थज्ञानं न प्रददाति, तावत्ते सर्वविपद्भ्यो भ्रान्तिभ्यो न रक्षां प्राप्नुयुरिति तस्य विश्वासः। "भगवत्स्मृतिशतकं" विना तस्य सर्वकृतयः अधुनापि पाण्डुलिपिरूपेणैव विलसन्त्यद्यापीति कृत्वा इदानीमपि तन्नाम साहित्यसमीक्षादर्पणे नायातम् असमीक्षितचरमेव।

कालिदासस्य "गच्छन्तीनां रमणवसतिम्"[14] इति श्लोकांशेन प्रभावितभावितः सन् यतिराजः कौति-

"भ्रष्टमाल्यकवरीच्च्युतहारा लक्षितक्षतमुररितरयन्ती।
कामिनी व्रजति काऽलसगत्या केलिसौधशयनादथ कल्ये"।।[15]

प्रातः सूर्योदयस्यानिन्द्यसुन्दरया वर्णनया पाठका विमोहिताः -

"सप्तसप्तिकतुरङ्गखुरोद्यत्-पूर्वपर्वतजगैरिकचूर्णः।
रञ्जितेव रुरुचेऽरुणलक्षाच्छक्रदिक् क्रमश एव किमेषा"॥[16]

नवोदितः सूर्यो न हि सूर्य इति मन्यते। परमिमां नभोव्याप्तिशीलपद्मराग-मणिभिर्निर्मिताञ्चक्रपत्रिकां तमोरूपेण स्थितस्य प्रकाण्डगजजातप्रतिबन्धकस्य दूरीकरणाय स्रष्टा ससर्जेति। तथाह्युक्तं कविना -

"अन्धकारवरवारणवारोद्वारणाय विधिना प्रहितं किम्।
नव्यशोणमणिनिर्मितचक्र-चंक्रमीति गगनं क्रमशोऽञ्चत्॥
सुशास्ति चेद्वाग् अनुसज्जनाननासनासनादात्मसनातनोत्तरम्।
कवेर्भवेद् दुर्जनवाक्यदुर्जरापवादसादा किमु सारभारती"॥[17]

महाकविरयं 1979ईशवीयाब्दे धराधाम परित्यज्य अमृतालोकमितः। किन्तु काव्यनिर्मितौ प्रसिद्धपरम्पराव्यतिरेकी कविरयम् अद्यापि सहृदयानां मनोमुकुरे चिरं स्थानं लब्धवान् इति शम्।

## सहायकग्रन्थपञ्जी

*Contemporary Sanskrit Writing in Orissa* (Studies in Modern Sanskrit Writing No. 1), Aruna Ranjan Mishra, Radhavallabh Tripathi (Editor), Published by Dr. Radhey Shyam Shukla, Pratibha Prakashan, Delhi, 2006 (First Edition).

*Meghadūta : Studies* (On the basis of the Commentary of Krishnapati), S.P.Narang, Delhi, 1979.

*श्रीमद्भगवत्स्मृतिशतकम्*, Kaviraj Pundit Yatirajacarya, Sarada Press, Berhampur, Orissa.

**कृतज्ञतास्वीकारः**

अध्यापकस्य अरुणरञ्जनमिश्रस्य 'Contemporary Sanskrit Writing in Orissa' इति ग्रन्थात् तथ्यानि संगृहीतानीति तस्मैऽहं हृदोऽन्तःस्थलात् कार्तज्ञं ज्ञापयामि।

## तथ्यसूत्राणि

---

[1] *Contemporary Sanskrit Writing in Orissa*, p. 22.

[2] उपेन्द्रभञ्जः खलु उत्कलदेशीयः उच्चस्तरीयः प्रतिभावान्मध्ययुगीयो महाकविः।

[3] अस्मिन् शास्त्रीयग्रन्थे वंशार्थम् "अनन्तवासुदेवयज्ञः", ज्ञानार्थं "हयग्रीवयज्ञः" दृष्टिशक्तये "दृष्टियज्ञः" चेति वर्ण्यन्ते।

[4] यतिराजाचार्यः माधवविलासम् इत्याख्ये महाकाव्ये सूचयति -'आश्लिष्टेन किशोरशीतलरुचः सामन्तरायाह्वयात्। संसत्-पण्डित-रायेत्यभिधया राज्ञो जराडेशितुः'।। (3/61) –हस्तलिखितमातृकातः संगृहीतः। मातृकेयं यतिराजस्य पुत्रस्य आचार्यसुदर्शनाचार्यस्य समीपे ब्रह्मपुरे (उत्कले) वर्तते।

[5] *श्रीमद्भगवत्स्मृतिशतकम्*, by Kaviraj Pundit Yatirajacarya, Sarada Press, Berhampur (Orissa), 1932, Verse – 92.

[6] *माधवविलासम्* (नवमसर्गे अन्तिमश्लोकद्वयम्)

[7] तत्रैव (1/1)

[8] तत्रैव (1/2)

[9] तत्रैव (1/67)

[10] आस्यसीम्नि वरसारसनेत्र्याः शासकेन ससृजे गुरुलास्यम्।

रोचके रुचिरवस्तुनि तस्या हा चिराय रुरुचेऽरुचिरागः॥
दुर्भरोद्वलितगर्भविलासः सालसातिशयसंलुलिताङ्गी।
आकलय्य वसनाञ्चलशय्यां भूतलेऽपि ववलेऽथ शयालुः॥(*माधवविलासम्*, 3/9-10)

[11] तत्रैव (3/30)

[12] तत्रैव (3/64)

[13] तत्रैव (13/12)

[14] *मेघदूतम्*, (1/40)

[15] तत्रैव (3/65)

[16] तत्रैव (3/72)

[17] तत्रैव (3/77 & 1/10)

# पण्डितोऽनन्तनारायणः त्रिपाठिशर्मा - एका बहुमुखिप्रतिभा

**सौरभ-पालः**

ओडिशावास्तव्योऽनन्तत्रिपाठिशर्मा भारतमातुः सेवकेष्वन्यतमोऽस्ति। न केवलं तन्नाम प्रसिद्धेषु शिक्षावित्सु, अपि तु राजनैतिकनेतृरूपेण, आयुर्वेदचिकित्सकत्वेन, समाजसेवकरूपेणापि स्वर्णाक्षरैः लिखितं वर्तते। तस्य व्यक्तित्वप्रभावात् स ओडिशाप्रदेशस्यादर्शमानवरूपेण प्रसिद्धिमवाप। विद्वान् अयम् ईशवीयाब्दस्य १९०४ वर्षस्य फेब्रुयारीमासस्य द्वाविंशतितमे दिवसे दक्षिण-ओडिशायाः गञ्जामजिलान्तःपातिनि जगन्नाथपुरनामधेये (आस्का) ग्रामे जनिं लेभे। पिता तस्य गदाधरत्रिपाठी खलु तत्कालीनः प्रसिद्धवैद्यो ज्यौतिषिकश्चासीत्। आसीत्तन्माता श्रीमती मोहिनी देवी गृहमेधिनी। त्रिषु भ्रातृषु असौ अनन्तनारायणः कनिष्ठः। तस्य ज्येष्ठभ्राता चन्द्रशेखरत्रिपाठी आसीदेकः प्रसिद्धः संस्कृतज्ञः, स काश्याम् अधीतवान्। अनन्तत्रिपाठिशर्मणः प्राथमिकशिक्षा तस्य ज्येष्ठभ्रातुः गृहादेवारब्धा, परं पश्चात्तस्य खुल्लतातस्य परामर्शात् स वारिपदम् आगतो व्याकरणाध्ययनाय।

ईशवीयाब्दे १९४३ नागपुरविश्वविद्यालयतः साफल्येन स्नातकोत्तर-परीक्षामुत्तीर्य १९७७ तमेऽब्दे बरहमपुरविश्वविद्यालयतः डि. लिट्. इति शिक्षाक्षेत्रस्य सर्वोच्चोपाधिम् अर्जितवान्। किन्तु अध्ययनं समाप्य स कर्मक्षेत्रं प्रविवेश। तस्य अधिकांशकार्यक्रमाः दक्षिण-ओडिशाया बरहमपुरनगर्यां सम्पाद्यमाना आसन्। विविधाभिरुपाधिभिस्तस्य कर्मजीवनमलंकृतम्। विंशति-वर्षदेशीयोऽनन्तनारायणः १९२४तमे ख्रीष्टाब्दे मद्राजविश्वविद्यालयात् **साहित्यशिरोमणि**रित्युपाधिं लब्धवान्। तेन १९२९तमे ईशवीयाब्दे वार्धाविश्वविद्यालयेन **राष्ट्रभाषारत्नम्**, तस्मिन्नेव वर्षे बिहार-ओडिशा-संस्कृतपरिषदा **आयुर्वेदाचार्यः**, १९३३ तमे ईशवीयाब्दे आन्ध्रविश्वविद्यालयेन च **मीमांसाविद्याप्रवीण**श्चेति उपाधिभिः सभाजितोऽयम् विद्वत्प्रवरः। एतदतिरिच्य तेन १९२४ तमे वर्षे मद्राजविश्वविद्यालयतः प्राच्यविद्यासम्पर्कितः

Professional Oriental learning इत्युपाधिरवाप्तः। पुनः श्रीलङ्कासर्वकारेण प्रदत्ता आयुर्वेदचक्रवर्त्तीत्युपाधिः त्रिपाठिशर्मणो जीवनस्य श्रेष्ठा गौरवावहप्राप्तिः। भारतीयराजनीतावनन्तनारायणस्यावदानं संस्मरणीयम्। विद्वद्रूपेण तस्य यावत् साफल्यं, राजनीतिविद्रूपेणापि ततोऽधिकमिति क्वचिदेव संलक्ष्यते।

त्रिपाठिशर्मणः कर्मजीवनं उत्कलप्रदेशस्य पारलाखेमुण्डिनामके स्थानेऽवस्थिते 'महाराजा-साधारण-महाविद्यालये' 'महाराजा-संस्कृतमहा-विद्यालये' चाध्यापकरूपेण प्रारभ्यते। तदनन्तरं तेन पारला-आयुर्वैदिक-महाविद्यालये अध्यक्षपदमलंकृतम्। अस्मिन्नेव स्थाने तस्य जनपरिचितिकारणात् विधानसभानिर्वाचने विजयी अभूत्। स्वतन्त्रतायाः प्राक् आस्का-निर्वाचनक्षेत्रे एकस्य जिल्ला-परिषदः (district board) संस्थापनमावश्यकमिति कृत्वा कश्चन योग्यप्रार्थी सन्धातव्यः। प्रबलस्य कमिउनिष्टदलस्य प्रतिपक्षरूपेण कंग्रेसपक्षतः अनन्तत्रिपाठी प्रार्थीत्वेन मनोनीतोऽभूत्। कठिनप्रतिस्पर्धायाः परं तेन जयलाभः कृतः। तस्य साधारणान् मानवान् प्रति सहृदयतायै विधायकत्वेन परिसेवादानाच्च स जनप्रियनेतृरूपेण परिचितः, येन कंग्रेसनेतारः तमेव तत्र विधायकपदप्रार्थिरूपेण मनोनीतवान्। अनेन स १९४६ खीष्टाब्दतः १९५२ तमवर्षं यावत् ओडिशाया विधायकरूपेण अर्थात् जनसेवकत्वेन नियुक्तोऽभूत्। १९६१ ईशवीयाब्दतः १९७२ तमाब्दं यावत् समयाभ्यन्तरे तेन बरहमपुर-लोकसभाक्षेत्राद् वारत्रयं सांसदरूपेण निर्वाचितोऽभूत्। विधायकपदासीनः स आयुर्वेदस्योन्नतिविधानार्थं भारतसर्वकारसमक्षं बहुविधान् प्रस्तावान् उत्थापितवान्। सर्वभारतीय-आयुर्वेद-महासम्मिलनीति संस्थायां स राज्यसदस्यरूपेण निर्वाचितः आसीत् । पुर्यां गोपबन्धु-आयुर्वेद-महाविद्यालयः तस्यैव प्रचेष्टया प्रतिष्ठापितः। तदानीन्तनस्य प्रधानमन्त्रिणः पण्डितनेहरोः सविशेषं स्नेहभाजनमासीदसौ ।

१९७७ खीस्ताब्दानन्तरं तेन प्रत्यक्षराजनीतेरवसरो गृहीतोऽपि न जनानां सेवायाः। अस्मिन् समये तेन मुख्यतो बरहमपुर-आयुर्वेदिकमहाविद्यालयस्य अध्यक्षरूपेण जनहितकर्मणि नियोजित आसीत्। युगपत्तेन संस्कृतसेवायाम् अप्यासीत् व्यापृतः। परन्तु राजनीतेरवसरग्रहणान्तरं संस्कृतेन समं तस्यान्तरिकता

दृढा सञ्जाता। तदा तेन बरहमपुरस्थितात् 'शिरोमणि'रिति स्वकीयमुद्रणालयात् 'मनोरमा' इत्याख्या संस्कृतमासिकपत्रिका तस्य सम्पादनेन प्रचरद्रूपतामिता। एषा पत्रिका निरवच्छिन्नतया द्वादशवर्षव्यापिनी प्रकाशितासीत्।

संस्कृतमातृकायाः सेवायां निरतः सन् अनन्तनारायणत्रिपाठिशर्मा प्रायः पञ्चत्रिंशत् पुस्तकानि विरचितवान्। तासु शास्त्रीयकृतिषूल्लेखयोग्यास्तावत् - ओडियानुवादसहिता *चरकसंहिता*, *अथर्ववेदसंहिता*, *उपनिषत्संग्रहः*, *वैशेषिकसूत्रम्*, *अर्थसंग्रहः*, *वात्स्यायनकामसूत्रम् चेति।* गवेषणामूलकग्रन्थरूपेण *संस्कृतीया प्रशासनशब्दावली* (A dictionary of Sanskrit counterparts to English administrative words), तथा प्राच्यविद्यासम्पर्किता 'निबन्धमाला' चेति प्रसिद्धौ चादृतौ।

विंशतिशतकीये भारते त्रिपाठिमहोदयः चिकित्साशास्त्रस्य महान् चिन्तकोऽभूत्। अथर्ववेदसंहिताया अनुवादावसरे तस्य उत्कलीयटीकायां सर्वे नूतनामर्थदृष्टिं प्राप्नुवन्ति। उपनिषदां संग्रहे सोऽपि स्वकीयां वैदान्तिकीम् आध्यात्मिकतां भृशं प्रदर्शयति। वैशेषिकसूत्राणां सटीकानुवादे तस्य कणाददृष्टेः अवधारणा भारतीयदार्शनिकानां सहायभूताऽऽसीत्। अपि च, अनन्तत्रिपाठिनः सम्पादनेन प्रकाशितस्य मीमांसादर्शनस्य लक्षणग्रन्थस्यार्थसंग्रहस्य सटीकानुवादे स जैमिनीय-यज्ञदर्शनस्य अदृष्टरहस्यमुन्मोचितवान्। अतो विंशतिशतकीये भारते त्रिपाठिमहोदयः सर्वादृतो दार्शनिक इति निश्चप्रचम् ।

पण्डितोऽनन्तनारायणः त्रिपाठिवर्यः तेषु प्रसिद्धेष्वनुवादकेषु अग्रगण्योऽस्ति, ये इतरभाषाभ्यः मौलिकग्रन्थान् संस्कृतेऽनूद्य संस्कृतानुवाद-परिसरे उत्कर्षतां विदधते। आङ्गलसाहित्यिकस्य शेक्सपीयरमहोदयस्य नाटकानि संस्कृतेन सारल्येन सुबोध्येन चानूद्य तेन ओडिशासाहित्यपरिमण्डले स्वकीयपरिचितिनिर्मिता। शेक्सपीयरस्य ‘Twelfth Night’ इति नाटकं त्रिपाठिशर्मणा *'द्वादशी रात्रिः'* इति शीर्षकेण, पुनः ‘Much Ado About Nothing’ इति नाटकं *'बह्वारम्भे लघुक्रिया'* इति शीर्षकेण, ‘The Merchant of Venice’’ इति नाटकं *'वेणीशसार्थवाहः'* इति शीर्षकेण, ‘As You Like

It' इति नाटकं *'यथा ते रोचते'* इति शीर्षकेण, 'Hamlet' इति नाटकं *'हेमलात'* इति शीर्षकेण अनूदितानि सन्ति । एतैः सफलसंस्कृतानुवादैः समं तस्य 'नीलाद्रिनाथशतक'मिति जगन्नाथस्तुतिसम्बन्धि खण्डकाव्यमपि प्रसिद्धं वर्तते।

संस्कृतानुवादकरूपेण विद्वान् त्रिपाठिशर्मा साहित्यसर्जनदक्षतायां स्वकप्रतिभायाः परिचयं प्रादात्। संस्कृतेन समं सायुज्यं प्रदातुं सहृदयानां पाठकानां कृते भारतीयपरिवेशप्रदानाय च तेन आङ्गलनाटकानां चरित्राणि भारतीयत्वे रूपान्तरितानि। तेषां पात्राणां व्यवहारेऽपि तदर्थं क्वचित् परिवर्तनं विहितम्। एतदवश्यमेव प्रशंसार्हं यत् तेन शेक्सपीयरस्य आङ्लनामानि ध्वनिसाम्येन संस्कृतेनानूदितानि, पाठकानां सकाशे तस्य एष उद्यमः सादरं गृहीतोऽप्यस्ति। मयकात्र तस्य एवंविधायाः प्रतिभायाः सामान्यो दृष्टान्तः प्रदीयते 'Much Ado About Nothing' इत्यस्य संस्कृतानुवादात् *'बह्वारम्भे लघुक्रिया'* इत्यस्मात् नाटकात्

| **आङ्गलनामानि** | **संस्कृतनामानि** |
|---|---|
| Donpedro | दानापीडः |
| Donjohn | दानयज्ञः |
| Claudeo | कुमुदकः |
| Benedece | विनोदकः |
| Leonate | लीलानाथः |
| Antonio | अनन्तः |
| Belthasar | बालसारथिः |
| Messina | महीशाना |
| Canrado | कणदिः |
| Bracheo | विरोचकः |
| Friar Francis | प्राज्ञेशमठाधिपतिः |
| Dogbary | दुर्गतारिः |
| Verges | वीर्यशाली |

| | |
|---|---|
| Hero | हीरा |
| Bechrice | विचित्रा |
| Margaret | मार्गरीतिः |
| Versila | मरुशीला |

त्रिपाठिनः कृतिषु महत्तमास्ति *'लावण्यवती'*, यच्चैकमनुवादकर्मेति। अनुवादो नाम trans-creation अनुसर्जनं[1] वेति। मध्ययुगीयेन कविसम्राजा उपेन्द्रभञ्जेन (1670-1720 AD)[2] विरचितस्य अष्टचत्वारिंशत्सर्गसम्पूर्णस्य ओडियामहाकाव्यस्य संस्कृतानुवादोऽयम्। पण्डितः त्रिपाठिः काव्येऽस्मिन् महता प्रयत्नेन प्रकृतरचनायाः कल्पनातिशय्यं निर्यासञ्च चमत्कारेण संरक्षितुं समर्थोऽस्ति। उपेन्द्रभञ्जस्य काव्यिकचमत्कारिता संगीतमयता च त्रिपाठिना निपुणतया रमणीयतया च तस्यानुवादकर्मणि संस्थापिते आस्ताम्। विंशतमे ख्रीष्टशतके संस्कृतानुवादक्षेत्रे तस्यायमुद्योगस्तं शलाकापुरूषरूपेण प्रस्तौति। भारतीयानुवादपरम्परायाः उषाकाले अनन्तत्रिपाठिनः कृतिरियं नवोदित-सूर्यवदखिलसंस्कृतसाहित्यप्रपञ्चे उज्ज्वलालोकस्वरूपेति शक्यवचम्। अतः सन्दर्भेऽस्मिन् *लावण्यवती* इत्यस्य संक्षिप्तालोचनमत्र प्रदर्श्यते ।

महाकवेः कल्पनाप्रसूतं महाकाव्यमिदं श्रीलङ्काराजदुहितायाः लावण्यवत्याः कर्णाटकस्य राजपुत्रस्य चन्द्रभानोश्च परिणयवृत्तान्तोऽत्र मूलतः वर्णनीयः । तयोर्मध्ये प्रणयः, विवाहः, तदनन्तरं विच्छेदः, पुनर्मिलनं, जीवनस्य सर्वस्यां परिस्थित्यां तयोः मानसिक्या अवस्थायाः पुङ्खानुपुङ्खवर्णनं कविनाऽत्रोपस्थापितं चारुतया भिन्नाङ्गिकेन च । नायिका लावण्यवती सर्वाङ्गसुन्दरी, विश्वस्यास्य सकलं सौन्दर्यं तामेव आश्रयते। साऽस्ति आनन्दस्य प्रतिमूर्त्तिः, तस्याः वाणी सुमिष्टद्राक्षाफलेभ्योऽपि मिष्टतरा, कर्पूरखण्डेभ्योऽपि तृप्तिकरा, कोकिलस्वनेभ्योऽपि मधुपदा, नवनीतादपि कोमला चेति। तथाह्युच्यते

द्राक्षास्वादुं रजनीकरतः शीतलां भावगर्भां
मिष्टां ज्यायः परभृतवचः कोमलां नावनीतात्[3]॥

(Mishra, A. R. p. 35)

अनेन ओडियासाहित्यमिव संस्कृतेऽपि *लावण्यवती* साहित्यगतं सौन्दर्यं तनोतीति ध्रुवम्। अस्मात् ग्रन्थात् त्रिपाठिमहोदयस्य पाण्डित्यं प्रकटितमभूत्। निःसन्दिग्धतया वक्तुमलं यदसौ कविसम्राज उपेन्द्रभञ्जस्य अमरकृतिना सह यथान्यायमाचरति। उपेन्द्रभञ्जो नायिकायाः शारीरिकसौन्दर्यं वर्णयितुं स्वकपारङ्गमतां प्रददर्श। लावण्यवती एकत्र पद्मस्वरूपिणी-

पद्मिन्येषा स्वभावात्सरसिजचरणा पद्महस्ताब्जनेत्रा।
पद्मास्या पद्मगन्धा धरति धरयुगं पद्मकोषं प्रकाशम्[4] ॥

(Mishra, A. R. p. 35)

हृद्योऽनवद्यशैल्या कविना मूलस्य निर्यासो निर्व्यूढः। तेन उपमा-रूपकाद्यलङ्कारैः नायिकातनुरलङ्कृता। उपेन्द्रभञ्जस्य नायिका न केवलमेका नारी, अपि तु अमूल्यरत्नस्वरूपा हृदयहरणे सर्वोत्तमेति -

नास्तीह भूतलतले ललनां विहाय
रम्यं परं किमपि वस्तु हृदोपहारि[5]॥

(Mishra, A R, p. 34)

किञ्च,

मूल्यं हि हीररजतेन्द्रकमौक्तिकादे-
र्नो मूल्यमस्ति ललनात्मकरत्नकस्य[6]॥

(Mishra, A R, p. 34)

उपेन्द्रभञ्जेन नारी सौन्दर्यस्य देवीरूपेणादृतेति कृत्वा तेन काव्यपुष्पाञ्जलिना तां देवीमाराधयितुं प्रयतते। एवं बहुभिः श्लोकैः काव्यमिदं गुम्फितं वर्तते। अतः काव्यस्यास्य पञ्चत्रिंशत्तमः सर्गः केवलं लावण्यवत्याः सौन्दर्यवर्णने व्ययितः[7]। पण्डितत्रिपाठिः उपेन्द्रभञ्जस्य शब्दान् नानूदितवान्, परन्तु तस्य चिन्तनमपि। तस्य संस्कृतभाषया 'लावण्यवती'त्यनेन प्रकृतरचनायाः समान्तरालेऽग्रेसरन्ती स्वकीयसृष्टिरित्यङ्गीक्रियते। तस्यैषा प्रचेष्टा निश्चयेन अनुवादक्षेत्रे योगदानाय सर्वान् प्रेरयति।

पारिशेष्येण, आचार्याणाम् अरुणरञ्जनमिश्रपादानाम् उद्धृत्या अनन्तत्रिपाठिशर्मणो संस्कृतशास्त्राब्धौ अवदानं कियदिति बोद्धमलम् -

"Woman is thus eulogized as a goddess of beauty. Poetry is considered as a means for glorifying her in various ways. In the light Canto-35 that deals with a tip-to-toe description of the beauty of Lāvaṇyavatī is just the verbal offerings to the deity of beauty. The last nine cantos of the epic strike a different note. From the canto 40 to 44, the poet presents the pangs of separation between the hero and heroine on the backdrop of the description of different seasons- Summer to Spring.Candrabhānu's victory in an instantly fabricated war (canto-45), return to the kingdom and reunion with Lāvaṇyavatī (canto-46) the description of the past sufferings of the separated couple (canto-47) and the coronation of Candrabhānufollowed by his deft administration of the large kingdom (canto-48) are the subjects dealt with in the last part of the epic.

Pt. Tripathi is thus an astute translator of UpendraBhaňja's thoughts on Indian woman and feminine beauty. His Sanskrit Lāvaṇyavatī claims to be almost an original endeavour in its own creative standard- and he himself is closely comparable with the Sanskrit *mahākāvyas*, especially with Śrīharṣa, the ideal of UpendraBhaňja. His laudable poetic drive has allowed access of the excellence of the original poet and has inspired a modern trend in Orissa of translating the other classics." (Mishra: 35)

## सहायकग्रन्थपञ्जी

Mishra, Arun Ranjan. *Contemporary Sanskrit Writings in Orissa.* Pratibha Prakashan, Delhi, 2006.

सेनः, शुभ्रजित्. *भारतवर्षे आधुनिकसंस्कृतसाहित्यम् : विहङ्गमदृष्ट्या परिशीलनम्.* संस्कृत पुस्तक भण्डार, कोलकाता, २०१९ ।

## तथ्यसूत्राणि

---

[1] अनुसर्जनं नाम तादृशं किञ्चन यत्र मूलस्य शब्दसम्पत्तेर्भावसम्पत्तेश्च चमत्कारित्वमविहाय भाषान्तरीकरणं क्रियते। (सेनः, शुभ्रजित्, पृ.- ४७)

[2] बरहमपुरजिलान्तर्गते कुल्लडा इति ग्रामे उपेन्द्रभञ्जः समजायत। जन्मसूत्रेण स आसीत् राजा। परन्तु राज्यशासनापेक्षया तस्मै काव्यानुशीलनम् अधिकेन रोचते । न केवलम् ओडियाभाषायामपि तु संस्कृते तस्य पाण्डित्यं विलक्षणमासीत्।

[3] *लावण्यवती,*१४/१२

[4] *तत्रैव,* २२/२४

[5] *तत्रैव,* २८/२१

[6] *तत्रैव,* २८/२७

[7] लब्धायां त्वयि कल्पये सुरसुखं देहान्तरेऽसत्यपि
नेत्रेणापलकेन सन्ततमहं त्वां द्रष्टुमुत्कः परम्।
वक्षोजे कनकाचले च नियतं संक्रीडितुं कामये
कांक्षे तेऽधरजां सुधां सुविमलां प्रेम्णा समास्वादितुम्॥
आश्लेष्टुं परिकल्पते मम मनो रम्भां तवोरू सदा
मोक्षः सर्वसुखप्रदोऽस्ति निहितो नीव्यां ममाभीप्सितः।
भाग्यं मे विमुखं परं तु दयिते, त्वं दुर्लभा भासि मे
तेन त्वं करुणावती गुणनिधे सकृत्प्रसादं कुरु॥ (तत्रैव, १९/१०-११)
(Mishra, Arun Ranjan: 35)

# संस्कृतचर्चायां महामहोपाध्यायस्य पि.एन्.पट्टाभिराम-शास्त्रिणः अवदानम्

डा. प्रदीपकुमारमहापात्रः

## भूमिका

भारतवर्षस्य संस्कृतचर्चा इदानीन्तने काले यथा क्रमेणैव क्षयिष्णुतां गता, न तथा प्राचीने भारते। तदानीं संस्कृतसाहित्यस्य स्थानं सर्वोपरि विलसदासीत्। संस्कृतभाषाश्रितानाम् अप्रकाशितानां शास्त्रीयग्रन्थानां पुनरुद्धारे सम्पादने टीकाग्रथने वेदादिशास्त्राणां च संरक्षणे ये खलु महान्तो विद्वांस आजीवनं सारस्वतसाधनायां निमग्नास्तेष्वन्यतमस्तावच्चिन्नस्वामिनः सुयोग्यशिष्यस्तथा महामहोपाध्यायः पि.एन्.पट्टाभिरामशास्त्रिमहाभागः।

## जन्म-शिक्षादिवृत्तान्तः

विश्वेऽस्मिन् विश्वे वेदस्य स्थानं सर्वोपरि इति सिद्धम्। तत्र वेदचर्चायां दर्शनचर्चायाञ्च भारतवर्षस्य ख्यातिः पाश्चात्त्येऽपि नियतरूपेण चकास्ति। प्राच्यवेददर्शनचर्चायां भारतवर्षस्य दक्षिणप्रदेशस्य ख्यातिः सर्वजनविदिता। अस्या ज्ञानचर्चाया निरवच्छिन्नत्वसाधने यथा वेदाचार्येषु तथैव मीमांसाशास्त्रेषु अग्रगण्यो हि पि.एन्.पट्टाभिरामशास्त्रिमहाभागः। महामहोपाध्याय इत्युपाधिना भूषितः पट्टाभिरामः दक्षिणभारतस्य माद्राजप्रदेशान्तर्गते काञ्चीमण्डलस्थिते पुटुक्कोट्टै-नामके ग्रामे 1908-ख्रीष्टाब्दस्य (विक्रमसम्बत्-1980) नभेम्बरमासस्य त्रिंशत्तमदिनाङ्के जनिं लेभे। तैत्तिरीयशाखाध्यायिनो बाधूलगोत्रोत्पन्नस्य पट्टाभिरामस्य जनको हि श्रीमान् पि.एन्.कृष्णराव-नट्टरः जननी च श्रीमती लक्ष्मीदेवी। नाट्टराख्य उपाधिविशेषः तेषां पूर्वसूरिभिः कस्मिन्नपि युद्धे विपुल-शौर्य-पराक्रम-प्रदर्शनेन आङ्गलशासनादेवोपलब्धः। अयञ्चोपाधिः तद्वंशीयानामभूत् परस्मिन् काले। नाट्टरशब्दः वीरदेशपालकार्थकः। दक्षिणप्रदेशस्य परम्परानुसारतः नाम्नःपूर्वं ग्राम-कुलयोः नाम संयोजितं भवतीति

परम्परा। तत्परम्परानुसारं नाम्नः प्राक् पी-पदस्य तथा च एन्-पदस्य संयोजनेन पी.एन्.पट्टाभिरामशास्त्रीत्युच्यते। अर्थात् पीशब्देन पुदुक्कोट्टै इति तथा एन्-शब्देन च नाट्टार इति ज्ञेयम्।

पट्टाभिरामस्य जन्मनः प्रथमवत्सरार्धे एव तन्मातुः मृत्युकारणात् तस्य परिपालनादिदायित्वं पितरि न्यस्तमभूत्। परन्तु वृद्धः पिता बालकस्य पट्टाभिरामस्य परिपालनं सम्यक्तया कर्तुं नालम्। तस्य मातुलालयस्तु पुदुक्कोट्टैग्राम-सन्निकटस्थे पलाशपुरग्रामेऽभूत्।

आसीत् शास्त्रिनो मातामही पर्वतवर्धिनी देवीति। सा दिवसत्रयमध्ये कमपि प्रेषितवती बालकस्य कुशल-क्षेमज्ञानाय। पुत्राय पिता सर्वं कर्तव्यादिकं साधयन्नपि स कथमपि मातृवत्बालकस्य पट्टाभिरामस्य लालन- पालनादिकं च सम्यक्तया न कर्तुं क्षमः[1]। अतो दयार्द्रचित्तवती मातामही मातुलं नरेशं तत्र प्रेषयामास शास्त्रिणं स्वगृहमानेतुम्। मातामही अतीव वात्सल्येन दौहित्रस्य परिचर्यां चकार। मातामह्याः स्नेहाद् बालकस्य पट्टाभिरामस्य शारीरिकस्तथा मानसिको विकाशः क्रमेणैवविवर्धते स्म। तस्य षष्ठवर्षे (१९१४) पितुः कृष्णरावस्य शिवसायुज्यलाभात् परमेव 'गर्भोऽष्टमे'[2] इति स्मृतिवाक्यानुसारं मातुलो नरेशो बालकस्य उपनयनसंस्कारं सुसम्पन्नं कारितवान्। ततो मात्राज्ञया नरेशो बालकं पट्टाभिरामं संस्कृतपठनायस्वकीयग्रामस्य पण्डितप्रवरं शिवरामं निकषा प्रेषितवान्। शिवरामस्तु आदावेवतस्मै अमरकोषवचनं कण्ठस्थीकर्तुम् उपदिदेश। कालेन नित्याध्ययनेन पट्टाभिरामस्य ज्ञानं पर्याप्तमेवासीत्। ततः शिवरामशास्त्रिणः आज्ञया मातुलः श्रीनरेशशास्त्री माध्यमिकशिक्षालाभार्थं बालकं तिरुवन्नामलैनामके नगरे संस्कृतपाठशालायां पठितुं प्राहिणोत्। तत्र विदुषां वरेण्यान् गणपतिशास्त्रिणो निकषा कोश-व्याकरण-रघुवंश-कुमारसम्भव-मेघदूतादीनां निरन्तरमध्ययनेन बालकस्य पट्टाभिरामस्य शास्त्रपठनेच्छा क्रमेणैव विवर्धिता जातेति कृत्वा तेन अज्ञातेनैव तिरुपतिनगरीमगमत्। तत्र स मातृस्वसुः गेहम् अवस्थाय वेङ्कटेश्वरमन्दिरस्य महाधीशैः संस्थापितायां संस्कृतपाठशालायां पाठं प्रारेभे। तत्र माध्वसम्प्रदायानुसारेण महामहोपाध्याय-वैयाकरणमूर्धण्यप्रकरणश्रियः सेतुमाधवाचार्यस्य कृपाऽपि तेनावाप्ता।

शैशवादेव पट्टाभिरामे प्रतिभा पूर्णतया लसत्येव। तस्मादेव पञ्चमवयःक्रमे वैयाकरणसिद्धान्तकौमुदी-काव्य-नाटक-चम्पूकाव्यानि अधीत्य प्रवेशिका-परीक्षायामपि समुत्तीर्णोऽभूत्। तत्र तिरुपतिनगरे व्याकरणशिक्षा महामहोपाध्याय-सेतुमाधवाचार्यस्य सकाशादवाप्ता। पण्डितमूर्धन्यस्य श्रीलक्ष्मीनृसिंहशास्त्रिणः तथा च पण्डितानां श्रीगिरिधराचार्य-कृष्णमाचार्य-रामनाथशास्त्रि-नम्मयाचार्यादिविद्वद्भ्यः नाटक-चम्पू-प्रभृतीन्यध्यापयामास।

पण्डितरामनाथशास्त्रिणो मुखादेव पट्टाभिरामेण महामहोपाध्यायचिन्न-स्वामि शास्त्रिणां वैदुष्यं श्रुतमेव। बभूव चिन्नस्वामी आदावेव तावत् वेङ्कटेश-ओरियेण्टाल-विद्यालयस्याध्यापकः खलु। अनन्तरं मदनमोहन-मालव्येन चिन्नस्वामिशास्त्री काशीहिन्दुविश्वविद्यालये अतिथ्यध्यापकत्वेन आमन्त्रितः।

पट्टाभिरामस्य मनसि चिन्नस्वामिशास्त्रिणं प्रत्यासीत् महती श्रद्धा। चिन्नस्वामिने पट्टाभिरामो यथाशास्त्रं गोत्रवेदशाखाया मन्त्रान् उच्चारयन् साष्टाङ्गं प्रणमति स्म। एतेन प्रसन्नः सन् चिन्नस्वामी प्रवेशिका-परीक्षायां समाप्तायां पट्टाभिरामं स्वसमीपमानेतुमादिदेश।

उच्चशिक्षायै 1924 ईशवीयाब्दस्य जुलाइमासि तिरुपतितः काशीम् आगतः सः। तत्र काश्यां पदव्रजेनैव महामहोपाध्यायचिन्नस्वामिनः गृहं प्राप्तुकामः हनूमानघाटस्थिते काञ्चीकामकोटिशङ्करमठमागतः। चिन्नस्वामिनो गृहे उषितः सस्नेहं तत्र लालितः पट्टाभिरामः। मीमांसादर्शनेन सह श्रीमहादेव-शास्त्रि-राजश्रीमदम्बिकादत्तशास्त्रि-श्रीताराचरणतर्काचार्य-श्रीशङ्कराचार्य-देशिकाचार्येभ्यः न्याय-साहित्य-वेदान्त-सांख्य-योगादिशास्त्राण्यधीत्य प्रौढतया विद्यापराङ्गमोऽभूत्। इत्थं स विद्वत्संसदि पट्टाभिराम-शास्त्रिनाम्ना ख्यातिमगात्।

## पट्टाभिरामस्य अध्यापनजीवनम्

चिन्नास्वामिनः कन्यया सह पट्टाभिरामस्य उद्वाहो जात इति कृत्वा तस्मात्स जामातृशास्त्रितया परिगण्यते। अपि च, गुरुगृहम् अवस्थाय 1931

ख्रीष्टाब्दे आचार्यपरीक्षायां साफल्येनोत्तीर्णो जातः। तदनन्तरं पुणानगरीं निकषा वायीनामके स्थले संस्कृत-प्राज्ञ-पाठशालायां तस्य नियुक्तिरजायत। तत्र कतिचिद्दिनान्यध्याप्य विहारप्रदेशस्य कस्मिंश्चिद् राजकीयसंस्कृतमहाविद्यालये अध्यापकरूपेण नियुक्तोऽभूत्। काश्याः बहिः गन्तुम् अनिच्छन्नपि योगक्षेमलाभाय विहारप्रदेशस्य मुजफरपुरस्थराजकीयसंस्कृतमहाविद्यालयमेव चिनोति स्म परन्तु उत्तरप्रदेशस्य गोयेङ्कासंस्कृतमहाविद्यालयस्य प्राचार्याणां चण्डीप्रसादशुक्लानाम् अनुरोधात् तत्रैव 1983ख्रीष्टाब्दे पूर्वमीमांसाशास्त्रस्य अध्यापकत्वेन सारस्वतविद्यायां जीवनं प्रारेभे पट्टाभिरामः। अध्यापनेनस काशीविद्वत्परिषदि क्रमेणैव ख्यातिम् अर्जयामास। तस्य वैदुष्य-विद्यानुराग-निष्ठाभिः काशीहिन्दुविश्वविद्यालयस्य कुलपतयो मदनमोहनमालव्या समाकृष्टाः अभवन्। एतेन मालव्यस्य सादरम् आमन्त्रणेन पट्टाभिरामो विश्वविद्यालयस्य मीमांसाविभागस्य सहायकाध्यापकपदमलञ्चकार। तस्य विचार-वैदुष्यादिगुणैः सदैव मालवीयः प्रसन्नश्चासीत्। तेनैवोक्तं 'शास्त्रि! स्वयं तु अध्यापको न मन्येत, त्वं विद्यार्थी, वेतनं छात्रवृत्तिरूपेण स्वीकुरु। अतः अशन-वसन-चिन्तादिकं परिहाय स्वयमेव अद्वितीयमीमांसकत्वेन प्रतिष्ठापय' इति।

पट्टाभिरामस्य ख्यातिर्न केवलं काश्यामपि तु निखिलेऽस्मिन् भूभारते क्रमेणैव विस्तीर्यते। जयपुरराज्यस्य देओयानमहोदयस्यानुरोधाच्चिन्नस्वामिनः आदेशेन पुनः स काशीं परितत्याज। तत्र जयपुरस्थिते महाराजसंस्कृत-महाविद्यालये अध्यक्षपदमलङ्कृतं 1944 ख्रीष्टाब्दे। तत्र तस्यागमनेन महाविद्यालयस्याभ्युन्नतिरजायत प्रतिदिनम्। तस्य सत्प्रचेष्टया तत्र शास्त्रार्थ-सङ्गोष्ठी-नाट्याभिनय-मल्लाभ्यास-निबन्धलेखादिप्रतिस्पर्धायां तस्याभिरुचिः वर्धतेतराम्।

मण्डनमिश्रेण समं साक्षात्कारः पट्टाभिरामस्य जीवनस्य गुरुत्ववहोऽध्यायः। कृशकायस्तथा उन्नतवपुः गौरवर्णीयः स्वल्पवस्त्रधारी उन्नतललाटोपेतो यौवनमुपनीतः मण्डनमिश्रनामा कश्चनाध्येता शास्त्रिकक्षार्थं महाविद्यालयमाजगाम। तस्य शास्त्रप्रावीण्यं दृष्ट्वा आचार्यः पट्टाभिरामशास्त्री तं

प्रति समाकृष्टः सन् तस्मै मीमांसापठनाय आदिदेश। तेन सादरम् आदेशोऽयमङ्गीकृतः। शास्त्रानुरागात् स तदानीं महाविद्यालयापेक्षया शास्त्रिगृहे अधिकसमयं यापितवान्। तदाचारेण प्रसन्ना गुरुमाता शारदाम्बा स्वकीयगृहे स्थातुम् अनुमतिं प्रादात्। गुरुगृहम् अवस्थाय क्रमेणैव शिष्यभावः पुत्रभावरूपेण विपरिणतोऽभूत्। तयोः पुत्रो नासीत् परं चतस्रः एव कन्यकाः आसन्। मण्डनस्यागमनात् तयोः पुत्राभावजनितं दुःखं दूरीभूतं जातं किञ्चित्। क्रमेणैवस मीमांसाचार्यपरीक्षां साफल्येन समुत्तीर्य महाराजसंस्कृतमहाविद्यालयस्य अध्यापकपदमलंकृतवान् स।

गुरोरादेशात् आशिषा च स्वकीयवैदुष्येण मिश्रमण्डनेन कलिकाता-जयपुरादिविख्यातनगरीषु विख्यातसंस्कृतसम्मेलनादीनाम् आयोजनेनाभूतपूर्व-कीर्त्तिरर्जिता। दिल्ली-तिरुपति-एलाहावाद-जम्मुप्रदेशानां केन्द्रीयसंस्कृत-विद्यापीठानां प्राचार्यपदमप्यलंञ्चकार। तदनन्तरं दिल्लीस्थिते राष्ट्रिय-संस्कृत-संस्थानस्य निर्देशकरूपेण सारस्वतसेवायां व्यापृतोऽभूत् सः।

इत्थं जयपुरस्थिते राजकीयसंस्कृतमहाविद्यालये पट्टाभिरामः सारस्वतसाधनां कुर्वन्नासीत्अष्टवर्षाणि यावत्। तदानीं म.म.श्रीचिन्नस्वामि-शास्त्रिणां यशः आसमुद्रहिमाचलं सर्वत्रैव विस्तृतमभूत्। चिन्नस्वामिनो योग्योत्तरसूरित्वेन पट्टाभिरामो विश्ववन्द्यो वेदशास्त्रज्ञ इति मन्यते विद्वद्भिः। कलिकाताविश्वविद्यालयस्य मीमांसाध्यापकाभावात् कुलपतिद्वारायथासम्मानम् आमन्त्रितः पट्टाभिरामः 1918 ख्रीष्टाब्दस्य फेब्रुयारीमासे पदमिदमलंकृतवान्। वङ्गदेशस्य मीमांसाशास्त्रचर्चाक्रमेणैव क्षयिष्णुतां याति तदानीम्, परं शास्त्रिमहाभागस्य शास्त्रप्रेम्णा तन्निष्ठया चमीमांसाचर्चा पुनरेव तत्र जीवन्ती अदृश्यत। तत्र कलिकातायां षोडशवर्षाणि यावत् अध्यापनं कृतं तेन। अत्रैव तेन विभागाध्यक्षपदमप्यलञ्चकार शास्त्रिवर्य्यः। परं सम्पूर्णानन्दस्य कुलपतेः आग्रहवशादेव पट्टाभिरामः तस्मिन् विश्वविद्यालये अध्यापकरूपेण कार्यभारं गृहीतवान्। अस्माद्विश्वविद्यालयादेव अध्यापकजीवनादवसरं गृहीत्वापि आजीवनं सारस्वतसेवायां लग्नाः आसन् शास्त्रिणः। सम्पूर्णानन्दविश्वविद्यालयाद् अवसरग्रहणात् परमपि शास्त्रिमहोदयः आजीवनं काशीम् अध्युवास।

तस्यैव विद्याचर्चायाः फलरूपेण अस्मिन् वङ्गप्रदेशे बहवो मीमांसाशास्त्राध्यापकाः परवर्तिनि काले प्रख्यातिम् अर्जितवन्तः। पट्टाभिराम-शास्त्रिणः स्वतन्त्रैका विद्यावंशपरम्परासीदेव वङ्गभूमावस्याम्।

**सारस्वतसम्मानानि -**

तस्य विद्वत्ताया वाग्मिताया प्रशासनदक्षताया शास्त्रपारङ्गमताया निरन्तरं सारस्वतसेवायाः च स्वीकृतित्वेन भारतस्य प्रथमराष्ट्रप्रतिना राजेन्द्रप्रसादेन विद्यावारिधिना पट्टाभिरामो भूषितः। काञ्चीकामकोकोटिनमठस्य अनन्तश्री-विभूषितेन शङ्करावतारेण चन्द्रशेखरेण श्रीशङ्कराचार्येण 'शास्त्ररत्नाकरः' 'मीमांसान्यायकेशरी' चेत्युपाधिभ्यां सत्कृतः स खलु। जयपुरस्य महाराजेन जयसिंहेन विद्यासागरोपाधिनालंकृतः सः। 1962 ईशवीयाब्दे राष्ट्रपतिना महामहिम्नापद्मभूषणेन पट्टाभिरामः सम्मानितः[3]। उत्तरप्रदेशसंस्कृत-अकाडेमीद्वारा आदावेवसारस्वतसम्मानम् अवाप्तं तेन। वर्धमान्-विश्वविद्यालयतः डि-लिट् इत्युपाधिरपि तेनाधिगतः। सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य कुलपतिना 'महामहोपाध्याय' इत्युपाधिना विभूषितः सः।

आजीवनं केन्द्रीयसर्वकारस्य प्रादेशिकसर्वकारस्य, नैकविधशिक्षा-समितेस्तथा च सामाजिकप्रतिष्ठानानां, साहित्यिक-सांस्कृतिक-धार्मिक-वैदिक-सम्मेलनादीनां सदस्यपदम् अध्यक्षपदञ्चालञ्चकार शास्त्रिमहोदयः। 1981 ख्रीष्टाब्दे आगष्टमासस्य पञ्चदशदिनाङ्के केन्द्रियशिक्षामन्त्रणालयद्वारायोजिते संस्कृतदिवससमारोहे भारतसर्वकारेण मुख्यातिथिरूपेण आमन्त्रितः आसीत् अयं प्रकाण्डविद्वान्। तस्यैव महता प्रयत्नेन दिल्ल्यां लालबाहादुर-शास्त्रिराष्ट्रिय-संस्कृतविश्वविद्यालयः, अन्ध्रप्रदेशे केन्द्रीयसंस्कृत-विश्वविद्वालयश्च प्रतिष्ठापितौ। पुनश्च भारतसर्वकारेण तत्र तिरुपतौ प्रथमकुलपतिरूपेण नियुक्तोऽभूत्[4]।

**विद्यालयस्थापनम्-**

तदानीं काञ्चीकामकोटिमठस्य परमपूज्यपादाचार्याः श्रीशङ्कराचार्याः सामवेदरक्षणाय शास्त्रिणम् अनुरुन्धते स्म। शास्त्रिमहाभागं शङ्कराचार्यः

शिवावताररूपेणपश्यति। अतः तदादेशेनैववेदमीमांसाकेन्द्रं स्थापितम्, यत्र सस्वरं सामवेदाध्ययनं प्राधान्येनाभूदिति। एतदर्थं भारतवर्षस्य पञ्च विद्वांसः नियुक्तास्तेन। ते खलु न केवलं सामवेदनिष्णाताः, चापि सर्ववेदज्ञाः। ज्योतिषाध्ययनार्थमेव साहित्याध्ययनाय च अध्यापकद्वयमपि नियोजि शास्त्रिणा। यथाविधि शास्त्रानुसारं यथा शास्त्रचर्चा भवेदिति विचिन्त्य तद्विद्यालय-परिचालनार्थं भारतवर्षस्य विदुषाम्स्वच्छतया नियोगार्थम् एका समितिरपि प्रतिष्ठापिता तेन। समितेरस्या अध्यक्षत्वेन पट्टाभिरामेण मण्डनमिश्रो नियुक्तः। आजीवनमेव प्रकारेणानेन संस्कृतचर्चाया अभ्युन्नतये शास्त्रिणोऽवदानम् अनस्वीकार्यमिति निश्चप्रचम्। तस्यैव निर्देशेन संस्कृतस्योन्नतौ राजस्थानप्राच्यविद्यासमितिः, राजस्थानसंस्कृतनिर्देशालयश्च प्रतिष्ठापितौ। किञ्च, तस्यैव परिकल्पनया बङ्गप्रदेशे अखिलभारतीयसंस्कृतसाहित्य-सम्मेलनम् आयोजितम् इति। एतेन संस्कृतं प्रति तस्यानुगत्यं सिद्धमिति।

**सारस्वतपरिवाराः-**

शास्त्रिणः परिवारः पूर्णतया सारस्वत एव। पट्टाभिरामस्यार्धाङ्गिनी खलु श्रीशारदाम्बा नाम्नैव परं वैदुष्येण सा सरस्वतीति। सा खलु बहुभाषासु पारङ्गता। गुरुसान्निध्येन दर्शन-धर्मशास्त्रयोः मातुः वैदुष्यमतुलनीयमिति प्रतिभाति। चतस्रः कन्यकाः विद्यन्ते तयोः। ताः यथा–विजया, सरस्वती, सावित्री, शान्तिदेवी चेति। यथा शास्त्रिणः प्रत्येकं कन्याः आसन् विदुष्यस्तथैव जामातारश्च विद्वांसः। ते च यथा - सि.आर. श्रीनिवासनः, ए.आर्. रामनाथनः, एम्.सि.जयरामनः, तथा च उपेन्द्रनश्चेति। एते चत्वारः स्वकीयविद्याचर्चायां प्रतिष्ठाने च प्रख्याताः।

**शिष्यसम्प्रदायाः -**

पट्टाभिरामशास्त्रिणां निखिलपरिवारसदस्याः सारस्वतचर्चायां नियोजिताः। चतसृभिः कन्यकाभिः सह शास्त्रिणः कश्चन पुत्रोऽपि वर्तते। शास्त्रानुसारं वंशो द्विधा विभक्तः - विद्यया जन्मना चेति। अस्यां विद्यापरम्परायां श्रीमण्डनमिश्रस्याविर्भावः। प्राचीनर्षिपरम्परानुसारं विद्यापुत्रस्य ये गुणाः अपेक्ष्यन्ते, ते सर्वे मण्डनमिश्रस्य जीवनेन सह सम्पृक्ताः। मण्डनमिश्रः खलु

पट्टाभिरामशास्त्रिणः योग्यशिष्योऽपि तं विहाय शास्त्रिणः शिष्यपरम्परायां नैकेषां विदुषां नामानि संश्रूयन्ते। ते च यथा – महान् मीमांसकस्तथा अखिलशास्त्रविद् गजाननशास्त्रिमुसलगाँवकरः, मीमांसकाचार्यः बुद्धिसागरशर्मा, साहित्याचार्यः देवर्षिकलानाथभट्टः, वर्धमानविश्वविद्यालयस्य संस्कृतसंकायस्य प्रतिष्ठात्राचार्यः प्रो. गोपालनाथभट्टाचार्य्यः, वेदशास्त्रज्ञः प्रो. समीरणचन्द्रचक्रवर्ती, प्रो.अमरकुमारचट्टोपाध्यायः, अक्सफोर्डविश्वविद्यालयस्य अध्यापकचरस्तथा दार्शनिकः विमलकृष्णमोतिलालः, ड. मुकुन्दमाधवशर्मा, शिवाजी-उपाध्यायः, वाचस्पत्युपाध्यायः, भवानीप्रसादभट्टाचार्यश्चेति मुख्याः।

## विद्वत्स्मृतौ प्रतिष्ठानानि प्रकाशिता ग्रन्थाश्च

१.Shri Pattabhiram Shastri Veda-mimamsa Anusandhan Kendra, Varanasi, Uttar Pradesh,1973, Hanuman Ghat, B4/7A, Varanasi.[5]

२. P. N. Pattabhiram Shastri Library Hall, Rastriya Sanskrit University, Tirupati.[6]

३. MM. Padmabhusan Sri P.N. PattabhiramSastri Commemoration Volume, 1993, Rastriya Sanskrit Vidyapeeth, Tirupati, by Mahadeva Sharma.[7]

४. महामहोपाध्याय श्री पी.एन. पट्टाभिरामशास्त्री- मुरलीधरपाण्डेयः

५. Mm. Pandit P. N. Pattabhiram Shastri.

६. स्मृतिपुष्पाणि- प्रो.वटुकनाथशास्त्री

७. स्वर्गीय-प.श्री पी. एन्. पट्टाभिरामशास्त्रिणां पुण्यस्मृतौ हृद्यपद्यनिबन्ध– श्रद्धाञ्जलिः- शिवजी उपाध्यायः।

## शास्त्रिणा प्रणीताः सम्पादिताश्च ग्रन्थाः टीकादयश्च

अध्ययनाध्यापनयोस्तस्य यादृशी रुचिर्जायते ग्रन्थप्रणयने, सम्पादने, व्याख्यालेखने, टीकादिप्रणयने, पत्र-पत्रिकासु निबन्धनप्रणयने च तादृशी एव। 'मानुषः क्षण एकोऽपि लभ्यते स्वर्णकोटिशतैः' इत्यनुसारं पट्टाभिरामशास्त्रिभिः

क्षणोऽपि कालो न व्ययितः शास्त्राध्ययनं विना। शास्त्राध्ययनाय तैः आजीवनं व्ययीकृतम्। निरवच्छिन्नतया स्वजीवद्दशायां बहुशश्चिन्तितं लिखितञ्चेति।एतेन नैके ग्रन्थाः प्रणीताः, सम्पादिताः टीकाश्चापि काश्चित् प्रणीताश्च। तेषु मुख्यानामालोचनमत्र सन्निविश्यते-

**क). यज्ञतत्त्वप्रकाशः-**

चिन्नस्वामिशास्त्रिकृतः ग्रन्थोऽयन्तु मोतिलालवेनारसीदासाख्य-प्रतिष्ठानतः प्रकाशितः। अग्न्याधेयादिचातुर्मास्यान्तहविर्यागादिर्न्यरूपि ग्रन्थेऽत्र। ग्रन्थस्य भूमिकायामादौ चिन्नस्वामिनः परिचयः प्रदीयते पट्टाभिरामेण। ग्रन्थेऽस्मिन् को नाम यज्ञः, यज्ञानां भेदाः, तेषां नामानि, का नाम सामिधेनी, को वा दर्शपूर्णमासः हविर्यागश्चेत्यादयः विषयाः सम्यक्तयालोचिताः वर्तन्ते। ग्रन्थस्यास्य भागत्रयेण विभाजनञ्चकार पट्टाभिरामः। तत्र प्रथमे भागे तावन्मङ्गलाचरणाचरनाद् अनन्तरम् अग्न्याधेय-गार्हपत्याधान-पवमानेष्टि-प्रयाजानुयाजाग्निहोत्राग्रयणेष्टादयश्च चालोच्यन्ते। मङ्गलाचरणे तदभीष्टं देवं क्षेमङ्करशङ्करं स्तौति ग्रन्थकारः।

"चञ्चच्चन्द्रकलानिरन्तरवहत्पीयूषधारोक्षितो
गङ्गोतुङ्गतरङ्गभङ्गनिवहक्लिद्यत्कपर्द्दोज्ज्वलः।
कल्याणैकनिधिर्जगत्यसुमतां तापत्रयोन्मूलनं
कुर्वञ्च्छ्रेय इहादधातु जगतां क्षेमङ्करश्शङ्करः ॥ १ ॥
जगत्स्थिरत्युद्भबलया यत्प्रसादादनेकधा।
तं नौमि परमात्मनं यज्ञेशं यज्ञरूपिणम् ॥ २ ॥
यज्ञानां प्रक्रिया ह्येषा हृषिमानमुपागता।
उद्धर्तुमेनां यत्नोऽयं प्रीणन्तु सुधियोऽमुना" ॥ ३॥[8]

द्वितीये भागे सोमयागस्य तथा च सोमसंस्थादीनां वर्णनं दृश्यते। अन्तिमे सौत्रामणि-राजसूय-अश्वमेधाश्चालोचिताः। वेदचर्चायां ग्रन्थः खलु अद्वितीय इत्यत्र नास्ति संशयः।

## ख). तौतातिकमततिलकम्-

भवदेवविरचितो ग्रन्थोऽयन्तु चिन्नस्वामिशास्त्रि-पट्टाभिरामशास्त्रिभ्यां भागत्रयेण सपाठं विमर्शः सम्पादितः। तत्र प्रथमो भागः 1939 ख्रीष्टाब्दे, द्वितीयो भागः 1942 ख्रीष्टाब्दे, तृतीयो भागः 1945 ख्रीष्टाब्दे प्रचरद्रूपताम् इतः। तौतातिकमततिलकम् इति ग्रन्थस्य स्थानं मीमांसादर्शने प्रामुख्यं वरीवर्ति। मूलतः तन्त्रवार्त्तिकं प्राधान्येन व्याख्यातुकामेन सम्पादितोऽयं ग्रन्थः।

साम्प्रतं तन्त्रवार्त्तिकस्य टीकात्रयं समुपलभ्यते- क) परितोषमिश्रस्य अजिता, ख) भट्टसोमेश्वरस्य न्यायसुधा, ग) भवदेवभट्टस्य तौतातिकमततिलकम् चेति। अजिताख्यां टीकामवलम्ब्य भवदेवो ग्रन्थमिमं लिलेख। तत्र भूमिकांशे ग्रन्थकारविषये, तत्प्रणीतग्रन्थादिसन्दर्भे, ग्रन्थकृतः समयविषये च काचिद्धारणा दीयते सम्पादकैः। ग्रन्थस्य प्रथमाध्यायस्य द्वितीये पादे चत्वारि अधिकरणानि, तृतीयपादे एकादशाधिकरणानि, चतुर्थपादे विंशत्यधिकरणानि च वर्तन्ते। द्वितीयाध्यायस्य प्रथमे पादे अष्टादशाधिकरणनानि वर्तन्ते। द्वितीये पादे द्वादशाधिकरणानि, तृतीये पादे चतुर्दशादिकरणानि, चतुर्थपादे अधिकरणद्वयञ्च विद्यन्ते। तृतीयाध्यायस्य प्रथमे पादे पञ्चदशाधिकरणानि, द्वितीये पादे विंशत्यधिकरणानि, तृतीये पञ्चदशाधिकरणानि, पञ्चमे एकोनविंशत्यधिकरणानि, षष्ठे च षोडश अधिकरणानि, सप्तमे चतुर्विंशत्यधिकरणानि, अष्टमे विंशत्यधिकरणानि च वर्तन्ते।

## ग). ताण्ड्यमहाब्राह्मणम्-

सामवेदीयताण्ड्यमहाब्राह्मणस्य द्वितीयभागः श्रीकाशीहिन्दु-विश्वविद्यालयस्य प्रधानमीमांसाध्यापकैः वेदज्ञैः मीमांसाचार्यैः पण्डितप्रवरैः श्रीचिन्नस्वामिशास्त्रिभिः भूमिकाटिप्पण्यादिभिः सह संशोधितः। काशीसंस्कृत-सीरिजपुस्तकमालायां सायणभाष्येण समं चौखम्बासंस्कृतसीरिजप्रकाशनीतः जयकृष्णदासेन च प्रकाशितमिदं पुस्तकम्।

ग्रन्थस्यास्य भूमिकांशे सामवेदस्य ब्राह्मणविषये आलोचनं चकार सम्पादकः। सामवेदस्य ब्राह्मणानां नामान्युल्लिखितानि तत्र क्रमेणैव। ब्राह्मणग्रन्थस्य भाष्यादौ सायमाचार्यैरुल्लिखिता पंक्तिरप्युद्धृता-

'अष्टौ हि ब्राह्मणग्रन्थाः प्रौढब्राह्मणमादिमम्।
षड्विंशाख्यां तृतीयं स्यात् ततस्यामविधिर्भवेत्।
आर्षेयं देवताध्यायो भवेदुपनिषत्तत्।
संहितोपनिषद्वंशो ग्रन्था अष्टावुदीरिता'॥

नाम्नः प्रवृत्तिनिमित्तांशे ताण्ड्यनामकरणविषये कथ्यते- ताण्डिनामकेन ऋषिणा सामवेदाचार्येण दृष्टं ब्राह्मणमिति ताण्ड्यम्। अत्र पञ्चविंशत्यध्यायाः समलसिताः इति कृत्वा पञ्चविंशतिब्राह्मणमित्यपि व्यपदेशः।प्रतिपाद्यविषये कथ्यते यद् अत्रैव अग्निष्टोमसंस्थाकं ज्योतिष्टोममारभ्य सहस्रसंवत्सरसाध्याः सोमयागा अनुक्रमेण विहिताः। तदङ्गभूतानि यानि सामवेदीयान्यङ्गानि, स्तोत्राणि, तत्तत्संख्याविशेषाः स्तोमाः, तेषां विष्टुतिप्रकाराः स्तोमभागाश्चेत्यादीनि सर्वाणि विहितानि। स्तोमप्रकारविषये, वेदोक्तकर्मणां चातुर्विध्यविषये, यागादीनां प्रकृतिविकृतिविषये, इष्ट्यादिनामङ्गाङ्गिभावविषये, कर्मणां नित्यत्वादि-विभागप्रसङ्गे, सामवेदस्य सर्वेषां ब्राह्मणविषये च विस्तृतमालोचनं दृश्यते।ततश्च ताण्ड्यमहाब्राह्मणद्वितीयभागान्तर्गतविषयगता सूची प्रदीयते स्म सम्पादकैः पट्टाभिरामशास्त्रिभिः।

### घ). शतपथब्राह्मणम्-

शुक्लयजुर्वेदान्तर्गतं माध्यन्दिनशाखीयं पुस्तकमिदन्तु महामहोपाध्याय-चिन्नस्वामिशास्त्रि-पट्टाभिरामशास्त्रिभ्यां सम्पाद्य चौखम्बासंस्कृतसंस्थानतः 1954 ख्रीष्टाब्दे प्रकाशितम्। हविर्यागाख्ये प्रथमे काण्डे "ओम् व्रतमुपैष्यन्" इत्यनेन ग्रन्थस्यारम्भो जातः। अत्र पूर्णमासादियागः आलोचितः। तत्र प्रथमे काण्डे सप्त प्रपाठकाः विद्यन्ते। एकपान्नामके द्वितीये काण्डे प्रथमे प्रपाठ-काण्डान्तर्गते प्रथमे ब्राह्मणे अग्न्याधेयम्, पुनराधेयम्, अग्निहोत्रम्, अग्न्युप-स्थापनम्, पिण्डपितृयज्ञः, आग्रयणेष्टिः, दाक्षायणयज्ञश्चातुर्मास्यादीनि काण्डे

अभिधीयन्ते। अध्वरमित्याख्ये तृतीये काण्डे, तथा च ग्रहनामके चतुर्थकाण्डे अग्निष्टोमाख्यः सोमयागश्चालोच्यते। वैदिकयज्ञप्रक्रियायां सोमयागस्तु मूर्ध्नि राजते। तस्य खलु सोमयागस्य सप्त संस्थाः विद्यन्ते। तत्र अग्निष्टोमोऽन्यतमः प्रसिद्धश्च।

## घ). आपस्तम्बश्रौतसूत्रम् (धूर्तस्वामिभाष्यसमेतम्)-

कृष्णयजुर्वेदस्यापस्तम्बशाखायाः श्रौतसूत्रमिदन्तु धूर्तस्वामिभाष्योपेतं महामहोपाध्यायैः शास्त्ररत्नाकरैः पण्डितप्रवरैः अध्यापकैः चिन्नस्वामिशास्त्रिभिः समं पट्टाभिरामः युग्मतया सम्पादयामास। ग्रन्थोऽयं ओरियेन्टाल-इन्सटियुट् इत्यतः प्रकाशित 1963 खीष्टाब्दे। अत्र चातुर्मास्य-पशुहोत्र-चातुर्मास्यहोत्र-प्रायश्चित्तादीनि चालोच्यन्ते ग्रन्थकारेण पट्टाभिरामेण व्याख्यया समम्। तत्र प्रथमे चाष्टमे पटले उपलभ्यते -"अक्षय्यं ह वै चातुर्मास्य-याजिनस्सुकृतं भवति (1)" इत्यादिना पाठेनैव ग्रन्थस्य समारम्भो जातः। पादटीकायां रुद्रदत्तादीनां मतानि चालोच्यन्ते।

## ङ). तन्त्ररत्नम् (पार्थसारथिमिश्रविरचितम्)-

ग्रन्थोऽयन्तु सरस्वतीभवनग्रन्थमालायां पट्टाभिरामस्य सम्पादनायां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयतः 1979 खीष्टाब्दे प्रकाशितः। मीमांसा-सूत्राणामर्थस्फुरणाय शावरभाष्यस्य गुरुत्वमनस्वीकार्यमेव। एतदाधारीकृत्य – क). षष्ठखीष्टशताब्दीस्थितेन गुरुनाम्ना प्रसिद्धेन प्रभाकरेण, ख). सप्तमखीष्ट-शताब्दीस्थितेन कुमारिलभट्टेन ग). द्वादशखीष्टशताब्दीस्थेन मुरारिमिश्रेण चेति त्रिभिष्टीकाकृद्भिः क्रमशो भाट्टमतं, गुरुमतं, मुरारिमतं चेति त्रयः सम्प्रदायाः प्रवर्तिताः। यत्र प्रभाकरेण बृहत्याख्यटीकायाः शाबरभाष्यसिद्धान्ता एवानुमोदिताः, तत्र कुमारिलेन क्वचित् क्वचित् भाष्यसिद्धान्तप्रत्यादेशपूर्वकं स्वकीयं निरवग्रहमतमपि प्रतिष्ठापितम्। कुमारिलेन शाबरभाष्यमुपरि या टीका व्यरचि, सा च भागत्रयेण समाप्तिमानीता।टीकाया: आद्यो भाग: श्लोकवार्तिकम् इति परिचीयते। श्लोकवार्त्तिके जैमिनिसूत्रस्य प्रथमाध्यायगतं प्रथमपादपर्यन्तमेव समवतिष्ठते। तन्त्रवार्त्तिकाख्यो द्वितीयो भागः प्रथमाध्यायगताद् द्वितीयपादाद्

आरभ्य तृतीयाध्यायं यावद् विराजते। टुप्टीकाख्यस्तृतीयो भागो यद्यपि द्राघीयाश्च चतुर्थाध्यायतो द्वादशाध्यायं यावत् समुद्भासते, तथापि तृतीयभागस्यास्य व्याख्यानं पूर्वभागद्वयवद् विस्तृतं नास्तीति विभाव्य त्रयोदशखीष्टशताब्द्याः पूर्वभवेन यज्ञात्मानन्देन मैथिलेन श्रीमता पार्थसारथिमिश्रेण तत्र तन्त्ररत्नाख्या कृता व्याख्या। स्वपितुः सकाशादेव तेन समधिगता विद्येति न्यायरत्नमालायाश्चरमेण पद्येन विज्ञायते-

भुवनत्रयविख्यात-श्रीमद्यज्ञात्मनन्दनः।
तत एव श्रुतं प्राप्य विश्रुतः पार्थसारथिः॥[9]

तदिदं पार्थसारथिमिश्रविरचितं तन्त्ररत्नं सप्तशतवर्षेभ्यः अनन्तरं 1930 तमे ख्रीष्टाब्दे चतुर्थाध्यायगतस्य द्वितीयपादस्य द्वाविंशतिसूत्रं यावद् महामहोपाध्यायैः डा०गङ्गानाथझामहोदयैः प्रथमभागः सरस्वतीभवनग्रन्थमालाया एकत्रिंशत्प्रसूनतया सम्पादितः। पञ्चमाध्यायस्य द्वितीयपादस्य ऊनविंशतिसूत्राणि यावत् द्वितीयभागरूपेण पण्डितगोपालशास्त्रिणा समपादि।इयं टुप्टीका पार्थक्येन न मुद्रिता।तन्त्ररत्नाख्यव्याख्यायामेव सा कार्त्स्न्येन समावेशिता। तज्ज्ञानार्थमेव तत्र लघुकोष्ठकैष्टुप्टीकांशः कुण्डलितोऽभूत्।

पार्थसारथिमिश्रस्य महद्वैशिष्ट्यमेतद्यत् टुप्टीकया सार्धसमन्वयम् आतन्वती तेन स्वकीया व्याख्या तथा कौशलेन वितता यथा टुप्टीकायास्ततः पार्थक्यं न विभाव्यते सरलतया। तन्त्ररत्ने क्वचित् क्वचित् टुप्टीका-वाक्यसंघातानाम् आद्यांशो व्याख्यायते, ततो वाक्यमध्यमांशं हित्वाऽन्तिमांशो व्याख्यायते। तदनु पर्यन्ते समुज्झिता मध्यमांशा अपि विश्लिष्यन्ते।

इदं नाम तन्त्ररत्नं भट्टकुमारिलप्रणीतटुप्टीकायाः शाबरभाष्यव्याख्याया व्याख्यानरूपम्। पट्टाभिरामशास्त्री सरस्वतीभवनस्थेन हस्तलेखद्वयसाहाय्येन टुप्टीकामुद्रितपुस्तकाधारेण च पाठनिर्धारणपूर्वकं विविधाभिष्टिप्पणीभिर्भूमिकया च समलङ्कृत्य सम्पादितवान् ग्रन्थमिमम्। तत्र ग्रन्थस्य निवेदनांशे स गोपीनाथकविराज-गोपालशास्त्रि-रामचन्द्रदीक्षितमहाभागेभ्यः कार्तज्ञं विज्ञापितवान्। रामनाथदीक्षितमहाभागस्यादेशेन आदिष्टः सन् ग्रन्थस्यास्य

सम्पादने आत्मानं नियोजितवान् पट्टाभिरामः[10]। अतिगम्भीरस्य भट्टपाद-वार्त्तिकमुपरि ग्रन्थसम्पादनं न हि साधारणं कर्म। पुनस्तत्र टुप्टीकाया अतिसंक्षिप्तांशस्य विस्तृतिः अनितरसाधारणशक्तिसम्पन्नेन तेन विहिता।

तत्र प्रथमाध्यायस्य प्रथमे पादे आ-अर्थलोभाद्बाधाधिकरणतः चरोः स्थाल्यां पाकाधिकरणपर्यन्तं एकादश अधिकरणानि वर्तन्ते। द्वितीये पादे आकृष्णलचरौ पाकानुष्ठानाधिकरणाद् वार्त्तिकमतेनश्रवणप्रतिप्रसवाधिकरणं यावत् चतुश्चत्वारिंशद् अधिकरणानि प्राप्यन्ते। तृतीये पादे आविकृतिषु उपदिष्टैः एकादशप्रयाजादिभिः इतरेषां प्राकृतगुणानाम् अधिकरणाद् यजुर्युक्ताधिकरणं यावद् विंशतिः अधिकरणानि वर्तन्ते। चतुर्थे पादे आनक्षत्रेष्टौ उपहोमनारिष्ठाना समुच्चयाधिकरणाद् याज्यपुरोऽनुवाक्याधिकरणं यावत् विंशत्यधिकरणानि वर्तन्ते। पञ्चमे पादे षड्विंशत्यधिकरणानि, षष्ठे द्वाविंशत्यधिकरणानि, सप्तमे विंशत्यधिकरणानि, अष्टमे सप्तदश अधिकरणानि च वर्तन्ते। एकादशाध्यायस्य प्रथमे पादे नव अधिकरणानि, द्वितीये पादे चतुर्दश अधिकरणानि, तृतीये पादे पञ्चदश अधिकरणानि, चतुर्थे पादे अष्टादश अधिकरणानि, द्वादशाध्यायस्य प्रथमे पादे एकवंशत्यधिकरणेषु पशुपुरोडाश-दीक्षणीयेष्टि-सौमिकेष्ट्यादीनि चालोच्यन्ते। द्वितीये पादे पञ्चदशसु अधिकरणेषु गार्हपत्यादेः श्रौतकर्ममात्रार्थ-ताधिकरणानि चालोच्यन्ते। तृतीये पादे षोडशाधिकरणानि लसन्ति। अत्र ब्राह्मणविहितानां मन्त्राणां समुच्चयाधिकरणानि विद्यन्ते। चतुर्थे च पञ्चदश अधिकरणानि वर्तन्ते।

**च). प्रमाणमञ्जरी -**

तार्किकचूड़ामणेः सर्वदेवस्य प्रमाणमञ्जरी राजस्थानपुरातत्त्वमन्दिरतः 2010 सम्बत्सरे प्रकाशिताभूत्। सर्वदेवाचार्यैः विरचितोऽयं ग्रन्थः वैशेषिकदर्शनस्य प्रमाणभूतो प्राचीनप्रकरणग्रन्थश्च। बलभद्रमिश्र-अद्वयारण्ययोगि-वामनभट्ट-विरचित-व्याख्यात्रयसमन्विता प्रमाणमञ्जरी सम्पादिता पट्टाभिरामशास्त्रिमहाभागैः।

बलभद्रमिश्रेण केशवमिश्रप्रणीतायाः तर्कभाषायाः 'तर्कभाषाप्रकाशिका' लघ्वी च व्याख्या कृता, या तु पुणास्थिते भाण्डारकर-प्राच्यविद्या-प्रतिष्ठाने संरक्षिता राजकीयग्रन्थसंग्रहे सुरक्षिता चेति। तत्र व्याख्यायामपि आद्यः श्लोको हि-

'आदिविष्णुदासतनूजेन बलभद्रेण तन्यते।
ध्यात्वा विष्णुपादाम्भोजं तर्कभाषाप्रकाशिका।
अन्तविष्णुदासतनूजेन माध्वीपुत्रेण यत्नतः।
अकारि बलभद्रेण तर्कभाषा प्रकाशिका'[11]॥

बलभद्रमिश्रः संवत्सरे 1667 वर्षे भाद्रवासुदि चतुर्दशदिने सोमवासरे जनिं लेभे[12]। शिवादित्यस्य सप्तपदार्थी सर्वदेवसूरिणः प्रमाणमञ्जरीति वैशेषिकदर्शनस्य विशिष्टौ समकोटिकौ ग्रन्थौ। यत्र वैशेषिकसूत्रे प्रतिपादितानां षण्णां पदार्थानां स्थले सप्तपदार्थाः प्रथमतया प्रतिपादिता वर्तन्ते। प्रमाणमञ्जर्याः सुप्राचीनो हस्तलिपिः काश्मीरतः संगृहीतः ब्युलार्-महोदयैः। प्रमाणमञ्जरी-ग्रन्थस्योल्लेखः आदावेव न्यायबिन्दुशुद्धिग्रन्थे प्राप्यते। अस्य न्यायबिन्दुशुद्धौ प्रणेता तु वेङ्कटनाथवेदान्ताचार्यः[13]।

**छ). संस्कारविज्ञानम्-**

पुस्तकमिदन्तु राजस्थानप्रदेशस्य विरला-एकाडेमि-प्रतिष्ठानस्य तत्त्वावधानेनविद्याधरद्विवेदिसाहित्याचार्येण सम्पाद्यपट्टाभिरामवेदमीमांसानु-सन्धानकेन्द्रद्वारा प्रकाशितम्। भारतीयसंस्कृतेः परिचयज्ञापनार्थं विहित-संस्कारादीनां तत्त्वज्ञानलाभाय च मीमांसा-न्याय-पद्धतीनां परिचयज्ञानम् आवश्यकमिति कृत्वा कतिपयानां मीमांसाशास्त्रगतानां परिभाषाणां विवेचनं 'विषय-प्रवेशः' इति नाम्ना उपन्यस्तम्। पारस्कर-आपस्तम्ब-आश्वलयनाचार्यादीनां मीमांसा-न्याय-माध्यमेन निर्णीता विषयाः स्वकीयसूत्रेण निबद्धाः। विषयप्रवेशांशे यावन्तः पदार्थाः विद्यन्ते ते तु गुरुवचनेन संकलिताः।

ग्रन्थस्यास्य कः खलु विषयः? ये खलु संस्कारास्ते श्रौतकर्ममूलका एव। श्रौतकर्म तु मीमांसा-न्यायसम्बन्धि एव। तन्मूलकस्तावत् स्मार्त्तसंस्कारः। वादविवादचर्चयोर्मध्ये पार्थक्यं दृश्यते खलु। सर्वत्रैव पक्षद्वयं समस्ति। तत्र खलु चर्चायां पक्षद्वयमेव प्रमाणत्वेनाङ्गीचकार ग्रन्थकृत्। वादविवादयोः नैकविधानाम् अङ्गीकारो ह्युपलभ्यते। तत्र प्रथमपक्षीयाः मीमांसाशास्त्रसम्मताः, अन्ये च न्यायप्रमाणशास्त्रीयाः। पुस्तकेऽस्मिन् शास्त्रद्वयं समुपन्यस्तम्। ग्रन्थेऽस्मिन् विषयप्रवेशांशे भारतवर्षस्य स्वरूपम्, भारतीयानामैक्यम्, ज्ञानकर्मणोः समन्वयः, पाश्चात्त्यरीत्या वेदसंस्कारानामावश्यकतादिश्चोल्लिखितो वर्तते। जातकर्म-नामकरण-अन्नप्राशन-चूडाकर्मादीनां षोडशसंस्कारादीनामालोचनं यथाशास्त्रम् आपस्तम्बसूत्रानुसारतः क्रियते ग्रन्थकृत्।

## ज). मीमांसा-कौस्तुभः-

वेदमीमांसासूत्रमुपरि काचन विस्तृता टीका तावन्मीमांसाकौस्तुतः। पूर्वोत्तरमीमांसाशास्त्रज्ञेन श्रीमता खण्डदेवेन विरचितो ग्रन्थोऽयमतीव जनप्रियः। ग्रन्थस्यास्य भूमिकायां तेषामध्ययनकाले ग्रन्थाभाव आसीदिति मन्तव्यम्। कालेन मद्रपुरीसंस्कृतमहाविद्यालये अध्ययनार्थं क्वचिद्भाट्टदीपिका-पंक्तिषूत्पन्नानां संशयानामुच्छेदार्थञ्च Adyar Library इत्यतः स्वहस्तेन लिखित्वैव प्रकाशितोऽयं ग्रन्थः इति श्रूयते।

अयं ग्रन्थः स्वतन्त्रसूत्रव्याख्योपेतोऽपि भाट्टदीपिकाया व्याख्यारूपः। अस्यैव ग्रन्थस्य खलु परिमार्जितं तथा संक्षिप्तं रूपं तावद्भाट्टदीपिका नामेति। नवीनं पन्थानमाश्रित्य ग्रन्थमिममारचयता ग्रन्थकर्त्रा न केवलं नवीनानां शास्त्रान्तरपरिशीलनपरिपक्वशेमुषीणां मनीषिणां मनस्तोषितम्, मीमांसापदार्थाः तत्र तत्र सर्वे सन्निवेशिताः यथा कस्यचित् पदार्थस्य परिज्ञानार्थम् अन्यग्रन्थावलुलोकयिषा नोदियात्। भाट्टमतमवलम्ब्य ग्रन्थमिमं रचितवताऽनेन मीमांसाशिरोमणिना शबरकुमारिलभवदेवपार्थसारथिसोमनाथाप्पयदीक्षितादिभिः युक्तयो युक्तियुक्ता न काश्चिदप्युपेक्षिताः अनुक्तिसहा न काश्चिदपि न समालोचिताः। तदानीन्तन एवाभियुक्तानां मीमांसापारदृश्वनायुक्तिः 'यदि

कण्ठस्था खण्डदेवग्रन्थत्रयी किमन्यैर्ग्रन्थैरिति नाऽतिशयोक्तिः'इति प्रचलिता वर्तते। अनन्तरं तत्र कथं ग्रन्थसम्पादने अङ्गीचक्रिरे इति विषये सम्यक्तया भणितमेव चिन्नस्वामिना। ग्रन्थस्य सम्पादने ते मातृकाणामुपयोगञ्चक्रुरिति तु कथ्यते।

1. अडियार्-पुस्तकालयः

2. माद्रास-ओरियेन्टल्-म्यानास्क्रिप्ट्-लाइब्रेरी

3. पण्डितकुलभूषणैः राजकीयमहाविद्यालयाध्यक्षैः पण्डितगोपिनाथकविराज-महोदयैः पुस्तकालयाद् सदयं दापितमेव।

4. बाबुदीक्षितजड़ेमहोदयेभ्यो गृहीतमेकम्।

तदनन्तरं ग्रन्थकर्तृसमयो निर्णीतः। अत्र ग्रन्थनिर्मातुः सर्वतन्त्रस्वतन्त्रस्य पण्डितकुलललामभूतस्य देवकुलोत्पन्नस्य दाक्षिणात्यप्रदेशस्य श्रीखण्डदेवस्य कालस्तावत् 1665 ख्रीष्टाब्दः इति कथ्यते। तदनन्तरं श्रीखण्डदेवेन विरचितानां ग्रन्थानां नामान्युपलभ्यन्ते। मीमांसाकौस्तुभगतानाम् अधिकरणानां सूची प्रदीयते। सूत्रादीनां सूच्यपि प्रदीयते।

## झ). त्रिपुरोपनिषद्

ग्रन्थोऽयन्तु ऋग्वेदस्य शाङ्खायनशाखासम्पृक्तः। श्रीरामानन्दसाधकैः श्रीभास्कराचार्यैश्च विरचिताभ्यां भाष्याभ्यां समुपेता त्रिपुरोपनिषदिति पट्टाभिरामेण सम्पादिता 1981 ख्रीष्टाब्दे वाराणसेयात् पट्टाभिरामशास्त्रिवेदमीमांसानुसन्धान-केन्द्रात् प्रचद्रूपतां गता अखिलभारतीयसंस्कृतशिक्षासम्मेलनशाखात्मकस्य अंशरूपेण। गौरीनाथशास्त्री ग्रन्थस्यास्य प्रस्तावनांशे त्रिपुराविषये, अस्या शाखाविषये तथा च सम्पादकस्य साफल्यविषये उक्तवान्- 'Pt. Pattabhiram Shastri, the Director of the Institute, which was open in 1973 by His Holiness Shri Jayendra Sarasvati of Kanchi-Kama—Kothi-

Pith, has been taking active interest in building it up on proper lines. This Upanishad is available in the Shankhya-yana recension of the Rigveda in which Tripura, the Primal Power having two aspects, immanent and transcendent, is described. Tripura is the source of this Universe She is the cream of all the knowledge contained in the Upanishad. She is identical and conter-minous with Shiva. The literature on Tripura is very rich. Tripura is a popular deity with the teachers of monistic philosophy. The Commentary is lucid and furnishes useful explanations of many an intricate point of the system. I wish the Director success -in his future program and have only praises for the work that he has done'.[14]

वटुकनाथशास्त्रिमहाभागैः विरचितात् 'किमपि प्रास्ताविकम्' इत्यंशात् टीकाकारद्वयस्य विषयेऽपि काचिद्धारणाप्यते। तत्र तेनोक्तम् 'प्रथमं भाष्यं श्रीपरमहंसपरित्राजकश्री-राघवानन्दतीर्थयोगीन्द्र-शिष्यश्रीरामानन्दविरचितम्।प्रायः सार्धशतकात् शतकद्वयाद् वा पूर्वं लिखितमिति यथोपलब्धैः प्रमाणैरवगम्यते। चोल-द्रविडप्रदेशे स्थलविशेषे च कृतवसतिरसौ लेखक इति ज्ञायते।

द्वितीयन्तु भाष्यं सप्तदश्यां शताब्द्यां लब्धप्रतिष्ठैः श्रीभास्कररायसूरिभिः विरचितमस्ति। एतद्भाष्यं बहोःकालात्पूर्वं 'कलकत्तातान्त्रिकसीरीज्-ग्रन्थमालायां मुद्रितमपि सम्प्रति सर्वथा दुर्लभमेवाऽऽसीत्।प्रथमन्तु भाष्यमिदानीं प्रथमत एव प्रकाश्यते। आश्रमधर्माणां सामान्यधर्मत्वमपि सूचितम्'[15]। ग्रन्थस्य सम्पादनशैलीविषये तेनागादि -'मीमांसान्यायानुसारिणी च विमर्शशैली विषयस्य पूर्वापरसम्बन्धं विशदीकृत्य सिद्धान्तमवगमयति। स्थले स्थले च जिज्ञासूनां कृते पट्टाभिरामशास्त्रिवर्येण मीमांसान्यायादयः टिप्पण्यां स्फुटीकृताः सन्ति'[16]। किञ्चिन्निवेदनांशे तत्र शास्त्रिणा वटुकनाथशास्त्री धन्यवादशतैः परिपूरितम्, तथा च गौरीनाथशास्त्रिमहाभागेभ्यः कृतज्ञता विज्ञापिता। रामानन्दविरचितभाष्यं तेन चेन्नपुरीतः प्राप्तमेव इति।

## ञ) तर्कभाषा

केशवमिश्रस्य तर्कभाषेति वाराणसीस्थितात् चौखम्बासुरभारती-प्रकाशनीतः गजाननशास्त्रिमुसलगाँवस्य सम्पादनेन प्रकाशिता। ग्रन्थस्यास्य प्रस्तावनांशः पट्टाभिरामेण विलिखितः। तत्र दर्शनशास्त्रेषु न्याय-वैशेषिकयोः स्थानं मूर्ध्नि रराजते।

## ट) मीमांसानयमञ्जरीः-

खण्डद्वयात्मको ग्रन्थोऽयं वाराणसेयसम्पूर्णनन्दसंस्कृतविश्वविद्यालयतः 1984 ख्रीष्टाब्दे प्रकाशितः। मीमांसाशास्त्रे लब्धप्रवेशानां कृते चिन्नस्वामिशास्त्रि-पट्टाभिरामशास्त्रिभ्यां च ग्रन्थोऽयं प्रणीतः। ग्रन्थस्य प्राक्कथनांशे ग्रन्थप्रणयनस्य मुख्यं तावदुद्देश्यं तेन विज्ञापितम्। 'यल्लुनैव प्रयासेन सार्धद्विशतसङ्ख्याकेषु न्यायेषु ज्ञानमवाप्य न्यायनिबन्धात्मके महासागरे विनेयाः प्रवेष्टुमर्हा भवन्त्विति। चिरन्तना मण्डनमिश्र-कमलाकरभट्टप्रभृतयो मनीषिणो लघुप्रस्थानानि प्राणैषुः। सर्वेऽपि ते पद्यबद्धा विवरणसापेक्षा इति तदनन्तरवर्त्तिनो वृत्तिग्रन्थान् निबबन्धुः। तेषामध्ययनेन मीमांसासागरावतरणे समर्था अभवन् तदानीन्तनाः विनेयाः इदानीन्तनानां तत्रापि क्लेषमनुभवतां प्रवृत्तिमबलोक्य ततोऽपि सरलया भाषया ग्रन्थो निर्मातव्य इति मनीषया अस्मिन् कार्ये अहं प्रावर्तिषि'[17]। अत्र चत्वारि सोपानानि परिकल्प्य पाठ्यक्रमो निर्धारयितव्यः।

सुखेन मीमांसाराद्धान्तानां कतिपयानां स्वरूपमवगतं भवत्विति लघुरयं ग्रन्थः तेन प्रणीतः। नयानां ज्ञानेन सह भाट्टमते स्वीकृतानां प्रमेयानां प्रमाणानाञ्च स्थूलशो ज्ञानमावश्यकमिति कृत्वा परिशिष्टांशे तेन भाट्टमानमेयार्थसंग्रहः समायोजितः। ग्रन्थस्यादौ मङ्गलाचरणात्[18] परमेव शास्त्रारम्भनयः, धर्मलक्षणनयः, परीक्षाप्रतिज्ञा चेत्यादीनि ध्यन्यन्ते। द्वितीये प्रतिपदनयः भावार्थनयश्चेत्यादीनि चालोच्यन्ते। तृतीये शेषलक्षणनयः चमसनयश्चेत्यादीनि चालोचिताः वर्तन्ते। ग्रन्थस्यास्य द्वितीयो भागः कुलपतिश्रीविद्यानिवासमिश्र-प्ररोचनया समलङ्कृतः 1992 ख्रीष्टाब्दे प्रकाशितः। अत्र चतुर्थाध्यायाद् अष्टमाध्यायं यावत् ग्रन्थो विद्यते।

**ठ) तर्कसंग्रहः**

अन्नंभट्टकृतः तर्कसंग्रहः पट्टाभिरामस्यस्वकव्याख्यया सह सात्करिशर्मणा सम्पादितः चौखम्बासंस्कृतसीरिजप्रकाशनीतः प्रकाशितः 1969 ख्रीष्टाब्दे।न्याय-वैशेषिकसम्प्रदाययोः प्रकरणग्रन्थविशेषो हि तर्कसंग्रहः। अत्र द्रव्यादीनां सप्तपदार्थानां वर्णनं समुपलभ्यते इति ध्रुवम्। ग्रन्थस्य प्रणयनविषये अन्नंभट्टस्योद्देश्यमासीत् बालानां सुखबोध एव।

**ड) श्रौतपाठः**

कलिकाताविश्वविद्यालये स्नातकपंक्तिपठितानां विद्यार्थिनां कृते श्रौतपाठः इति नाम्ना संकलनं निर्दिष्टम्, यत्र संस्कृतभाषायां मूलमन्त्रादयः, पदपाठादयः, भाष्यादयश्च संपृक्ताः। अत्र तु ऋग्वेदोपलव्धानि चतुश्चत्वारिंशतः सूक्तानि इतरवैदिकग्रन्थेभ्यः कतिचित् निर्वाचिताः अंशाः संकलिताश्च वर्तन्ते। भागत्रयात्मकस्य ग्रन्थस्यास्य तृतीयसंस्करणन्तु पट्टाभिरामशास्त्रिमहाभागैः सायणभाष्यविनियोगव्याख्यादिभिः सह परिमार्जितम्। (*श्रौतपाठः* - Part-1, vol.-ll, Vol.-lll, 1969)[19]

**ढ) व्यासशिक्षा-**

श्रीसूर्यनारायणसूरावधानिना विरचितया वेदतेजसाख्यया व्याख्यया श्रीराजाघनपाठिविरचितसर्वलक्षणमञ्जर्याः संग्रहेण च समम् आचार्य-श्रीपट्टाभिरामशास्त्रिणा भूमिकादिभिः संयोज्य सम्पादिता। १९७६ ख्रीष्टाब्दे वाराणसीस्थवेदमीमांसानुसन्धानकेन्द्रेण प्रकाशितं पुस्तकमिदम्।

ग्रन्थेऽस्मिन् संज्ञा-प्रग्रह-परिभाषा-दीर्घ-आगम-लोप-स्वरभक्ति-प्रकरणादीनि अष्टविंशतिः प्रकरणानि विद्यन्ते। ग्रन्थस्यास्य 'Foreword' इत्यंशः उत्तरप्रदेशराज्यस्य राज्यपालपदालङ्कृतैः M. Channa Readdy-महाभागैः विलिखित एव। तत्र तेन पट्टाभिरामस्य बहुधा प्रशंसनं कृतमेव। ग्रन्थस्यास्य भूमिकांशे पट्टाभिरामेण वेद-वेदांग- शिक्षादिविषयेषु तथा च व्यासशिक्षाविषये सम्यक्तया आलोचितमेव। तत्र भूमिकांशे तेन विविधशिक्षाग्रन्थेभ्यः

सहायकवाक्यादीन्याहृतानि, तद्यथा पाणिनीयशिक्षा, शम्भुशिक्षा चेति। अक्षराणां विभागः, वर्णाः, देवता, जातयश्चेति पर्यालोचिताः वर्तन्ते। शिक्षेयं कृष्णयजुर्वेदेन सम्पृक्तेति। ग्रन्थस्यास्य मङ्गलाचरणे प्राप्यते –

"श्रीवासुदेवं वरदं प्रणम्य श्रीमद्गणेशं वचसां च देवीम्।।१।।
शिक्षां प्रवक्षे श्रूतिकारणाङ्गं सुबोधकं लक्षणशीर्षभूपाम्"।।२।।[20]

## परिशीलिता ग्रन्थपञ्जी

Sastri, Chinnaswami. *Yajñatattvaprakāśaḥ*. (ed.) Pattabhiram Sastri. Varanasi: Motilal Banarasi Dass.1992. (printed).

Bhatta, Bhavadeva. *Tautātitamatatilakaṃ*. (ed.) A. Chinnaswami Sastriand PattabhiramSastri. Benares: Government Sanskrit Library.1944. (Printed)

Mishra, Parthasarathi. *Tantraratnaṃ*. (ed.) Pattabhiram Sastri & Ramnath Dikshit. Varanasi:Sampurnananda Sanskrit Vishvavidhyalay. 1979. (Printed).

*Sāmavedīya-Tāṇḍyamahābrāhmanaṃ*. (ed.) Pattabhiram Sastri. Varanasi: Chaukhamba Sanskrit Series. 1936. (Printed).

Apastamba. *Âpastambaśrautasūtraṃ*. (ed.) Chinnaswami Sastri & Pattabhiram Sastri. Borada: Oriental Institute. 1963. (Printed).

Sastri, Chinnaswami & Pattabhiram Sastri. *Tantrasiddhanta-ratnāvalī*. Varansi: Benaras Sanskrit University. 2001(Samvat). (printed)

Sastri, Pattabhiram. *Saṃskāra-vijñāna*. (ed.) Vidyadhar Dvivedi. Varanasi: Veda Mimansa Anusandhanakendra. 2042 (Samvat). (printed).

Sarvadeva, *Pramāṇamañjarī.* (ed.) Pattabhiram Sastri. Rajasthan : Rajasthan Puratattva Mandir. 1953 (Printed).

*Śatapatha-Brāhmaṇaṃ*. (ed.) Chinnaswami Sastri & Pattabhiram Sastri. Varanasi: Chaukhamba Sanskrit Sansthan. 1984.(Printed).

*ŚrīTripuropaniṣaḍ*. (ed.). Pattabhiram Sastri. Varanasi : Veda Mimansa Anusandhana Kendra. 1981.(Printed).

Mishra, Keshav. *Tarkabhāṣā*. (ed.) Gajanan Sastri Musalgaonkar. Varanasi: Chaukhamba Surabharati Prakashan. (Printed).

Sastri, Chinnaswami & Pattabhiram Sastri. *Kutuhalavṛttiḥ*. Delhi: Sri Lalbahadur Sastri Rashtriya Sanskrit Vidyapith. 1968. (printed).

Sastri, Chinnaswami & Pattabhiram Sastri. *Mīmānsānyāyamañjarī*. Varanasi: Sampurnananda Sanskrit Vishvavidyalaya. 1984. (printed).

*The Śrautapāṭhaḥ*. Kolkata: The University of Calcutta. 1969. (Printed).

*Vyāsaśikṣā.* (ed.) P.N. PattabhiramSastri, Varanasi: Veda Mimansa Research Center. 1976. (Printed).

## तथ्यसूत्राणि

[1] शास्त्रेषु कथ्यते यत्- "गर्भधारणपोषाभ्यां तातान्माता गरीयसी।
जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" ।।इति

[2] गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनयनम् । (*मनुसंहिता*, 2.36)

[3] "Padma Awards". Ministry of Home Affairs, Government of India. 2016. Retrieved 3 January 2016.

[4] He was the founder Hon'ble Vice Chancellor of the Rashtriya Sanskrit Vidyapeetha, a deemed university dedicated to Sanskrit studies."Profile of the Vidyapeetha". Rashtriya Sanskrit Vidyapeetha. 2016. Archived from the original on 29 March 2009. Retrieved 22 July 2016.

[5] *"Shri Pattabhirama Shastri Veda Mimansa Anusandhan Kendra". Search Donation. 2016. Retrieved 22 July 2016.*

[6]"Mahamahopadhyaya Sri PattabhiramaShastri Library", Rashtriya Sanskrit Vidyapeetha. 2016. Retrieved 22 July 2016.

[7]P. N. PaṭṭābhirāmaŚāstrī; MahādevaŚarmā (1993). *Mahamahopadhyaya Padmabhushana Sri P.N. PattabhiramaSastri commemoration volume*. Rāṣṭrīyasaṃskr̥tavidyāpīṭham.

[8]*यज्ञतत्त्वप्रकाशः* (मङ्गलाचरणम्)

[9]*तन्त्ररत्नम्* (प्रास्ताविकम्- पृ.घ)

[10]तत्रैव, (किञ्चिन्निवेदनम्, पृ.1)

[11]*प्रमाणमञ्जरी*

[12] प्रमाणमञ्जरीव्याक्यस्य प्रतिलिपिः – भावनगरेजैनज्ञानभाण्डारे रक्षिता।

[13] श्रीमहाविद्या-मानमनोहर-प्रमाणमञ्जर्य्यादिपठितवक्त्रानुमानस्यापितथ्यात्वम्।

[14]*त्रिपुरोपनिषद्*, (प्रस्तावना)

[15] तदेव (किमपि प्रास्ताविकम्, पृ. 1)

[16]तदेव, पृ. 4.

[17]*मीमांसानयमञ्जरी* (प्राक्कथनम्- पृ. क)

[18]रघुनाथान्नपूर्णाम्बातीव्रोदग्रतपःफलम्।
चिन्नस्वामिगुरुंवन्देशान्तंवाधूलभूषणम्।।
मीमांसासागरेयस्यक्रीडापुष्करिणीनिभः।
सगुरुर्मामकेचित्तेलसतात्स्फूर्तिहेतवे।।
विकसद्गुरुपादाब्जमकरन्दैकमधुव्रतः।
पट्टाभिरामस्तनुते मीमांसानयमञ्जरीम्।। (*मीमांसानयमञ्जरी*, मङ्गलाचरणम्, पृ.1)

[19] *वैदिक संकलन* (तृतीय खण्ड), सम्पा. ड. तारकनाथ अधिकारी ओ ड. समीरकुमारमण्डल, समीरणचन्द्रचक्रवर्ती कृत मुखबन्ध, 2020, संस्कृत बुक डिपो, कलिकाता.

[20] *व्यासशिक्षा* (मङ्गलाचरणम्)

# वेदविदुषाम् आर्. एन्. दाण्डेकराणां व्यक्तित्वं कृतित्वञ्च

ड. चिरश्री-मुखार्जी

एकोनविंशत्यां शताब्द्यां यथा श्रीमन्तः आर्. जी. भाण्डारकरमहाभागाः भारतीयप्राच्यविद्याचर्चायां प्रमुख्यप्रतिनिधिरासीत्तथैव विंशत्यां शताब्द्यां तत्र भवन्तः आर् एन्. दाण्डेकरमहोदया भारतीयप्राच्यविद्यायाः प्रातिनिध्यं कृतवन्तः। आसीद् भाण्डारकराणां खलु प्राच्यशोधसंस्थानेन सह दीर्घकालिकः कार्यसम्बन्धः। श्रीमन्तः आर्. एन्. दाण्डेकरमहाभागाः विश्वविश्रुताः भारततत्त्वविदो वेदविद्वांशश्चासन्। दाण्डेकरा अपि पञ्चपञ्चाशद्वर्षाणि (55) यावन्निरविच्छिन्नतया संस्थानमिदं प्रभावपूर्णव्यवहारेण साफल्येन च समचालयन्। संस्थानस्यास्य सञ्चालनव्यवस्थायां ते आजीवनं बद्धादरा आसन्। ईशवीयाब्दात् 1994 इत्यतः 2001 तमं वत्सरं यावत् अर्थात् आमृत्यु संस्थानस्योपाध्यक्षपदमलञ्चक्रुः इमे विद्वांसः।

दाण्डेकरमहोदयैः संस्कृतविद्याचर्चायाः आधुनिकीकरणस्य सैव परियोजना नैरन्तर्येण विहिता, या तेषां पूर्ववर्तिभिर्भारतीयैः यूरोपीयैश्च विद्वद्भिरारब्धा। स खलु न केवलमभूत् परम्परावाहकः, तस्य कानिचिन्महत्त्वपूर्णान्यवदानान्यपि सन्ति। विशेषतो वेदचर्चायां दाण्डेकरस्य श्रेष्ठं योगदानं विद्यते। तस्य षट्खण्डात्मिका वैदिकग्रन्थानुक्रमणिकास्ति, यामेवाधिकृत्य दाण्डेकरवर्यः आजीवनं निरलसतया कार्यं कुर्वन्नासीत्।

अस्मिन् आलेखे अधमया मयका यथामति प्रभूतयशोभाजां विदुषां दाण्डेकरवर्याणां जीवनस्य महनीयानि स्थानानि, शैक्षिककार्याणि, विशेषेण विविधकृतिततयो तत्त्वतथ्यादिपुरःसरं विद्वत्संसदि प्रस्तूयन्ते।

आर्.एन्.दाण्डेकारवर्यस्य सम्पूर्णं नाम रामचन्द्र-नारायण-दाण्डेकरः। अयं वेदान्, भारतीयमहाकाव्यानि, उपनिषदः, अन्यांश्च ग्रन्थान् पाश्चात्त्यदेशेषु

भारते च आंग्लभाषया व्याख्यातवान्। संस्कृतज्ञानाय संस्कृत्यै च कस्यचिद्विदुषो या दृष्टिरावश्यिकी, सैवान्तरिकी दृष्टिस्तस्मिन् दाण्डेकरे सन्निहिता वरीवर्तीत्यत्र नास्ति संशयः। पुनरपि अयं विद्वान् पौराणिककथावस्तुसमृद्धान् ग्रन्थान् स्वाधीनयुक्त्या विश्लेषयतितराम्। विचारसरण्यामस्यां नूतना रोचकान्तर्विचारसरणिर्दृष्टिर्वेत्यलक्षि। ऋग्वैदिकानां देवानां सापेक्षमहत्त्वविषये विलक्षणी वस्तुनिष्ठा दृष्टिरासीदिति। आश्चर्यजनकमिदं यत् स देवताभ्यः समर्पितानां सूक्तानां सङ्ख्यामाधृत्य सूक्तानि सम्मिल्य अधीते तान् सूत्रगतमन्त्रान् विश्लेषयति च। ऋग्वैदिकदेवताभिः सम्बद्धाः संख्यात्मकवर्णास्तैरुदाह्रियन्ते यथा मारुत्सूक्तानि, कदाचिदेषां सङ्ख्या न्यूना स्यात्। अस्मिन् प्रसङ्गे विदुषां दाण्डेकरवर्याणां सूक्ष्मेक्षिका विचारसरणिर्विद्योततेतमाम्।

**जीवनपरिचयः**

तत्रभवन्तः दाण्डेकराः ईशवीये 1909 तमे वर्षे मार्चमासस्य सप्तदशदिनाङ्के महाराष्ट्रस्थे 'सतारा'ख्ये स्थले जन्म लेभे। आसीत्तस्य धर्मपत्नी श्रीमती इन्दुमती नाम। 2001 ख्रीष्टाब्दस्य डिसम्बरमासस्य एकादशदिने आयुषो द्विनवतितमे वर्षे पूणानगर्यां तस्य शरीरमिहलोकं त्यक्त्वा अमृतालोकमितम्।

दाण्डेकरः मुम्बईविश्वविद्यालयतः 1931 ईशबीयाब्दे संस्कृतविषयम् अधिकृत्य एम्.ए. इति परास्नातकपरीक्षामथ च 1933 तमे वर्षे प्राचीनभारतीयसंस्कृतिविषयं स्वीकृत्य एम्.ए. इति परास्नातकपरीक्षाम् उदतरत् उपाधिञ्च प्राप्तवान्। तदनन्तरं तस्मिन्नेव वर्षे 1933 पूणानगरस्थे 'फर्ग्यूसन्-कलेज' नामके महाविद्यालये संस्कृतस्य प्राचीनभारतीयसंस्कृतेश्च प्राध्यापकत्वेन कार्यं प्रारेभे। ईशवीये 1936 तमे वर्षे उच्चाध्ययनाय शर्मन्देशं नाम जर्मनीं प्राप्तः। तत्र हीडलबर्ग-विश्वविद्यालयतः ईशवीये 1938 तमे वर्षे 'पीएइच्.डी.' इत्युपाधिना सम्मानितः अयं विद्वान्। शर्मन्देशाद् प्रत्यावृत्य दाण्डेकरमहोदयः फर्ग्यूसनकलेज इति शिक्षाप्रतिष्ठाने अध्यापनकार्यं निरन्तरं कृतम्। ख्रीष्टाब्दे 1950 पूणाविश्वविद्यालये (यः सम्प्रति सावित्रीबाईफुले-पुणेविश्वविद्यालयः नाम्ना

परिचितः) संस्कृतविभागस्याचार्यत्वेन सहैव च संस्कृतप्राकृतभाषाविभागस्य प्रमुख्यत्वेन नियोजितः दाण्डेकरः।

श्रीमान् दाण्डेकरः ईशवीये 1959 तमेऽब्दे पञ्चषष्ट्युत्तरैकोनविंशतितमवर्षं (1965) यावत् पुणाविश्वविद्यालये कलासंकायस्याधिष्ठातृत्वेन कार्यं कृतवान्। 1964 ख्रीष्टाब्दे पुणेविश्वविद्यालये संस्कृतस्य उन्नताध्ययनकेन्द्रस्य निदेशकपदं प्राप्तवान्, ईशवीयाब्दं 1974 मितवर्षं यावत् तं केन्द्रं सिषेवे। 1939 मिते वर्षे स एव दाण्डेकरमहोदयः भण्डारकरप्राच्यशोधसंस्थानस्य (BORI) मानद-सचिवपदमलभत। स ईशवीयाब्दे 1994 मिते वर्षे पूर्णसामर्थ्येनास्य केन्द्रस्य साचिव्यमूढवान्। इत्थं पञ्चपञ्चाशद्वर्षाणि (55) यावत् संस्थानं सञ्चालितवान् साफल्येन। अत्रायं प्रशासकस्तथा शिक्षावित् दाण्डेकरः स्वस्य सर्वोच्चक्षमतया कार्यं कुर्वन् संस्थानस्यास्य स्थिरत्वं सम्पादितं तथा च प्रोन्नतभारतविद्यासम्पर्कित-गवेषणाकेन्द्रत्वेन सुप्रतिष्ठापितम्। ईशवीयाब्दात् 1994 तमवर्षात् ख्रीष्टाब्दे 2001 तमेऽब्दे स्वनिर्वाणपर्यन्तं स संस्थानस्योपाध्यक्षपदमलञ्चकार। भण्डारकरप्राच्यशोधसंस्थानं खल्वासीत् तेषां जीवत्कालस्य महत्त्वपूर्णं संस्थानं तथा च जीवनस्य सर्वस्वभूतम्।

दाण्डेकरमहोदयस्य देहावसानात् परम् ईशवीयाब्दे 2003 तस्य धर्मपत्न्या इन्दुमतीवर्यया अस्य विदुषः पञ्चसहस्रं पुस्तकानामेको दुर्लभः संग्रहो भण्डारकरप्राच्यशोधसंस्थानाय प्रदत्तः। संस्थासचिवेन तदा भण्डारकरप्राच्य-शोधसंस्थानस्य पुस्तकालये विशेषकक्षस्यैकस्य निर्माणायोद्घोषणा विहिता। अस्मिन् कक्षे दाण्डेकरवर्यैर्ग्रथितानां ग्रन्थानां तथा तेन रचितानाम् आलेखानां सङ्ग्रहो रक्षितो वर्तते। दाण्डेकरमहोदयस्य सारस्वतावदानं संस्मृत्य भारतीयैस्तथा आन्तर्जालिकैः संस्कृतविद्वद्भिः कृतस्य बहुपक्षीय-सम्मानस्य स्नेहस्य च प्रतीकभूतं ‘अमृतधारा’ इत्याख्यं पुस्तकमेकं भण्डारकरप्राच्यशोधसंस्थानस्य कर्तृपक्षैः विदुषोऽस्य पञ्चसप्ततितमं जन्मदिवसमुपलक्ष्य प्राकाशि। अस्य

सम्पादकत्वं एस्.डी.जोशिना निर्व्यूढम्। अस्मिन् पुस्तके प्राच्यविषयेषु शोधपत्राणि संकलितानि सन्ति, येषु व्यापकतया वैदिकाध्ययनं मुख्यमेवासीत्। तद्व्यतीत्य भारतीयधर्मः, दर्शनानि, शास्त्रीयसंस्कृतसाहित्यम्, काव्यानि, शिलालेख-पुरातत्त्वान्युपजीव्य च शोधपत्राणि सन्ति। विशेषरूपेण पुस्तकमिदं दाण्डेकरवर्यस्य पञ्चसप्ततितमे जनिदिवसे तेभ्यो निखिलस्य विश्वस्य प्रसिद्धैः भारतविद्भिः संस्कृतविद्वद्भिश्चोत्सर्गीकृतम्।

दाण्डेकरमहाभागाः भारतीयशास्त्रसम्बद्धैस्तथा भारतीयैः आन्तराष्ट्रियैश्च संस्थानैः सह संयुक्ताः आसन्। ते विविधैः प्रकारैरेतेषां संस्थानानां सेवां कृतवन्तः। किञ्च, एभ्यः संस्थानेभ्यो विशिष्टमाकारं दत्तवन्तः इमे विद्वांसस्तथा संस्कृतसेवकाः। एतेषु मुख्यानि प्रतिष्ठानानि तावत् अखिलभारतीय-प्राच्यसम्मेलनम् (AIOC), प्राच्यवादिनाम् आन्तराष्ट्रियकांग्रेसः, विश्वसंस्कृत-सम्मेलनम्, भारतसर्वकारस्य संस्कृतायोगः, डेक्कनकलेज इति महाविद्यालयः चेति। ते 'यूनेस्को' इति संयुक्तराष्ट्रस्य शैक्षिकवैज्ञानिकसांस्कृतिकशालायामपि इण्डोलोजी इति प्राच्यविद्यायाः परामर्शदातृत्वेनापि कार्यं कृतवन्तः।

अन्यप्रकाशनैः सह दाण्डेकरमहोदयः षट्खण्डात्मिकां विशालामेकां वैदिकानुक्रमणिकां (वैदिकग्रन्थसूचीं) ईशवीये 1946 अब्दे प्रकाशितवान्। अनुक्रमणिकेयम् एकलश्रमस्यैव फलं वर्तते। वैदिकपौराणिककथासु नैके आलेखाः अथ च पूणास्थितेन वैदिकशोधमठेन प्रकाशितः श्रौतकोशः दाण्डेकरस्य वैदिकग्रन्थानुक्रमणिकाम् अतिरिच्य महनीयं कार्यं वर्तते। दाण्डेकरेण कतिपयानां प्रमुखानां देवतानां सामूहिकरूपेण बहुभिरालेखैः चर्चा विहिता। दाण्डेकरः इन्दोयुरोपीयस्य, प्रवासस्य आचार्याणां, वैदिकधर्मविकासस्य चापूर्वमहत्त्वपूर्णमाख्यानमरचयत्। अस्यामद्भुतायां कथायां विभिन्नानि चरणानि सन्ति।

तेषां व्याख्यानानां शोभनां प्रस्तुतिं दृष्ट्वा श्रोतारः पाठकाश्च सदैव विमोहिता अभवन्। विदुषोऽस्य प्रस्तुतानां विषयवस्तूनां सुस्पष्टं व्याख्यानं

नूतनविचारान् प्रति सङ्केतयति। तेषां प्रेरकैर्व्याख्यानैस्तदनुयायिनः छात्राः सदैव मौलिकविचाराय उद्बुद्धाः भवन्ति। दाण्डेकरमहोदयस्यैदं वैशिष्ट्यमासीद्यत् स कमपि सिद्धान्तम् आत्मना परीक्ष्य विश्लेष्य च स्वीचकार। प्रायशः भारतीया इतिहासविदः स्वीयमितिहासं संस्कृतिञ्च पाश्चात्त्येभ्यो भारततत्त्वविदां प्राप्तेन ज्ञानेन परीक्षितवन्तः, परन्तु दाण्डेकरवर्यो विलक्षणः खलु अस्मन् सन्दर्भे। स खलु ईदृशः आधुनिकविद्वान्, यस्यालोचनात्मिकया दृष्ट्या डेक्कनमहाविद्यालयस्य हीडलबर्गविश्वविद्यालयस्य च विद्वांसः प्रशिक्षिता अभवन्। तैः संस्कृतविद्याचर्यायां सैव परियोजना गृहीता, या तेषां पूर्ववर्तिभिर्भारतीयैः पाश्चात्त्यैश्च प्रारब्धा। ते न केवलं शृङ्खलायाः पुरोवाहकाः, अपि तु ते तदानीन्तनानाम् अनेकेषां विदुषामिव पाश्चात्त्यैर्विद्वद्भिः अतिप्रभाविता नासन्। न च कदापि इमे भारतीयस्य हिन्दूराष्ट्रवादस्याधीनतां स्वीकृतवन्तः।

उपलब्धस्यानुसन्धानस्य संश्लेषणविश्लेषणाभ्याम् तथा च स्वीयया रचनात्मककल्पनया वैदिकोत्तरवैदिकधर्मस्य क्रमोन्नतिमवबोद्धुं प्रायतत दाण्डेकरमहोदयः। दाण्डेकरो मनुते यत्सर्वेषां देवानां विचाराणां दर्शनानाञ्चोदयः सहजतया समयमनुसृत्यैवाभवत्। तेषां क्रमविकासवादी इतिहासः क्वचिदतिरेखाकारः प्रतीयते। परमत्रापि नास्ति काचिदापत्तिः, यया दाण्डेकरस्य भारतीयधार्मिकेतिहासस्य शक्तिशाली पुनर्निर्माणः आधुनिकस्य 'इण्डोलोजी'ति प्राच्यविद्याया इतिहासस्यैकप्रभावोपेताध्यायत्वेन परिगण्यते।

शिक्षकत्वेन आसीत् दाण्डेकरः अतीव कठोरः। तस्य व्याख्यानैर्भाषणैश्चाभिभूताः छात्रास्तान् सर्वदा सम्मानयन्ति। तस्य कामपि व्याख्यां श्रुत्वा कस्यापि मनसि प्रश्नो नोपजायते। कक्षायां प्रतिदिनं छात्रेभ्यः सुस्पष्टं पाठयति स्म। विद्याचर्चायां छात्राणां सहयोगिनाञ्च मध्ये मिथः पर्यालोचनं गुरुत्ववहं वर्तत इति स्व्यकारि दाण्डेकरेण। सामान्यमेकमवलोकनमिदं यद् विद्वद्वत्तया समं प्रशासनिक्याः संघटनात्मिकायाः क्षमतायाः सम्मेलनं प्रायो न दृक्पथम् आयाति, परमत्रोल्लेखनीयं यत् प्रोफेसर्-दाण्डेकरः पूनाविश्वविद्यालये

तथा भण्डारकरप्राच्यशोधसंस्थाने च सफलः प्रशासकः आसीत्। अपि च, अखिलभारतीयप्राच्यसम्मेलनस्य सर्वेषु सत्रेषु तथा च नैकेषां राष्ट्रियाणाम् आन्तराष्ट्रियायाणां निकायानाम् उपसत्रेषु कुशलो संयोजक आसीदयं विद्वत्प्रकाण्डः।

तस्य प्रशासनिकयोगदानेन शैक्षिकसंस्थाः अभ्युन्नतिं प्राप्तवत्यः। नास्त्यत्र काचिदतिशयोक्तिर्यद् विंशत्यां शताब्द्यां पूनास्थिते विद्वत्संसदि दाण्डेकरमहोदयस्य प्रभावः अनस्वीकार्यः। तस्यासामान्यदक्षतया कार्यकौशलेन च भण्डारकरप्राच्यशोधसंस्थानस्य ख्यातिः आसमुद्रं विस्तारिता भवति। परं दीर्घकालायैक एवाध्यक्षो भवति, तदा कस्याश्चिद् हानेरपि सम्भावना भवत्येव। यथा समयेन सह संस्थानस्य आधुनिकीकरणं, संगणकयन्त्रस्थापनम् (कम्प्यूटर), तकनिक्याश्चावश्यकता वर्तते इति विषये सर्वथा अवधानं तथा न दत्तं तेनेति श्रूयते। दाण्डेकरमहाभागस्य प्रभावः इयान् गुरुत्ववहः समासीत् यत् समकालिकाः संस्कृतविद्वांसस्तन्निकषा स्वीयान् विचारान् श्रद्धया स्थापयितुमसमर्थाः इति मन्यन्ते स्म। महद्व्यक्तिवतां तेषां सहयोगिभ्यः शैक्षणिकेषु प्रशासनिकविषयेषु भिन्नमतस्य व्यक्तीकरणं क्लिष्टमभवत्। भण्डारकरप्राच्य-शोधसंस्थानेन समितीनां परिषदाञ्च मन्त्रणायां चर्चाया असहमतेर्वा प्रस्तावं विनैव दाण्डेकरमहोदयस्य समर्थनेनैव सर्वं स्वीकृतमभूत्। तेषां प्रभावेणैव महाराष्ट्रप्रदेशस्य सर्वकाराद् भारतसर्वकाराच्च अनायासेनैव शोधकार्येभ्यः अनुदानं सम्प्राप्यते स्म। एतेन संस्कृतविषये भारतीयशास्त्रे चाध्ययनाय तस्य सौकर्यमवबुध्यते। अवश्यमेव स्वीकरणीयमिदं तथ्यं यत्तेषां नेतृत्वं तथा च प्रशासनिकीं राजनैतिकीं च कुशाग्रतां विना इमाः संस्थाः इयतीं प्रगतिं कर्तुम् अनर्हा अभवन्।

पूणानगर्य्याम् अन्येषु च स्थानेषु स्थानीयेभ्यो श्रोतृजनेभ्यो नूतनाया आलोचनायाः प्रसारे दाण्डेकरमहाशयस्य महनीयभूमिकाया उल्लेखोऽप्यत्र करणीय एव। तेषां ग्रन्थानुक्रमणिकायां मराठीलेखाः, व्याख्यानानि च बाहुल्येन सम्प्राप्यन्ते। अस्यां सूच्यां 'हड़प्पायाः सभ्यता', 'विकासवादी

वैदिकपुराणविद्या', 'अनेकेषां भारतीयानां यौरोपीयानां च विदुषां संस्कृताध्ययने योगदानम्', 'आर्याणां मूलस्थानम्', 'यूनानिभिः पारसीभिश्च आक्रमणम्', 'हिन्दुत्वस्य इतिहासः', चेत्यादयः आलेखाः समुपलभ्यन्ते। एतान् प्रबन्धान् अतिरिच्य शर्मन्देशे तेषां शोधकार्यं तथा च 'जर्मननाज़ीप्रचारयन्त्रम्' इत्यस्य आलोचनाविषयकाः नैकाश्चर्चाः भाषणानि च मराठीभाषायामुपलभ्यन्ते। मराठीभाषायां प्रकाशितैरेतैरालेखैः दाण्डेकरमहोदयस्य पाठकाः श्रोतृवर्गाश्च समृद्धा अभवन्।

**दाण्डेकरमहोदयस्य विचाराः** –

दाण्डेकरमहाभागाः हृदयेन हिन्दवः, परं नासन् ते परम्परावादिनः। वेदविषयका हिन्दूधर्मविषयकाश्च तेषां केचन ऐतिहासिकाः विचाराः पारम्परिकहिन्दूनां कृते आश्चर्यजनकाः सन्ति। नूतनविचारमुपस्थाप्यैव श्रेष्ठतरस्य विश्वस्योद्भवो विकासो वा भविष्यतीति तेषां मौलिको विचारः। दाण्डेकरस्यायमेवाशयः यदीदृशः आधुनिकहिन्दूधर्मोऽत्यावश्यकः, येनाधुनिकभारतस्य सामग्रिकी आवश्यकता प्रपूरयेत्। आसीत् राजनैतिके दार्शनिके चिन्तने स गान्धिवादी परं सम्पूर्णतया स आधुनिकतावादी।

दाण्डेकरस्य सन्देशः आसीद् यद् गवेषकैः सदैव पूर्वप्रकाशितकार्याणां समीक्षां (Literature Review) विना शोधकार्यं न करणीयं कथमपि। कामं वयं पूर्ववर्तिनां विदुषां व्यक्तविचारैः सह सहमतिं प्रकाशयितुं नालमपि ते विचाराः नोपेक्षणीयाः इति तन्मतिः। गवेषकाणां व्यक्तिस्वाधिकारे सदैव विश्वासः स्थापनीय इति तन्नयः। तथाहि भारते विशिष्टेषु विद्वत्सु स पदं प्राप्तवान्। दाण्डेकरो भारतीयविदुषां पाश्चात्त्यज्ञानिनाञ्च समालोचनान्न विभेति स्म। परीक्षणाय विश्लेषणाय च सर्वदैव तत्परः समर्थश्च आसीदयम्। भारतीयविदुषां हिन्दूत्वभावनातः दाण्डेकरस्य चिन्तनं किञ्चिद्भिन्नं वर्तते स्म।

नास्त्यत्र काचिदेव विप्रतिपत्तिः यद् रामचन्द्र एव नारायणः। दाण्डेकरः भारतशास्त्रं वैदिकज्ञानञ्च स्वशोधकार्येण आधुनिकविश्लेषणेन च प्रोन्नतवान्।

भारते निखिले विश्वे च संस्कृते 'इण्डोलोजिकल्' इति प्राच्यविद्यायाश्चर्चायां तस्य महती प्रज्ञासीत्। वैदिकसाहित्यशोधकार्ये च स स्वजीवनं समर्पयत्।

**पुरस्काराः** –

दाण्डेकरस्तस्य सारस्वतावदानाय बहुपुरस्कारैः सभाजितः। तत्र ईशवीये 1962 वर्षे भारतवर्षस्य राष्ट्रपतिना 'पद्मभूषणम्', अथ च 2000 ख्रीष्टाब्दे 'साहित्य-अकादमी-अध्येतृवृत्तिः' चेति सम्मानैः सभाजिता इमे विद्वांसः। तेषां जीवनस्य अन्तिमेषु वर्षेषु इत्थं बहूनि प्रतिष्ठानानि सर्वकाराश्च दाण्डेकरवर्याय सम्मानँ प्रदातुं नियतं प्रतिस्पर्धन्ते स्म।

**प्रमुखाः कृतयः** –

दाण्डेकरमहोदयाः वैदिकपौराणिककथाः, महाकाव्यानि, प्राचीनभारतीयेतिहासः, धर्मः, दर्शनशास्त्रञ्चेति सदृशेषु विविधेषु विषयेषु बहून् ग्रन्थान् लेखांश्चालिखन्। किञ्च, स वेदानां महाकाव्यानां कतिपयसंस्करणानां सम्पादनमप्यकरोत्। भारतीयपरम्परायाः स्रोतसां लेखकरूपेणीपि दाण्डेकरमहोदयो विश्वविश्रुतः।

प्रमुखाः कृतयः क्रमेणात्रोल्लिख्यन्ते -

**1). Vedic Bibliography (षट्खण्डात्मिका वैदिकग्रन्थानुक्रमणिका)** –

वैदिकग्रन्थानुक्रमणिका षट्खण्डात्मिका दाण्डेकारैः सम्पादिता। तन्मते, 1917 ईशवीयाब्दात् 1942 ईशवीयाब्दं यावत् पञ्चविंशतिवर्षेषु (25) भारते भारतदेशाद् बहिश्च भारतविद्याविषयकं निखिलं कार्यमत्र विस्तरशः सुव्यवस्थितं वर्तते। वैदिकसूच्याः निर्माणकार्यमिदं गुरुत्ववहमिति विभाव्य स 'Twenty Five Years of Vedic Studies' इति शीकं शोधपत्रं लिखन्नासीत्। दाण्डेकरैरस्याः वैदिकग्रन्थानुक्रमणिकायाः प्रस्तावनायां साधूक्तं यत्, यदा स ईशवीये 1943 तमाब्दे 'पञ्चविंशतिवर्षात्मकं वैदिकाध्ययनम्' इति प्रबन्धं

निर्मातुं यतितवान्, तदैका वैज्ञानिकी तथा च विश्लेषणात्मिका ग्रन्थानुक्रमणिका सर्वात्मना भवेदिति।

**प्रथम-द्वितीयखण्डौ -** ईशवीये 1917 अब्दतः 1942 ईशवीयाब्दं यावत् लिखितानां वैदिकग्रन्थानामनुक्रमणिकायाः खण्डद्वयम्। ख्रीष्टाब्दे 1946 वर्षे प्रकाशितस्य वैदिकग्रन्थानुक्रमणिकायाः प्रथमखण्डस्य प्रस्तावनायां दाण्डेकरोऽलिखत् - 'वर्तमाना वैदिकग्रन्थानुक्रमणिका नैरन्तर्येण निरीक्षमाणा विद्यते। मया स्वीयग्रन्थानुक्रमणिकायां सर्वेषां महत्त्वपूर्णानां लेखानां विस्तरेण विश्लेषणात्मकः सङ्ग्रहः प्रस्तुतः। अत्रानुमीयते यत् पञ्चशताधिकत्रिसहस्रं (3500) प्रविष्टयः विषयानुसारम् एकविंशत्यध्यायैः (21) तथा अष्टषष्ट्यधिकशतखण्डैश्च (168) विभाजिताः सन्ति।

**तृतीयखण्डः** – ईशवीयात् 1961 वर्षात् 1972 ईशवीयाब्दं वर्षं यावत् वैदिककार्याणामनुक्रमणिका खलु तृतीयखण्डः।

**चतुर्थपञ्चमखण्डौ**- 1972 ईशवीयाब्दात् परं 1983 मितवर्षं यावत् रचितानां वेदविषयककार्याणाम् अनुक्रमणिका तावत् चतुर्थ-पञ्चमखण्डौ।

**षष्ठखण्डः** – ईशवीयात् 1992 वर्षात् 2000 मितं ख्रीष्टाब्दं यावत् वेदतत्त्वसम्बन्धिकार्याणाम् अनुक्रमणिका एव षष्ठखण्डः।

वैदिकग्रन्थानुक्रमणिकायाः प्रत्येकं खण्डस्य परिवृत्तिः उत्तरोत्तरं बृहतीति। ग्रन्थस्यास्य खलु आंग्लभाषा। ग्रन्थः अयं पुणानगरीस्थात् भण्डारकरप्राच्य-शोधसंस्थानात् प्रकाशितः।

**2). Śrautakośa (श्रौतकोशः)** –

वैदिकयज्ञानुष्ठानस्य विश्वकोशोऽयं ग्रन्थः। संहिताब्राह्मणारण्यकाणि बौधायनश्रौतसूत्रञ्च आधृत्य खण्डाष्टात्मिका ग्रन्थावलीत्ययं ग्रन्थः। श्रौतकोशस्य आंग्ललेखनाय च संस्कृतसामग्र्याः सम्पादनं

सी.जी.काशीकारश्चकार। ग्रन्थमिदं दाण्डेकरोऽनूदितवान्। इयमतिश्रमसाध्या सार्थका च परियोजनासीत्। अधुना योजनयानया वैदिकयज्ञविषयकं विवरणं सर्वेभ्यः सुलभमस्ति। संस्कृत-आङ्गलभाषाभ्यां समृद्धोऽयं ग्रन्थः। पुणानगरीस्थात् वैदिकसंशोधनमण्डलात् प्रकाशितः श्रौतकोशः इति ग्रन्थः।

### 3). Subhāṣitamuktāvalī (सुभाषितमुक्तावली) –

ईशवीये 2007 वर्षे भाण्डारकरप्राच्यशोधसंस्थानेन प्रकाशितेयं सुभाषितमुक्तावलीति। अस्यां काव्य-ललितसाहित्य-कविताविषयकाणि संस्कृतसूत्राणि सन्निहितानि सन्ति।

### 4). The Mahabharata Revisited –

ईशवीये 1987 तमेऽब्दे फरवरीमासस्य सप्तदशदिनाङ्कतः विंशतिदिनाङ्कं यावत् नवदिल्ल्यां महाभारतमाधृत्य साहित्य-अकादमीद्वारा आयोजिते आन्तःराष्ट्रिये सम्मेलने प्रस्तुतानि शोधपत्राण्यत्रोपनिबद्धानि। चर्चाविषयास्तावत्

i. महाभारतस्य संरचनाः – जैविकदन्तकथाः।
ii. महाभारतयुद्धे महाभारतकाव्यनिर्माणे च जीवनसमग्रता।
iii. महाभारतस्य सामाजिकसांस्कृतिकपरिवेशस्तथा सार्वभौमिक-सार्वजनिकोदिविषयस्य महाकाव्यरूपेण महाभारतम्।
iv. भारते विदेशेषु च कलासंस्कृतिरूपत्वेन महाभारतम्।
v. भारते विदेशे च परवर्तिषु लेखकेषु महाभारतस्य प्रभावः।
vi. महाभारतं प्रति आधुनिकानां रचनात्मकलेखकानां दृष्टिः।

सप्ताधिकद्विसहस्रतमे (2007) ख्रीष्टाब्दे साहित्य-अकादम्या दिल्लीतः प्रकाशितः आङ्गलभाषया लिखितोऽयं ग्रन्थः।

## 5. Some Aspects of the History of Hinduism –

दाण्डेकरवर्यस्य प्रसिद्धग्रन्थेषु अन्यतमस्तावत् हिन्दूधर्मस्य इतिहासस्य कानिचित्त्वानीति विषयाधारितः Some Aspects of the History of Hinduism (1967) इत्याख्यो ग्रन्थोऽस्ति। सप्तषष्ट्यधिकोकोनविंशतितमे (1967) ईशवीये वर्षे मार्चमासस्य अन्तिमे सप्ताहे मुम्बईनगरे 'के. आर्. कामाओरियण्टल इंस्टीट्यूट' इति प्राच्यसंस्थाने सर्वकारस्य शोधाध्येतृवृत्तेः अर्थानुकूल्येन 'इन्दोयूरोपीयः, इन्दो-आर्यप्रवासः, वैदिकधर्मविकासश्चेति एषु विषयेषु पञ्च व्याख्यानानि प्रदत्तानि दाण्डेकारैः। तस्मिन् व्याख्याने दाण्डेकरः कथयति –

'प्रोटो-आर्यनकालस्य प्रमुखो धार्मिकः पथः वरुणपथ आसीत्। प्रोटो-आर्यनकालस्य अन्तिमे वर्षे प्रोटो-आर्याणाम् ईराणं प्रति प्रवासो दृष्टः। सप्त सिन्धून् प्रति वैदिकार्याणां प्रवासस्याभिप्राय आसीद् यत् तस्य जीवने विचारेषु च बहुपरिवर्तनम्, विशेषतश्च तस्य बल्खक्षेत्रे बहुकालप्रवासः। इदानीं वृत्रैः सह घातकयुद्धस्य कालः जीवनं वा आसीत्। मानवशत्रवः पर्यावरणीयाश्च बाधाः, परिणामतो युद्धमिव विजयः उपनिवेशश्च, नूतनधर्मस्य ईश्वरस्य च स्वीकृतिः। इयमेव नूतनस्य युगस्यानिवार्यतासीत्। विश्वस्य प्रभोः असुरवरुणानाम् इदानीं सम्मेलनं नाभवत्। वैदिकाः आर्याः स्वाभाविकरूपेण स्वात्मवर्धापनाय कमपि एकं वीरं देवं याचमाना अभवन्'।

ईदृशानां विलक्षणानाम् आख्यानानां माध्यमेन प्राप्तसंश्लेषणेन दाण्डेकरः स्वकीयाया रचनात्मिकायाः कल्पनाया उपयोगं कृत्वा अनुसन्धानाय प्रायतत। ग्रन्थस्यास्य प्रकाशनवर्षो हि ईशवीयाब्दः 1989 इति। भाषा च आंग्लभाषेति। प्रकाशकः खलु भाण्डारकरप्राच्यशोधसंस्थानम्, पुणे।

## 6. Recent Trends in Indology –

द्वितीयविश्वयुद्धकालावधिः 'यूरोपियन् इण्डोलजी' इत्यस्येतिहासः प्रायो नालिखितः, परमस्मिन्नवधौ नूतनविश्वव्यवस्थायां भारतस्य परिवर्तमानायाः

राजनैतिकस्थितेश्च सन्दर्भे प्राच्यविद्यासम्बन्धिनां नूतनविचाराणामङ्कुरणं दृष्टिपथमागतम्। एते नूतनविचारा साम्प्रतिकभारतविद्याचर्चायां महान्तो गुरुत्ववहा आसन्। अस्मिन् पुस्तके दाण्डेकरमहोदयः 1978 ईशवीये वर्षे भारतविद्याचर्चायां एतान् सर्वान् विचारान् आलोचितवान्। ग्रन्थस्य भाषा तावत् आंग्लभाषा। ग्रन्थस्यास्य प्रकाशनमभूत् भाण्डारकरप्राच्यशोधसंस्थानतः, पुणे।

### 7. Harappan Bibliography (हरप्पाग्रन्थसूची) –

इयं ग्रन्थानुक्रमणिका हरप्पा-(सिन्धुघाटी)-सभ्यतासम्बन्धिनाम् आङ्गलभाषया लिखितानां लेखानां सर्वातिशायिनी महत्त्वपूर्णा, आलोचनात्मिका ग्रन्थावली वर्तते। अस्यामनुक्रमणिकायामनुमानतः 3500 दत्तांशनिवेशा प्रविष्टयः (entry) वा सन्ति, या विषयानुसारेण सरलतया व्यवस्थापिताः। 1978 ईशवीयाब्दे ग्रन्थस्यास्य प्रकाशनं जातम्। ग्रन्थस्यास्य प्रकाशनमभूत् भाण्डारकरप्राच्यशोधसंस्थानतः (पुणे)।

### 8. A History of the Guptas –

पुस्तकमिदं सांस्कृतिकरूपेण महत्त्वपूर्णं तथा सभ्यतायाश्च ज्ञानाधारस्य भागो नाम। इदं मूलकृतिभ्यः पुनः प्रकाशतां नीतमिति कृत्वास्मिन् कानिचित् पृष्ठानि यथावदेव सन्ति।

### 9. Vedic Mythological Tracts –

अत्र वेदा विस्तरेण व्याख्यताः। अस्मिन् पुस्तके दाण्डेकरः प्रमुखानां देवतानां व्यक्तिशः समग्रत्वेन च चर्चामकरोत्। तेनोक्तं यत् विशेषावधौ एको वैदिकदेवविशेषः प्रमुखो मन्यते, यतो हीश्वरस्तत्कालीयलोकाचारस्य तस्य देवस्य च व्यक्तित्वेन चरित्रगतदृष्ट्या च प्रतिबिम्बनमकरोत्। एको वैदिकदेवः क्वचिदेकं रूपं दधाति, परं क्वचिच्च अन्यच्चरित्रं धारयतीति। वैदिकदेवानां व्यक्तित्वं परिवर्तमानं भवति। विभिन्नासु देवतासु कश्चित् देवताः सांस्कृतिकदृष्ट्या चेतिहासदृशा सम्बन्धाः।

ग्रन्थोऽयं तेषां चयनीतानां लेखानां प्रथमः खण्डोऽस्ति। 'वेदः विकासवादिपौराणिकानां कथानां विषये किं कथयतीति' विषयका बहवः आलेखाः दिल्लीतः प्रकाशिते तदीये 'वैदिकपौराणिकग्रन्थे' (1979) एकत्रैवोपलभ्यन्ते। स व्याख्याति यत् – ऋग्वैदिकपौराणिककथाः केनापि विचारेण परिमिततया नैव ग्रहीतुं शक्यन्ते। तासां पौराणिककथानामध्ययनं स्थितिपरया घटनया समीचीनं न भविष्यति। ऋग्वेदीयपौराणिकासु कथासु विविधाः कथाः प्रतिक्रियापरकाः, अथ च तया प्रतिक्रियया ऋग्वेदीययुगस्य सांस्कृतिकेतिहासस्य परिवर्तनं विहितं वरीवर्ति। अत्र पौराणिकविचारधारा इव विभिन्नानां तत्त्वानां स्वरूपमुररीकरोति स्म विद्वान् दाण्डेकारः। परं तस्याः विचारधाराया निरन्तरं संशोधनेन परिशीलिता जाता।

ग्रन्थस्यास्य प्रकाशनवर्षस्तावत् ईशवीये 1979 तमेऽब्दे। ग्रन्थस्य भाषा खलु आंग्लभाषा। प्रकाशकः खलु अजन्तापब्लिकेशन्स्।

**10. Insights into Hinduism** –

पुस्तकमिदं दाण्डेकरमहाभागस्य चयनीतानां लेखानां द्वितीयः खण्डः। वैदिकसाहित्यविषये आजीवनं शोधकार्ये रतोऽयं विद्वान् धर्मस्यैतिहासिकानि तत्त्वानि धर्मसीमानञ्च जानाति स्म। तन्मते – 'अपरैका उद्घोषणा वर्तते, या वेदविषये तेन क्रियते, यद्वेदाः सर्वस्य भारतीयज्ञानस्य स्रोतांसि सन्ति। अर्थात् सम्पूर्णायाः भारतीयसंस्कृतेराधारभूताः सन्ति वेदाः। हिन्दूधर्मस्येतिहासविषये कथनमिदं पर्याप्तममिति यद् हिन्दूधर्मस्य स्पष्टतया वेदातिरिक्तं किमपि अवशिष्टं वस्तु नास्ति। परं वेदाः ऐतिहासिकहिन्दूधर्मेण समम् औपचारिकरूपेण आकस्मिकतयैव सम्बधाः आसन्'। दाण्डेकरस्याभिमतमिदं यत्तत्कालिकेभ्यो हिन्दूराष्ट्रवादिभ्यो विलक्षणमिति ध्रुवम्। किञ्च, प्राचीनकालस्य संस्कृतपरम्परायाः विषयेऽपि चर्चा कृता तेन।

दाण्डेकरवर्यः सक्रियरूपेण समाजसुधारको नास्तीति सत्यं परम् आर्.जी.भाण्डारकरस्य पन्थानमनुसृत्य आधुनिकहिन्दूधर्मस्योदयं द्रष्टुं स

काङ्क्षितवान्। तन्मते, अयञ्च हिन्दूधर्मोदयः भारतस्याधुनिकीकरणस्य आवश्यकतां प्रपूरयितुमलम्। तस्य 'हिन्दूधर्म' इत्यस्य लेखस्य 'Retrospect & Prospect' इति ('पूर्वव्याप्तिः सम्भावना च') इत्यन्तिमोऽनुच्छेदः खलु निखिले ह्याधुनिके विश्वे हिन्दूधर्मस्य भाविस्वप्न इत्थम् अभिव्यनक्ति – 'अद्य भारतदेशोऽन्ततोगत्या सभ्यविश्वेन सममेव मूल्यानां प्रमुखं सङ्घर्षं पश्यति। स्पष्टमिदं तथ्यं यत् यादृशं संतुलनं पारम्परिकहिन्दूधर्मेण स्थापितमासीत् अधुना, तद् आधुनिकीकरणेन गभीरतयात्र वर्तते। परमिदमपि समानमेव स्पष्टम् अस्ति यत् सामाजिकैकतायै एकस्य नूतनप्रकारस्य संतुलनं प्रतिस्थापनीयम्। तत्कार्यं खलु हिन्दूधर्मः कर्तुमलम्। हिन्दूधर्मः इमाम् आपत्स्थितिं सम्मुखीकर्तुं समर्थः।'

दाण्डेकरवर्येण धर्मनिरपेक्षताविषयेऽपि स्वविचाराः प्रस्तुताः। तेन लिखितं यत्, 'भारतीयैर्जनैः धर्मनिरपेक्षता आस्थायाः लेखरूपेण स्वीक्रियते। परम् अस्याः धर्मनिरपेक्षताया अभिप्रायः खल्वधर्मः, पारलौकिकता आहोस्वित् अनाध्यात्मिकता नास्ति। धर्मनिरपेक्षतायाः सिद्धान्तो देशस्याध्यात्मिक-परम्परायाः, आध्यात्मिकपक्षाणाञ्च विरोधे न कथमपि सम्भवति। अपि तु धर्मनिरपेक्षतया एका स्वस्थपरम्परा संवर्ध्यते। एषा परिवर्तमानेषु स्थितिषु तां परम्परां विकासयति, या उपयुक्तरूपेण प्रतिक्रियामभिव्यक्तुं समर्था स्यात्। ऐतिहासिकं साक्ष्यमिदं यद् हिन्दूधर्मः आन्तरिकरूपेण धर्मनिरपेक्षतायाः विरोधी कदापि नासीत्।

आङ्गलभाषया लिखितस्यास्य ग्रन्थरत्नस्य प्रकाशनवर्षस्तावत् ईशवीयः 1971 तमाब्दः। ग्रन्थस्यास्य प्रकाशोऽभूत् अजन्तापब्लिकेशन्स इत्यतः।

**11. Exercises in Indology** –

पुस्तकमिदं दाण्डेकरमहोदयस्य चयनितानां लेखानां तृतीयः खण्डो वर्तते। अत्र वेदानां महाभारतस्य च विश्लेषणं विहितम्। 1981ईशवीयाब्दे

ग्रन्थोऽयं प्रकाशपदवीम् इतः। दाण्डेकारः आङ्गलभाषया लेखाः लिखिताः। अजन्तापब्लिकेशनस् इत्यतः ग्रन्थः प्रकाशितः।

**12. Indological Miscellanea** –

वेदेषु पुराणेषु वर्णितान् हिन्दूदर्शन-भाषाशास्त्रादिविषयानुपजीव्य लिखितानां विविधानाम् आलेखानां संकलनं प्रकाशितम् Indological Miscellanea इति नाम्ना दाण्डेकारेण।

**13. Universe in Hindu Thought** –

'हिन्दूब्रह्माण्डविज्ञान' इति विषयमधिकृत्य बैंगलोरविश्वविद्यालये दत्तं विशिष्टं व्याख्यानमिदं वर्तते। 1997 ईशवीयाब्दे ग्रन्थोऽयं प्रकाशपदवीम् इतः प्रसारव्याख्यानप्रकाशनविभागात् बैंगलोरविश्वविद्यालयस्य। दाण्डेकारः आङ्गलभाषया व्याख्यानानि लिखितानि।

दाण्डेकरः केषांचिद्ग्रन्थानां सङ्कलनकर्त्तापि आसीत्। तदिङ्गात्रम् उल्लिख्यते -

**14. Sources of Indian Tradition** –

Sources of Indian Tradition (भारतीयपरम्परायाः स्रोतांसि) इति ग्रन्थस्यास्य लेखकः विलियमथियेडोर् आसीत्। अन्यैर्विद्वद्भिः सह आर्.एन्.दाण्डेकरो ग्रन्थस्यास्य संकलनकर्त्तासीत्। ईशवीये 1958 वर्षे ग्रन्थोऽयं दक्षिण-एशियायाः क्षेत्रे (अधुना भारत-पाकिस्तान-बांग्लादेश-श्रीलंका-नेपालादिप्रदेशेषु) सभ्यताविषये सर्वाधिकमहत्त्वपूर्णरूपेण व्यापकतया प्राप्यमानेषु ग्रन्थेषुन्यतमोऽस्ति। ग्रन्थोऽयं छात्राणां पाठकानां च कृते महत्साहाय्यम् आवहतीति कृत्वा एतदेवावगन्तुं शक्यते यत् तत्रत्यैः प्रमुखैर्विचारकैः जीवनं, स्वीयानां पूर्वजानां परम्परा, विश्वञ्चेदं कथं दृष्टञ्चेति विचारसरणिमवगन्तुं सहायकोऽयं ग्रन्थः।

ग्रन्थस्यास्य द्वितीयं संस्करणं व्यापकरूपेण संशोधितम् अस्ति, यस्मिन्नूतना सामग्री महद्रूपेण सम्मिलिता वर्तते। परिचयात्मकेष्वालेखेषु निहितानां धार्मिक-सामाजिक-राजनैतिकार्थिकविषयाणां प्रश्नानां स्वीयाः विचाराः व्यक्तीकृताः सन्ति। तेषां लेखानां कथनानां वा प्रत्येकेनांशेन प्राक्संक्षिप्ताः सारांशाः सन्ति। प्रतिनिधित्वपरम्परासु ब्राह्मण्यवादः, जैनधर्मः, बौद्धधर्मः, हिन्दूधर्मः, इस्लामधर्मः सिखधर्मश्च सम्मिलिताः सन्ति। ग्रन्थेऽस्मिन् ईशापूर्वतः त्रिसहस्रवर्षतः (3000) अष्टपञ्चाशदुत्तरैकोनविंशतितमंवर्षं यावत् भारतीयेतिहासस्य कालक्रमः प्रस्तुतोऽस्ति।

वैदिकानामुत्तरवैदिकानां धर्माणां, तद्विकासानाञ्चोपरि दाण्डेकरेण लिखितेन लेखेन समेषां देवानां, विचाराणां, दर्शनानां च सहजतया व्याख्यानमाप्यते। स्पष्टमिदं यद् ईदृशस्य पुनर्निर्माणस्य विवरणाय नूतनशोधानां व्याख्यानाञ्चालोकेन परीक्षणस्येतिहासस्य च पुनर्निर्माणोऽसम्भवः। तेषां विकासवादेतिहासः कदाचिद् बहुरेखाचित्रैः कारणप्रभावानुक्रमपरिचयात्मकेषु च निर्मितः प्रतीयते। तेषाम् ऐतिहासिकावेगः एव प्रस्तावाय तान् प्रेरितवान्। तेषामालोचनात्मिका दृष्टिः डेक्कनमहाविद्यालये हीडलबर्गविश्वविद्यालये च प्राप्तस्य प्रशिक्षणस्य परिणाम आसीत्। दाण्डेकरस्य चिरस्थायिने उत्तराधिकाराय आलोचनात्मकं चिन्तनमासीत् गुरुत्ववहम्। अयमेव भावस्तेन स्वीयच्छात्रेषु सहयोगिषु तेन प्रमाणीकृतः। स आधुनिकयुरोपीयज्ञानं प्रज्ञां सम्यक्तया वेत्ति स्म। तत्कालीकेष्वाचार्येषु दाण्डेकरः वेदशास्त्रचर्चायाम् अद्वितीय इत्यत्र नास्ति संशयलवः कश्चिदिति शिवम्।

## तथ्यसूत्राणि

*भारतीयसाहित्यम्*, अंकः 45, संख्या 6 (206), नवम्बर-दिसम्बर, 2001), पृष्ठसंख्या 152-154 (3 पृष्ठाणि), प्रकाशकः साहित्य-अकादमी

https://www.exoticindia.com/book-author/r.%20n.%20dandekar/

Catalogue.nla.gov.au/Record/2444593

https://www.worldcat.org/title/srautakosa-encyclopdia-of-vedic-sacrificial-ritual-comprising-the-two-complementary-sections-namely-the-sanskrit-section-and-the-english-section/oclc/479723638?referer=di&ht=edition

https://www.amazon.in/Books-R-N-Dandekar/s?rh=n%3A976389031%2Cp_27%3AR.N.+Dandekar

https://groups.google.com/g/bvparishat/c/5AVY82Mx0kg?pli=1

https://en.wikipedia.org/wiki/Ramchandra_Narayan_Dandekar

https://www.goodreads.com/author/list/4061343.R_N_Dandekar

https://timesofindia.indiatimes.com/city/pune/dandekar-remembered/articleshow/40706451.cms

*Obituary*, Professor R.N. Dandekar, March 17, 1909–December 11, 2001.

*अमृतधारा*, लेखकः एस्. डी. जोशी, प्रकाशकः भण्डारकरप्राच्यशोधसंस्थानम्, पुणे, प्रकाशनवर्षः 1984।

(https://www.exoticindiaart.com/book/details/amrtadhara-professor-r-n-dandekar-felicitation-volume-old-and-rare-book-nak140/)

# Contributions of P. K. Narayana Pillai to Sanskrit Literature

**Lt. Lisha C R**

## Introduction:

The contribution of many scholars in nurturing the Sanskrit language has existed from ancient times to the present day. Along with scholars from different parts of India, Kerala is also at the forefront of its contributions. Especially in the field of Modern Sanskrit Literature, the contribution of Kerala is undeniable. P.K Narayana Pillai is one of the most important Sscholars who helped Kerala to be at the forefront. No one can forget his contributions to the nurturing of the wealth of Sanskrit literature of the twentieth century.

P. K. Narayana Pillai, better identified as Sahitya Panchanan P. K. Narayana Pillai was a well-known scholar, academician, poet, essayist, grammarian and critic in Sanskrit, Malayalam and English languages. He was born on December 25, 1910, in Thiruvalla, Kerala. His parents were T. GodaVarma of Paliyakkara Palace and Lakshmiyamma of Poothillath. He married J Kamalamma and they had three children.

## Education :

He passed his SSLC exam from M.G.M. High School, Thiruvalla. He studied intermediate at SB College,

Changanassery. During that time he also tried to learn Sanskrit from O.K. Gopalaganakan. He completed his undergraduate and postgraduate studies at Madrass University. He was able to obtain his postgraduate degree in Sanskrit (1934) and Malayalam (1936) languages. He received his PhD in 1944 from the University of Bombay for his research in the non-Rigvedic mantras in wedding ceremonies. He learned Mīmāṃsā from P.K. Ramanath Shastri and Nyāya-Vyākaraṇa from S Padmanabhapotti.

**Academic life:**

P.K. Narayana Pillai had the highest academic career after his education. He held the highest academic positions in colleges and universities. He began his career as a curator at the Manuscript Library, Thiruvananthapuram. Later he became the headmaster of Sanskrit high school, Thiruvananthapuram. He again worked as a Malayalam lecturer at the Arts College, Thiruvananthapuram. In 1939, he again became the leading scholar and curator. He became Professor of Sanskrit at University College in 1952 and later became principal in 1957. In 1960 he served as a part-time professor in the department of oriental studies. He was the Dean of the faculty of Oriental studies, Member of Senate, Member of Syndicate, and Member of Academic council and head of Boards of studies of Kerala University. He also worked as a one-man commission for Sanskrit university. He was also the founder president and Honorary Director of Mahakavi Ulloor Memorial Library and Research Institute, Thiruvananthapuram.

**Honours and Awards:**

He has received numerous awards for his outstanding contributions to the literature and academic field.

- Sree Godavari Award- Madras University
- Kerala Varma Gold Medal- Kerala University
- Kalidasa Award - Uttar Pradesh Sanskrit Academy
- Vivekananda Award
- Kerala Sahitya Academy Award
- Kendra Sahitya Academy Award
- President's Award

**Honorary titles:**

Many honorary titles have been bestowed on him during this period.

- Vidyābhāṣaṇam - Sanskrit Academy of Ayodhya
- Paṇḍitaratna – Vishvasamskruta Prathishtan
- Kalānidhi - Kerala Hindi Pracharasabha

He coordinates a lot of academic and cultural functions like Silver jubilee celebrations of the temple entry proclamation (1962), the Annual conference of the Samasta Kerala Sahitya Parishat (1963), 150$^{th}$ Birthanniversary celebrations of Prof. Max. Muller (1974), Mahakavi Ulllloor centenary celebrations (1977) and 140$^{th}$ Birth anniversary of Kerala VarmaValiyakoil Thampuran (1985) etc.

**Works:**

Dr. P.K. is the author of numerous research papers, commentator on ancient Sanskrit texts, publisher, and

commentator on Malayalam texts and is one of the best scholars in Malayalam and Sanskrit. He also published some texts in English.

**Research works:**

- Non-Rigvedic mantras in marriage ceremonies
- kālidāsa - an assessment by ānandavardhana
- The Rigvedicpadapātha - A study
- Mīmāṃsā in Kerala
- Mantras cited by Pratika in the aitareyabrāhmaṇa

**Sanskrit works: -**

- Cidātmikāstavaḥ
- śrīvallabheśasuprabhātam
- Dharmaśāstrastavaḥ
- śrīśoṇādrīśastavaḥ
- SabarigiriKirtanam
- Anyākumārīṃ bhaja
- Bhāṛja Rāmakṛṣṇam
- Mayūradūtam
- Vimalānandasaptakam
- Vivekānandastotram
- Viśvabhānuḥ
- Dharmaśāstrastavaḥ
- śavarigiritīrthāṭanam
- śrīśoṇādrīśastavaḥ

**Malayalam works:-**

- Sanskrit Equivalents of Malayalam Proper Nouns

- SanskritaSahityaPranayikal
- Vicitravipinam
- Tattvadipiki
- Sahitikataksam

**English works:-**

- SreeSankara: A philosopher mystic and poet
- KeralavarmaValiyakoilTampuran

All of the above works Viśvabhānu and Dharmaśāstrastavaḥ are the most important works based on their historical and philosophical aspects.

**1). Viśvabhānuḥ - Mahākāvyam** :

The epic poem Viśvabhānu contains the life and visions of the philosopher Swami Vivekananda. In this Mahākāvya, which has 21cantos and 555 stanzas, the poet has tried to make it beautiful by adding all the ingredients needed for an epic. The poet has written 25 lines in each of these cantos except in the sixteenth canto as well as the twenty-first chapter.

The poet here beautifully narrates the extraordinary intellect and visions of Vivekananda. The poem ends with passages describing the last days of Vivekananda's life. In between, the poet beautifully depicts the life, philosophy and teachings of Vivekananda. This kāvya can be considered as a historical kāvya or a historical document rather than an epic.

The description of the birth of Bhānu (Sun) as Vivekananda and describing the works of his entire life till his death is the descriptive subject of this epic. The poet has

created the cantos according to the life course of Swamiji. Describing the supernatural manifestation of Charita Nayaka in the form of the Pīthikā, the seed of the supernatural teacher-disciple relationship completed by 'Taruśākhāpatsavakrama' is described in the first canto. Describing in the second canto, the paternal grandfather, who is residing in Sannyāsa Āśrama, has wished to express the wealth of his descendant (grandson) Vivekananda's retirement. In the third and fourth cantos, there is a beautiful description of the laziness and Śaiva Bhakti, the soul-qualities of Mother Bhuvaneswari Devi and Visvanatha, and son Narendra's sagacious child pastimes, the brilliance of their study of scriptures and their detachment from worldly activities in their infancy. The miraculous substance of consciousness with the amalgamation of material nature is the life of poetry. From this point of view this element is getting reflected everywhere in this poem. Despite being a pious artist, but pious, but mighty like a lion, a peaceful soul, but a charitable one, despite being intelligent, thus being included in the character of mutually opposed religions, his supernatural glorified form has been presented in the fifth canto.

Vivekananda comes to a divine guru like Swami Sri Ramakrishna Paramhansa. The Sadguru, having found his perfect disciple, bestows him with divine power. The realization of the fruits of this divine power, the revelation of the secret of service to the living soul, etc. have been presented in verses from the sixth to the eighth canto. In full knowledge and age, young Narendra preaches as a yogi in the spirit of benevolence to the world, travelling on foot from the

Himalayas to Kanyakumari. It has been described from ninth to the third canto. Vivekananda attains right knowledge by sitting on the Shripadshila of Kanyakumari in the fourteenth Canto.

Here is a very beautiful depiction of Vivekananda's peace and broad sentiment. In the 15th and 16th cantos, the unity of the human being has been expressed in the spirit of mutual reciprocity for the attainment of man's desire. When called by America to the Chicago religious assembly, they leave there by sea. Swami Vivekananda is warmly welcomed there, he preaches spirituality there. Many impressed foreign disciples accompany him to India. All this description has been completed in Ojas and Prasāda Guṇa.

In seventh canto, we found the devotion of Narena to Lord Ramakrishna and Mahāsamādhi & Siddhiprapti are prime focus. In the 18th canto, Swami Vivekananda feels very proud when he comes to India and the Indian people who are revered towards him warmly welcome him. Coming to India, he preached the inspiration of public service and the purity of life style and the unity of the whole world. With the establishment of various ashrams, his disciples inspired them to serve the public. In the 19th canto, the inspiration of public service and spiritual liberation and the awakened attainment of excellence has been given. In 20th canto, the disciples of Swamiji travel all over India for the propagation of religion according to his teachings. The establishment of Ramakrishna Mission, the establishment of Balurmath, the protection work in the areas affected by pandemic, the establishment of Sri Ramakrishna Temple, the training of

disciples for human service, the appointment of sannyasins abroad and Swamiji's journey to the west etc. have been described. Swamiji's repatriation to India in 21st Canto, visit to Kashi, discussion on the essence of Vedas and 'Sarvam Brahmamayam Jagat' in Balurmath, Swamiji's behavior like a child, Demonstration of the spirit of equanimity with animal birds, Īśvara-darshana everywhere and malaise has been described. So, the author portrayed vividly the total sketch of Swamiji's life in this epic.

Vivekananda justified and established the nature of India in front of thousands of audiences. So, the Poet N. Pillai said:

> 'teṣu bhāratajāteṣu matāntarasahiṣṇuṣu/
> ahamanyatamaḥ kopītyabhimānāspadaṃ mama//
> sādhutvaṃ sarvadharmāṇāmaṅgīkurvatsu teṣvaho/
> ahamanyatamaḥ kopītyabhimānāspadaṃ mama//
> jūtānāṃ sāratuṣṭāṇāṃ cābhayaṃ te dadurjanāḥ/
> teṣāmasmyanugāmīti mānasya mahadāspadam'//
> (16.21-23)

Poet Pillai spoke to Vivekananda about the merits of the disciple :

> 'same vayaṃ mānuṣakīṭarāśayaḥ samāḥ
> śivāṃśasphuraṇaikajīvanāḥ/
> tataḥ prabhutvena pareṣvanugraha
> prakāśanaṃ sādhudhiyāṃ na śobhanam//'

Narendranātha listened minutely to the advice of Guru Rāmakriṣṇa and sacrificed himself in the service of the world

– 'ātmano mokṣārthaṃ jagaddhitāya ca'. This patriotism and love for mankind is rare in the world. So the poet said -

> 'parātmanaḥ prasphurite jagatyalaṃ
> vilokayan mānadivyatāṃ sadā/
> satāṃ hitaṃ yad vitanoti svanaṃ
> tadevamuktipradamātmano matam//'
> (8.18)

In the epic 'Viśvabhānu' composed on him, the spirit of patriotism is seen flowing uninterruptedly. Vivekananda is going to propagate Indian sentiments - by being stationed on the boat. Looking at the land of India with great respect, we salute. Not only towards the land of the nation, but Vivekananda's faith in its life, religion and philosophy has been shaped on every footing. In this poem, although a strong belief in Indian gods and goddesses and religious philosophy has been shown, yet it has been inspired to be tolerant towards other religions. Considering the abode of God everywhere, the idea of having respect for all has been expressed. The feeling of fraternity has been expressed towards all the human beings of the world. Reverence for the adorable helps in the development of intellect and character. In this way, through the characterization of Vivekananda, the poet has given inspiration to make his life sublime, keeping a sense of belonging towards the world.

The poet Pillai portrays Vivekananda here as a being with a divine atmosphere, rather than an ordinary human being with the application of prosodies like Basantatilaka, Biyoginī, Prithvī etc. In the epic Viśvabhānu, if the vocabulary is helpful in fine verse configuration and natural

lyricism, then the meaning is expressive. In the real place, different ornaments have been used. The use of alliteration, simile, metaphor, Utprekṣā etc is found in every canto of the epic.

The epic 'Viśvabhānu' is written in refined Sanskrit. In the entire epic, the poet is adept in the use of language-friendly language as shown in the Vaidarbhī Rīti manner involving Prasad qualities. In other poems, words from modern languages have been adopted. But the Poet has not adopted other words except the popular names in the present period. The poet has an extraordinary command over language. The naturalness of the language is clear from the other quoted verses, however, for example, a verse is presented, 'The melodious combination of the elegance of the language and the gusto of emotion is observable' –

kālī karālakarabālakarā
prapañcakelīratākuruta nirmaladūhāsam/
tārāgaṇairanugatā saharīparītā
kanyeva kāmilalitā lalitaṃ namarta//
(*Viśvabhānu*', 3/24)

## 2). Dharmaśāstrastavaḥ

Dharmaśāstrastavaḥ is another epic kāvya of Dr. P.K. Narayana Pillai. The greatest way to convey the biographies of great men to the people is to write poems about them. His attempt to convey to others the life and visions of Sri Ramakrishna Paramahamsa by combining all the necessary ingredients in one epic is a contribution to literature as well. This kāvya contains eighteen cantos. This kāvya is

undoubtedly an ideal book on the life and visions of Sri Ramakrishna Paramahamsa. This kāvya, which depicts in great detail the birth and vision of Sri Ramakrishna Paramahamsa and his views on life, can be said to be related to the life of the common people beyond the supernatural.

**3). Mayūradūtam:**

Mayūradūtam is an important translation work by Narayana Pillai. He translated Mayūrasandeśa written by Kerala Varma Valiya Koil Thampuran, one of the most important Sandeśa kāvyas in Sanskrit. The book was published in 1984 in two parts on the same model as the source book.

**4). Non-Rgvedic Mantras in the Marriage Ceremonies:**

This is a book based on the thesis work of Narayana Pillai's Ph. D. His strength of academic life lies in the fact that such studies in the Vedas are not very popular in contemporary society.

**5). Sanskrit Equivalents of Malayalam Proper Nouns:**

P. K. Narayana Pillai was equally proficient in Malayalam and Sanskrit. Such texts are the epitome of this bilingual knowledge. He studied the similarities of names used in Sanskrit and Malayalam based on some old manuscripts.

**6). Kairalidhvani:**

Dhvani theory was an important theory in Indian literature as well as in Sanskrit literature. Based on

ānandavardhana's *Dhvānyalok*a, this work supports the theory of Dhvani in great detail. It was this book that helped him to win the Kerala Sahita Academy Award in 1977. The book was also helped him to win the 'Sahitya pravartha ka Sahakarana Sangha' in 1981.

**7). Madanakrtucarita of Ramapanivada:**

Narayana Pillai began his academic career as a manuscript librarian. Therefore, he was able to edit a lot of books and accurately study them. *Madanaketucaritam* is one such work. He was able to make an accurate study of this work, which belongs to the category of *Prahasana* in Sanskrit rūpakas.

A library, P. K. Memorial Library, one of the first libraries in Kerala was established in his honour by P. N. Panicker, known to be the father of library movement in Kerala, with Panicker serving as its secretary and it was here the representatives of 47 libraries in the state of Travancore met on 16 September 1945 to form the *Thiruvithaamkoor Granthasala Sangham* (All Travancore Library Association), the first library movement in Kerala. Incidentally, P. K. Memorial Library was the first entry in the association's register. Sahitya Akademi has published Narayana Pillai's biography under the title, *Sahitya Panchanan P K Narayana Pillai*, written by M. Gopalakrishnan Nair, under the series, *Bharathiya Sahitya Silpikal* (The Makers of Indian Literature).

P.K. Narayana Pillai passed away at the age of eighty, on March 20, 1980. He remains in the public eye with the

contribution of a handful of powerful books. The statement that the death of the poet will only destroy his physical body and that his works will survive the ages is irrelevant here.

## Bibliography

Narayana Pillai, Dr. P.K. *Non-Rigvedic Mantras in the Marriage Ceremonies*. Trivandrum: Travancore Dewasom Board, 1958.

Narayana Pillai, Dr.P.K. *A Descriptive Catalogue of Sanskrit Manuscripts in the Curator's Office Library*. Trivandrum: V.V.Press Branch, 1937.

Narayana Pillai, Dr. P. K. *Kalidasa- An Assessment by Anandhavardhana*. Vishveshvaranand Vedic Research Institute, 1974.

Narayana Pillai, Dr. P. K. *Kairalidhvani*, Trivandrum: Vidyarthimithram Book dippo, 1977.

Narayana Pillai, Dr.P. K. *Laghubhaskariya with the commentary vivarana of Sankara Narayanan.*Trivandrum: University manuscript library, 1949.

Narayana Pillai, Dr. P. K. *Asante Hrdayam*. Bharatiya Sahitya Samithi, 1968.

Narayana Pillai, Dr. P. K. *Jaiminiya- Sutrasathanasangraha*. Trivandrum: Bhaskara Press, 1951.

Narayana Pillai, Dr. P. K. *Seshasamuccaya*, Vedic Books, 2007.

https://shodhganga.inflibnet.ac.in/bitstream/10603/142119/6/06_part%20i.pdf

https://shodhganga.inflibnet.ac.in/bitstream/10603/142119/9/09_part%20iv.pdf

https://shodhganga.inflibnet.ac.in/bitstream/10603/142119/8/08_part%20iii.pdf

https://shodhganga.inflibnet.ac.in/bitstream/10603/160718/7/07_chapter%202.pdf

https://shodhganga.inflibnet.ac.in/bitstream/10603/160718/8/08_chapter%203.pdf

https://shodhganga.inflibnet.ac.in/bitstream/10603/160718/9/09_chapter%204.pdf

https://www.keralasahityaakademi.org/PROFILES/PKNarayana Pillai/Html/PKNPgraphy.htm

https://en.everybodywiki.com/P.K._Narayana_Pillaihttps://en.everybodywiki.com/P.K._Narayana_Pillai

# वङ्गविदुषो यतीन्द्रविमलचौधुरिणः जीवनवृत्तम्

डा. तन्मयकुमारभट्टाचार्यः

**प्रास्ताविकम्** –

रत्नप्रसविनीयं बङ्गभूमिः। अस्यां बहवः कृतिनो जन्म लब्ध्वा जननीं जन्मभूमिंश्च गौरवेण समलङ्कृतवन्तः। तेषामन्यतमः शोधकर्ता, कविः, प्राबन्धिकः, सम्पादकः, नाट्यकारः, निर्देशकः, प्रकाशकः, प्रशासकः, प्राध्यापकः, संस्कृत-संस्कृतिसंरक्षकश्चेत्यादिभिरशेषगुणैर्विभूषितः कीर्त्तिमान्, संस्कृतज्ञः, प्राच्यतत्त्वविद्, प्रज्ञावान्, बङ्गीयमनीषिणामग्रण्यश्चासीत् ड. यतीन्द्रविमलचौधुरिवर्यः। ड. यतीन्द्रविमलवर्यः स्वप्रतिभाबलेन समकालीनान् सर्वान् अतिक्रान्तवान्। अयं वरेण्यो विद्वान् स्वजन्मना तदानीन्तनाविभक्तबङ्गप्रदेशस्य चट्टग्रामजनपदस्य कदूर्खिलग्रामं धन्यमकरोत्। तस्य पिता रसिकचन्द्रचौधुरी प्राथमिकविद्यालये शिक्षक आसीत्। पुत्रस्य यतीन्द्रस्य उच्चशिक्षार्थं स सर्वस्वं विक्रीय महान्तं व्ययभारमूढ्वापि पुत्रं कलिकातां लण्डननगरञ्च प्रेषितवान्। पितुः प्रेरणयैव तस्य संस्कृते सविशेषमभिरुचिरासीत्। यतीन्द्रविमलः छात्रजीवने धनोपार्जनमपि कृतवान्। ई. १९२६ तमे वर्षे स 'वैदिककर्मकाण्डेषु नारी'ति विषयमाश्रित्य शोधोपाधये लण्डनविश्वविद्यालयं प्रविष्टः, ई. १९३४ तमेऽब्दे चाभिलषितमुपाधिमधिगतवान्। ई. १९३७ वर्षे लण्डननगरस्थम् इण्डिया-अफिस्-लाइब्रेरीत्यत्र लण्डन-विश्वविद्यालये च कार्यरत आसीत्। लण्डननगर एव दर्शनविषयमाश्रित्य शोधोपाधिं प्राप्तवती 'रमा' तेन सङ्गता परिणीता चेति। ई. १९३८ तमेऽब्दे भारतं प्रत्यागतः यतीन्द्रविमलः City College इत्यत्र कलिकाताविश्वविद्यालये च क्रमेण प्राध्यापकपदे व्याख्यातृपदे च वृतोऽभवत्। अनन्तरं कलिकाताराष्ट्रिय-संस्कृतमहाविद्यालयस्य अध्यक्षपदमलमकरोत्। कलिकातानगरस्थ-प्रेसिडेन्सिमहाविद्यालये संस्कृतविभागाध्यक्षत्वेनापि स नियुक्तोऽभवत्। तदनन्तरं स्वातन्त्र्यात् परं बङ्गीयसंस्कृतशिक्षापरिषदः सचिवत्वेन स मनोनीतोऽभूत् स निरुक्तेषु सर्वेष्वपि शैक्षणिकसंस्थानेषु भारतीयसंस्कृतेः संस्कृतभाषायाः

भारततत्त्वस्य च प्रचाराय प्रसाराय समुन्नयनाय च भृशं प्रायतत। ड. यतीन्द्रविमलस्य सुयोग्या सहधर्मिणी आसीत् ड.रमाचौधुरिवर्या, सा अक्सफोर्ड्-विश्वविद्यालयस्य प्रथमभारतीयशोधच्छात्रा आसीत्। भारतं प्रत्यागता सा कलिकातास्थ-लेडिब्रेवन्समहाविद्यालये अध्यक्षरूपेण वृताऽसीत्। ड. यतीन्द्रविमलचौधुरी, ड. रमा चौधुरी चोभाभ्यां प्राच्यवाणीतिसंस्था ई. १९४३ तमेऽब्दे संस्थापिता। कलिकातानगरस्थ-प्राच्यवाणीसंस्थया प्राच्यविद्यायाः प्रचुरः प्रचारः कृतः। ड. यतीन्द्रविमल, ड.. रमा चौधुरी इत्यनयोः प्रयासेन प्राच्यवाणी मन्दिरस्य नाट्यपरिषत् संस्थापिता, समग्रभारते संस्कृतभाषायाः प्रचाराय प्रसाराय च संस्थयानया बहूनि संस्कृतनाट्यानि मञ्चस्थानि, तत्रत्यसहृदयदर्शकैः प्रशंसितानि च। ड. यतीन्द्रविमलचौधुरिवर्यस्य रचनाविश्वं विस्मयकरं वैचित्र्यमयमनल्पञ्च। संस्कृतवाङ्मये नारीणां योगदानम् इत्यमूं विषयमाश्रित्य ड. चौधुरिणा एव प्रथमवारं समालोचनात्मकं शोधकार्यं ग्रन्थसम्पादनञ्च विहितम्। ग्रन्थोऽयं सप्तभिः खण्डैः प्रकाशितोऽभवत्। प्रथमखण्डे दृश्यकाव्यम्, द्वितीयखण्डे विविधवयस्कानां संस्कृतकवयित्रीणां तुलनात्मकमध्ययनं कृतं, वैदिकऋषिकाभिः बौद्ध-थेरिकवयित्रीभिः प्राकृतकवयित्रीभिश्च समम्। तृतीयखण्डे पुराणसाहित्ये, धर्मशास्त्रे च नारीणाम् अवदानं विवृतमस्ति चतुर्थखण्डे। पञ्चमखण्डे संस्कृतविदुषीभिः प्रणीतं तन्त्रशास्त्रं वर्णितमस्ति। षष्ठखण्डे महिलाकवयित्र्यः तासां संस्कृतकाव्यानां परिचयः प्रदत्तः विस्तरेण। सप्तमखण्डे संस्कृतविदुषीभिः प्रणीतं स्मृतिशास्त्रं समुल्लिखितम्। बङ्गीयानां स्मृतिशास्त्रे योगदानमिति विषयमाश्रित्य त्रिभिः खण्डैः शोधात्मकं ग्रन्थसम्पादनं ड. चौधुरिणा कृतम्। प्रथमखण्डे शूलपाणेः तिथिविवेकः, द्वितीयखण्डे रघुनन्दस्य त्रिपुष्करशान्तितत्त्वं, तृतीयखण्डे शूलपाणेः तिथिविवेकः, श्रीनाथचूडामणेः तात्पर्यदीपिका च सम्पादितास्तेन। वैदिककृत्येषु नारीणामवस्थानमधिकारश्चेमं विषयमवलम्ब्य तस्य शोधग्रन्थः समग्रसंसारे समादृतोऽस्ति। तत्र कन्यायाः भार्यायाः विधवायाः जनन्याः अन्यासाञ्च नारीणां वैदिकसंस्कारकर्मसु का भूमिका, किं महत्त्वं गार्हस्थ्यकृत्येषु, एतत्सर्वं सोदाहरणं प्रपञ्चितमस्ति। शूद्राणां कोऽधिकारः, विधवाविवाहः, भारतीयसाहित्ये पत्नी भगिनी च कथं चित्रिते इत्येतत्सर्वं सविस्तरमालोचितमस्ति। अयमेव शोधग्रन्थः

लण्डनविश्वविद्यालये Ph.D. शोधोपाधये गृहीतः, तेन Ph.D.इत्युपाधिश्च लब्धः। तेन त्रिंशदधिकानां दूतकाव्यानां सङ्ग्रहः कृतः, तेषु केषाञ्चन दूतकाव्यानां प्रथमवारं समालोचनमूलकं शोधात्मकञ्च सम्पादनं विहितम्। महम्मदीयानां संस्कृतवाङ्मये योगदानं तदीयमेकं महत् शोधकार्यम्। खण्डत्रयेण विभक्तेऽस्मिन् शोधप्रबन्धे महम्मदीयकवीनां तैः प्रणीतसंस्कृतकाव्यानाञ्चोल्लेखोऽस्ति। मध्ययुगीनभारतस्य संस्कृतकवीनां कोशकाव्यानाञ्च सङ्ग्रहः शोधसम्पादनञ्च कृतं तेन। चतुर्भिः खण्डैः संस्कृतेतिहासग्रन्थः सम्पादितः ड. चैधुरिणा। यत्र राजवंशानां परिचयः प्राप्यते, शूर्जनचरितं, जामविजयं, वीरभद्रचम्पूः, आवदुल्लाचरितम् इत्यादीनि प्रप्रथमेव ड. चौधुरिणा सम्पादितानि। मेघदूतस्य विविधाभिः टीकाभिः प्रथमवारं शोधसम्पादनं तेन कृतं, तच्च शाश्वत-सनातनगोस्वामिभ्यां प्रणीतटीकाद्वयेन मल्लिनाथसमेतञ्चैकम्, अन्यच्च, भरतमल्लिकिदिभिः भवेदिति एतदर्थमाजीवनं विविधः प्रकल्पः परिकल्पितः, संस्कृतकार्यजातं प्रणीतटीकाभिः समं मेघदूतस्यापरं सम्पादनं कृतं तेन। ललितमाधवस्य, विदग्धमाधवस्य च विस्तृतसमालोचनात्मकं सम्पादनमपि तेन कृतम्। संस्कृतमौलिकनाट्यानां प्रणयनं मञ्चनञ्च तदीयं जीवितोद्देश्यमासीत्, अनेन संस्कृतं भारतस्य राजभाषा, लोकभाषा च भवेदिति तदन्तरङ्गमासीत्। बहूनि संस्कृतगीतानि तत्त्वमूलानि तथ्यमूलानि च तद्विरचितानि प्राकाश्यं नीतानि चेति। वैष्णवदर्शनं, बौद्धसाहित्यं, ज्योतिषं, जीवनचरितं, संस्कृतबालशिक्षणं, संस्कृतज्ञानामैक्यञ्चाश्रित्यापि तेन नैके ग्रन्थाः प्रणीताः। समासेन ड. यतीन्द्रविमलचौधुरिणः सारस्वतकृतीनां परिचयः प्रस्तूयते शोधार्थिभ्यः।

**ड. यतीन्द्रविमलचौधुरिवर्येण सम्पादितग्रन्थाः**

भारतस्य विरलेषु संस्कृतग्रन्थसम्पादकेषु ड. यतीन्द्रविमलचौधुरी विरलतमः स्यात्। तस्मिन् कालखण्डे तेन ये ग्रन्थाः सम्पादिताः सर्वतो दृष्ट्या अद्यापि तादृशं सम्पादनकर्म विनूतनम् अनितरसामान्यञ्च वर्तते। संस्कृतभाषायाः प्रचाराय प्रसाराय च तेन यत् कृतं तदनुपममेवात्र न संशितिरस्माकम्। विषयनिरूपणदृष्ट्या गुणवत्तादृष्ट्या सङ्ख्यादृष्ट्या च

तदनल्पमकल्पनीयञ्च। तत्सम्पादितग्रन्थेषु यादृशी सूक्ष्मेक्षिका सावलीलता, विषयावगाहनता, प्रामाणिकता चावलोक्यते समकालीनस्पादितसंस्कृतग्रन्थेषु तत् सर्वथा दुर्लभमेव। अधस्तात् यतीन्द्रविमलचौधुरिसम्पादितग्रन्थानामुल्लेखः क्रियते।

| क्रमः | ग्रन्थशीर्षकम् | ग्रन्थकारः | प्रकाशन-संस्था | प्रकाश-वर्षम् |
|---|---|---|---|---|
| 1. | Contribution of women to Sanskrit Literature (7 Volumes, 3000 pages) | *Lakshmirajni* and other poetesses | By author | 1940 |
| 2. | Position of women in the Vedic Ritual | | Prachaya vani, Kolkata | 1945 |
| 3. | Contribution of Muslims to Sanskrit Learning (3 Volumes) | Mahammad Shah, Abdur Rahim, Dara Shikoh | ” | 1954 |
| 4. | Āsaf-vilasa-ākhyāyikā | Panditarāja Jagannātha | ” | 1954 |
| 5. | Muslim Patronage to Sanskrit Learning (2 Volumes) | | ” | 1942 |
| 6. | Contemporary Sanskrit Learning (1551-1650 A.D.) | | ” | 1954 |
| 7. | Vānmandanaguna Dūtakāvyam | Viresvara | ” | 1941 |
| 8. | Constitution of Muslims to Sanskrit Literature | | ” | 1952 |

| | | | | |
|---|---|---|---|---|
| | (2 Volumes) | | | |
| 9. | Vaṅgīya-Dūtakāvyetihasa (30 Dūtakāvyas) | | ,, | 1953 |
| 10. | Saṁskrita Kośa kāvya Saṁgraha (Rasikajīvanam, Padyaveni, Sabhyadankaranam) | Gadadhara Bhatta, Venidutta, Sundaradeva, Haribhakara Gobindajit | ,, | 1944 |
| 11. | Chandradūtakāvyam | Jambu Kavi | ,, | 1941 |
| 11 | Kathopaniṣad | Shrutiḥ | ,, | 1950 |
| 12. | Contribution of Bengal to Smriti-literature (10 Volumes) | Sulapani and others | ,, | 1941 |
| 13. | Bhramaradūtakāvyam | Rudranyaya Panchanin | ,, | 1940 |
| 14. | Jātaka-Paddhatyudahasana | Sri Krishna Daivajna | ,, | 1955 |
| 15. | Kala Madhava Lakshmi | Lakshmi Devi | ,, | 1941 |
| 16. | Nripati Niti Garbhita Vritta | Lakshmipati of Kumaun | ,, | 1959 |
| 17. | Chamatkāra Taṅgīni | Sundari and Kamala | ,, | 1942 |
| 18. | Tripuṣkāra Śanti Tattvam | Raghunandana | ,, | 1943 |
| 19. | Jamavijayakāvyam | Vānikantha | ,, | 1953 |
| 20. | Pānthadūtam | Bholanath | ,, | 1952 |

| | | | | |
|---|---|---|---|---|
| 21. | Dhurta Vidambanam | Amareshwara Sharman | ” | 1951 |
| 22. | Sangita Malika | Mahammad Shah | ” | 1953 |
| 23. | Bhupa Śatakam | Raghava Vachaspati | ” | 1952 |
| 24. | Romavali Śatakam | Ramachandra Bhattacharya | ” | 1953 |
| 25. | Ramachandra Yashah Prabhandha | Akbariya Kalidasa | ” | 1944 |
| 26. | Meghadūtam | Kalidasa | ” | 1954 |
| 27. | Sanskrit History in 4 Volumes | Various Writers | ” | 1953 |
| 28. | Padāṅkadūtam | Krishranath Sarvabhouma | ” | 1958 |
| 29. | Ghatakarpara kāvyam | | ” | 1948 |
| 30. | Virabhadrachamp u | Padmanabha Mishra | ” | 1952 |
| 31. | Abdullah-Charitam | Lakshmipati | ” | 1948 |
| 32. | Contribution of Vaisnavas to Sanskrit Literature | | ” | 1950 |
| 32. | Lalitamādhavam | | ” | |
| 33. | Sūrjanacharitam | Chandraśekha r | ” | 1952 |
| 34. | Śrīmad Bhagavat Gītā | Vyāsadeva | ” | 1954 |
| 35. | Haṃsadūtam | Vamanabhaṭṭ a | ” | 1958 |
| 36. | Sabhyalaṅkarana | Gobindajit | ” | 1957 |

| | | | | |
|---|---|---|---|---|
| 37. | Sukti Sundara | Sundaradeva | ” | 1956 |
| 38. | Padyamṛta Taranginī | Haribhaskara | ” | 1960 |
| 39. | Sanskrit Poets of Mediaeval India (5 Volumes, 2000 pages) | | ” | 1961 |
| 40. | Sanskrit Historical Kāvyas (5 Volumes, 1500 pages) | | | 1961 |
| 41. | Sri Sri Chandi | Vysadeva | ” | 1959 |

ड. यतीन्द्रविमलचौधुरिवर्येण निरुक्तसंस्कृतसम्बद्धानां ग्रन्थानां सम्पादनं विहितम्, एतदतिरिच्य संस्कृतेतरविषयान् अवलम्ब्यापि तेन नैके ग्रन्थाः सम्पादिताः। तेषां ग्रन्थानामनुक्रमणीह प्रदीयते, ड.यतीन्द्रविमलचौधुरिवर्यस्य वैदुष्यमाकलनाय।

| क्रमः | ग्रन्थशीर्षकम् | ग्रन्थकारः | प्रकाशनसंस्था | प्रकाशन-वर्षम् |
|---|---|---|---|---|
| 1. | Catalogue of the Library of the India Office Sanskrit and Prakrit Books (4 Volumes) | In Collaboration with Dr. Prannath | Secretary of state for India | 1933-1938 |
| 2. | The works of Mahaprabhu Srichaitanya | | Secretary of State for Commonwealth Relations, London Prachyavasi, Kolkata | 1960 |

| | | | | |
|---|---|---|---|---|
| 3. | Pracyavāni Prabandhāvalī (Collection of Bengali Articles) | 10 Vol., (English Articles of verious Scholars | Pracayavani, Kolkata | 1962 |
| 4. | Sanskrit and Prakrit Books as joint Author (3 Volumes) | | Prachayavani, Kolkata | 1960 |

अत्रोल्लिखितग्रन्थानां प्रायः प्रथमवारं, विस्तृतभूमिकासम्बलितं, समुचितोद्धृतिसहितं विस्तृतव्याख्योपेतं, विश्वस्तरीयं, शोधप्रकाशनञ्च ड. यतीन्द्रविमलचौधुरीवर्येणैव कृतम्। येषां ग्रन्थानां प्रथमतया संशोध्य सम्पाद्य च प्रकाशनं ड. यतीन्द्रविमलेन कृतं, तत्र तदीयं कठोरं सारस्वतं तपः समालोक्य वाचकाः निश्चयेन विस्मयाभिभूता भवेयुरित्यत्र नास्त्यस्माकं सन्देहावसरः। यतीन्द्रविमलस्य प्रज्ञालोकेन समस्तं जगदुद्भासितं किल! अन्वर्थकं नाम यतीन्द्रविमलस्य, येनोग्रतपसा स्वनामसार्थकं विहितमासीत्।

## ड. यतीन्द्रविमलचौधुरिवर्येण विरचितं संस्कृतनाट्यसाहित्यम्

नाट्यकृता ड. यतीन्द्रविमलचौधुरिणा साकल्येन २३ सङ्ख्यकानि नाट्यानि विरचितानि, तेषु सप्तदश दृश्यकाव्यानि प्रकाशितानि, षट् रूपकाणि अप्रकाशितानि सन्ति। तेषां विवरणमधः प्रदीयते –

| रूपकस्य नाम | वैशिष्ट्यम् | प्रकाशनालयः | प्रकाशन कालः |
|---|---|---|---|
| भक्तिविष्णुप्रियम् | सप्तभिरङ्कैर्विभक्तम् | मञ्जुषा, १३ वर्षम् | ई० १९५८ |
| महाप्रभुहरिदासम् | चैतन्यभक्तमाश्रित्य | | ई० १९५८ |
| भारतहृदयारविन्दम् | श्रीअरविन्दमाश्रित्य पञ्चभिरङ्कैर्विभक्तम् | | ई० १९५९ |

| | | | |
|---|---|---|---|
| महिममयभारतम् | पञ्चभिरङ्कैर्विभक्तम् | | ई० १९६० |
| निष्किञ्चनयशोधरम् | सप्तभिरङ्कैर्विभक्तम् | | ई० १९६० |
| शक्तिशारदम् | पञ्चभिरङ्कैर्विभक्तम् | संस्कृतप्रतिभा ३-१-९७ | ई० १९६० |
| भारतोदयम् | | | ई० १९६१ |
| आनन्दराधम् | | | ई० १९६२ |
| दीनदासरघुनाथम् | | | ई० १९६२ |
| प्रीतिविष्णुप्रियम् | एकादशभिरङ्कैर्विभक्तम् | | ई० १९६२ |
| विमलयतीन्द्रम् | सप्ताङ्कैर्विभक्तम् | | ई० १९६२ |
| मेलनतीर्थभारतम् | | | ई० १९६२ |
| भारतजनकम् | १६ अङ्कैर्विभक्तम् | | ई० १९६२ |
| भारतविवेकम् | | | ई० १९६३ |
| अमरमीरम् | | | ई० १९६५ |
| भारतलक्ष्मीनाटकम् | | | ई० १९६७ |
| मुक्तिशारदम् | अंशमात्रं प्रकाशितम् | | |
| स्वप्नरघुवंशम् | अप्रकाशितम् (आकाशवाण्या प्रचारितम्) | | ६.१२.१९५३ |
| भारतभास्करम् | | | अप्रकाशितम् |
| भारतचन्द्रम् | | | अप्रकाशितम् |

| | | | |
|---|---|---|---|
| देशबन्धु-देशप्रियम् | | | अप्रकाशितम् |
| रक्षक-श्रीगोरक्षम् | | | अप्रकाशितम् |
| धृतिसीतम् | | | अप्रकाशितम् |

निरुक्तेषु नाट्येषु 'महाप्रभुहरिदासम्', 'शक्तिसारदम्', 'भारतहृदयारविन्दम्', 'मुक्तिसारदम्', 'भक्तिविष्णुप्रियम्' ', महिममयभारतम्' चेत्यादीनि रूपकाणि कन्याकुमारी, माद्रास्, पण्डिचेरी, नवदेहली, बेङ्गालुरु च इत्यादिषु भारतस्य विविधभागेषु सफलतया मञ्चस्थानि अभवन्। कानिचन नाट्यानि आकाशवाण्या प्रसारितानि, तदानीन्तन-भारतवर्षस्य विद्वद्भिः भृशञ्च प्रशंसितानि आसन्। एतदतिरिच्य पालिभाषया इदं प्राथम्येन नाट्यमेकं रचितं, तच्च नाम्ना बिम्बसुन्दरीप्रतिबिम्बनम् इति, कालस्तु ई० १९६० स्यात्।

ड. यतीन्द्रविमलचौधुरिवर्येण संस्कृतभाषया, बङ्गभाषया, आङ्गलभाषया च ये मौलिकग्रन्थाः प्रणीताः तेषामावली अधः प्रस्तूयते विदुषां ज्ञानतृष्णानिवारणाय।

| **ग्रन्थशीर्षकम्** | **प्रकाशनसंस्था** | **विषयः** | **प्रकाशनवर्षम्** |
|---|---|---|---|
| शक्तिसाधनम् (Sanskrit Songs, 7 Volumes) (Tune by Pankaj Kumar Mallick, Chinmay Lahiri, Satyeswar Mukherjee, and others) | Prachayavani Kolkata | The claims of Sanskrit for being the Nattetal Language India. | 1953 |
| श्रीमातृलीलातत्त्वम् (With Bengali Translation y Dr. Rama Chaudhury) | Prachayavan, Kolkata | मातृतत्त्वम् | 1960 |

| | | | |
|---|---|---|---|
| श्रीविष्णुप्रियातत्त्वम् | Prachayavan, Kolkata | महाप्रभोः चैतन्यदेवस्य पत्न्याः देवत्वम् | 1960 |
| श्रीराधातत्त्वम् | Prachayavan, Kolkata | राधातत्त्वम् | 1960 |
| श्रीश्रीजननीतत्त्वम् | Prachayavani | | 1960 |
| श्रीश्रीसारदामणितत्त्वम् | Prachayavani | | 1960 |
| श्रीश्रीमहामायातत्त्वम् | Prachayavani | | 1960 |
| श्रीशक्तितत्त्वम् | | | 1960 |
| भेनिस्-वाणिजम् | | शेक्स्पीयरकृतः मार्चेण्ट अव भेनिस् इत्यस्य संस्कृतानुवादः | 1960 |
| Children's Sanskrit Literature | Prachayavani | (Sanskrit Lipi Shiksha) | 1955 |
| Hindu Dharma (With Bengali Translation) | Prachayavani | | 1956 |
| Pandit Iswar Chandra Vidyasagar (Bengali) | Prachayavani | | 1956 |
| Goudiya Vaisnavder Sanskrita Sahitye Dan (Bengali) | Prachayavani | | 1956 |
| Buddha Yosodhara (Bengali) | Prachayavani | | 1955 |

| | | | |
|---|---|---|---|
| Janani Yosodhara (Bengali) | Prachayavani | | 1955 |
| Prachyavani Prabndhāvalī (12 Vol.) (English Articles) | Prachayavani | | 1956 |
| Prabadhāvatī (8 Vol.) | Prachayavani | | 1956 |
| Vaṅgīya Samskrita Visvavidyālaya (Address of Dr. J.B. Chaudhury on the occasion of first meeting of the Founders of Vaṅgīya Saṁskrita Viśvavidyā laya) | Prachayavani, Kolkata | | 1949 |

**उपसंहारः** –

अस्मिन् संसारे यत् किञ्चिदपि वस्तुजातं दृश्यते तत् किमपि न शाश्वतम्। यान्यपि वस्तूनि अस्माकं दृष्टिगोचराणि भवन्ति तान्यपि स्थिरतां न भजन्ते। सर्वमपि संसारे नश्वरं, न किमपि स्थायि, कीर्त्तिरेव मर्त्यलोके अक्षया अविनश्वरा च राजते। उक्तञ्च - "शरीरस्य गुणानाञ्च दूरमत्यन्तमन्तरं। शरीरं क्षणविध्वंसि कल्पान्तस्थायिनो गुणाः॥" विद्यया वैदुष्येण या कीर्त्तिरवाप्यते, सा चिरं जीवति। विद्याबलेनैव महर्षयः महाकवयः मनीषिणञ्च अमरपदवीं प्राप्नुवन्ति। अत एव श्रुतिः निगदति "विद्ययाऽमृतमश्ते" इति। विदुषां सारस्वतकृतयः सर्वदैव सर्वत्र च जनान् प्रेरयन्ति, मार्गदर्शकाश्च भवन्ति। विद्यया ये कीर्त्तिं सम्पादितवन्तस्तादृशाः लब्धकीर्तयः प्रतिष्ठां लभन्ते पूजनीयाश्च भवन्ति।

ड. यतीन्द्रविमलचौधुरिणा यद् विमलं यशः सम्पादितं तच्चिरमक्षयं स्थास्यति तत्कृतावेव। तेनार्जिता विद्या अविश्रान्तश्रमेण अनवरतमध्ययनेन च तत्कृतौ फलवती क्रियान्विता वा जाता नास्त्यत्रास्मत्सन्देहलेशः। यतीन्द्रविमलस्य कृतौ काचनतुलानीया मनीषा प्रकटिता, यया संस्कृतलोकः समुद्भासितोऽभून्महदन्तरालानन्तरम्। संस्कृतवाङ्मयस्य अमृतरसास्वादेन समुज्जीविता विश्वस्य विद्वद्गोष्ठी, कारणं तत्र ड. यतीन्द्रविमलचौधुरीसदृशाः स्वीयसारस्वतकृतिभिः संस्कृतलोककस्य द्वारं युगोचितभाषया संस्कृत्य सम्पाद्य च समुद्घाटितवन्तः। ड. यतीन्द्रविमलचौधुरिवर्येण स्वायुषः पञ्चपञ्चाशत्तम-वर्षावधौ यत् कृतं यत् साधितं संस्कृतलोके समकालीनं तादृशम् उदाहरणं निरलमेव। अनेनैव कारणनेन तदानीन्तनसंस्कृतलोके ड. यतीन्द्रविमलचौधुरी "देवभाषानृपतिः" इत्यनया प्रशस्त्या सभाजितः आसीत्। संस्कृतलोकः यदि तस्य कृतीनामध्ययने पुनः प्रकाशने, गवेषणाकर्मणि च दत्तावधानः स्यात्तर्हि संस्कृतायतिः समुज्ज्वला सम्भावनामयी च भवेदिति शम्।

## सहायकग्रन्थपञ्जी

*संस्कृते पश्चिमवङ्गस्यावदानम्*, नारायणदाशः, कथाभारती, कलिकाता, 2013.

*भारतलक्ष्मीनाटकम्*, यतीन्द्रविमलचौधुरी, प्राच्यवाणी, कलिकाता, 1967.

*भारतभास्करम्,* यतीन्द्रविमलचौधुरी, प्राच्यवाणी, कलिकाता, 1964.

*भास्करोदयम्, ,* यतीन्द्रविमलचौधुरी, प्राच्यवाणी, कलिकाता, 1961.

*भुवनभास्करम्*, यतीन्द्रविमलचौधुरी, प्राच्यवाणी, कलिकाता, 1964.

*महिममयभारतम्,* यतीन्द्रविमलचौधुरी, प्राच्यवाणी, कलिकाता, 1961.

# महामहोपाध्यायः विद्वान् एन्. रङ्गनाथशर्मा

**डा. उदयन-हेगडे**

वर्णेनाच्छपदक्रमेण विशदस्वानेन मान्यश्रिया।
धातुः केतनविक्रमेण वियति स्वच्छन्दबुद्ध्या भृशम्।
नीरक्षीरविवेकवत्सलतया पद्मप्रियत्वामतो
वाणीवाहन! शारदेहन! सदा विन्दामि मन्मानसे ॥

शतावधानिना डा. रा. गणेशवर्येण विरचिते "वाणीवाहन" इत्याख्ये कन्नडग्रन्थे अयं श्लोकः तैः उपनिबद्धः। अस्य श्लोकस्य हंसपरः अर्थः - हे हंस ! तव शरीरवर्णः धवलः। तव पदगतिः रमणीया। ध्वनिः तु गम्भीरः। सृष्टिकर्तुः ब्रह्मणः विजयध्वजः एव भवान इति कीर्तिः। वियति तव स्वैरविहारः तु अनुपमः। नीरक्षीरयोः पृथक्करणे समर्थः अनन्यलभ्यः विवेकः। वात्सल्यगुणेन पद्मप्रियः इति ख्यातिः। शरत्काले प्रीतिः। अतः एव त्वं वाग्देव्याः वाहनत्वम् अवाप्तः। अतः त्वां मनसा प्राप्नोमि। ध्यायामि इत्यर्थः।

(विदुषां रङ्गनाथशर्मणां परतया अर्थः) वर्णः नाम श्वेतवर्णः, अक्षरं च। पदक्रमः नाम पदविन्यासः पदानाम् अन्वयव्यवस्था च। पद्मं नाम कमलं रामश्च। अस्य श्लेषस्य कारणतः कस्यचित् विदुषः सङ्कीर्तनम् अत्र व्यज्यते। ते च विद्वांसः मान्याः रङ्गनाथशर्माणः एव इत्यत्र का संशीतिः? रङ्गनाथशर्माणः हंस इव अन्तरङ्गबहिरङ्गधवलाः। स्वच्छव्यवहारविभूषिताः। तदीयं वचनं सदा मान्यावहम्। ब्रह्मणा सृष्टम् अनर्घ्यरत्नम् एव ते। विद्यारूपे आकाशे उन्नतोन्नततया स्वच्छन्दविहारं कुर्वन्ति ते। व्याकरणे शुद्धाशुद्धविवेकः, साहित्ये औचित्यानौचित्यविवेकः, वेदान्ते नित्यानित्यविवेकः इत्यादयः तेषां जीवने सहजाः गुणाः। वात्सल्येन तु ते आपण्डितपामरप्रियाः। श्रीरामस्य अनन्यभक्ताः। अज्ञानदुर्दिनं विनाश्य आविर्भवतः सुज्ञानशरतोः स्वागतकर्तारः। एते खलु

देववाण्याः वाहनम्। एतादृशान् एव अवलम्ब्य देववाणी विकासं प्राप्नोति। एतादृशाः सुकृतिनः बहुकृतिकर्तारः अस्मन्मानसे सदा निवसन्तु।

## जन्मवृत्तम्

कर्णाटके शिवमोग्गाभिधे जनपदे ‘‘नडहळ्ळी’’नामके ग्रामे आचार्याणां रङ्गनाथशर्मवर्याणां जन्म जातं १९१५ तमे वत्सरे (वैशाखशुक्लपञ्चम्याम्) कृषककुले। एतेषां पिता श्रीमान् तिम्मप्पवर्यः, माता श्रीमती जानकम्माभिधेया। वैशाकशुक्लपञ्चमी श्रीमच्छङ्करभगवत्पादानां जयन्तीदिनमपि। शर्मवर्याणां जन्मनक्षत्रं पुनर्वसुः, यस्मिन् च भगवतः श्रीरामस्य जन्म अभवत्। जन्मकालसुयोगकारणात् एव इति भाति, मान्याः रङ्गनाथशर्मवर्याः श्रीमच्छङ्करभगवत्पादानां, भगवतः श्रीरामस्य च परमाराधकाः आसन्।

## अध्ययनं, वृत्तिजीवनं च

कर्णाटके नडहळ्ळिप्रदेशे, सोरबमण्डले च तेषां प्राथमिकम् अध्ययनम्। ततः, संस्कृताध्ययनम् अगडि आनन्दाश्रमे। किन्तु, अल्पे एव काले अनारोग्यवशात् अध्ययनं निरस्तम्। ततः, वर्षत्रयं यावत् वेदाः संस्कृतभाषा च केळदिप्रदेशस्थे देवालये वेदब्रह्मश्री-मत्तूरु-नारायणशास्त्रिणां सकाशात् अधीताः। ततः प्रथमा-काव्य-कक्ष्याः (पूर्वोत्तरमध्यमासमकक्ष्याः) समाप्य बेङ्गलूरु-नगरे श्री चामराजेन्द्रसंस्कृत-महा-पाठशालायाः साहित्य (प्राक्-शास्त्रिसमकक्ष्या) परीक्षाध्ययनाय प्रविष्टाः। ततः, व्याकरणशास्त्रस्य अध्ययनम् एतेषां सकाशात् कृतम् - वेदब्रह्मश्री-तिरुनारायण-अय्यङ्गार्याः, विद्वांसः तिम्मणाचार्याः, विद्वांसः श्रीकण्ठशास्त्रिणाः, विद्वांसः कृष्णशास्त्रिणश्च। विद्वन्मध्यमा (शास्त्रीसमकक्ष्या), विद्वदुत्तमा (आचार्यसमकक्ष्या) परीक्षाश्च विशिष्टश्रेण्याम् उत्तीर्य व्याकरण्-विद्वान् इति स्नातकोत्तरपदवी प्राप्ता। ततः साहित्यशास्त्रस्य अध्ययनं वेदब्रह्मश्री-लक्ष्मीनारायणशास्त्रिणां, पण्डितप्रवर-कोडूरु-कृष्ण-जोयिसवर्याणां च सकाशात् कृतम्। अनेन तैः साहित्यशास्त्रेपि विद्वदुत्तमापदवी प्राप्ता। अनयोरेव विदुषोः सकाशात् वेदान्तशास्त्रस्यापि अध्ययनं कृतम्। वेदान्तस्य गभीराध्ययनं

श्रीविद्योपासकानां वेदब्रह्मश्री-के.पि.शङ्करशास्त्रिणाम् अधीने विधाय वेदान्तशास्त्रेऽपि शास्त्रवैदुष्यं सम्पादितम्। ततः, तदानीन्तनकाले मद्रास्-विश्वविद्यालयेन सञ्चाल्यमानासु विविध-कन्नडपरीक्षासु अपि उत्तीर्णतां प्राप्य कर्णाटकसर्वकारात् ‘‘कन्नडपण्डित’’पदवी अपि अधिगता।

एतैः एतेषां वृत्तिजीवनं हासनप्रदेशे कस्याञ्चित् प्रौढशालायाम् आरब्धम्। ततः, बेलूरु-प्रदेशे संस्कृतपाठशालाध्यापकत्वेन अपि कर्म कृतम्। ततः, १९४८ तमे वत्सरे बेङ्गलूरु-नगरस्थायां श्री चामराजेन्द्रसंस्कृत-महापाठशाला[1]याम् (इयं च महापाठशाला अधुना कर्णाटकसंस्कृत-विश्वविद्यालयस्य घटकमहाविद्यालयत्वेन विराजते) नियुक्तिः जाता । तत्र २८ वर्षाणि यावत् अध्याप्य १९७६ तमे वर्षे अध्यापनात् निवृत्ताः। तैः सर्वदापि एवम् उच्यते स्म – मच्छिष्यौ महाबलेश्वरनागराजौ ‘‘मम उभे नेत्रे इव’’ इति। उभयोरपि शिष्ययोः विषये तेषां महती प्रीतिः। तेषां तत् वाक्यम् अत्यन्तम् अन्वर्थकमेव आसीत्। अधुनापि सैव शिष्यपरम्परा सर्वत्र विराजते।

## शिष्यपरम्परा

एतेषां शिष्यपरम्परा सुमहती विद्यते। प्रसिद्धाः वैयाकरणाः श्रीमज्जगद्गुरुशङ्कराचार्यमहासंस्थानस्य दक्षिणाम्नायश्रीशारदापीठस्य आस्थान-विद्वांसः राष्ट्रपतिप्रशस्तिपुरस्कृताः[2] महामहोपाध्यायाः आचार्याः जि. महाबलेश्वर-भट्टाः, अन्ये च ज्येष्ठाः वैयाकरणाः वेदविद्वांसः राष्ट्रपतिप्रशस्तिपुरस्कृताः च महामहोपाध्यायाः आचार्याः सो. ति. नागराज[3]वर्याः एतेषामेव शिष्याः। एतयोः द्वयोः शिष्याः, प्रशिष्याः च अधुना समग्रे देशे विभिन्नेषु विश्वविद्यालयेषु महाविद्यालयेषु च व्याकरणविभागेषु विराजन्ते इति कथनं नातिशयोक्तिः। उभावपि शिष्यौ महामहोपाध्यायबिरुदभूषितौ इत्येतत् गुरूणां महत्त्वं सम्यगेव अवगमयति।

## प्रशस्तयः

मान्यानां रङ्गनाथशर्मवर्याणां साहित्यसेवागभीरतां व्यक्तित्वमेरुतां च दृष्ट्वा सारस्वतसमाजेन विविधाभिः संस्थाभिश्च विविधानां प्रशस्तिपुरस्कारादीनां प्रदानेन आत्मा कृतार्थीकृतः। ताः च -

- कर्णाटकराज्यस्य अत्युत्तम-शिक्षकप्रशस्तिः (१९७४)
- राष्ट्रस्य अत्युत्तम-शिक्षकप्रशस्तिः (१९७४)
- कर्णाटकसंस्कृतसाहित्यपरिषदः सम्मेलनाध्यक्ष्यम् (आदिचुञ्चनगिरिः १९८४)
- कर्णाटकसर्वकारस्य राज्योत्सवप्रशस्तिः (१९९३)
- केन्द्रसर्वकारस्य राष्ट्रपतिसम्माननम् (१९९४)
- शिष्याः, मित्राणि, विद्वांसः – सर्वेऽपि सम्भूय संस्कृत-कन्नडभाषयोः समर्पितौ "रङ्गाभिनन्दनम्" (संस्कृतम्) "रङ्गाभिनन्दन" (कन्नड) सम्माननग्रन्थौ (१९९४)
- सेडियापु-प्रशस्तिः (२००१)
- परमदेव-प्रशस्तिः (२००३)
- तिरुपतिस्थ-राष्ट्रियसंस्कृतविश्वविद्यालयात् "महामहोपाध्यायः" इत्युपाधिप्रदानम्। (२००३)
- दर्भङ्गा-संस्कृतविश्वविद्यालयात् "विद्यावारिधिः" गौरव-डि.लिट् (२००३)
- डि.वि.जि.स्मारकसम्माननम् (२००५)
- अमेरिकन्-हिन्दू-विश्वविद्यालयेन सज्जीकृतः साक्षात्कारः (२००७)

व्याकरणे वेदान्ते साहित्ये च प्रगल्भपाण्डित्यं वहतां तेषां वैदुष्यं यथा, तथैव वात्सल्यपूर्णं परमोदारव्यक्तित्वम् अपि आसीत् अनितरसाधारणमेव। तैः संस्कृतभाषया कन्नडभाषया च षष्ट्यधिकाः ग्रन्थाः विरचिताः सन्ति।

शताधिकानि मौलिकलेखनानि अपि रचितानि सन्ति। संस्कृतनिष्ठं ज्ञानं कन्नडजनान् प्रति प्रापयितुं तैः कन्नडग्रन्थाः अनुवादग्रन्थाः च आधिक्येन लिखिताः।

## कृतयः (संस्कृतम्)

भाषान्तरपाठः - इदं लघु पुस्तकं शर्मणां द्वारा प्रकटिता प्रथमा कृतिः। अयं ग्रन्थः संस्कृत-कन्नडानुवादप्रकारं वर्णयन् विद्यालयोपयोगी पाठ्यग्रन्थः। एवमेव संस्कृतप्रथमप्रवेशः इति ग्रन्थोऽपि भाषाबोधनाय उपयुक्तं विद्यार्थिनाम् अत्यन्तम् उपयोगि पुस्तकम्। संस्कृतपाठशालाविद्यार्थिनः एव मनसि निधाय रचितः व्याकरणप्रदीपः एतेषां सहकर्तृकः ग्रन्थः। अत्र पाणिनीयसूत्रपद्धतौ संस्कृतव्याकरणम् अध्येतुं सिद्धान्तकौमुद्याः आधारेण सरलं सुबोध्यं च विवरणम् एभिः प्रदत्तम्। एवमेव श्रीमज्जगद्गुरुशृङ्गेरीशारदापीठात् सञ्चाल्यमानासु सुरसरस्वतीसंस्कृतपरीक्षा- सम्बद्धेषु पुस्तकेषु बहूनि शर्मभिरेव रचितानि। विशिष्य धातुरूपाणि, शब्दरूपाणि च बोधयित्वा, वर्णनात्मकरूपेण व्याकरणबोधनम् अत्रत्यं वैशिष्ट्यम्।

संस्कृतं नाम दैवी वाक् – यद्यप्ययं ग्रन्थः आकारेण लघुः, तथापि गुणदृष्ट्या अत्यन्तं महत्त्वपूर्णः। अस्मिन् ग्रन्थे अत्यन्तं सुचारुतया भारतीय-पारम्परिक-शास्त्रदृष्ट्या च सहेतुकं संस्कृतवाण्याः अपौरुषेयत्वं प्रतिपादितम्। वस्तुतः, सर्वापि भाषा अपौरुषेया एव। तत्रापि विशिष्य संस्कृतभाषा। एतादृशाः बहवः विषयाः ग्रन्थेऽस्मिन् प्रतिपादिताः।

गुरुपरम्पराचरितम् – अयं ग्रन्थः तेषां पूर्विकाणां कुटुम्बस्य तत्त्वचिन्तनदीक्षादातॄणां बळ्ळारि-नरहरिगुरूणां तत्पूर्वाचार्याणां च चरितं सरलया सङ्क्षिप्तशैल्या च प्रतिपादितम् अस्ति।

श्रीशङ्करचरितामृतम् – इदं नामैव सूचयति यत् श्रीमच्छङ्करभगवत्पादानां जीवनं योगदानं च सरलोदारशैल्या २४० अनुष्टुप्-श्लोकैः प्रतिपादितम्। अस्य बोधप्रदा प्रस्तावनापि विद्यते, ललितया शैल्या कन्नडगद्यानुवादोऽपि

प्रादेशिकभाषाज्ञानिभ्यः नितराम् उपकारकः। इयं कृतिः न केवलं भाषादृष्ट्या अपि तु व्याकरणदृष्ट्या अपि महत्त्वं भजते। "अनुपूर्णं", "वज्रलेपायितम्", "एकपुत्रा", "कत्तृणं", "पाणिन्धमः" इत्यादयः प्रयोगाः अत्यन्तं रमणीयाः अत्र परिदृश्यन्ते। तत्र तत्र रूपक-उपमा-अतिशयोक्त्यादयः अलङ्काराः स्फुटतया लक्ष्यन्ते। एवमेव अनुप्रास-आदिप्रास-अन्त्यप्रासा अपि अवलोक्यन्ते यथा –

व्यूढदृष्टान्तयुक्त्याढ्यं गूढसूत्रार्थदीपकम्।
प्रौढकाव्यवचोरम्यं गाढाज्ञानतमोनुदम् ॥ (श्लो ७६)

स्थापयन् वैदिकं धर्मं ख्यापयन् शास्त्रपद्धतिम्।
हापयन् दुर्मतश्राद्धं गापयन् देवतास्तुतिम् ॥ (श्लो १५२)

निर्ममे निर्ममेश्वरः (श्लो ९२),

भैरवो भैरवस्वनम् (श्लो १४५) इत्यादीनि।

कुसुमाञ्जलिः – अयं च महोदयानां प्रास्ताविकपद्यानां सङ्ग्रहरूपः। आधिक्येन देवतास्तुतिः, गुरुस्तुतिः, देशभक्तिसङ्कीर्तनम् इत्यादयः एवात्र विषयाः। "चैत्रोत्सवः", "वर्णकालः" (प्रकृतिवर्णनं) , मुक्तकानि, "समस्यापूर्तिः" शुद्धकाव्यरसिकानाम् आस्वादम् अर्हति। अस्मिन् पद्यसङ्ग्रहे अनुष्टुप्, शालिनी, आर्या, उपजातिः, भुजङ्गप्रयातं, स्वागतं, तोटकं, वंशस्थं, द्रुतविलम्बितं, वसन्ततिलकं, मालिनी, चारुचामरः, पञ्चचामरः, शिखरिणी, पृथ्वी, मन्दाक्रान्ता, हरिणी, शार्दूलविक्रीडीतं, मत्तेभविक्रीडीतम् इत्यादीनि छन्दांसि एतेषां पद्यानां गेयत्वमपि सम्पादयन्ति। किञ्चन उदाहरणम् (अत्र पत्रम् इत्यस्मिन् पदे श्लेषः स्फुटं दृश्यते) –

हरिद्वर्णैः पत्रैः सितरुधिरपीतैश्च कुसुमैः
विराजन्तो वृक्षाः मम मनसि हर्षं विदधते।
इमेऽनङ्गादेशात् धृतशरशिरस्त्राणकवचाः
वशीकर्तुं विश्वं सपदि समवेताः किमु भटाः ॥

खरकरपरितप्तान् सान्त्वयन् धीरशब्दैः
शरमुचमपि चापं धारयन् श्यामलश्रीः।
कनकसुभगसीताविद्युदालिङ्गिताङ्गो
रमयति जलवाहो भद्रकारीव रामः ॥

वीररसोद्बोधकानि एतानि पद्यानि अनुवादं विनापि सरलतया अवगमनयोग्यानि। अत्र शर्मणां प्रखरा राष्ट्रश्रद्धा सुवेद्या एव –

दशरथपुत्रं स्मर दुर्धर्षं भीमं भीमकृतां सामर्षम्।
भार्याकर्षणरोषितचित्तौ जघ्नतुरुग्रौ समरे शत्रुम् ॥

अद्य तु मातुः पश्य सखे त्वं केशेष्वरिणा निहितं हस्तम्।
त्यज निष्क्रीकं ह्रीकरशोकं भज भज भार्गवरोषोद्रेकम् ॥

घातुकघाते नास्ति नृहिंसा हन्यादेवेत्युक्तिः किं सा।
न श्रुतपूर्वा विश्रुतशास्त्राः राष्ट्रियवीर धृतशस्त्रास्त्राः ॥

चन्द्रं गतो मानवः – इयं काचित् समस्या। बहोः कालात् पूर्वं यदा मानवेन ऐदम्प्राथम्येन चन्द्रस्योपरि पादनिक्षेपः कृतः, तदा ‘‘सुधर्मा’’संस्कृतदिनपत्रिकायाम्, अखिलकर्णाटकसंस्कृतपरिषत्-पत्रिकायां च बहूनां संस्कृतविदुषाम् एतद्विषयकाणि समस्यापूरणपद्यानि प्रकाशितानि, तत्र एषामपि प्रमुखं विद्यते –

उद्विग्नो भुवि धर्मकञ्चुकधरैर्धूर्तैर्बकज्ञानिभिः
निर्विण्णः कपटोत्कटैः कटुरवैः किं राजकीयैर्जनैः।

क्षुब्धः किं कलहोद्भटार्भटकृतैश्शार्दूलविक्रीडितैः
शान्तिं शाश्वतिकीमभीप्सुरथवा चन्द्रं गतो मानवः ॥

श्रीरामसुब्रह्मण्यसुप्रभातानि – एतानि प्रायः स्तुति-कथा-सुप्रभातपद्यैः युता अस्ति।

श्रीगोम्मटेश्वरसुप्रभातम् - इयं पञ्चत्रिंशत्पद्यमिता प्रसन्नगम्भीरा कृतिः। नाम्ना एव इदम् अवगम्यते यत् इदं साम्प्रदायिकं सुप्रभातम् इति।

श्रीबाहुबलिविजयम् – इदं श्रवणबेळगोळस्थ-गोम्मटेश्वरमूर्त्तेः सहस्राब्द-महामस्तकाभिषेकसन्दर्भे प्रदर्शनाय रचितं सरलं सुन्दरं च रूपकम्।

एकचक्रम् – इदम् अङ्कचतुष्टयात्मकं लघुरूपकम्[4]। अस्य वस्तु महाभारतस्य आदिपर्वणि विद्यमानः बकवधः। सद्यः एव अस्य चलच्चित्रमपि सिद्धमस्ति इति अन्तर्जाले घोषणा अस्ति (https://www.youtube.com/watch?v=pjzGVl3VOKM)।

एतावता उल्लिखिताः ग्रन्थाः पुस्तकरूपेण प्रकाशिताः। लेखनरूपेण बह्व्यः कृतयः दृश्यन्ते। तत्रापि उपलब्धानां लेखनानां विषये सङ्क्षेपेण प्रस्तूयते –

१. संस्कृतभाषायां वर्णविवेकः
२. ऋग्वेदप्रातिशाख्ये वर्णस्वरादिविचारः
३. साम्प्रदायिकं संस्कृतशिक्षणम्
४. शाब्दबोधप्रक्रिया
५. संस्कृतव्याकरणस्य प्राशस्त्यम्
६. संज्ञाशब्दानां संस्कृते व्यवहारप्रकारः
७. व्यावहारिकी संस्कृतभाषा
८. संस्कृतभाषायाः व्यावहारिकत्वे पाणिनीयशास्त्रे गमकानि
९. वाचोयुक्तिः
१०. भाषाजीवातुः वाचोयुक्तिः
११. संस्कृतवाङ्मये विश्वजनीना लौकिकदृष्टिः

एतेषु सामान्यतः सर्वेऽपि लेखाः “रङ्गनाथलेखमञ्जूषा[5]” इत्यस्मिन् ग्रन्थे प्रकाशिताः संस्कृतभारती[6]संस्थाद्वारा। व्याकरणशास्त्रजिज्ञासुभिः एते लेखाः अवश्यम् अध्येतव्याः अनुसन्धेयाश्च।

कृतयः (कन्नडम्)/ अनुवादग्रन्थाश्च

एतैः कन्नडभाषया अपि बहवः ग्रन्थाः रचिताः अनूदिताश्च। एतेषाम् अनुवादग्रन्थेषु अन्त्यन्तं प्रमुखः ग्रन्थः श्रीमद्वाल्मीकिरामायणम्[7]। अस्य महतः पुराणस्य अनुवादद्वारा तैः कन्नडसारस्वतलोके आचन्द्रतारकं स्थानं सम्पादितम्। कन्नडभाषायां तादृशः अनुवादः न पूर्वं केनचिदपि कृत आसीत्। एतैः समग्रः अनुवादः स्वयमेव कृतः। उत्तरकाण्डस्य अनुवादसमनन्तरमेव एतेषां पत्नीवियोगः जातः। तदा एतैः सगद्गदम् एवमुक्तम् –

यदा काण्डं षष्ठात् परमिनकुलोत्तंसचरिते महाप्रस्थानान्तं जनकतनयान्तर्धिसहितम्। मया कार्णाटेन व्यरचि वचसा प्रापि सहसा तदाकाण्डे पत्नीनिधनभवशोकोऽनलसमः ॥

फलं किं प्राप्तं मे विरहितुरन्ते दयितया विभुं तं वैदेह्याः धवलतमकीर्त्येव परया। न नैवं मत्स्वामी निरवधिकृपावारिधिरतः प्रसादः कोऽप्येष्टोस्फुरितमहिमा मुग्धमनसाम् ॥

या लब्धा भूमिजातारमणकरुणया संस्कृता पाणिनीता
या भावस्निग्निग्धरम्योचितविशदपदस्रग्धरा साधुवृत्ता।
याजस्रं श्रोत्रपेयामृतरसनिचितं रामनामान्वजापीत्
तां वाणीं तां च पत्नीं हरिपदयुगले निक्षिपन्निर्वृतोऽस्मि ॥

लौकिकन्यायाः, श्रीरामकथामञ्जरी, वालिवधप्रसङ्गः[8], व्यासरहस्यं[9], सूक्ति-व्याप्तिः[10], भारतीयदर्शनं (सहकर्तृकं), भाषाशास्त्रं साहित्यचरित्रं च (सहकर्तृकं) इत्यादयः द्वाविंशतिः कन्नडग्रन्थाः विरचिताः। विविधाभिः संस्थाभिः तत्तत्काले प्रकाशिताः च । सद्यःकाले एतेषां सर्वेऽपि ग्रन्थाः

अध्येतॄणाम् उपकाराय Google playbooks इत्यत्र अन्तर्जाले आरोपिताः सन्ति। तस्मात् पूर्वमेव तेषां प्रशिष्येण कर्णाटकसंस्कृतविश्वविद्यालये हस्तप्रतिशास्त्रविभागे सहायकाचार्येण विदुषा डा. के. रामकृष्णभट्टवर्येण स्वप्रयत्नेन तेषां समग्रम् इतिवृत्तं ग्रन्थाश्च अन्तर्जाले[11] आरोपिताः। तस्येदं कार्यम् अत्यन्तम् अभिनन्दनार्हम्। सारस्वतलोकः अस्मै अधमर्णो विद्यते।

एतैः समग्रस्य अमरकोषस्यापि कन्नडव्याख्यानं विहितम्। एवमेव, विष्णुपुराणं, श्रीमद्भागवतं, वाक्यपदीयं (इदं कर्णाटकसंस्कृतविश्वविद्यालयेन[12] प्रकाशितम्), गीतार्थप्रकाशः इत्यादयः द्वादश १२ अनुवादकृतयः प्रकाशिताः।

एते २५.०१.२०१४ तमे दिनाङ्के (स्वस्य ९९तमे वर्षे) पञ्चत्वं गताः। सारस्वतलोके यशःकायानाम् एतेषां स्मरणं, ग्रन्थानाम् अध्ययनं च पुण्यमेव जनयति। शास्त्रसरस्वत्याः आराधकानाम् महामहोपाध्यायानां विदुषां रङ्गनाथशर्माणां कृते श्रद्धाञ्जलिसमर्पणं तु शास्त्राणाम् अध्ययन-अध्यापनद्वारा एव भवितुमर्हति। विद्यार्थिनः संशोधकाश्च अस्यां दिशि अधिकाधिकं प्रवृत्ताः सन्तः तेषां साहित्यसेवायाः अनुवर्तनपुरस्सरं संवर्धयेयुः । रङ्गनाथशर्मवर्याणां व्यक्तित्वमासीत् अच्छोदसरः। वैदुष्यं तु सह्याद्रिपतिः। विद्याधिदेवतायाः यात्रावसरे पुरः गृह्यमाणा दीपशिखा इवासीत् तदीयं जीवितम्। विद्वदग्रेसराः सौजन्यमेरुभूताः अव्याजप्रीतिवर्षिणः ते अस्मासु कृपावृष्टिं सदा वितन्वन्तु इत्यस्माकं प्रार्थना।

यस्य स्मृत्या च नामोक्त्या प्राप्यते संस्कृतप्रियैः।
तुष्टिः पुष्टिः प्रेरणा च रङ्गनाथं नुमो हि तम् ॥

## सहायकग्रन्थपञ्जी

*रङ्गनाथलेखमञ्जूषा* – प्रकाशनं – संस्कृतभारती, अक्षरं, ८ उपमार्गः, २ फेस्, गिरिनगरं, बेङ्गलूरु – ५६००८५ ; द्वितीयमुद्रणम् – २०१६

*वाणीवाहन (कन्नडम्)* – ले – शतावधानी डा. आर्. गणेशः, प्रकाशनं – वि.सी. सम्पद (वि.सी. संस्मरण-वेदिका), २५, "वसुन्धरा", सि उपमार्गः, राजीवनगरं, बनशङ्करी ३ स्टेज्, ४ फेस्, बेङ्गलूरु – ५६००८५ ; प्रथममुद्रणम् – २००८

## तथ्यसूत्राणि

[1] http://ksu.ac.in/en/institutions/pg-ugcenters/sri-chamarajendra/
[2] https://sringeri.net/2016/03/11/news/asthana-vidwan-conferred-presidents-certificate-honour-sanskrit.htm
[3] https://www.sanskritfromhome.org/teacher-profile/MM-Vid.-So-Ti-Nagaraj-18984717
[4] https://vidwannrs.in/listing/toc/103
[5] https://samskritabharati.in/preview?bharati_books=VmpKMFlWbFdWWGhWYTJSb1RUSjRUMVpzVWtkV2JGSlZVMnBTVTFKc1duaFZiWFJyWVcxS1YxTnJhRnBOUmxwNldWUkdZVkpzU25WaVJuQnBWMFpLVVZadGNFZFNNVnBXVFZWV2FHVnFRVGs9&samskrita_bharati=VmpKMFlWbFdWWGhWYTJSb1RUSjRUMVpzVWtkV2JGSlZVMnBTVTFKc1duaFZiWFJyWVcxS1YxTnJhRnBOUmxwNldWUkdZVkpzU25WaVJuQnBWMFpLVVZadGNFZFNNVnBXVFZWV2FHVnFRVGs9
[6] https://samskritabharati.in/
[7] https://vidwannrs.in/Krutigalu/002
[8] https://play.google.com/store/books/details/Vidwan_N_Ranganatha_Sharma_%E0%B2%B5_%E0%B2%B2_%E0%B2%B5%E0%B2%A7%E0%B2%AA_%E0%B2%B0%E0%B2%B8_%E0%B2%97_Valivadha?id=3uHIDwAAQBAJ&hl=en_US&gl=US
[9] https://play.google.com/store/books/details/Vidwan_N_Ranganatha_Sharma_%E0%B2%B5_%E0%B2%AF_%E0%B2%B8_%E0%B2%B0%E0

%B2%B9%E0%B2%B8_%E0%B2%AF_Vyasa_Rahas?id=_9LIDwAAQBAJ&hl=en_US&gl=US
[10]https://play.google.com/store/books/details/Vidwan_N_Ranganatha_Sharma_%E0%B2%B8_%E0%B2%95_%E0%B2%A4_%E0%B2%B5_%E0%B2%AF_%E0%B2%AA_%E0%B2%A4_%E0%B2%AD_%E0%B2%97_%E0%B3%A7_Suk?id=OHLJDwAAQBAJ&hl=en_US&gl=US
[11] https://vidwannrs.in/
[12] http://ksu.ac.in/en/publications/books/

# वङ्गीयो दार्शनिकोऽनन्तलालठक्कुरः

**उज्ज्वल-सर्दारः**

सरस्वत्या मानसपुत्रो ज्ञानतपस्वी अध्यापकोऽनन्तलालः स्वजीवनेन 'अनन्तवीर्यामितविक्रमस्त्वमि'ति गीतोक्तवाणीमन्वेति। विंशैक-विंशशताब्द्योः संस्कृते तथा न्यायशास्त्रचर्चायां प्रातःस्मरणीयेषु महामहोपाध्यायो अनन्तलाल-ठक्कुरोऽर्णवायते। न्यायवैशेषिक-बौद्धदर्शनेषु पुँथिविद्यायां रामायण-महाभारतयोर्व्याख्यायाञ्च अध्यापकमूर्धन्यस्य ठक्कुरस्य अवदानं वङ्गवासिभिस्तथा भारतीयैः अवश्यमेव ज्ञातव्यम्। परं महद्दौर्भाग्यं यत् वर्तमानकालीनाध्येतारश्च नूनमपि अस्य महतो विदुषो कृतिततिविषये न जानन्ति।

अद्यतनीयवांलादेशस्य कोटालीपाड़ाजनपदस्य ऊनशियानामके ग्रामे भरद्वाजगोत्रीयस्य वाक्सिद्धवैदिकमुनेः कृष्णजीवनठक्कुरस्य प्रपूते चक्रवर्तिवशे १३२३-वङ्गाब्दस्य कार्त्तिकमासस्य त्रयोविंशतिदिनाङ्के अनन्तलालठक्कुरो जनिं लेभे। पिता चास्य गोविन्दचन्द्रठक्कुरः। तस्य वृत्तिरासीत् यजन-याजनाध्ययनाध्यापनादिकर्मेति। पितुर्विद्यानुशीलनेन परोपकारप्रवृत्त्या चानाडम्बरजीवनयात्रया शैशवस्थायां बालकोऽनन्तलालोऽभूत् प्रभावभावितः। माता सौदामिनीदेवी धीमती विविधगुणोपेता चासीत्। कोटालीपाड़ाया विद्वत्संसदि पण्डितप्रवरेभ्यः रामनाथसिद्धान्तपञ्चानन-चन्द्रकान्तन्यायालङ्का-कालीपदतर्काचार्यादिभ्यश्च परं महामहोपाध्यायोपाधिभाग् अनन्तलालः स्वप्रतिभया वङ्गदेशस्य दर्शनशास्त्रचर्चा उदीयमानारुणवत् आलोकयतीति ध्रुवम्।

प्रथमविश्वयुद्धस्य भयावहपरिस्थितिकारणात् आशैशवादेव अयं ज्ञानतापसः अतीव दुःखेन जीवनं यापितवान्। पारिवारिकपरम्परानुसारं विद्यालय-शिक्षालाभाय 1938 ईशवीयाब्दे कलिकातास्थात् राष्ट्रियसंस्कृतमहाविद्यालयात् इण्टारमिडियेट् इति परीक्षाम् उत्तीर्य चिन्ताहरणचक्रवर्तिनः गेहं स्थित्वा अध्ययनं कुर्वन्नासीत्। तदनु 1941 ईशवीयाब्दे तस्मादेव महाविद्यालयात्

संस्कृतभाषासाहित्यञ्च अवलम्ब्य ससम्मानं स्नातकस्तरम् उत्तीर्णवान्। तदा बहूनां पण्डितप्रकाण्डानां साहचर्यात् अनन्तलालः कलिकाताविश्वविद्यालयात् न्यायशास्त्रमुपजीव्य 1944 ईशवीयाब्दे स्नातकोत्तरवैतरणीं साफल्येन समत्यक्रमत्। न केवलम् आधुनिकपद्धत्यां, चापि पारम्परिकटोलशिक्षापद्धतिम् आश्रित्य वङ्गीयसंस्कृतशिक्षापरिषदः 1945 ईशवीयाब्दे काव्यतीर्थोपाधिः अधिगतस्तेन। प्रसङ्गत उल्लेख्यं यत् सर्वकारीयसंस्कृतमहाविद्यालये कलिकाताविश्वविद्यालये च येषां स्नेहधन्यप्रथितवतां प्राध्यापकानां सकाशे स शास्त्रानुशीलनञ्चकार, ते खल्वासन् सुरेन्द्रनाथदाशगुप्तः, सकलनारायणशर्मा, दक्षिणारञ्जनभट्टाचार्यः, दीनेशचन्द्रभट्टाचार्यः, काश्यपकविः कालीपदतर्काचार्यः, महामहोपाध्यायः योगेन्द्रनाथतर्कसांख्यवेदान्ततीर्थः, म.म.हाराणचन्द्रभट्टाचार्यः, म.म.बिधुशेखरशास्त्री, पञ्चाननतर्कवागीशः, म.म.फणिभूषणतर्कवागीशः, श्रीजीवन्यायतीर्थश्चेति मुख्याः।

पुँथिविद्या खलु अनन्तलालस्य जीवनस्याङ्गभूतेति। संस्कृतभाषां विहायापि तिब्बतीभाषायामप्यनेन महत्प्रावीण्यमर्जितम्। गवेषणाकर्मणः अस्मिन् पर्याये अनन्तलालेन विधुशेखर-पञ्चाननतर्कवागीश-सातकड़िमुखोपाध्यायादि-विदुषां साहचर्यमवाप्तम्। स्वाधीनतोत्तरवङ्गप्रदेशे अयं विद्वत्प्रवरः पुँथितत्त्वम् आश्रित्य गवेषणाकर्म प्रारेभे। चीनतिब्बतीगवेषणावृत्तिलाभाय ड.वेणीमाधव-वडुयायाः तत्त्वावधानेन अनन्तलालस्य गवेषणाकार्यं प्रचलदासीत्। प्रसङ्गत उल्लेख्यं यत् ऐषमः आन्तर्जातिकख्यातिभाक् राहुलसांकीर्त्यायनः तिब्बतदेशात् बौद्ध-न्यायादिशास्त्रग्रन्थानां मातृकाः समानीतवान्। तदानीमेव अनन्तलालेन समं तस्य साक्षात्कारोऽभूत्। ताश्च मातृका उपजीव्य परवर्तिकाले पाटनास्थितजयसबालरिसार्च-इन्स्टिटिउट् इति संस्थायां गवेषणां कृत्वा प्राकाशि तेन। अपि च, प्रख्यातयोः दार्शनिकप्रवरयोः रत्नकीर्ति-ज्ञानश्रीमित्रयोः बन्धान् मातृकाग्रन्थेभ्यः समुद्धृत्य प्रकाशितास्तेन। तत्र गवेषणाकर्मणि न्याय-बौद्धदर्शनयोर्मिथः सम्बन्धोऽनन्तलालेन युक्तिपुरःसरम् उद्घाटितः। अस्य दार्शनिकस्य जीवनस्यापरमेकं श्रेष्ठं कर्म तावत् न्यायप्रस्थाने प्राचीनव्याख्या-परम्पराद्वयमतिरिच्य मध्यसम्प्रदायाख्यं नव्यपथप्रवर्तनमिति। न्यायदर्शनस्य

नव्यपथत्वेन मध्यपथस्य तत्त्वजातं प्रति महामहोपाध्यायफणिभूषणतर्कवागीशस्य महदाग्रहस्थलमासीदिति अनन्तलालेन असकृदुक्तम्। सर्वभारतीयपरिसरे अनन्तलालस्तदानीं प्रख्यातख्यातिभाग् अभूदिति कृत्वा तस्यैव मार्गनिर्देशनेन आसमुद्रहिमाचलस्य बहवो गवेषकाः गवेषणां कृतवन्तः।

न्यायशास्त्रचर्चायै गवेषणार्थं संस्कृतप्रचाराय प्रसाराय चानेन सर्वभारतीयविविधसंस्थाभ्यो बहूनि सम्मानानि प्राप्तानि। तेन कलिकातास्थ-सुरभारतीपरिषत्पक्षतः 'न्यायालंकारः', नवनालन्दामहाविहारकर्तृपक्षात् 'विद्यावारिधिः', भारतसर्वकारैः 'राष्ट्रपतिपुरस्कारः', लालवाहादुरशास्त्रिराष्ट्रीय-संस्कृतविद्यापीठात् 'महामहोपाध्याय'श्चेत्युपाधयोऽधिगताः। Wayman Sharma Award of Distinction (New Delhi), S.C. Chakrabarty Meda (Asiatic Society, Kolkata, 2000) l, Pandit Iswarchandra Vidyasagar Gold Medal (Asiatic Society, Kolkata, 1997) चेति संस्थाभिः अयं विद्वान् सभाजितः। सारस्वतावदानाय 1998 ईशवीयाब्दे रवीन्द्रभारतीविश्वविद्यालयेन अयं ज्ञानतपस्वी 'डि.लिट्' इत्युपाधिना सत्कृतः। एतानि सम्मानान्यतिरिच्य अयं ज्ञानपुरुषस्तथा दार्शनिको नैकानि सारस्वतसम्मानानि प्राप्तवान्।

अध्ययनं साफल्येन समाप्य अनन्तलालो गवेषणाकर्म निर्वोढुम् आदावेव कृष्णनगरराष्ट्रियमहाविद्यालय-कातरासगड़महाविद्यालययोः, आसाम-प्रदेशस्थवरपेटामहाविद्यालये चाध्ययनकार्यं कृतवान्। ततः, मिथिला-रिसार्च-इन्सटिटिउट-नामके गवेषणाप्रतिष्ठाने गवेषकान् अध्येतृंश्च अध्यापितवान्। परं पाटनानगरस्थितायाः काशीप्रसादजयसयाल-रिसार्च-इन्सटिटिउट् इति गवेषणा-संस्थायाः निर्देशकरूपेण सारस्वतकार्ये व्यापृतोऽभूत्। अपि च, कलिकातास्थे Asiatic Society इत्यत्र William Jones Professor इति पदमलञ्चकार अयं प्रकाण्डविद्वान्।

विदितं विदितवेदितव्यानां यन्न्यायस्य प्रधानप्रतिपक्षीयाः खलु बौद्धाः। न्याय-बौद्धपक्षयोः मिथः समालोचनायै शास्त्रव्याख्याया नूतनं पन्थानम्

आविष्कृतं तेन। न्यायपक्षस्य मुख्याचार्यास्तावद् गौतम-वात्स्यायनोद्योतकार-वाचस्पतिमिश्रोदयनाश्च। बौद्धपक्षस्य मुख्याचार्या वसुबन्धु-दिङ्नाग-धर्मकीर्त्ति-ज्ञानश्रीमित्र-रत्नकीर्तिप्रमुखाः। महम्मदीयानाम् आक्रमणेन नालन्दा-विक्रमशीला-महाविहाराणां ध्वंसादनन्तरं न्याय-बौद्धशास्त्रचर्चायाः परम्परा ध्वस्ता जाता।

तदानीं बहवो बौद्धाचार्याः मृत्युं प्रापिताः। बौद्धग्रन्थाश्चापि विनष्टा जाताः। महापण्डितेन राहुलसांकृत्यायनेन मूलसंस्कृतबौद्धन्यायादिशास्त्राणि पुनरुद्धर्तुम् असकृत् तिब्बतदेशं गतः। बहवो ग्रन्थाश्च तेनानीताः तस्माद्देशात्। ते च ग्रन्थाः विहारप्रदेशस्थे पाटना-रिसार्च्-सोसाइटि-मध्ये संरक्षिताः। ग्रन्थेषु ज्ञानश्रीमित्रनिबन्धावली रत्नकीर्तिनिबन्धावली च आस्ताम्। ग्रन्थद्वयमेव न्यायशास्त्रस्येतिहासं पुनरुद्धर्तुं महद्गुरुत्ववहमिति ध्रुवम्। सहस्रवत्सरेभ्यः पूर्वमेव प्राचीनवङ्गलिप्यां रचिता एते ग्रन्थाः महता परिश्रमेण अध्यापकठक्कुरेण ग्रन्थरूपेण सम्पादिताः।

अध्यापकेन ठक्कुरेण सम्पादिताः ग्रन्थास्तावत्

*Pārijātaharaṇamakāvya* of Kavi Karṇapūra, Mithila Institute, Darbhanga, 1956.

*Ratnakīrtinibandhāvali*, K.P. Jayaswal Research Institute, Patna, 1957, 1975.

*Kāvyalakṣaṇaratnaśrī* of Ratnaśrījñāna of Ceylon, in Collaboration with Prof. Dr. Upendra Jha, Mithila Institute, Darbhanga, 1957.

*Vaiśeṣikadarśana* of Kaṇāda with an anonymous commentary, Mithila Institute, Darbhanga, 1957.

*Jñanaśrīmitranibandhāvali*, K.P. Jayaswal Research Institute, Patna, 1959.

*Āgamaḍambaranāṭaka* of Jayantabhaṭṭa, in collaboration with Dr. V. Raghavan, Mithila Institute, Darbhanga, 1964.

*Saugatasūtravyākhyanakārīkā* of Kumārilasvamin, Mithila Institute, Darbhanga, 1964.

*Kīradūta* of Rāmagopāla, Mithila Institute, Darbhanga, 1967.

*Pikadūta* of Rudranatha, Mithila Institute, Darbhanga, 1967.

10) *Nyāyacaturgranthikā* Vol. 1, Mithila Institute, Darbhanga, 1967.

11)*Madhyāntavibhāgakārikabhāṣyam* of Vasubandhu in collaboration with Dr. N. Tatia. K.P. Jayaswal Research Institute, Patna, 1967.

12) *Nyāyabhāṣyavarttikātatparyavivaraṇapañjikā* of Aniruddha, Mithila Institute, Darbhanga, 1969.

13) *Aśokanibandhau*, K.P. Jayaswal Research Institute, Patna, 1974.

14) *Nyāyalaṃkāra* of Abhayatilakopādhyāya, in collaboration with Dr. J.S. Jetly, Oriental Institute, Boroda, 1981.

15) *Gaṅgāvaṃśānucaritaṃ* of Vāsudevaratha Somayajin, K.P. Jayaswal Research Institute, Patna, 1982.

16) *Śrīkaṇṭhaṭippaṇaka*, Asiatic Society,Calcutta, 1986.

17)*Tārkikarakṣāsārasaṃgraha with commentaries* of Cannibhatta & Ramesvara, Asiatic Society, 1986.

18) *Nyāyadarśana with the Bhāṣya* of Vātsyāyana, I.C.P.R., Delhi, 1996.

19) *Nyāyavārttika* of Uddyotakara. I.C.P.R., Delhi, 1997.

20)*Nyāyavārttikatatparyaṭīkā* of Vācaspatimiśra, I.C.P.R., Delhi, 1996.

21)*Nyāyavārttikatātparyaparisuddhi* of Udayanācārya, I.C.P.R., Delhi, 1996.

22) *Tārkikarakṣā, in collaboration* with K.N.Jha, Kameshvar Singh Sanskrit University, Darbhanga, 1985.

23) *Vaiśeṣikavārttika* of Bhattavadindra, K. S.D. Sanskrit University, 1985.

24) *Vaiśeṣikanibandhāvali*, Sanskrit Pustak Bhandar, Kolkata, 1402 (BS).

25) *Origin and Development of Vaiśeṣika Philosophy*, I.C.P.R., Delhi, 2003.

26) *Nibandhavali*, New Age Publishers Private Limited, Kolkata, 1422 (BS).

**अध्यापकेन अनन्तलालठक्कुरेण सम्पादितानां मुख्यग्रन्थानां संक्षिप्तं विवरणम् -**

1. **ज्ञानश्रीमित्रनिबन्धावलिः** (Jñanaśrīmitranibandhāvali)

ज्ञानश्रीमित्रकृतानां बौद्धदर्शनसम्बन्धीयानां द्वादशग्रन्थानां पाठोद्धारं कृत्वा तिब्बतीयसंस्कृतग्रन्थमालायां ‘ज्ञानश्रीमित्रनिबन्धावलिः’ इत्याख्यं ग्रन्थं प्रकाशयामास। ते द्वादश ग्रन्थास्तावत् – ‘क्षणभङ्गाध्यायः’, ‘व्याप्तिचर्चा’, ‘भेदाभेदपरीक्षा’, ‘अनुपलब्धिरहस्यम्’, ‘सर्वशब्दाभावचर्चा’, ‘अपोहप्रकरणम्’, ‘ईश्वरवादः’, ‘कार्यकारणभावसिद्धिः’, ‘योगनिर्णयप्रकरणम्’, ‘अद्वैतबिन्दुप्रकरणम्’, ‘साकारसिद्धिशास्त्रम्’, ‘साकारसंग्रहसूत्रम्’ चेति। अत्र ग्रन्थानां मुख्यविषयस्तावत् – वस्तूनां क्षणभङ्गसाधनम्, बौद्धपक्षदिशा व्याप्तिस्वरूपप्रदर्शनम्, ज्ञानज्ञेययोः सम्बन्धविचारः, बौद्धसिद्धान्तानुसारं शब्दार्थविवेचनम्, विश्वनिर्मातुर्नित्यपरमेश्वरस्य खण्डनम्, योगिस्वरूपम्, साकारविज्ञानवादश्चेति।

1. **वैशेषिकदर्शनं नामविहीनटीका** (Vaiśeṣikadarśana of Kaṇāda with an anonymous commentary)

वैशेषिकदर्शनमुपजीव्य प्राचीनं व्याख्यानं 'वैशेषिकदर्शनं नामविहीनटीका' इत्याख्यो ग्रन्थः द्वारभाङ्गास्थात् मिथिलाविद्यापीठात् 1957-ईशवीयाब्दे प्रकाशितो बभूव अनन्तलालस्य सम्पादनेन। टीकायाः भाषाशैली तथा रचनशैली दाक्षिणभारतीया वर्तते इत्यनुमीयते। मालयलम्-लिपिना रचितेऽस्मिन् ग्रन्थेऽनुपलभ्यमानानि सूत्राणि कानि स्युरिति विषये विवेचनपूर्वकं स्वमतं प्रतिष्ठापयामास तथा च समस्याभरितविषयान् सविशेषं व्याख्याति स्म अध्यापकोऽनन्तलालठाकुरः।

2. **रत्नकीर्तिनिबन्धावलिः** (Ratnakīrtinibandhāvali)

अयं ग्रन्थः न्यायबौद्धदर्शनविषयकः। अस्मिन् ग्रन्थे धर्मकीर्तेः कालात् पञ्चशतकं यावत् (550-1050 ईशवीयाब्दं यावत्) तर्कविद्यायां न्यायबौद्धसम्प्रदाययोः चिन्ताधारायास्तथा तयोरुन्नतेरितिहासो वर्णितः। रत्नकीर्तिना विरचिताः निबन्धास्तावत् – 'सर्वज्ञसिद्धिः', 'ईश्वरसाधनदूषणम्', 'अपोहसिद्धिः', 'क्षणभङ्गसिद्धिः', 'अन्वयात्मिका', 'क्षणभङ्गसिद्धिः 'व्यतिरेकात्मिका', 'प्रमाणान्तर्भावप्रकरणम्', 'व्याप्तिनिर्णयः', 'स्थिरसिद्धिदूषणम्', 'चित्राद्वैतप्रकाशवादः', 'सन्तानान्तरदूषणम्' चेति।

3. **काव्यलक्षणरत्नश्रीः** (Kāvyalakṣaṇaratnaśrī)

दण्डिविरचितस्य काव्यलक्षणस्य काव्यादर्शस्य वेति उपरि रत्नश्रीकृतेयं काव्यलक्षणरत्नश्रीनाम्नी टीका प्राचीनमैथिलभाषया विरचिता वर्तते। अस्या मातृकायाः सम्पादनकाले विलुप्तानाम् अंशानाम् उद्धाराय अध्यापको अनन्तलालमहोदयः वङ्गप्रदेशस्थेन गोपालपुरस्थितेन कृष्णकान्ततर्कवागीशेन कृतायाः टीकायाः सहायतां स्वीकृतवान् (1)। अस्याः टीकायाः गुरुत्त्वं बहुमुखि वर्तते। अत्र तावत् रस-गुणालंकार-व्याकरणशब्दार्थगतव्याख्यानादिविषयाणाम् आलोचनं वर्तते। केषुचित् स्थलेषु टीकाकारः उपविकल्पानां नूतनवाच्यालंकाणां

प्रयोगं चकार। वस्तुतः अनन्तलालस्य नये नायं ग्रन्थः। अयञ्च दण्डिनः काव्यलक्षणस्य पालिभाषया अनुवादरूपः[2]।

### 4. आगमडम्बरनाटकम् (Āgamaḍambaranāṭakam)

आगमडम्बराख्यनाटके पाशुपतसम्प्रदायस्य गुरुः धर्मशिवः (कणभक्षः कणादो वा) वैशेषिकदर्शनस्य प्रचारकत्वेनोपवर्णितः। न्यायवैशेषिकदर्शनयोः सादृश्यवैसादृश्यानि नाटकेऽस्मिन् दर्शितानि वर्तन्ते। इह नाटके तत्कालीनयोर्द्वयोर्नैयायिकयोर्विवरणं प्रादात् जयन्तभट्टः। प्रथमस्तावत् जयन्तभट्टानुगामी तथा च न्यायदर्शनस्य टीकाकृदस्ति। अपरश्च नैयायिकः खलु सर्वागमाप्रामाण्यवादी भट्टसाइटः [3]।

### 5. मध्यान्तविभागभाष्यम् –

अध्यापकेन ठक्कुरेण सम्पादितेऽस्मिन् ग्रन्थे मैत्रेयनाथपादस्य कारिका तथा आचार्यवसुबन्धोर्भाष्यम् इत्युभयमपि विलसति। ध्रुपदीसंस्कृतेन रचितेऽस्मिन् ग्रन्थे बौद्धसंस्कृतेः प्रभावो दृश्यते। अयञ्च ग्रन्थो हि पालिप्राकृताभ्यां प्रभावित इति मन्यते। अस्य ग्रन्थस्य पञ्च अध्यायाः सन्ति – लक्षणपरिच्छेदः, आवरणम्, तत्त्वालोचनम्, प्रतिपक्षभावनावस्था फलञ्च तथा आनुत्तर्यञ्चेति। अस्मिन् ग्रन्थे ये दार्शनिकाः उल्लिख्यन्ते, ते हि वसुबन्धुः, दिङ्नागः, कुमारनाथः, धर्मकीर्त्तिः, प्रज्ञाकरगुप्तश्चेति [4]।

### 6. न्यायभाष्यतात्पर्यविवरणपञ्जिका –

अनिरुद्धाचार्येण रचितो न्यायभाष्यतात्पर्यविवरणपञ्जिकाख्यो ग्रन्थस्तावत् वात्स्यायनस्य न्यायभाष्यम्, उद्द्योतकारस्य न्यायवार्तिकं तथा वाचस्पतिमिश्रस्य तात्पर्यटीका चेति। एतान् ग्रन्थानाधारीकृत्य समालोचनात्मकः ग्रन्थोऽयम्। ग्रन्थश्चायम् ऐतिहासिकतथ्यभूयिष्ठः तथा इतिहासक्रमनिर्णये सहायकोऽपि वर्तते।

### 7. Origin and Development of Vaiśeṣika Philosophy –

भारतीयसंस्कृतिं तथा भारतीयैतिह्यञ्च प्रतिष्ठापयितुं I.C.P.R. इति देहलीस्थप्रतिष्ठानस्यार्थानुकूल्येन निर्मितोऽयं ग्रन्थः महामतिना अनन्तलाल-ठक्कुरेण। अस्मिन् ग्रन्थे ठक्कुरमहोदयो वैशेषिकदर्शनस्य पूर्णाङ्गेतिहासं प्रबन्धरूपेण निबबन्ध। वस्तुतः कणादप्रशस्तपादयोरन्तर्वर्तिकालः सम्पूर्णतया अन्धकारमयो वर्तते। जैनविदुषां नये अस्मिन् कालखण्डे बहवो ग्रन्थाः लिखिताः। परं ते ग्रन्थाः कालस्य करालगर्भेण विनष्टा जाताः। न्यायवैशेषिकौ समानतन्त्रौ तथा च बौद्धाश्च तेषां प्रतिपक्षिणः। परं वैशेषिकग्रन्थास्तदानीं लिखितरूपेण नोपलभ्यन्ते। पूर्वं वैशेषिकदर्शनस्य कस्यापि पूर्णाङ्गेतिहासस्यानुपलभ्यमानात् अनन्तलालस्य ग्रन्थोऽयम् अतीव तात्पर्यपूर्णो वर्तते।

अनन्तलालठक्कुरेण स्वजीवद्दशायां बहूनां ग्रन्थानां भूमिका लिखिता इति कृत्वा तस्य अखिलशास्त्रपारङ्गमत्वं संसूच्यते। तत्र येषां प्रमुख्यग्रन्थानां भूमिका अनेन विरचिता, तेषु केषाञ्चिदत्रोल्लिख्यते मयका –

1) Vaiśeṣikadarśana of Kaṇāda with commentary of Candrānanda, edited by Jainmuni Jambuvijayaji.

2) Lakṣaṇamālā of udayanācārya with Sanskrit commentary by Vidyāvācaspati Sasinath Jha.

3) Lakṣaṇāvali of Udayanācārya with the commentary of Bhaṭṭa Keśava edited by Vidyāvācaspati Sasinath Jha.

4) Nyāyatātparyadīpikā of Bhattavāgīsvara edited by Dr. Kisoranātha Jha.

5) Siddhāntalakṣaṇaguḍhārthatāttvālokabodhinī by pt. Krishnamādhava Jha, Nyāyācārya.

6) Abhijña-Śakuntalam by Satyanarayan Chakravarti.

7) Tulanamūlaka Alocanāy Rāmāyan o Mahābhārata by Bibekananda Banerjee.

8) Kaliprasanna Siṃha's Bengali Translation of the Mahābhārata edited by Sri Gopal Haldar.

अनेन लिखितेषु उल्लेखयोगेषु न्याय-वैशेषिकदर्शनाश्रितप्रबन्धास्तावत् -

1) Gautama-Founders of Philosophy

2) Akṣapāda (Bengali)- Bhāratakośa, Vol. I,

3) Nyāyasūtrapāthavimarśaḥ (Sanskrit),

4) The Mahābhārata and the Nyāyadarśana,

5) Gautamīyakarmamīmāṃsā (Sanskrit)

6) Nyāyaśāstre Sukha o Duḥkha- Ālekhya

7) Nyāyadarśane sukhacarā ānandamokṣavādaś ca (Sanskrit),

8) Anvīkṣānaye pramāṇacareā (Sanskrit),

9) Members of an Indian Syllogism

10) Chala, Jāti & Nigrahasthāna and the Buddhist Philosophers

11) Ākṣapādadarśanacarcāyaṃ Baūddhagranthānaṃ mātṛkāṇāṃ copayogaḥ (Sanskrit)

12) Textual Studies in the Nyāyavārttika-Beitrāge Zur Gustes-chichte Indians

13) Viśvarūpa-the Naiyāyika

14) Nyāyabhūṣaṇa -A Lost work on Medieval Indian Logic

15) Nyāyācāryo niruddhas tatkṛtis ca (Sanskrit),

प्रत्येकमपि नागरिक: येन केनापि प्रकारेणराष्ट्रं प्रति समर्पित आसीत्। अयं भावः कविना रक्षाकर्मिण: पत्न्या: मुखेन व्यक्तीकृतो वर्तते -

एतद्ज्ञातं सरलहृदये भारतस्यास्य लोकै:
सीमास्माकं चरणमथिताऽरातिभिर्मित्रसंज्ञैः।
'भ्राताऽभ्राता' कपटवचनैर्दत्तविश्वासमात्रै-
रन्त:पापैरमलहृदयं दर्शयद्भिः सकूटम्[4]।।

अद्य भारते विवाहे उपायनपरम्परा: इव कुरीतय: अस्माकं समाजस्य कलङ्करूपेण वर्तन्ते। काव्ये अस्य संकेत: ‘‘श्वश्रु: पात्राणि मार्जति’’इति नाम्नि सर्गे कृतो विद्यते। सुन्दर्या:.सुशीलाया:, सर्वगुणसम्पन्नायाश्च वध्वा: योग्यताया: परिचय: तया पितृगृहात् आनीतै: उपायनै: क्रियते स्म। कविना अस्य स्पष्टोल्लेख: कृत: अस्ति-

श्वश्र्वा अग्रे परं सर्वं सौन्दर्यं निष्फलं मतम्।
सुदायेन विना यातावधूस्तस्यै न रोचते।।

कवे: वेदना एतां प्रथां प्रति तस्मिन् काले ततोऽपि गम्भीरा जायते यदाऽसौ भारतवर्षस्य कन्यानां क्लेशान् वर्णयन् समाजे परिवर्तनमानेतुं क्रान्तिरपेक्षितेति काव्यस्यास्य माध्यमेन जागरयति जनान्।

पण्डितदुर्गादत्तस्य अस्मिन् काव्ये जाते: अस्पृश्यताया: कुप्रथानां साङ्गोपाङ्गचित्रणं कृतम् अस्ति। काव्यकारेण गुणकर्मणोराधारेण वर्णानाम् उत्पत्ते: समर्थनंकृतमस्ति। तत्रैव स्वतन्त्रभारतस्य कविभि: स्वकीयं योगदानं कृतम्। अस्यैव प्रयासस्य प्रतिफलम् इदं तर्जनीनाम महाकाव्यम् अस्ति। काव्यात्मकदृष्टया अपि इदं काव्यम् उत्तमश्रेण्यां गणयितुं शक्यते । काव्यस्य भाषा वैदर्भीरीतिश्रिता माधुर्यगुणसम्पन्ना च अस्ति। भावानुरूपं पदाविन्यासोऽत्र स्वर्णे सुगन्ध इव भाति।सुरीतिगुम्फितपद्ये भावसौन्दर्यमत्र विलोकयन्तु -

मन्त्रित्वं कामये नाहं सत्यं भाषे जवाहर।
लोकसेवां करिष्यामि त्यागपत्रं गृहाण मे[5]।।

कविना ’स्टेशन‘‘, ’एक्सप्रेस‘‘, इत्यादीनां शब्दानां स्थापनं यथावत् कृतमस्ति। एतेषां शब्दानां निवेशनेनापि अस्मिन् काव्ये रसभावयोः शैथिल्यं मनागपि न दृश्यते -

आगत्य दक्षिणस्याश्च दिशस्तत्रावतिष्ठत।
स्टेशने वाष्पायतनं तदैक्सप्रैसं यदुच्यते[6]।।

पाणिनीयव्याकरणे कवेः प्रगाढरुचिः काव्यस्य प्रत्येकस्मिन् पद्ये प्रकाशिता भवति। काव्ये विभिन्नानां रसानां समायोजनं कृतम् अस्ति। परञ्च मातृभूमेः सुरक्षायाः तत्त्वानां समावेशेन वीररसस्य च्छटा विशेषरूपेण प्रकाशम् आयाति। रक्षाकर्मिणः पत्न्या स्वपतिं प्रति लिखितैः शब्दैः एतस्य तथ्यस्य पुष्टिः भवति –

पुण्यं कार्यं भवति च पते नाधिप्राणप्रदानाद्।
रक्षाहेतोः स्वजननभुवः सङ्गरं कान्त गत्वा।
युष्माकं वै शुभसुचरितैः शौर्यधर्मावलिप्तैः
मोक्षो मेऽपि प्रिय च भविता योगिनामेत्य लोकम्[7]।।

एवमेव प्रकारेण पत्न्या स्वपत्युः शक्तेः अर्जुनेन तुलनाकरणम् अपि अस्य रसस्य परिपाकस्य पुष्टिं करोति। एवं प्रकारेण काव्ये वीर रसः मुख्यरुपेण प्रतिष्ठिते भवति। अलङ्कारयोजनायाम् अपि कवेः प्रतिभा द्रष्टव्या अस्ति। अस्मिन् उपमा-उत्प्रेक्षा-रूपक-तुल्ययोगिता-अनुमान-विभावनादीनाम् अलङ्काराणां समुचिता योजना कृता अस्ति। अनुमानस्य छटायाः उदाहरणं अधस्तात् प्रस्तुतम् अस्ति -

संकोचस्येदृशस्त्यागः कदाऽपि न कृतो मया।
अधिक्षिपन्ति मामेवं निर्निमितमनागसाम्[8]।।

कारणं विना कस्यापि कार्यस्य उत्पतिः न भवितुमर्हति। परं यदा कविसृष्टौ (काव्ये) यदाकारणं विना कस्यापि कार्यस्योत्त्पतिर्वण्यते तदा

विभावनालङ्कार: भवति। तर्जन्या: दशमे सर्गे अस्याऽलङ्कारस्य सुन्दरम् उदाहरणं लभ्यते -

अनेत्रोपीक्षते यश्च करोति चाकरोऽपि य:।
हरि: स शरणं मेऽस्ति हरिजनो भवाम्यहम्[9]।।

अस्मिन् काव्ये प्रकृतिचित्रणस्य अभावोऽस्ति। वस्तुत: कवि: राष्ट्रनिर्माणस्य राष्ट्रियताया: नैतिकपूर्णसन्दर्भाणां च विवेचने एव रतो भवति। अत: प्रकृतिचित्रणं पूर्णतया उदयं नागच्छत्। एवंप्रकारेण अस्मिन् काव्ये वर्णाश्रमधर्मस्य आध्यात्मिकमूल्यानां निर्देश:, सामाजिकानां व्यवस्थानां दृढीकरणस्य परिकल्पना:, राष्ट्रनिर्माणञ्च इत्यादीनां विषयाणां वर्णनं कृतम् अस्ति। अत: अस्य काव्यस्य महत्त्वमक्षुण्णं विद्यते।

**मधुवर्षणम्** -

राष्ट्रोपासनापरायणकविपण्डितदुर्गादत्तशास्त्रिविरचितमिदं तृतीयं काव्यम् अस्ति। दुर्गादत्तस्य मधुवर्षणनामाख्ये काव्ये स्वातन्त्र्योत्तरसमाजस्य चित्रणं अस्ति। कविना आरम्भे एव अस्य निरूपणम् एकस्मिन् पद्ये कृतम् अस्ति -

प्रथमं लिखितं काव्यं 'राष्ट्रपथप्रदर्शनम्'।
द्वितीयं 'तर्जनी' नाम तृतीयं 'मधुवर्षणम्'[10]।।

अस्मिन् काव्ये सप्त सर्गा: (7) पञ्चषष्ट्युत्तरचतु:शतं (465) च पद्यानि सन्ति। काव्ये मङ्गलाचरणस्य निवेशनं नास्ति परञ्च मधुवर्षणसन्देश: इति नाम्ना प्रथमसर्गस्य प्रारम्भात् पूर्वं सर्गानुसारं सारांश: एकविंशत्यां पद्येषु निबद्ध: अस्ति। अस्य काव्यस्य उद्देश्यं प्रभुसत्तासम्पन्नस्य राष्ट्रस्य सर्वाङ्गीणविकासं प्रति जागरुकताया: उत्पादनमस्ति। स्वतन्त्रदेशस्य नागरिकाणां सर्वप्रथमं कर्त्तव्यं स्वमातृभूमे: संरक्षणं भवति। स्वातन्त्र्यप्राप्ति: यावत् कठिना, ततोऽप्यधिकतरकठिनं तद्रक्षणं भवति। एतदर्थं काव्यकारा: साहित्यकाराश्च महत्त्वपूर्णां भूमिकां निर्वहन्ति। येन समाज: जागरुकः प्रतिष्ठितश्च भवेत्। मधुवर्षणे

एतेषां भावानामाधारेण भारतस्य स्वातन्त्र्यरक्षणार्थं प्रयास: कृतो विद्यते। मातृभूमे: रक्षणस्य त्यागस्य च उत्कटेच्छा काव्यकारस्य भावनां स्वत एवोज्जागरयति -

नाथ त्यागं विदधति च ये मातृभूमेर्निमित्तं
गाथास्तेषां सकलमनुजा आयुगं कीर्तयन्ति।
एतत्सत्यं भवति दायितानश्वरो यो बुभूषन्
दद्यात्प्राणान् विमलमनसा राष्ट्ररक्षनिमित्तम्[11]।।

कवे: राष्ट्रस्य रक्षार्थं निर्मलेन मनसा प्राणत्यागस्य आह्वानार्थंप्रत्येकं नागरिकस्य जागरणं कृतम् अस्ति। कवि: युगस्य धारणा: प्रति सजगोऽस्ति समाजस्य प्रत्येकस्मिन्नपि वर्गे यदि देशस्य भावना प्रमुखा भवेत् तर्हि वयं विश्वस्य देशानां विकासस्य प्रतिस्पर्धायां कदाचिदपि पृष्ठगा: न भविष्याम:। एकस्मिन् पद्ये अयमाशय: निम्नलिखितप्रकारेण अभिव्यक्तीकृतो विद्यते। तद्यथा –

प्रज्ञाऽपूर्वा प्रिय भवति न: साम्प्रतं तत्प्रयोग:
कार्य: शीघ्रं सकलपुरुषै: सर्वतोदत्तचितै:।
विज्ञानज्ञा ददतु हृदयं स्वीकार्येषु दक्षा
एवं सर्वे दयित कृषका: क्षेत्रकार्ये रता: स्यु:[12]।।

कलागतसौन्दर्येऽपि इदं काव्यमद्वितीयम् अस्ति। काव्ये भावसौन्दर्येण सह कलागतस्य सौन्दर्यस्य सद्भावा अपि नितान्तमपेक्षितो भवति। अस्मिन् काव्ये अधिकतया भावानां निरूपणं युद्धभूमिसम्बद्धमस्ति। अत: वीररस: मुख्यरूपेण निष्पादितोऽन्ये रसाश्च गौणत्वेनात्र काव्ये निबद्धा: सन्ति। इदं सम्पूर्णमपि काव्यं मन्दाक्रान्ताछन्दसानिबद्धमस्ति। केषुचित् स्थलेषु वीररसस्य उपकारकयो: ओजःप्रसादगुणयो: गौडीरीतेश्च च समावेश: अपि कृत: अस्ति। अलङ्कारयोजनायाम् इदं काव्यं स्वकीयं विशिष्टं स्थानमादधाति। अस्मिन् उपमा-रूपक-अप्रस्तुतप्रशंसा-उत्प्रेक्षा-दृष्टान्तादीनामलङ्काराणां प्रयोगः कृतोऽस्ति। काव्येऽस्मिन् किरातार्जुनीयस्य महाकाव्यस्य प्रभूतप्रभाव: दृष्टिगोचरो भवति। भारतस्य एकताया: अखण्डतायाश्च चित्रणमत्रातिरमणीयं वर्तते। तद्यथा –

देशोऽस्माकं भवति विटपी स्कन्धतुल्या प्रदेशा
भाषा अस्य प्रियतम तथा सन्ति शाखा: सुरम्या:।
भिन्ना: धर्मा: किल सुमनस: कान्तगन्धं वहन्त्यो
मूढा लोका: परमिह विदुर्गौरवं नैकताया:[13] ।।

अस्मिन् काव्ये वस्तुचित्रणम् अतीव सजीवतया कृतम् अस्ति। प्रकृतिवर्णने कविरयं स्वभावं तथा स्पष्टरूपेणव्यक्तीकरोति येन मुख्यकथा न व्यवहीयते। अध्येता च विषयस्य सन्देशं सहजरूपेणैव ग्रहीतुं सक्षमो भवति। इदमेवास्य काव्यस्य वैशिष्यम्। एवंप्रकारेण काव्यमिदं सर्वा: अपि काव्यविधा: अतिरिच्य स्वकीयम् एकं विशिष्टं महत्त्वम् आदधाति।

**श्रीसत्यसाईचरितम्**

प्रस्तुतपुस्तकं पण्डितदुर्गादत्तशास्त्रिणा सत्यसाई इति महापुरुषस्य आश्रयं संगृह्य विरचितमस्ति। एतस्मिन् पुस्तके तेन साईबाबामहोदयस्य जन्मस्थानकादिसहितं पित्रो: तदवतारस्य चेत्यादीनवलम्ब्य चित्रणं कृतमस्ति। पुस्तकस्य प्रारम्भे उक्तमस्ति यथा-

आन्ध्र: प्रान्तो भवति गुणवान् भारतस्येतिहासे
पुट्टापर्तेर् विमलमृदियं स्वर्गतुल्या नराणाम्।
तत्राऽऽयात: शिवतनुधरो निर्जर: सत्यसाइर्
चित्रावत्यास्तटपरिगता पावना भूमिरेषा[14]।।

भारतवर्षस्य इतिहासे आन्ध्रप्रदेश: अतीव गुणवान् अस्ति। पुटापर्ति इति स्थानस्य निर्मलमृद् जनानाम् कृते स्वर्गतुल्या सञ्जाता अस्ति। तत्र मान्यता विद्यते यत् शिव: सत्यसाईरूपेण अवतीर्णो भूत्वा समागतोऽस्ति इति। चित्रावत्या: तटे वर्तमाना भूमिरियम् अतीव पवित्रा अस्ति। श्रीसत्यसाइर् चरिते साइर्जन्मन: काले तेषां नामकरणस्य विषये कथितं विद्यते यत्-

सत्यनारायणो नाम निश्चितं तैर्मनीषिभि:।
प्राहैक: ’शिरडी साई“ जानामि पुनरागत:[15]।।

तत्रत्यैः पण्डितैः तस्य नाम सत्यनारायणः इति निश्चितमस्ति। तत्र एकः पण्डितः ब्रवीति मम विचारे तु शिरडीसाई एव मन्ये अत्र पुनरागतोऽस्ति। श्रीसाईवर्यस्य सम्पूर्णस्य जीवनस्य घटनानाम् प्रकाशेन सह तैः कृतानि अद्भुतानि कार्याणि ग्रन्थेऽस्मिन् प्रकाशितानि। पण्डितदुर्गादत्तशास्त्रिणःप्रकाण्डपाण्डित्यस्य परिचय एतस्य लघुपुस्तकस्य प्रणयेन ज्ञायते। अन्तः पुस्तके कथितम् अस्ति यत्-

देवत्रयी समायाता स्वरूपे सत्यसाइनः।
ब्रह्मा विष्णुः महेशश्च भुवनं बोधते स्वयम्[16]।।

अर्थात् भगवतः साइर्वर्यस्य रूपे अद्य तिस्त्रो अपि देवताः ब्रह्मा, विष्णुः, शिवश्च भारते समुपस्थिताः विद्यन्ते इति तथ्यं सकलमपि जगत् जानाति।

**ऋतम्भरा -**

हिमाचलगौरवम्, पश्य प्रभावं कलेः, स्नेहस्य सूत्रेण वयन्तु बद्धाः इति तिसृणां कवितानां सङ्कलनरूपा "ऋतम्भरा" एतेषामन्यतमा कृतिः यत्र बहुविधोपदेशसम्बलितस्नेह-औदार्य-विश्वभ्रातृत्वादिभावा अभिव्यञ्जिताः सन्ति।

**रूपकसाहित्यम्-**

धनञ्जयानुसारेण अवस्थानाम् अनुकृतिः नाट्यमस्ति तथा च रूपकस्य आरोपात् कारणेन हि नाट्यमिदं रूपकं कथ्यते।रूपकस्य नाटकप्रकरण-भाणादिभेदैः दश भेदाः सन्ति। उपरूपकस्य अष्टादश भेदाः सन्ति। अनेन प्रकारेण नाटकं रूपकस्य भेदो मन्यते स्म। त्रिगर्तक्षेत्रस्य नाटककारेषु पं.दुर्गादत्तशास्त्री अन्यतमः येन पहाड़ीभाषायाः नाट्यसाहित्यं संस्कृतभाषया रूपान्तरणं कृत्वाजनमानसेषु चमत्कृतिं ससर्ज।

**वत्सला-**

स्वतन्त्रकथानकमाधारितः नाटकानां सन्दर्भे दुर्गादत्तशास्त्रिणा विरचितं "वत्सला" इति प्रथमं नाटकम् अस्ति। नाटकेऽस्मिन् षड् अङ्काः सन्ति यत्र

संस्कृतस्थगीतिकानां बहुलप्रयोगो दृश्यते। अत्र नाट्यकारेण हिन्दीभाषया रूपान्तरमपि प्रस्तुतम्। नाटकस्य कथानकं लोकगाथानामोपरि आधारितमस्ति। तदानीन्तनकालेऽपि भारतीयसमाजे बालिका: पुत्रतुल्यस्थानं न लभन्ते स्म। यद्यपि संवैधानिकरूपेण द्वे अपि सन्तत्यौ समाने मन्यते। समाजे अशिक्षाया: कारणेन बालिकाया: जन्म अशुभं मन्यते। पुत्र्याः जन्म मातापित्रोः चिन्ताया: कारणमस्ति। नाटके प्रथमाऽङ्कस्य प्रथमे दृश्ये एव विषयोऽयं सङ्केतितः, यत्र कथ्यते-

"तुङ्गभद्र: (आत्मगत्म्) बलवत द्वे मे कन्ये जाते। एकापि कन्या चिन्ताकरी मम तु द्वे। कुत्र सम्बन्ध गवेषणं करिष्ये। कीदृशौ वरौ मिलिष्यत:। न जाने कियत् यौतुकं याचिष्यत: यौतुकं हि नामाभिशाप:। यावदेतस्य न विराम: कन्या: अविरामं दु:खानि भोक्ष्यन्ते"[17]।

कन्यानां जन्मनः पश्चात् अनेन प्रकारेण दुर्भावनाया अधुनाऽपि समाने विद्यमानोऽस्ति तेन कारणेन समाज: सशक्त: समुन्नतश्च न अभवत्। नाटकमिदं रुचिपूर्णतयाऽभिनेय्यं कर्तुं नाटककारेण पूर्ण: प्रयास: कृतोऽस्ति। एतस्मिन् मधुराणां १४ गीतिनां समावेश: कृतः। गीतीनां नामानिअंजलिः, मत्तल्लिका, मंजरी, कुंदली, काकली, कौमुदी, लाडली, कोट्टारकोट्टम् तथा च चलाचला इत्यादीनि स्थापितानि। अत्र नान्दीरूपेण शार्दूलविक्रीडितछन्दसा शिवस्तुतिः विहिता। यथा-

शीर्षे यस्य विराजते त्रिपथगा चन्द्रस्तथा मस्तके,
संसारस्य हिताय येन गरलं हर्षेण पीतं पुरा।
देवानां प्रवरो विभूतिवसनो मृत्युंजयो धूर्जटि:
पार्वत्या: स पति: सदावतु शिवो नेत्रत्रयालङ्कृत:[18]।।

सूत्रधारनटीसंवादे अंजलि: इति गीति: प्रयुक्ता तस्या: लक्षणं तत्र अनेन प्रकारेण उद्धृतम् -

नन्द्या अनन्तरं यातु गीतिरायाति सस्वरम्।
अंजलिर्नाम सा प्रोक्ता दर्शकानां प्रसादिनी[19]।।

सम्पूर्णेऽपि नाटके शार्दूलविक्रीडितम्, मन्दाक्रान्ता, शिखरिणी, मालिनी, द्रुतविलम्बितम्, पञ्चचामरम्, उपजाति:, अनुष्टुप् च इत्येतेषाम् अष्टानां छन्दसां प्रयोगो विद्यते। छन्दस्सु अनुष्टुभ: छन्दस: सुन्दरम् उदाहरणं षष्ठे अङ्के इत्थं प्रदत्तमस्ति-

परिवर्ती विचाराणां कुतोऽस्ति देशद्रोहिणाम्।
सर्पो भवति नासर्पस्तर्पितो दुग्धधारया[20] ।।

एवमेव अन्येषामपि छन्दसाम् अपि यथास्थानं सुन्दरं निरूपणम् उपलभ्यते। अत्र वृत्त्यनुप्रास-उपमा-रूपक-दीपक-विभावना-उत्प्रेक्षा- इत्यादय: अलङ्कारा: यथास्थानं निबद्धाः सन्ति।

**तृणजातकम्-**

त्रिगर्तस्य रूपकसाहित्येतृणजातकं दुर्गादत्तस्य द्वितीया रचना अस्ति। एतस्मिन् रूपकेएक एव अङ्कः अस्ति। प्रस्तुतस्य नाटकस्य कथानकं लोककथाश्रितमस्ति। एतस्मिन् भारतीयसमाजगतजातिप्रथाया:, बन्धककर्मकराणां (बन्धुआ मजदूर) समस्यानाम् अति निपुणतया प्रस्तुतीकरणं विद्यते। नाटकस्य कथा एता एव समस्या: परितो भ्रमति। परञ्च प्रधानेन प्रतिपाद्येन सह विधवाविवाहात् निर्धनतायाश्च मुक्तिप्राप्त्यर्थं किञ्चिद्धनसंग्रहस्य प्रवृत्त्यादिगौणविषयाणां चित्रणमपि तावत्या एव निपुणतया कृतं विद्यते। रचयितु: प्रधानं प्रतिपाद्यं तु जातिप्रथाया: बन्धककर्मकराणां च समस्यानां चित्रणं विद्यते। पुनरपि गौणरूपेण विधवा विवाहादीनामपि समस्यानां स्वत एव परिचय: समुपलभ्यतेऽत्र।

**रेलमन्त्री-**

पण्डितदुर्गादत्तशास्त्रिण: विरचितम् इदम् एकं लघु रूपकमस्ति। रूपकमिदं एकाङ्कम्। एतस्य नाटकस्य प्रकाशनं होशियारपुरस्थ-विश्वेश्वरानन्दवैदिकशोधसंस्थानद्वारा विश्वसंस्कृतम् इति पत्रिकाया: 1987तमे ई.वर्षे सितम्बर-दिसम्बरमासयो: विशेषाङ्के सञ्जातमस्ति। नाटकस्यास्य

कथानकं दुर्गादत्तेन विरचितस्य तर्जनीनामककाव्यस्य द्वितीयसर्गाधारितमस्ति। नाटकमिदं घटनाप्रधानम् अस्ति। एतस्मिन् एकस्याः भयानकरेलदुर्घटनायाः चित्रणं कृत्वा रेलमन्त्रिणा कृतस्य त्यागस्य रूपणं कृतमस्ति। अम्बालानगरस्य चिकित्सालयः दुर्घटनाग्रस्तयात्रिणां चीत्कारैः पूर्णो वर्तते। तस्मिन् काले भारतस्य रेलमन्त्री लालबहादुरशास्त्रिमहोदयः आसीत्। तत्र असौ अपि उपस्थितः विद्यते। सः चिकित्सासु विद्यानाम् अन्यकार्यकलापानां च स्वयमेव निरीक्षणं करोति।

द्वितीये दृश्ये लालबहादुरशास्त्रिमहोदयस्य दिल्लीस्थस्य आवासकक्षस्य चित्रणं विद्यते। शास्त्री महोदयस्य पत्नी ललिता दुर्घटनाग्रस्तजनानां दशाविषये पृच्छां करोति। खिन्नः लालबहादुरशास्त्री महोदयः स्वमन्त्रिपदस्य त्यक्तुं वाञ्छति। तृतीये दृश्ये तत्कालीनस्य प्रधानमन्त्रिणः पण्डितजवाहरलाल-नेहरूमहोदयस्य त्रिमूर्तिभवनस्य निरूपणम् अस्ति। लालबहादुरशास्त्रिमहोदयस्य नेहरूमहोदयस्य च पारस्परिकवार्तालापेन सह शास्त्रिमहोदयः स्वं त्यागपत्रं तस्मै प्रयच्छति। शास्त्री महोदयः कथयति यत् मयि अस्मिन् पदे आरूढे सति दुर्घटना इयं सञ्जाता अस्ति अतः नैतिकतावशेन उत्तरदायित्वं मयि एव सम्पतति। नेहरूमहोदयः तेषां पुरतः गृहमन्त्रिपदस्य प्रस्तावं स्थापयति। परञ्च शास्त्री महोदयः न किमपि पदमभिलषति। यथा रजकस्य आरोपेण रामः सीतां वनं सम्प्रेष्य प्रजायाः सशक्तीकरणे प्रवृत्तः आसीत् तथैव दुर्घटनायाः अपवादकारणतः अहं पदासीनो न भवितुं शक्नोमि। नाटकस्य नामकरणमपि घटनाप्रधानम् अस्ति। रेल दुर्घटनायाः नैतिकं दायित्वं मन्त्रालयस्य मन्त्रिणि आपतति। अतः स्वाभाविकमेव आसीत् यत् नाटकस्य नाम तत्सम्बद्धं स्यात्। नाटकमिदं भारतस्य राजनैतिकव्यवस्थायाः चित्रणं प्रस्तौति। नाटककारस्य उद्देश्यं प्रजातन्त्रस्य सशक्तीकरणम् अस्ति तथा च तदाधारभूततत्त्वानि प्रति संङ्केतसम्प्रेषणम्।

एवम् प्रकारेण एतस्मिन् लघुनाटके शास्त्रिमहोदयस्य चरित्रस्य एकं विशिष्टमेव महत्त्वं चित्रितमस्ति। तथैव तत्कालीन प्रधानमन्त्रिणः पण्डितजवाहरलालनेहरू महोदयस्य चरित्रं यथा निरूपितम् अस्ति तदपि अनुकरणीयं विद्यते।एवम् प्रकारेण रेलमन्त्री इति नाटकं स्वातन्त्र्योत्तरभारतस्य दृश्यं प्रस्तौति।

**गद्यसाहित्यम्-**

संस्कृतकाव्येषु गद्यस्य स्थानं विशिष्टमस्ति यत्र च्छन्दोरहिता रचना कल्पनायाः निःसीमाकाशे मुक्तं स्वच्छन्दं च नैजं प्रकाशमाविष्करोति। कथाख्यायिकाभेदेन गद्यकाव्यस्य भेदद्वयं प्रथितमस्ति। कविना दुर्गादत्तेन त्रीणि कथाकाव्यानि रचितानि, तानि - अनारकली, बृहत्सप्तपदी, वियोगवल्लरी च।

**अनारकली-**

लोकगाथाधारिता अनारकली एका लघु कथा अस्ति। अस्या: रचयिता दुर्गादत्तोऽस्ति। एषा कथा होशियारपुरस्थविश्वेश्वरानन्दवैदिकशोधसंस्थानपक्षतः प्रकाशितायाः विश्वसंस्कृतमित्यस्या: पत्रिकाया: 1980 ईसावर्षस्यसितम्बर-दिसम्बरमासकथाविशेषाङ्के प्रकाशिता। हिमाचल प्देशे ग्राम्यक्षेत्रेषु अद्यापि अतिपरिश्रमात् विश्रान्तिप्राप्त्यर्थं रात्रौ कथाश्रावण-श्रवणयोः परम्परा अस्ति। कथावाचक: कश्चित् अनुभवशीलजनो भवति। अनारकली इत्यस्या: कथाया: कथानकम् एवंविधायां लोकगाथायां आधारितम् अस्ति। कथाकारेण स्वस्या: प्रतिभाया: आधारेण किञ्चित् परिवर्तनं विधाय कथानकमितोऽपि रूचिपूर्णं कृतम् अस्ति। कथाया: नामकरणम् कथानायिकाया: आधारेण कल्पितमस्ति। या च धनहीनस्य कृषकस्य सप्तसु अपि कन्यासु कनिष्ठा अस्ति। कथाया: पात्राणि घटना: च कथाकारस्य स्वकीया कल्पना अस्ति। नायिकाया: सौन्दर्यस्य परिकल्पनाया: आधारेण कनिष्ठाया: कन्याया: नामकरणम् अनारकली अर्थाद्दाडिमफमितिकथाकारस्य अभीष्टम्। कथाया: (द्वे) रूपे स्त:। उपदेशात्मकं मनोरञ्जनात्मकञ्च। अनारकली इत्यस्या: कथाया: परिगणना मनोरञ्जनात्मककथारुपेण कर्तुं शक्यते। कथाकार: हिमाचलसंस्कृतकथा-साहित्यस्य माध्यमेन अस्या: वैशिष्टयं व्यक्तीकर्तुम् इच्छति। संस्कृतभाषायां निबद्धाभिरेतादृशाभि: कथाभि: यत्र एकस्मिन् पक्षे साहित्यस्य पुष्टिर्भवति तत्रैव अन्यस्मिन् पक्षे भाषायाः समृद्धिः। हिमाचले लोकगाथानाम् एका सुदृढा परम्परा विद्यमानास्ति। परं समयक्रमेण लोकगाथारचनापरम्पराया ह्रासं वीक्ष्य कथाकारेण एतादृशीं परम्परांसंस्कृतभाषामाध्यमेन उज्जीवयितुं संवाहयितुं च प्रयासः कृतः।

अनारकलीकथायोजना रुचिपूर्णा तथा कलात्मकदृष्ट्या समृद्धाऽस्ति। कनिष्ठराजकुमारेण सह अनारकलेः प्रेमप्रसङ्गंवैवाहिकजीवनं च वर्णयित्वा तत्र प्रादुर्भूतबाधानां निरुपणम् कृतमस्ति। मानवजीवने कथं वाधानां धैर्येण सम्मुखीकरणं कर्तव्यं तदत्र कथामाध्यमेन सम्प्रेषितमस्ति। निजाभीष्टपतिदेवं प्राप्तुमनारकली तपः आचरति, तदनन्तरमपि तया जटिलपरीक्षाणां साम्मुख्यं कर्तव्यं भवति। सर्वप्रथमं इन्द्राण्याः उद्याने दाडिमफले अनारकली आत्मानं वध्नाति। यदा राक्षसी तां कूपे स्थापयति च तस्याः आत्मा पंङ्कजे निवसति। एतदनन्तरमपि निजपतिदेव तया न प्राप्यते। ततः राक्षसी कमलपुष्पम् अरण्ये स्थापयति तत्र चआम्रमुत्पद्यते। अनारकल्या आत्मा तस्य आम्रवृक्षस्य एकस्मिन् फले निवसति। एतादृशजटिलपरीक्षा उत्तीर्य अनारकली निजाभीष्टं पतिं प्राप्नोति। अत्र कविना घटनानां तथा सजीवचित्रणं विहितं येन पाठकानां मनसि कौतुहलं जागर्ति तथा च प्रेम्नः दृढाधारं निर्माय कथाकारः रसमभिव्यञ्जयितुं विशेषरूपेण सफलीभूतो दृश्यते। उक्तमस्ति-

न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते।
कषायिते हि वस्त्रादौ भूयान् रागोऽभिवर्धते[21]॥

कविरत्र सहृदयान् पूर्वरागविप्रलभद्वारेण सम्भोगस्य हर्म्यं प्रवेशयति। वस्तुतः कथाकारः अत्र मौलिकपरिकल्पनायाः आश्रयेणातीवोउत्कृष्टतया वस्तुविन्यासं करोति। कथायाः भाषा सरला पाणिनिव्याकरणपरिनिष्ठिता च।उदाहरणत्वेनात्र विलोकयन्तु-

"कूपे अनारकल्याः कमलपुष्पम् उदपद्यत। एकदा राजकुमारस्य भृत्यः कूपे तद् रम्यं कमलपुष्पम् अपश्यत्। स रज्जुबद्धलोहपात्रेण तत्पुष्पं बहिरानेतुं बहु प्रायतत, परंन शशाक। एतद् वृत्तं स राजकुमाराय न्यवेदयत्। राजकुमारः स्वयमागत्य यदा कूपे लोहपात्रम् अपातयत्तदा तत्पुष्पमनायासमेव आयात्"[22]। व्यञ्जनाया समाश्रयणेन भावोन्मेषो यत्र तत्र कथायामस्यां दृश्यते। तथा हि- "जलम् ऊढम् अनूढ वा? ब्रह्मणी तन्मनोभावं विज्ञाय प्रत्यवदत् – अनूढमेव।"

एवंप्रकारेण अनारकली कथा पाठकानाम् कृते उत्कृष्टमनोरञ्जनस्य साधनमस्ति अपि तुसंस्कृतभाषासाहित्यंपोषयति संवाहयति च। इयं कथा हिमाचलप्रदेशस्य गाथापरम्परांसंस्कृतभाषामाध्यमेन प्रस्तूय अमरत्वं प्राप्नोति। हिमाचलस्य कथासाहित्ये दुर्गादत्तस्य इयं कृतिः स्वकीयं विशिष्टं स्थानं महत्त्वञ्च स्वीकरोति।

**बृहत्सप्तपदी-**

पण्डितदुर्गादत्तशास्त्रिणा अस्य कथाकाव्यस्य नाम एतदीयसप्ताध्यायं पुरस्कृत्य विहितमस्ति,येषामध्यायानां नामानि क्रमशः पितृनाम, अश्रुसंयोगः, कङ्कणबन्धनम्, मस्तकरूधिरम्, सुवर्णपादपः, पुन्नाम नरकः, तथा च सुतशापः अस्ति। प्रथमाध्यायस्य एकस्मिन् प्रसंङ्गे गणिकायाः सुतः वदति-

अपरदिवसे सरोजिनी सुनीतयुता पाठशालामुख्याध्यापकं प्राह- "श्रीमन्तः, बालमिमं प्रवेशयितुकामा समायाताहम्।" मुख्याध्यापकः- "नातिक्रान्तः साम्प्रतं प्रवेशावधिः। भवती प्रपत्रमिमं पूरयतु। अहं प्रवेशसञ्चिकां समानयामि। (प्रपत्रं प्रदायोत्थित) एतस्य पितुः किं नाम?" सरोजिनी- "नाहं विजानामि न चास्य जननी।"मुख्याध्यापकः- हुँ, एतत्किम्? सरोजिनी- (तत्कर्णाभ्यर्णगता) "एषः वेश्यासुतः।" मुख्याध्यापकः- "पितुर्नाम विना न प्रवेशः सुलभः।"[23]

तत्पश्चात् अश्रुसंयोगाध्याये कल्याणी उमां प्रति कथयति यत्- "कल्याणी- (उमां प्रति) मूर्खे, पश्य। रात्रौ मात्राधिकपक्वं प्रभाते दुर्गन्धयुतं सञ्जायतेमहार्घतायाः कालोऽयम्। न वयं धनाढ्याः। तव मतिश्छिन्ना। गेहवरावरविचारापरिचिता त्वम्। अभिशीतनयन्त्रं कथं नानयः? नग्नैवायाता। अस्मत्पादप्रक्षालनस्य को लाभः?

उमा - (सर्पदष्टैवान्तःपीडाम् अनुभवन्ती मानसिकव्यथां क्षालयितुमिव नयनसलिलं विमुञ्चती मनसि) मया परिणयात्पूर्वमेव पितरौ एतेषां यौतुकगृध्नुतायाः परिचितिं प्रापितौ परं "यद् विधिना ललाटलिखितं तन्मार्जितुं

कः क्षम:" किं मे जीवनं यौतुकरज्जुलम्बमानं वर्तते? भर्ता मे विशालहृदय:। परं कर्णेजपा: महात्मनां मनांस्यपि परिवर्तयन्ति। (प्रकाशम्) मात:, मम पितरौ अधनौ। नग्न: किं स्नायात् किं च निपीडयेत्"[24]।

एवं कविः दुर्गादत्तः शास्त्री सामाजिककुरीतीःकटु आक्षिपन् अतीव सुन्दरतया कथाकाव्यस्यास्य रचनामकरोत्। कालस्य दर्पणे अधुना वयम् पश्याम: यद् अस्माकं देशस्य 1947 ई०वर्षात् पूर्वस्याः परायाश्च स्थितेर्महदन्तरम्। स्वतन्त्रताया: प्राप्त्यनन्तरं भारते रामराज्यस्य स्थापनायायाः या मधुराधारणाऽऽसीत् सा कल्पनासागरे कुत्रचित् जलबुदवद् विलीना अभवत्। संयम: कामुकतया, परार्थ: स्वार्थेन, त्याग: लोभेन, ज्ञान: दम्भेन, विनम्रता अहङ्कारेण, आस्तिकता नास्तिकतया, सज्जनता दुर्जनतया चएवंप्रकारेण गृहीताऽस्ति यथा सर्प: मण्डुकेन।

बृहत्सप्तपद्या: अयं विशेषो यत् सामयिकान् सन्दर्भानिमाम् आधारीकृत्य कविना वस्तुविन्यासः कृतः कथानकं च कल्पितम्। कङ्कणबन्धनम्, मस्तकरूधिरमित्याख्यो: कथयो: क्रमशो दैवदुर्विपाकाल्लब्धवैधव्याया इन्दुबालाया उद्वाहस्य, हरिजनभीखुरामस्याऽनादरफलतया भगवन्मस्तकाद्रुधिराविर्भावस्य च वर्णनं लेखकस्य काव्यविचारसीमाप्रसारं सम्यक् प्रकाशयति। यद्यपि अस्माकं रूढिवादिपरम्परा परम्परा, एतन्न समर्थयते तथापि श्रीशास्त्रिमहोदयेन अत्यन्तं साहसिकतया तन्निबन्धनं कृतं कथानकेऽस्मिन्।

**वियोगवल्लरी-**

पण्डितदुर्गादत्तशास्त्रिण: विरचितगद्यसाहित्यस्य इयम् एका अनवद्याकृतिरस्ति। अस्याः प्रकाशनं 1989तमे ई.वर्षे अभवत्। प्रौढगद्यशैल्या विरचित:। अस्या: रचनाया: भावानुरूपोऽनुवादोऽपि स्वयमेव कृतः कविना। ग्रन्थरत्नोऽयं श्रेष्ठताया: उपयोगितायाश्च आधारेण उत्तरप्रदेशसाहित्यअकादम्या पुरस्कृतोऽस्ति।गद्यस्य कथा, आख्यायिका चेतिभेदद्वयमस्ति। वियोगवल्लरी-काव्यस्य विश्लेषणेन प्रतीयते यदियं कथानामके भेदे अन्तर्भवति। अस्याः

कथानकं पूर्णरूपेण कविकल्पितमस्ति। अत्र कल्पनाया: पूर्णसाम्राज्यं स्वकीयपूर्णवैभवेन सह विराजते। अत्रस्वतन्त्रतापूर्वभारतस्यावस्थास्वाधीनतायै आन्दोलनं च प्रतिबिम्बितम्। तदानीन्तनभारते रूढिवाद:, धर्मान्धता, साम्प्रदायिकता, भाषा-जाति-क्षेत्रवादश्च जरीजृम्भन्ते स्म। मानवमूल्यानि क्षीयमाणानि जायन्ते स्म। भारतीया संस्कृतिःह्रासोन्मुखा जायते स्म।। राष्ट्रीयता अर्थविहीना अदृश्यत। एकताया: प्रश्न: क्वचिदतीते गताऽऽसीत्। स्वार्थपता उन्नतिमार्गे प्रावर्तत। ईदृश्यामवस्थायाम् अस्माकं देशस्य विकास: केन प्रकारेण भवेत्?एताभिः समस्याभिः प्रेरितेन कविना दुर्गादत्तशास्त्रिणा वियोगवल्लरी रचिता।

एतस्या: कृतेर्नामकरणं कथान्तर्गतैकविशेषघटनाधारेण कृतमस्ति कविना। वियोगस्याभिप्रायोऽस्ति विश्लेषोऽपायो वा। वल्लर्याश्चाभिप्रायो भवति लता वल्ली वा। कुमुदवत्या: नगर्या: राज्ञा महासेनेन मलयाचलपर्वते एकवर्षपर्यन्तं सन्तत्यर्थम् अगस्त्याश्रमे गौतममुने: सेवा कृता, ततः तस्य सूर्यकेतु: चन्द्रकेतुश्च इति नामधेयौ राजकुमारौ जातौ। मुनिप्रदत्तवचनानुसारं राज्ञाएकतरःपुत्रःमुनिसेवार्थमाश्रमं प्रेषितः। यदा तौ उभावपि राजकुमारौ वियुक्तौ बभूवतु: तदा एव तयो: वियोग आरब्धः। वियोगस्य तानि क्षणानि रचयित्रा लतारूपतया कल्पितानि अत्र। एतस्य आशयस्य उद्घाटनं पारिजातीयशुकस्य मुखेन निम्नोक्तप्रकारेण कारितम् –

वियोगवल्लरी लुप्ता कुमारयोर्मध्यवर्तिनी।
वर्धतां राजवंशोऽयं यावच्चन्द्रदिवाकरौ[25]।।

वियोगवल्लर्यां चित्रित: समाज: पूर्णरूपेण शास्त्रसम्मत: अस्ति। प्रजातन्त्रात्मकव्यवस्थायां जीवनयापनवृत्तिशीलसमाजस्य प्रगत्यर्थं चेतनाजागरणरूपोद्देश्यं पूरयितुंकविना दुर्गादत्तेन अस्मिन काव्यसृष्टिर्विहिता। अत्र वैदिकसमाजव्यवस्था: आरभ्य आधुनिकव्यवस्थापर्यन्तं तत्सन्दर्भाणां गहनविश्लेषणनिरूपणोपलब्धिर्भवति। चित्रणस्यैतस्य उद्देश्यम् वर्तमानव्यवस्थाया: सुदृढीकरणं वर्तते येन समाज: स्वावलम्बी प्रगतिशीलश्च

भवेत्। कथायाः मूलपात्राणि राजतन्त्रात्मकव्यवस्थायाः प्रतिनिधित्वं कुर्वन्ति। सामाजिक्याः संरचनायाः सुव्यवस्थायै आश्रमव्यवस्थायायाः महत्त्वपूर्णं स्थानमभिमतमस्ति। मानवः एतस्यां व्यवस्थायां धर्म-अर्थ-काम-मोक्ष-रूपि-पुरुषार्थचतुष्टयम् आप्नोति। चतुर्षु आश्रमेषु सर्वप्रथमं ब्रह्मचर्याश्रमस्य चर्चा प्रसङ्गानुकूला विद्यते। राज्ञः महासेनस्य सूर्यकेतुचन्द्रकेतुनामधेयपुत्रयोः बाल्यकालात् परं विद्योपार्जनपर्यन्तंब्रह्मचर्याश्रमश्चित्रितः। राज्ञा मोहवशात् तयोः राजपुत्रयोः शिक्षाया व्यवस्था गृहे एव कारिता आसीत्।

मोहाविष्टभूपतिः ऋषिकुल-सम्प्रेषणमतिं विहाय कुमारशिक्षायै राजप्रासादे सकलशास्त्रपारंगतं वेदविद्यार्थविदं धर्मभिक्षुनामपण्डितं विनियोजयामास। असौ प्रभाते कृतस्नान उपासितसंध्यो देवपूजां विनिवर्त्य प्रासादान्तःसुसज्जितकक्षेकुमारौ वेदोपनिषद्रामायण-महाभारतशौर्यकथाः श्रावयन् राजनीतिरहस्यमप्यशिक्षयत्।।

प्रसङ्गोऽयं ब्रह्मचर्याश्रमस्य क्रियाकलापान् दर्शयति। गार्हस्थ्याश्रमे पुरुषार्थचतुष्टये कामस्य प्राधान्यं भवति। राज्ञः मलयाचलपर्वते अगस्त्याश्रमे मुनेः गौतमस्य एकवर्षपर्यन्तं सेवापरकमानसिकचिन्ता अस्याश्रमस्य स्वाभाविकींप्रवृत्तिं व्यक्तीकरोति। एवंप्रकारेण राज्ञा महासेनेन चन्द्रकेतोः, राज्ञा भद्रसेनेन च सूर्यकेतोः च राज्यभारं त्यक्त्वा वानप्रस्थाश्रमस्वीकार प्रार्थित आसीत्। ततश्च ताभ्यां तद्वदेव अक्रियत। तदा राजा महासेनः वानप्रस्थाश्रमस्वीकारार्थंयोजनानिबन्धनं कर्त्तुं अयतत, तस्मिन्नेव काले तन्मतं प्रबलीकर्त्तुं पूर्वोक्तः सः शुकः एकपद्यमाध्यमेन पूर्वोक्तभावनाभिव्यक्तिं करोति। तद्यथा –

गेहे न भवतां कार्यं वानप्रस्थो निषेव्यताम्।
कुमारेणाधुना राजन् राज्यं ते शास्तिमेष्यति[26]।।

अत्र विषयाणां प्रभावजनकत्वसम्पादनाय, भावेषु प्रगाढतासम्प्रदानार्थं, भाषायां चमत्कारित्वविधानार्थं विभावना-परिसंख्या-उत्प्रेक्षा-श्लेष-उपमा-विरोधाभास-यमकादीनां शब्दार्थालङ्काराणामतीव सुन्दरं वर्णनं कृतं विद्यते।

कविना राज्ञः महासेनस्य राज्यनिरूपणं कियत्-कुशलतया परिसंख्यालङ्कारे कृतमस्ति तदत्र द्रष्टव्यं भवति। तद्यथा –

महासेनभूभुजि भुवं सेवमाने तस्करत्वं सुविचाराणां न धनानाम्।विवादः शास्त्रेषु न दायादेषु। स्पर्धागुणेषु न व्यसनेषु। अहमहमिका कर्तव्यपालने न फलावाप्तौ। आग्रहः पुण्यार्जने न वित्तसंग्रहे। निष्ठा शुभकर्मसु न द्यूतादिषु। वर्णसंकरो व्याघ्रचर्मणि न प्रजाजने। दाहो मृतदेहानां न गेहानाम्। कुटिला गतिर्भुजङ्गमेषु न मानवेषु।

कविना विभिन्नानां सन्दर्भाणां उज्जागरणाय अलङ्कारस्य अस्य सुन्दरं नियोजनं कृतं वर्तते। उपमानभूतप्रभातस्य उपमेयभूत-सूर्यराज्ञीपद्मावती-राजमहासेनयोः आधारेण उपमालङ्कारः स्वां रमणीयतां स्वयमेव दर्शयति। तद्यथा – 'प्रत्यूषे कमलिनी भास्करेणेवभर्तुः प्रथमदर्शनार्थमायाता महीषी कथं शून्यं विलोक्य धरातलस्यूतपादेव स्तब्धाभवत्।'

चित्रणस्य प्रभावशालितायै तत्सजीवत्वसम्पादनाय च केषुचित्स्थलेषु समासबहुलायाः ओजःपूर्णायाश्च शैल्याः अपि आश्रयो विहितः। कथासाहित्ये वर्तमानव्यवस्थासमस्याभिः सम्बद्धविभिन्नाः विषयाः उपलभ्यते।"गद्यं कवीनां निकषं वदन्ति" इति कथनं गद्यकारस्यदुर्गादत्तशास्त्रिणः अस्यां कृतौ सर्वथा प्रतिफलितं दृश्यते।

**संस्कृतकाव्यकुञ्जम्-**

पण्डितदुर्गादत्तशास्त्रिणा विरचितमिदं काव्यं संस्कृतसाहित्यं प्रति तस्य अनुपमं योगदानम् अस्ति। प्रस्तुतेऽस्मिन् काव्ये भावानां विविधविचाराणां च अनुपमं सामञ्जस्यमस्ति। हिमालयस्य अंङ्के हिमाचलः देवभूमिनाम्ना ज्ञायते। कविकुलगुरुकालिदासविरचितकुमारसम्भवस्य च्छायां गृह्णन् कविः प्रथम एव पद्ये लिखति-

अस्त्युरस्यां दिशि देवतात्मा
हिमाचलो नाम शुभः प्रदेशः।

समावृतस्तुङ्गनगैः सुरम्यै-
र्वनैस्तथा संवदमुद्गिरद्भिः[27]॥

तदानींराष्ट्रहितमनादृत्य जनेषु प्रवर्धमाना पदधनलालसा, मद्यपानलालसा, स्थानेस्थाने शिलासुभित्तिस प्रस्तरेषुचाश्लीलभाषाप्रयोगः, नवोढानामकाले कालग्रासनिमित्तभूता दायादप्रथा, स्थले-स्थले प्रवर्धमानश्च उग्रवादश्च राष्ट्रं गर्ते निपातयितुं सततमुद्यताः दरीदृश्यन्ते। काव्यस्य सप्तविंशतितमे सोपाने कविः सुभाषचन्द्रस्य स्मरणं कृत्वा लिखति यत्-

एतेन कीर्तिः सकले तु देशे सुभाषबोसस्य गता सुदूरम्।
न दीनसेवा चरितात्र लोके व्यर्थन्तदा जीवनमेव जन्तोः[28]॥

एभिरेवगुणैरेव क्षुब्धहृदयेनानेन कविना राष्ट्रवासिनः सत्-पथि प्रवर्तयितुं ’संस्कृतकाव्यकुञ्जम्“ नाम हृदयाह्लादि काव्यं लोकोपकाराय निबद्धम्। काव्यस्य भाषा शैली वा नितरां सरला प्रवाहमयी च वर्तते। काव्ये विभिन्नछन्दःसु विविधालङ्काराणां रसानाञ्च समावेशंकर्तुं काव्यकौशलं प्रदर्शयन् पाठकानां मनः सततं प्रसादयति। शास्त्रिवर्याणां साहित्यं न केवलं स्वदेशभूमिपरिधिनिबद्धम् अपितु सकलसंसृतिमानवेषु विश्वभ्रतृत्वभावनाम् अपि उद्बोधयति।

**उपसंहारः-**

कालस्य करालगत्या सर्वमपीह परिवर्तनशीलम्। न किञ्चिदत्र स्थास्नु, शाश्वतञ्च। अनुक्षणं सर्वमपि परिवर्तते। समाजस्य चित्रमपि नैजं पार्श्वं परिवर्तयति। तद्वतं सर्वमपि परस्मिन् काले विलीनं विस्मृतं च जायते। परं काव्यजगतः स्रष्टा कविः तत्सर्वमपि क्षणस्थायि नश्वरं च वस्तुजातं सञ्चिनुत्य, नैजकाव्यकृतौ रमणीयार्थप्रतिपादकशब्देषु अर्पयित्वा च युगयुगं यावत् स्थायिरूपेण सञ्जीवयति, सहृदयश्च श्रोता द्रष्टा वा तेभ्यः शाश्वतमानन्दमश्नुते। कविरस्ति स्वीयकाव्यसृष्टेः स्वयम्भुः। तेषु च कविषु अन्यतमः दुर्गादत्तः शास्त्री अन्यतमः येन समाजस्य सुखदुःखादीन् निर्लिप्तसाक्षिरूपेण प्रत्यक्षीकृत्य तान् सहजसरसकाव्यरूपेण समर्पयत्। तदीयकाव्यानामियं विशेषता यत् समाजस्य

अव्यक्तव्यथाः व्यक्तवाचा अभिव्यञ्जयत्। दुर्गादत्तमहाभास्य साहित्ये काव्यरचनाया: शक्तिनिपुणताऽभ्यासरूपस्य हेतुत्रयस्य मधुरं सामञ्जस्यं दृग्गोचरीभवति। संस्कृतसाहित्यस्य परम्परायामनेन राष्ट्रपथप्रदर्शनं, तर्जनी, मघुवर्षणं चैतानि त्रीणि काव्यानि रचितानि सन्ति।अष्टादशसु अध्यायेषु रचिते "राष्ट्रपथप्रदर्शनम्" इति नामके काव्ये, एकादशसु अध्यायेषु रचिते "तर्जनी" इति नामके काव्ये, सप्तसु सर्गेषु विरचिते मधुवर्षणम् इति नामके काव्ये च तदानीन्तनसामाजिककुरीतीनां राष्ट्रीयतायाश्च प्रतिबिम्बनमस्ति।

प्राचीनभारतीयसंस्कृते उद्वाहिका: लोकगाथा: पर्वतीयभागे विशेषतया उल्लेख्या: सन्ति। देवै: ऋषिभि: महात्मभि: सिद्धै: च एतेषु पर्वतीयप्रदेशेषु स्वस्वसाधना: कृताः, याभिः साधनाभि: सम्बद्धा विभिन्नप्रकारका: लोकगाथा: अद्यापि लोके प्रचलिताः सन्ति। प्रचीनभारतीयसंस्कृते: सजीवस्वरूपस्य सुव्यक्तमभिव्यञ्जिका लोकगाथा: आधृत्यवत्सला, तृणजातकं च इति नामके द्वे रूपकेऽपि एतै रचिते स्तः। हिमाचलप्रदेशे प्रचलितस्य गूगानामकस्य सिद्धस्य लोकगाथा वत्सलारूपके निबद्धा अस्ति। इयं लोकगाथा राजस्थान-गुजरात-हरियाणा-पंजाब-उत्तरप्रदेशाणां विभिन्नेषु भागेषु प्रचलिता अस्ति। मूलरुपेण इयं लोकगाथा लोकदेवतासु आधारिता अस्ति। कविः दुर्गादत्तशास्त्री यथा समाजस्य सजीवं चित्रं निजकाव्येषु चित्रयति तथा बहुविधोपदेशसम्बलितस्नेह-औदार्य-विश्वभ्रातृत्वादिभावानपिअभिव्यञ्जयति। हिमाचलस्य काङ्गडा-हमीरपुर-बिलासपुरादिषु स्थानेषु अपि इयं लोकगाथा विशेषत्वेन प्रसिद्धिं प्राप्तवती अस्ति। वत्सलायां लोककथाया: आश्रयेण देशभक्ते: भावनाया: जागृतास्ति। तृणजातकनामकस्य रूपकस्य कथानकं समाजे प्रसृताया: दासप्रथामाधृत्य चित्रितमस्ति। तृणजातकस्य प्राक्कथने दासप्रथाया अन्तर्वेदनाया: परिचय: सम्यक् प्रकारेण अवगन्तुं शक्यते। जातिप्रथा-बन्धककर्मकरादिसामाजिकव्याधीन् दूरीकृत्य समाजे आदर्शव्यवस्थां नियोजनाय दुर्गादत्तस्य काव्यानां योगदानमनवद्यम्।

यद्यपि दुर्गादत्तशास्त्रिणः पार्थिवं शरीरमद्य पञ्चतत्त्वे विलीनं तथापि कवेरस्य यशःशरीरमनश्वरं जीवति। अत एव यथार्थमुक्तं कविना भर्तृहरिणा-

जयन्तितेसुकृतिनोरससिद्धाःकवीश्वराः।
नास्तियेषांयशःकायेजरामरणजंभयम्॥

## परिशीलितग्रन्थसूची


दुर्गादत्तशास्त्री.*अनारकली*. प्रकाशक: दुर्गादत्तशास्त्री, गाँव व डाकघर-नलेटी, तहसील देहरा जिलाकांङ्गड़ा(हिमाचल प्रदेश), 1977.

…………..*तर्जनी*. प्रकाशक: दुर्गादत्तशास्त्री, गाँव व डाकघर-नलेटी, तहसील देहरा जिला कांङ्गड़ा (हिमाचल प्रदेश), 2026.

…………..*तृणजातकम्*. प्रकाशक: दुर्गादत्तशास्त्री, गाँव व डाकघर-नलेटी, तहसील देहरा जिला कांङ्गड़ा (हिमाचल प्रदेश), 1980.

…………..*बृहत्सप्तपदी (संस्कृतगद्यकाव्यम्)*. प्रकाशक: दुर्गादत्तशास्त्री, गाँव व डाकघर-नलेटी, तहसील देहरा जिला कांङ्गड़ा (हिमाचल प्रदेश), 1991.

…………..*मधुवर्षणम्*. प्रकाशक: दुर्गादत्तशास्त्री, गाँव व डाकघर-नलेटी, तहसील देहरा जिला कांङ्गड़ा (हिमाचल प्रदेश),1977.

…………..*राष्ट्रपथप्रदर्शनम्*. प्रकाशक: दुर्गादत्तशास्त्री, गाँव व डाकघर-नलेटी, तहसील देहरा जिला कांङ्गड़ा (हिमाचल प्रदेश), 2026.

…………..*रेलमन्त्री*. दुर्गादत्तशास्त्री, गाँव व डाकघर-नलेटी, तहसील देहरा, जिला कांङ्गड़ा (हिमाचल प्रदेश), 1997.

…………..*वत्सला*. प्रकाशक: दुर्गादत्त शास्त्री,नलेटी, देहरा गोपीपुर, काङ्गड़ा (हि०प्र०), 1978.

…………..*वियोगवल्लरी*. प्रकाशक: दुर्गादत्तशास्त्री, गाँव व डाकघर-नलेटी, तहसील देहरा जिला कांङ्गड़ा (हिमाचल प्रदेश).,1987.

…………..*श्रीसत्यसाइर्चरितम्*. प्रकाशक: दुर्गादत्तशास्त्री, गाँव व डाकघर-नलेटी, तहसील देहरा,जिला कांङ्गड़ा (हिमाचल प्रदेश),1996.

…………..*संस्कृतकाव्यकुञ्जम्*. प्रकाशक: दुर्गादत्तशास्त्री, गाँव व डाकघर-नलेटी, तहसील देहरा जिला कांङ्गड़ा (हिमाचल प्रदेश).,1997.

**तथ्यसूत्राणि**

---

[1]दुर्गादत्तशास्त्रि, *राष्ट्रपथप्रदर्शनम्*/1(मङ्गलाचरणम्)

[2] तदेव,

[3]दुर्गादत्तशास्त्रि, *तर्जनी*/ 1 (मङ्गलाचरणम्)

[4]तर्जनी / पृ०2

[5]तदेव / पृ. 62

[6]तदेव / पृ. 51

[7]तदेव / पृ. 4

[8]तदेव / पृ. 204

[9]तदेव / पृ. 288

[10]दुर्गादत्तशास्त्रि, *मधुवर्षणम्* / समर्पणादुद्धृतम्

[11]तदेव / पृ. 22

[12]तदेव / पृ. 132

[13]तदेव / पृ. 159

[14] पण्डितदुर्गादत्तशास्त्री, *श्रीसत्यसाईचरितम्* / 1

[15]तदेव, श्लोकसं. 65

[16]तदेव, श्लोकसं. 35

[17] पण्डितदुर्गादत्तशास्त्री, *वत्सला* / 1.1, पृ. 6

---

[18]पण्डितदुर्गादत्तशास्त्री, श्लोक. 1.1

[19]तदेव, श्लोकसं. 1.2

[20]तदेव, श्लोकसं. 1.3

[21]विश्वनाथकविराजः, *साहित्यदर्पणः*

[22] तदेव, *अनारकली*, पृ. 25

[23]तदेव, *बृहत्सप्तपदी*, पितुर्नामाध्यायः, पृ. 8

[24]तदेव, *अश्रुसंयोगाध्यायः*, पृ. 60

[25]तदेव, *वियोगवल्लरी*, पृ. 22

[26]तदेव, पृ. 31

[27]तदेव, *संस्कृतकाव्यकुञ्जम्*/ 1

[28]तदेव, श्लोकसं.16

# पण्डितवसन्तत्र्यम्बकशेवडे

**डॉ. मञ्जुठेमदेवः**

अर्वाचीनसंस्कृतजगति वाङ्मयरचनां विधाय नक्षत्रमिव प्रकाशमानाः सन्त्यनेके महाकवयः। परन्तु तत्रापि स्वीयरचनया नवकवीनां कृते आदर्शभूताः विशिष्टप्रतिभासमुपैताः केचन कवितल्लजाः विरला एव। इमे च भगवत्याः सरस्वत्याः राजसभायामनादिकालात् गौरवास्पदं स्थानं भजन्ते। तस्याः महनीयायाः परम्परायाः पथिकत्वेन अद्यत्वेऽपि राराजन्ते कतिपयाः आधुनिककविवराः। तेषां समेषां जीवनचरितम् अस्मत्कृते प्रेरणाप्रदमेव इति सर्वे विदन्त्येव। एतादृशेष्वेव पुण्यचरितेषु अन्यतमोऽस्ति पण्डितवसन्तशेवडेमहोदयः।

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका।
शरणं पुनरेव तावुभौ शरणं नाऽन्यदुपैमि दैवतम्॥[1]

इति ध्येयवाक्यं कुलपरम्परया शैशवात्प्रभृति येन परिपालितं स सकलशास्त्रपारङ्गतः प्रकाण्डकविप्रवरः पण्डितवसन्तशेवडेवर्यः संस्कृतसाहित्यलोके आकाशमणिरिव चकास्ति। पण्डितमण्डलीगौरवास्पदेनानेन महाकविवरेण्येन 'मरणान्तोऽयं व्याधिर्व्याकरणमि'ति सूक्तिं स्वजीवने चरितार्थीकृता आसीत्। यतः महाभाष्यान्तं व्याकरणम् आह्निककृत्यमिव प्रतिदिनमनुशीलयति स्म सः। 'वसन्त' इत्यभिधानेन ख्यातोऽयं संस्कृतकाव्यक्षेत्रे काव्यरूपं वसन्तसौरभं प्रसार्य 'अपरकालिदासः' इति प्रसिद्धिमवाप।

कविवर्योऽयं अक्टोबरमासस्य द्वितीयदिनाङ्के १९१७ तमे ईशवीयाब्दे (02/10/1917) महाराष्ट्रराज्यस्य मुम्बापुर्यां स्वकीयमातामहसदने जनिमलभत। अस्य माता विमलाबाई पिता च त्र्यम्बकः चास्ताम्। वस्तुतः अमुष्य महाकवेः तातपादः श्रीत्र्यम्बकलक्ष्मणशेवडे तदानीं महाराष्ट्रान्तर्गतस्थे विदर्भस्थिते नागपुरस्थे उच्चन्यायालये न्यायमूर्तिपदमलङ्करोति स्म। एवं धनाढ्यकुले

प्राप्तजन्मा विद्याशेवधिरयं शैशवे एव मातृसुखात् वञ्चितोऽभवत्।[2] अतः भगवत्याः भवान्यास्तृतीयपुत्रत्वेन आत्मानं मन्यमानः सः वक्ति –

पिता महेशः जननी नगात्मजा
षडाननश्चाऽपि गजाननोऽग्रजौ।
उपैति मातामहतां हिमाचलो
गणाश्च नन्दिप्रमुखाः कुटुम्बिनः।।[3] इति।

कविमूर्धन्यस्य वसन्तशेवडेमहोदयस्य प्रारम्भिकमध्ययनं महाराष्ट्र-राज्यस्य अमरावतीति नगरे शेषञ्च नागपुरस्थे 'मॉरिस' इत्यस्मिन् महाविद्यालये पूर्तिमगच्छत्। १९४१ तमे वर्षे नागपुरविश्वविद्यालयात् स्नातकोत्तरपरीक्षा (एम्.ए. – संस्कृतम्) आङ्ग्लमाध्यमेन ससम्मानं समुत्तीर्णा कविवरेण। महामहोपाध्यायः म. म. मिराशी तथा च सरस्वतीप्रसादचतुर्वेदी कवेः महाविद्यालयगुरू आस्ताम्। वस्तुतः मातृपितृकुलं संस्कृतानुरागी आसीत्। अतएव पारम्परिकसंस्कारवशाद् प्राचीनपद्धत्या गुणौघगुरुभ्यः सद्गुरुभ्यः साहित्य-न्याय-व्याकरणप्रभृत्य-नेकशास्त्राणां यथाविधि आमूलचूलज्ञानमधिगतं महाकविना वसन्तशेवडेवर्येण। व्याकरणाध्ययनार्थं वैयाकरणकेसरीति पं. बालशास्त्रिघाटेमहाशयस्य मार्गदर्शनं कविरयं स्व्यकरोत्। तथैव न्यायशास्त्राध्ययनाय हिस्लॉपमहाविद्यालयस्य प्रा. बापटमहोदयाय प्रा. गद्रेमहोदयाय च गुरुपदमददात् सः।

सदा अध्ययनेऽध्यापने च रममाणोऽयम् अविवाहितस्सन् महर्षितुल्यजीवननिर्वहणम् अकरोत्। नागपुरे धन्तोलिविभागे महाकवेः वसन्तस्य निवासस्थानमासीत्। वयसः सप्ततिवर्षाणि नागपुरे यापयित्वा द्वादशवर्षाणि विश्वनाथनगर्यां काश्यां डॉ. ब्रह्मानन्दत्रिपाठीमहोदयस्य गृहे न्यवसत् कविवर्यो अयम्। तत्र हि 'वाराणसीविद्वन्मूर्धन्यः महामहोपाध्यायः' इति तं सम्बोधयन्ति स्म विद्वांसः। सम्पूर्णजीवनं तेन गीर्वाणभारतीसेवायै प्रदत्तमासीत्।

इत्थमखण्डविद्याऽऽराधकः सर्वशास्त्रनदीष्णः विदर्भप्रान्तस्य नागपुर-भूषणः कविवरः निजविलक्षणप्रतिभया आजीवनं ग्रन्थान् विरचय्य जुलैमासस्य

पञ्चमे दिनाङ्के १९९९ तमे ईशवीयाब्दे (05-07-1999) शिवनगर्यां वाराणस्यां पञ्चत्वे विलीनः।[4]

कविकुलगुरुकालिदासस्य नितरां प्रभावः अस्मिन् कवौ परिलक्ष्यते। यतः वैदर्भीरीतिप्रियः कविवरेण्यः वसन्तशेवडेमहोदयोऽपि स्वीयरचनाः वैदर्भीरीत्यैव प्राणैषीत् इत्यस्य प्रमाणमस्ति प्रस्तुतश्लोकः -

कविकुलगुरुमादौ शिश्रिये कालिदासं
तदनु च कविमल्लं बिह्लणं या प्रपेदे।
स्मरहरचरणाब्जे चञ्चरीकं वसन्तं
श्रयति कविमिदानीं सैव वैदर्भरीतिः।।[5]

इयं वैदर्भरीतिः कविसार्वभौमस्यास्य रचनासु कथं साफल्यमाप इति स्वयं त्र्यम्बकशेवडेमहोदयः निवेदने प्रस्तुतश्लोकेन असूचयत् -

विदर्भदेशाभिजनं वसन्तं
शम्भोः कृपाभाजनमाश्रयन्ती।
गुणानुवादैर्जगदम्बिकाया
वैदर्भरीतिः सफला विभाति।।[6]

न तावदेव महाकविकालिदासस्य शैली इव वागीश्वरीलब्धवरप्रसादस्य महाकविवरेण्यस्य त्र्यम्बकशेवडेवर्यस्यापि रसनिर्भरा सर्वगुणसम्पच्छालिनी, अलङ्कारमणिनूपुररणितरामणीयका, कान्तिमती कविताकामिनी वैदर्भरीति-शय्यामारूढा सती निःसंशयमेव सहृदयमनांसि गाढमावर्जयितुं क्षमेति नात्र सन्देहावसरः। अतएव श्रीमता चारुदेवशास्त्रिणा तस्य रचनाशैली इत्थं प्रशंसिता -

सुप्रसन्नपदन्यासः सर्वथौचित्यसंश्रितः।
प्रतिभोत्थः स सोऽर्थश्चाऽनवद्यः पद्यसञ्चयः।।[7] इति।।

तथैव श्रीनारायणशास्त्रिखिस्तेमहाशयस्य पद्यमिदं नूनं महाकवि-मूर्धन्यस्य शेवडेमहोदयस्य वाग्वैभवातिशयत्वं द्योतयति। तद्यथा -

शब्दार्थपोषशीलं वपुरिव शैवं बिभर्ति काव्यमयम्।
काली कृपाणधारा वेल्लति किं वा चमत्कारैः।।
ओघः कोऽपि सरस्वत्याः अमोघोऽत्र विलोक्यते।
स्वयम्भूरुत्थितः स्वस्मादुद्गच्छन् प्राणवानिव।।[8] इति।।

साम्प्रतं स्थालीपुलाकन्यायेन तद्रचनातः कानिचिन्मधुरमनोहर-स्थलान्यत्र निर्दिश्यन्ते। येन हि तस्य कविधुरन्धरस्य शेवडेमहाशयस्य काव्यत्वम् इषदाविष्कृतं भवेत्। तत्र हि विन्ध्यवासिनीविजयमहाकाव्ये विन्ध्य-सौन्दर्यप्रसङ्गे विन्ध्यपादे विशीर्णायाः रेवायाः वर्णनमेवं चकार महाकविः -

रङ्गत्तरङ्गा मुदितान्तरङ्गा
संस्पर्शमात्राद् विहितार्तिभङ्गा।
रेवाऽपि सेवाव्रतमाचरन्ती
यत्पादनिर्णेजनमातनोति।।[9]

अर्थात् चलत्कल्लोला संस्पर्शमात्रेण जनानां पीडामपहरन्ती नर्मदाऽपि यस्य पादानां प्रक्षालनं विधत्ते सः विन्ध्यपर्वतः। तत्रैव चतुर्दशे सर्गे वसुदेवो बालकृष्णं समादाय गोकुलं प्रतिष्ठते। यमुनातटं प्राप्य तत्र तां विलङ्घितुं किञ्चित् साधनमनुपलभ्य स कथं नदीं प्रततारेति एवं निरूपयति महाकविः -

अनवाप्य महापयोधिकल्पां
तरितुं कञ्चिदुपायमन्ततस्ताम्।
स जपन् प्रविवेश भानुकन्यां
जय विन्ध्याचलवासिनीति मन्त्रम्।।

सति तत्र नदीं प्रविष्टमात्रे
शतहस्तिद्वयसं जलं तदीयम्।
अभवज्जगदम्बिकाप्रसादा-
च्चकितं पश्यत एव जानुदघ्नम्।।[10]

पण्डितप्रवरस्य शेवडेवर्यस्य कोश-व्याकरण-षड्दर्शनागमादिचुञ्चुतापि तस्य सकलासु रचनासु दरीदृश्यते। यथा शुम्भवधमहाकाव्यस्य प्रस्तुतश्लोकेषु न्यायशास्त्राभिज्ञेयत्वं कथमित्यवलोकयन्तु भवन्तः -

ढक्कारवो बृंहितं तूर्यनादो
हेषा घण्टाझङ्कृतिर्हिङ्कृतानि।
व्याप्याऽऽकाशं तस्य लब्ध्वा गुणत्वं
चक्रुस्तथ्यां गौतमोक्तिं तदानीम्।।[11]

अभ्यागते भुवि शरत्समये व्यरंसीत्
पीडाकरं विरटितं किल दर्दुराणाम्।
नैयायिके प्रविशति प्रसभं सभायां
कोटिक्रमो हतधियामिव सौगतानाम्।।[12]

एवं महाकविवरेण्यस्य शास्त्रसंस्कारसमुत्तेजिता चमत्कारमादाय काव्येषु सन्तिष्ठते। व्याकरणशास्त्रनैपुण्यमाधृत्य यङ्लुक् रूपाणां बाहुल्यं श्लोके कथं दृष्टिपथमायाति पश्यन्तु भवन्तः। तद्यथा -

विजरीहरीति गगने यशस्तव
प्रसरीसरीति निखिले महीतले।
विसरीसृजीति फणिनां महोत्सवं
न चरीकरीति गिरिजे किमद्भुतम्।।[13]

'स्तवमञ्जूषा' इति दुर्गास्तोत्ररूपभक्तिकाव्यमपि सहृदयस्य हृदये परमानन्दतरङ्गान् समुत्पादयति। यतः भक्तिरसस्य महिमा तादृशः वर्वर्ति। प्रस्तुत-श्लोके भक्तिरसः कथं जयति? इति महाकविना उपमा-अलङ्कारप्रयोगकौशलेन प्रत्यपादि।

देवेषु शम्भुरिव सूर्य इव ग्रहेषु
शेषो यथा फणिषु पक्षिषु वैनतेयः।

सिंहो मृगादिषु कविष्विव कालिदासः
सर्वङ्कषो जयति भक्तिरसो रसेषु।।[14]

इदं भक्तिरसनैपुण्यं कथमासादितमिति सः कविवरेण्यः एवं ब्रूते - 'एकः सभाकविरयं जगदम्बिकाया वैदग्ध्यमावहति भक्तिरसे वसन्तः'[15] इति। इयं भक्तिः काव्ये कथमभिव्यञ्जितेति तत्रत्यश्लोकैः ज्ञायते। तत्र हि आरम्भस्तवे शिवायां मेघमालात्वरूपणाऽर्थम् अन्तरङ्गेऽम्बरस्य संसारे दावाऽनलत्वस्य आरोपणाद् अश्लिष्टशब्दनिबन्धनं केवलपारम्परितरूपकम्, एवञ्च तापाऽपनोदने कादम्बिन्याः सेवनं विना केवलस्य स्मरणस्य हेतुत्वाद् व्यतिरेकोऽनयोः संसृष्ट्या कविनिष्ठभगवतीभक्तिविषयकवस्तुनो व्यञ्जनादलङ्कारेण वस्तुध्वनिः अभिव्यज्यते। तद्यथा -

कादम्बिनी काचन मेचकाभा
मदन्तरङ्गाऽम्बरचुम्बिनी स्यात्।
संसारदावाऽनलपीडितानां
स्मृताऽपि या तापमपाकरोति।।[16]

तथैव णमुल् प्रत्ययप्रयोगात् जाता अलङ्कारविच्छित्तिः पाठकान्नाकर्षयति इत्यस्य उदाहरणमिदम् -

स्मारं स्मारं तावकीनं पदाब्जं
वारं वारं कीर्तनं त्वद्गुणानाम्।
हारं हारं सूक्तिरत्नं गुरूणां
वारं वारं सौख्यसिन्धुं वगाहे।।[17]

अत्रत्यः शब्दाऽनुप्रासप्रकर्षश्चेतोहरोऽस्ति। तत्र हि नमस्कारस्तवे प्रायः अनुप्रासालङ्कारस्य चारुता प्रकर्षेणानुभूयते। प्रस्तुतश्लोके रूपकस्य अनुप्रासालङ्कारस्य च सम्मिश्रणं कस्य मानसं न मोदयति?

त्वङ्कारगर्भवदनं सदनं मदस्य
कङ्कादिभक्ष्यमतनोन्महिषाऽसुरं या।

पङ्काश्मराशिषु पदस्मरणं च यस्या-
ष्टङ्कात्मतां भजति तां नगजां नमामः॥[18]

इत्थं बहुत्र चारुत्वोत्कर्षोत्पादकानि स्थलानि काव्येषु दृष्टिपथमायान्ति। अन्यच्च महाकविकालिदासस्य 'मेघदूतम्' इति खण्डकाव्यस्य प्रभावः तस्य 'अभिनवमेघदूतम्' इत्यस्मिन् सन्दृश्यते इत्यस्य प्रमाणाय तस्मात् खण्डकाव्यात् श्लोकद्वयं निर्दिश्यते -

हंहो अम्भोधर! जलनिधेस्तोयभारं गृहीत्वा
सर्वामुर्वीं व्रजसि नितरामार्द्रयन्नुत्तराशाम्।
यक्षस्य त्वां प्रियसखमहं प्रत्यभिज्ञाय याचे
को वा त्वादृश्युपकृतिपरे प्रत्ययं न प्रयाति॥[19]

सन्देशं त्वं जलधर! पुरा गुह्यकेन प्रदिष्टं
गत्वा दूरं धनदनगरीं प्रापयस्तत्प्रियायाः।
प्रत्याख्यातुं प्रभवसि कथं प्रार्थनां तन्मदीयां
नाऽर्थिष्वेवं प्रकृतिमहतां भिद्यते दातृभावः॥[20]

एवङ्कारं महाकविवरस्य काव्येषु स्थाने स्थाने प्रस्फुरत् कल्पनावैभवं प्रतिभानं व्युत्पत्तिप्रौढिञ्च समं प्रकटीभवति। प्रायः सर्वा अपि रचनाः प्रसादमाधुर्यगुणैरलङ्कार-रस-ध्वनिभिः वैदर्भ्या रीत्या च परिपूरितास्सन्ति।

**पुरस्काराः -**

अस्य सारस्वतसेवां सम्मानयितुमेव सुरभारतीप्रियलोकेन सः गौरवान्वितः। नानाविधसंस्थाः तत्राग्रेसरत्वनिर्वहणमकार्षुः। यथाहि -

उत्तरप्रदेश-संस्कृत-अकादम्या कालिदासाभिधानेन प्रदीयमानेन सर्वोच्चपुरस्कारेण कविरसौ सभाजितः। अपि च 'अपरकालिदासः' इति उपाधिः तस्मै प्रदत्तः। विन्ध्यवासिनीविजयमहाकाव्यमधिकृत्य पुरस्कारोऽयं समधिगतः।

तदनु दिल्लीस्थितया दिल्ली-संस्कृत-अकादम्या 'संस्कृत-साहित्य-अकादमी-पुरस्कारेण' सभाजितोऽभवत्सः। ततश्च पुण्यपत्तनस्थश्रीदेवदेवेश्वरसंस्थानेन 'श्रीमन्नानासाहेबपेशवेपुरस्कारं' प्रदाय गौरवान्वितः विद्वत्कविरसौ। उत्तरप्रदेश-संस्कृत-अकादम्या स्तवमञ्जूषा इति कृतिमाधारीकृत्य संस्कृतसाहित्यपुरस्कारेण पुरस्कृतः कविवरेण्योऽयम्।[21]

**काव्यकृतीनां परिचयः**

**महाकाव्यत्रयम्**

१) **विन्ध्यवासिनीविजयमहाकाव्यम्** - दुर्गाभक्तिवशंवदेन महाकविना दुर्गाप्रेरणया विरचितमिदं महाकाव्यं कवेः प्रतिभावैशद्यं अभिव्यनक्ति। अस्य षोडशमिताः सर्गाः १०३९ पद्यसङ्ख्याभिः परिपूरितास्सन्ति। अस्य वैशिष्ट्यमिदं यत् षोडशसर्गाणां सारांशः महाकविः स्वयं प्रत्येकं सर्गसंक्षेपसूचकश्लोकमेकं विरचय्य प्रददात् । तथैव अस्मिन्काव्ये सर्वत्र प्रसादगुणस्य साम्राज्यं पठतां शृण्वताञ्च मनांसि पुलकयति। इतःपूर्वं श्रीजगन्मातुश्चरितमधिकृत्य विरचितमेकमपि महाकाव्यं गीर्वाणभाषायां नासीत्। इदमेव तत्र प्राथम्यं भजते।

२) **शुम्भवधमहाकाव्यम्** - भगवतीदुर्गाचरित्रमाश्रित्य निबद्धमेतत् द्वितीयकाव्यं चतुर्दशैः सर्गैः ८१६ श्लोकैश्च परिपूर्णं वर्तते। गुणानुवादं जगदम्बिकायाः कर्तुं महाकाव्यमिदं प्रणीतमिति[22] काव्यप्रयोजनं निवेदने समुल्लिखति कविः। अत्र हि कथावस्तु सहृदयजनचित्ताह्लादकरं कवेः कल्पनाशक्तिसामर्थ्येन च सर्वान् परितोषयति। अत्रापि प्रतिसर्गं महाकाव्यरचनानुरूपम् उपगुम्फितं वस्तु कविकर्मनैपुण्यमभिव्यञ्जयति। अपि च तत्तदृतुवर्णन-यज्ञप्रसङ्ग-युद्धादिवृत्तान्तान् सविस्तरमुपस्थाप्य तयैव प्रणालिकया भक्तिरससरोवरावगाहाय प्रेरयति सहृदयतल्लजान्।

३) **श्रीदेवदेवेश्वरमहाकाव्यम्** - काव्यमिदं षोडशसर्गात्मकं सत् पुण्यपत्तनस्य देवदेवेश्वरसंस्थानपरिचयात्मकं विद्यते। इतिहासविषयमवलम्ब्य प्रणीतेऽस्मिन् काव्ये छत्रपति-श्रीशिवाजिमहाराजादारभ्य पेशवेकुलोत्पन्नबालाजिरावपर्यन्तं

महाराष्ट्रेतिहासः उपनिबद्धोऽस्ति। अलङ्कारबहुला सुभाषितप्रचुरा च भाषा चतुर्दशछन्दसां प्रयोगैः काव्यचमत्कारमादाय शोभतेऽत्र। प्रस्तुतश्लोकेन काव्यस्यास्य स्वरूपं ज्ञायते।

असौ महाराष्ट्रधराधिपानां सङ्गृह्य यत्नेन यशःप्रबन्धान्।
विनिर्ममे वीररसप्रधानं श्रीदेवदेवेश्वरकाव्यमेतत्।।[23]

**पञ्चलघुकाव्यानि**

**१) अभिनवमेघदूतम्** - पूर्वोत्तरमेघेभेदेन द्विधा विभक्तमिदं खण्डकाव्यं महाकविकालिदासीयमेघदूतस्य कथावस्तु अनुकरोति। तस्य प्रमाणं काव्यकर्तुर्निवेदने दृश्यते। तद्यथा –

स मेघदूतं कविकोकिलेन श्रीकालिदासेन पुरा प्रणीतम्।
प्रीत्याऽनुकुर्वन्नकरोद् बुधानां मनोहरं नूतनमेघदूतम्।।[24]

इयमेका भावत्कीकृतिः ९० + ६८ = १५८ श्लोकैः विप्रलम्भशृङ्गार-रससागरेऽस्मान् अवगाहयति। पूर्वमेघे तावत् मलयदेशतः काश्मीरं प्रति मार्गकथनं तथा च उत्तरमेघे काश्मीरवर्णनं, राज्ञः अनन्तदेवस्य वर्णनम्, गृहसंकेत-निरूपणं, वियोगजनितायाः भार्यायाः अवस्थावर्णनं सन्देशकथनञ्च इत्यादयः विषयाः अन्तर्भूताः वर्तन्ते।

**२) स्तवमञ्जूषा** - अत्र भगवत्याः आराधनक्रममनुरुध्य भक्तिरसपूर्णानि षट्-त्रिंशत्स्तोत्राणि निबद्धानि महाकविना। येषु स्तोत्रकर्तुः स्वाभाविकी भक्तिः स्वच्छन्दं विहरन्ती भक्तिहृदयेषु अलौकिकं सुखातिशयं सन्तनोति। अस्याः निर्मितिवैशिष्ट्यम् कथयन् काव्यकर्ता निवेदने परमेश्वरीं गिरिजां निवेदयति -

वैदर्भरीतिमनुसृत्य विनिर्मितेयं
स्तोत्रावली ललितमञ्जुलसन्निवेशा।
माला यथा विकसितैः कुसुमैर्निबद्धा
प्रीणातु विश्वजननीं गिरिराजकन्याम्।।[25]

**3) रघुनाथतार्किकशिरोमणिचरितम् -** श्रीरघुनाथः सुप्रसिद्धनैयायिकोऽस्ति। अस्य चरितमाधारीकृत्य सर्गत्रयात्मकमिदं लघुकाव्यं महाकविना व्यरचि। तत्र हि प्रथमसर्गे रघुनाथस्य जननादिकम्, द्वितीये रघुनाथस्य शिक्षणविधिः उपाधिश्च तृतीयसर्गे च तस्य कार्यविवरणं १२७ परिमितैः श्लोकैः अवर्णयत् महाकविः।

**4) श्रीमोतीबाबाजामदारचरितम् -** विदर्भस्य सन्तचरितात्मकस्य लोकोत्तर-लक्षणलक्षितस्य श्रीमोतीबाबाजामदारमहाराजस्य जीवनं क्रमेणात्र १५३ परिमितश्लोकैः समुट्टङ्कितमस्ति। आरम्भे सप्तदशश्लोकात्मकं कोङ्कण-प्रान्तवर्णनं विधाय ३२ परिमितश्लोकाः नायकस्य कुलविवरणाय विरचिताः। तदनु काव्यनायकस्य जन्म, बाललीला, शिक्षणं, परिणयः, विवाहोत्तरं पुनः भाषापठनं, उद्योगप्राप्तिः, धार्मिककार्ये प्रवृत्तिः, गुरोः मन्त्रदीक्षा, ब्रह्मज्ञानबोधः मृत्युयोगश्चेत्यादयः विषया क्रमशः समुपवर्णिताः। महाकविः स्वयं धार्मिकानुष्ठाता इत्यतः धार्मिकमहापुरुषस्य चरितलेखने उद्युक्तोऽभवत्। वस्तुतः काव्यनायकस्य विषये मुद्रितसाहित्यं न कुत्रापि उपलब्धमासीत् किन्तु तस्य शिष्यमुखात् श्रुत्वा प्रभावितस्सन् काव्यरचनायां प्रवृत्तः सः।

**5) श्रीकृष्णचरितम् -** महाराष्ट्रे श्रीकृष्णशास्त्रिपातुरकरः इति सुख्यातः कीर्तनकारः बभूव। तस्य जीवनमवलम्ब्य शतश्लोकात्मकं वैदर्भीरीतिमण्डितम् अतीव मनोहरं लघुकाव्यं कविः प्रणीतवान्। अत्र हि काव्यारम्भे विदर्भदेशस्य सविस्तृतं विवरणं, पावित्र्यं माहात्म्यञ्च विशदीकरोति कविवर्यः। ततश्च देवालयग्रामवर्णनम्, श्रीकृष्णशास्त्रिणः वंशवर्णनं, काव्यनायकजन्म, जन्मोत्सवः, बाललीला, व्रतबन्धः, ऋक्संहिताद्यध्ययनं, शैशवे एव कीर्तनारम्भः, पातुरनगरगमनं, विवाहः, निजकीर्तनेन जनाकर्षणं कीर्तनविशेषता, गुणगानस्तवनं, नागपुरप्रत्यागमनं, मृत्युः चेत्यादयः विषयाः प्रतिपादितास्सन्ति।

**शास्त्रग्रन्थत्रयम्**

**१. वृत्तमञ्जरी** - वृत्तपरिचयात्मकेऽस्मिन् ग्रन्थे शताधिकसुप्रसिद्धवृत्तानां सलक्ष्यलक्षणं सरलया सुरगिरा निर्देशो पञ्चस्तबकेषु वर्तते। अत्रोदाहरणरूपेण

समुपन्यस्तानि सर्वाण्यपि पद्यानि स्वरचितानि भगवतीस्तुतिपरकाणि चेति ग्रन्थकर्तुर्वैशिष्ट्यम्। स्वोपज्ञावृत्तिसहिता छन्दोज्ञानप्रकाशिका नूनमेषा अनन्यसाधारणकृतिः। तथैव अस्य ग्रन्थस्य सुषमा नामिका टीका हिन्दीभाषया डॉ. ब्रह्मानन्दत्रिपाठीमहोदयेन प्रणीतास्ति। ग्रन्थोऽयं छन्दश्शास्त्रज्ञानेन सह काव्यस्यापि रसास्वादनं सहृदयमनांसि सन्तोषयति।

**२. स्फोटतत्त्वनिरूपणतत्त्वप्रकाशिकाव्याख्या** - स्फोटतत्त्वं व्याकरणशास्त्रे दुरूहतमम्। श्रीशेषकृष्णविरचिते स्फोटतत्त्वनिरूपणे करामलकीकृतव्याकरणशास्त्रेण महाकविना श्रीशेवडेमहाभागेन 'तत्त्वप्रकाशिका' नाम्नी व्याख्या व्यरचि। अनया स्फोटतत्त्वस्य रहस्यं दृग्गोचरीभवति इत्यस्मात् स्फोटतत्त्वजिज्ञासूनां कृते नूनमुपकारिका।

**३. न्यायकुसुमाञ्जलेः तत्त्वप्रकाशिकाव्याख्या -** न्यायशास्त्रसम्बद्धोऽयं ग्रन्थः। श्रीमदुदयनाचार्यविरचितस्य ईश्वरसिद्धिपरस्य सुप्रसिद्धस्य न्यायकुसुमाञ्जलिग्रन्थस्य प्रामाणिकी व्याख्येयम्। न्यायशास्त्रविदुषां तदितरशास्त्रज्ञानाञ्च कृते समानरूपेण हृदयहारिणी विशदार्थप्रकाशिनीयं सरलतमा व्याख्या।

एवम् अर्वाचीनकाले सुरसरस्वतीवाङ्मये सौरभाऽतिशयसमन्वितानि ग्रन्थकुसुमानि महाकविना शेवडेवर्येण रसविदां कराब्जे उपायनीकृतानि। तस्मादेव निखिलसंस्कृतविश्वे तेषां विशिष्टस्थानं वरीवर्ति इति निश्चप्रचम्।

## सहायकग्रन्थपञ्जी

*संस्कृतक्षेत्रे महाकवेः वसन्तशेवडेमहोदयस्य योगदानम् एकं समीक्षात्मकमध्ययनम्* – शोधप्रबन्धः, राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपतिः, आन्ध्रप्रदेशः

*विन्ध्यवासिनीविजयम्* – चौखम्बा सुरभारती प्रकाशनम्, वाराणसी

*शुम्भवधमहाकाव्यम्* - चौखम्बा सुरभारती प्रकाशनम्, वाराणसी

*देवदेवश्वरमहाकाव्यम्* – देवदेवेश्वरसंस्थानम्, पुणे, महाराष्ट्रम्

*स्तवमञ्जूषा* - चौखम्बा सुरभारती प्रकाशनम्, वाराणसी

*अभिनवमेघदूतम्* - चौखम्बा सुरभारती प्रकाशनम्, वाराणसी

*रघुनाथतार्किकशिरोमणिचरितम्* – सारस्वतीसुषमापत्रिका, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी

*श्रीमोतीबाबाजामदारचरितम्* – नारायणमुद्रणालयः, धन्तोली, नागपुरम्

*श्रीकृष्णचरितम्* – संस्कृतभवितव्यम् संस्कृतसाप्ताहिकपत्रिका, संस्कृतभाषाप्रचारिणी सभा, नागपुरम्, महाराष्ट्रम्

*वृत्तमञ्जरी* - चौखम्बा सुरभारती प्रकाशनम्, वाराणसी

## तथ्यसूत्राणि

---

[1] *शुम्भवधमहाकाव्यम्* –कविनिवेदनम् - पृष्ठक्रमाङ्कः – ७

[2] *संस्कृतक्षेत्रे महाकवेः वसन्तशेवडेमहोदयस्य योगदानम्* एकं *समीक्षात्मकमध्ययनम्* - द्वितीयोऽध्यायः

[3] *शुम्भवधमहाकाव्यम्* – कविनिवेदनम् – श्लो. क्र. – ४

[4] *संस्कृतक्षेत्रे महाकवेः वसन्तशेवडेमहोदयस्य योगदानम्* एकं *समीक्षात्मकमध्ययनम्* - द्वितीयोऽध्यायः

[5] *विन्ध्यवासिनीविजयमहाकाव्यम्* – कविनिवेदनम् - श्लो. क्र. ८

[6] तत्रैव - कविनिवेदनम् - श्लो. क्र. ९

[7] *अभिनवमेघदूतम्* – प्रशस्तिपत्रम् – चारुदेवः शास्त्री
[8] *वृत्तमञ्जरी* – विद्वदग्रेसराणामभिप्रायः - श्लो. क्र. ६,७
[9] *विन्ध्यवासिनीविजयमहाकाव्यम्* – प्रथमसर्गः श्लो. क्र. १८
[10] तत्रैव – चतुर्दशसर्गः श्लो. क्र. १६, १७
[11] *शुम्भवधमहाकाव्यम्* – तृतीयसर्गः श्लो. क्र. १०
[12] द्वितीयसर्गः श्लो. क्र. १९
[13] *स्तवमञ्जूषा* – कीर्तिस्तवः श्लो. क्र. ०२
[14] तत्रैव – निवेदनस्तवः श्लो. क्र. १२
[15] तत्रैव – निवेदनस्तवः श्लो. क्र. ०९
[16] तत्रैव – आरम्भस्तवः श्लो.क्र. ०४
[17] तत्रैव – मालस्तवः श्लो. क्र. ३८
[18] तत्रैव – नमस्कारस्तवः श्लो. क्र. १४
[19] *अभिनवमेघदूतम्* – पूर्वमेघः श्लो.क्र. ०४
[20] तत्रैव – पूर्वमेघः श्लो. क्र. ०७
[21] *संस्कृतक्षेत्रे महाकवेः वसन्तशेवडेमहोदयस्य योगदानम्* - द्वितीयोऽध्यायः
[22] *शुम्भवधमहाकाव्यम्* – काव्यकर्तुर्निवेदनम् – श्लो. क्र. १०
[23] *श्रीदेवदेवेश्वरमहाकाव्यम्* – कविनिवेदनम् – श्लो. क्र. ०५
[24] *अभिनवमेघदूतम्* – काव्यकर्तुर्निवेदनम् – श्लो. क्र. ०८
[25] *स्तवमञ्जूषा* – काव्यकर्तुर्निवेदनम् - १५

# Dr. K. V. Sarma and his Contributions to Historical Research in Scientific Literature of Kerala

**Sreevidya G.**

Kerala has an unbroken tradition of Mathematical and Astronomical research from 4th Century CE to 20th Century CE. Āryabhaṭīya, a major Mathematical and Astronomical effort of 499 CE is a work that remodelled the prevalent system of Indian Astronomy on logical basis with modified parameters, application of new tools and techniques and with much precision and accurate method of calculations. It is understood from studies that though the practice of Āryabhaṭīya could be traced in different parts of India, it was in Kerala that noteworthy and continued studies on the topic was carried out for centuries. This is evident from the literature of various genres produced from time to time both in Sanskrit and Malayalam. Well-known commentaries on Āryabhaṭīya were written by Kerala Mathematicians and even later works follow Āryabhaṭīyan system. Correction, Revision, Modification and Supplementation could be very well traced in the works that followed. All those major contributions would have faded into oblivion but for the efforts of a single-minded scholar, Dr.K.V. Sarma.

## Early life

Born on 22nd December, 1919 as the son of S. Krishna Aiyyar in a family of traditional Sanskrit and Vedic scholars in Kerala, K. Venkitesvara Sarma learned Sanskrit from a very young age. He graduated in Science in 1940 and took his MA in Sanskrit in 1942 with excellent academic records. He also procured Diploma in French and German in 1953 and 1954 respectively.

## Professional career

His professional career started in 1944 when he joined the Kerala University of Oriental Research Institute and Manuscripts Library as the Supervising Pandit of Manuscripts Section. In 1951, he joined the Department of Sanskrit, University of Madras where he worked on the project of the *New Catalogus Catalogorum of Sanskrit Works and Authors*. In 1962, he took charge of the General Indological Research and Library Department of Vishveshvaranand Vedic Research Institute (V.V.R.I) as Curator. In 1963, he assumed the additional charge as Executive Assistant Editor and later to the Editor of the institute's research periodical, *Vishvesvaranand Indological Journal*. In 1965, when V.V.R.I got affiliated to Punjab University and renamed as 'Vishvevaranand Vishvabandhu Institute of Sanskrit and Indological Studies', Dr.Sarma was appointed as Lecturer in Sanskrit Research. In 1972, he

आलोकः। शुक्तिरजतन्यायेन स आलोक एव विश्वप्रपञ्चरूपेण गृह्यते। यस्तु ग्रहीता तस्याप्यालोकरूपत्वं स्यात्। नोचेद्ग्रहणमेव न सम्भवति। अत्रैव प्लटिनास्-महोदयस्य दर्शनं, काण्ट-वर्यस्य सीमिताद्वैतवादः, विज्ञानवादः, स्फोटवादश्चेत्यादिकानाम् उपयोगोऽनुसन्धेयः। यावच्चाभिव्यञ्जना तावदेव द्वैतभावः। व्यपगते तु द्वैतवादे शुक्तिरपि न वर्तते, रजतमपि नेति। शुक्तिरजतालोकग्रहीतृग्राहकाणां समभाव एवावशिष्यते। तदा नास्त्येव द्वैतभावस्यावकाशः। यदाह –

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्दियः।
युक्त इत्युच्यते योगी समलोष्ट्राश्मकाञ्जनः[11]।।इति।

अत एवास्माभिरुक्तं द्वैतभावादैवाद्वैतभाव उपलब्धव्य इति। द्वैतभावात्मिक्या अभिव्यञ्जनया रसेऽभिव्यक्ते सति केवलं विगलितवेद्यान्तर आनन्द एवानुभूयते, नान्यत्किञ्चित्। तदा च सच्चिदानन्दरूप आत्मा आत्मानमेवानुभवतीति सर्वं सुसमञ्जसम् इति शर्म[12]।

एवं क्रमेण प्रस्तुतग्रन्थे न केवलमलंकारशास्त्रस्य व्यञ्जनाव्यापार एव परामृश्यते, अपि तु अतीव महत्त्वपूर्णस्य भारतीयमूल्यबोधस्य जीवानुरूपस्याद्वैतवेदान्तस्यापि तात्पर्यं विविच्यत इति परिलक्षणीयम्।

7. इदमत्रावधेयं यत् व्यञ्जनाप्रपञ्चप्रसङ्ग एतदेव परिलक्ष्यते यत् प्राच्ये तथा पाश्चात्त्येऽपि कवेः सृष्टिकर्तृत्वं स्वीक्रियते। एतद्विषये स्थानान्तरेष्वपि शर्ममहाभागेन बाहुल्येन विचारविश्लेषणादिकं कृतमस्ति। तद्यथा 'साहित्यतत्त्व आरु समालोचना' नामके असमीयग्रन्थे (1997 वर्षे)। प्रसङ्गक्रमेण तत्र पाश्चात्त्यदेशीयानां रचनास्वपि कवेः सृष्टिकर्तृत्वं सोदाहरणं प्रदर्शितम्। तस्मिन् प्रसङ्गे समायातयोः आङ्गलभाषीयकविवरयोः कीट्स-येट्स्-नामकयोः तुलना कृता। तत्रापि नूतनतत्त्वाविष्करणविचक्षणेन शर्ममहाभागेनेदं प्रथमतया येट्स्-नामधेयस्य कवेः प्रभावः समुल्लिखितो वर्तते। यत्तु इतः प्राक् पाश्चात्त्य-देशीयानामपि न केनापि समालोचकेन कृतमित्यहो शर्ममहाभागस्य नैपुण्यम्।

8. 'Inscriptions of Ancient Assam' इति समस्ति शर्ममहाभागस्यान्यतमानवद्या कृतिः। ग्रन्थरत्नमिदं 1978 वर्षे गुवाहाटीविश्वविद्यालयतः प्रकाशितमस्ति। ईशवीयपञ्चमशताब्दीत आरभ्य ईशवीयद्वादशशतकपर्यन्तमुपलभ्यमानानां षड्विंशतिसंख्यकानामुत्कीर्णलेखानां बहुमूल्यं सङ्कलनमिदम्। अत्र न हि केवलमुत्कर्णलेखानामाङ्गलानुवादो विहितः, अपि तु अतीव सुविस्तीर्णं सुसंबद्धं विश्लेषणमपि समुपलभ्यतेऽत्र। भारततत्त्वज्ञेन A. L. Basham इति महाभागेनोक्तं यत् असमप्रदेशस्य इतिहासरचनविषये पुसतकमिदम् अतिविश्वस्ताधारग्रन्थरूपेण अवश्यपठनीयमस्ति।

9. शर्ममहाभागस्य उद्भाविकाशक्तेः अन्योन्यदृष्टान्तजातमपि 'Scholar Critic Mukunda Madhav Sharma' इति ग्रन्थात् (Abiluc, 5.2.2002) स्थालिपुलाकन्यायेनाधस्तादुपस्थाप्यते यथा-

**क)** भागवतपुराणस्य समग्रमपि रासोपाख्यानं वेदस्योपबृंहणरूपं सन्देहातीतभावेन बृहदारण्यकोपनिषदः 4.3.21संख्यकं मन्त्रमाश्रित्य विराजते[13]।

**ख)** रासशब्दस्य तात्पर्यं तैत्तिरीयोपनिषदः 'रसो वै सः'[14] इति मन्त्रवाक्यं समाश्रयते। रसेन नाम ब्रह्मणा परमेश्वरेण वेति सम्पर्को यस्य स रास इति। अन्यत्सर्वं कष्टकल्पनमेवेति तन्नयः।

**ग)** काव्यगतरसस्य आनन्दः खलु भगवदुपलब्धिजनितानन्दस्य समपर्यायः। साधको भगवदुपलब्धिजनितमानन्दं लब्धुं श्रीयन्त्रस्य साधनां करोति। शर्ममहाभागेनेदं प्रथमतया रसोपलब्धिजनितस्यानन्दस्य श्रीयन्त्रसाधन-जनितेनानन्देन समं तुलना विहिता। रसस्य क्षेत्रे साधारणीकरणहृदयसंवादयोः या स्थितिस्तद्रूपैव स्थितिः श्रीयन्त्रस्य सृष्टिक्रम-लयक्रमयोः क्षेत्रेऽपि दरीदृश्यते। (*असम साहित्यसभा पत्रिका*, 1997)।

**घ)** अष्टाध्याय्यामपि सांकेतिकभावेन व्याकरणाध्ययनेन भगवदुपलब्धिर्भवेदिति कथितमस्ति। इदं प्रथमतया तस्यैव सांकेतिकस्य तात्पर्यस्योपोद्वलनार्थं

मुकुन्दमाधवशर्मणा अष्टाध्याय्याः प्रथमसूत्रेण अन्तिमसूत्रस्य संयोगं स्थापयित्वा श्रीयन्त्रतत्त्वमाश्रित्य भर्तृहरेरपि मतमाश्लिष्य एतत् प्रदर्शितं यत्पाणिनेः अन्तिमस्य ‘अ अ’ सूत्रस्य अतीव महत्त्वपूर्णं तात्पर्यमस्ति इति। (*Studies of Indology*, Delhi, 1996)

**ङ)** भगवद्गीतायाः स्थितप्रज्ञस्य आदर्श एव मूलं वस्तु। खीष्टियत्रयोदशशताब्द्यां पारस्यदेशीयः सुफीसाधको जलालुद्दिन-रुमिरपि अनेनादर्शेन कथमनस्वीकार्यभावेन प्रभावित आसीदित्यपि शर्ममहाभागेन प्रथमतयाविष्कृतमस्ति[15]।

**च)** गीतायाम् एकस्मिन् रथे उपविश्य श्रीकृष्णः अर्जुनमुपदिशति। एतत् समग्रमपि रूपकल्पं कठोपनिषदः ‘आत्मानं रथिनं विद्धि शरीरं रथमेव तु’ इत्यादिकं मन्त्रमाश्रित्य विराजते इति तत्त्वमपि एतावता कालेन सर्वप्राथम्येन मुकुन्दमाधवशर्मणा एव प्रकाशितम्[16]।

**झ)** जगतीतले कोटिशः देवताः सन्ति। तासु केवलं शिव एव महादेवनाम्नापि प्रथितः। विष्णुवरुणादीनां विषये महादेव इत्युपनाम नैव प्रयुज्यते। कृतश्च वृषभ एव वाहनरूपेण स्वीकृतः ? एवम्विधस्य प्रश्नस्योत्तरं वेदस्य ‘चत्वारि शृङ्गा त्रयोऽस्य पादाः’ इति मन्त्रे ‘मृग्यम्’ इत्यपि शर्ममहाभागेन प्रचारितम्। (Journal of University of the Gauhati’ , Vol. 14-15, 1973-74 & 1975 वर्षे प्रकाशिते)।

**ज)** मृच्छकटिकस्य काले जातिभेदप्रथा तथा कठोरा नासीत्। अष्टादशशताब्द्यां पाश्चात्त्ये प्रचारितो मुक्तेरादर्शो भारते खृ. 200काले उररीकृत आसीत्। प्रसङ्गत उल्लेख्यं साहित्य तत्त्व आरु समालोचना इति प्रबन्धः। एतदपि शर्ममहाभागेनेदं प्रथमतया प्रदर्शितम्।

**झ)** पारिभाषिकस्य ‘द्विधाभिधान’मिति पदस्य तात्पर्यं सर्वप्राथम्येन शर्ममहाभागेनैवाविष्कृतम्[17]।

**ञ)** परिभाषिकस्य पदलालित्यमिति पदस्य तात्पर्यम् एतावता कालेन केवलं शर्ममहाभागेनैव सुदृढरूपेण प्रतिष्ठितमस्ति[18]।

**ट)** सेतुबन्धकाव्यस्य 'सेतुबन्धः' इति नाम कथं प्रथते इति प्रश्नस्य उत्तरमनिवार्यभावेन शर्ममहाभागेनेव प्रदत्तमस्ति[19]। (पातनि, *प्रवरसेनर सेतुबन्ध*, आहल्या गगै, जुलाइ, 2000)।

परिशेषे वक्तव्यं यत् संस्कृतमातुर्निरन्तरं सेवायां जीवनमुत्सर्गीतवान् मुकुन्दमाधवशर्मा। आसीत् स धार्मिको व्यक्तिजीवने। जीवनस्यान्तिमदिनं यावत् श्रीमद्भगवद्गीतेति तस्य प्रियो धर्मग्रन्थ आसीदिति वक्तुं शक्यम्। काव्यतत्त्वं खलु विदुषोऽस्य हृदोऽन्तःस्थले राजतेतराम्। साहित्यसमालोचकरूपेण मृत्योः (2009) द्वादशवर्षाण्यतीत्यापि मुकुन्दमाधवशर्मणो नाम संस्मर्य्यते विद्वद्भिः। शिक्षकत्वेन साहित्यतात्त्विकरूपेण प्रशासकत्वेन च तस्य यशस्तैलबिन्दुरिव सर्वत्र विस्तीर्यत इति कृत्वा मनुष्यदेहधारणं तत्कृते सार्थकमेवेति मन्ये। प्रबन्धोऽयं समाप्यते मुकुन्दमाधवशर्मणः भावयितृप्रतिभामुद्दिश्य वङ्गप्रदेशीयविद्वद्वरिष्ठस्य भाषाविज्ञानिनः प्रो. सत्यरञ्जनवन्द्योपाध्यायस्य प्रशंसापरकयोक्त्या 'a unique feature unparalleled in many ways in the domain of scholarship. This is, in fact, a real piece of research work. To elicit the personality of a person from his writing needs a sharp sagacity of a researcher, and undoubtedly Professor Sharma has proved himself as a worthy of the same.''[20]

## तथ्यसूत्राणि

---

[1] *ध्वन्यालोकः* , 3-33 इत्यस्य वृत्तौ

[2] शर्मा, मुकुन्दमाधवः, *व्यञ्जनाप्रपञ्चसमीक्षा*, पृ.-3

[3] तत्रैव, पृष्ठा - 5

---

[4] *कारिकावली*, 1.54-55

[5] *न्यायसूत्रभाष्यम्*, 1-3

[6] *बृहदारण्यकोपनषत्*, 1.3.30-31

[7] *भाषापरिच्छेदः* (1.26 कारिकाया मुक्तावली)

[8] शर्मा, मुकुन्दमाधवः, *व्यञ्जनाप्रपञ्चसमीक्षा*, पृ. 10-11

[9] *वैशेषिकसूक्तम्*, 4

[10] शर्मा, मुकुन्दमाधवः, *व्यञ्जनप्रपञ्चसमीक्षा*, पृ. 251

[11] *कठोपनिषद्*, 2,2.15

[12] *श्रीमद्भगवद्गीता*, 6-7

[13] शर्मा, मुकुन्दमाधवः, *व्यञ्जनाप्रपञ्चसमीक्षा*, पृ. 284-286

[14] *S. V. University Oriental Journal*, Vol. 36, 1993

[15] *तैत्तिरीयोपनिषत्*, 2.7.45

[16] *आनन्दम्*, सं. 2.1995. पृ. 18-30

[17] *Indic Tradition*, Vol. 2., कलिकाता, 1998, पृ. 174-180

[18] *Indologica Taurinensia*, Vol. 8-9, Turin, Italy, 1780-82

[19] *A Corpus of Indian Studies*, Kolkata,1980

[20] Banerjee, Satya Ranjan, *Studies on Ideology*, 1st edt., 1996, p-42

# सनातनकविः महामहोपाध्यायः रेवाप्रसादद्विवेदी

झण्टु-दासः

'अपारे काव्यसंसारे कविरेकः प्रजापतिः।
यथास्मै रोचते विश्वं तथैदं परिवर्तते'।।

इत्यस्य वचनप्रामाण्यात् सहृदयानां हृदये विमलं काव्यानन्दं जनयितुं कवेर्महदवदानमस्तीति निश्चप्रचम्। आ वैदिककालात् ध्रुपदीसंस्कृतसाहित्याब्धौ बहवः कोविदकवयः राराज्यन्ते, परमानन्दसर्जने समाजस्य आमूलचूडां वस्तुस्थितिमुपस्थापयितुञ्च तेषां कविरवीनां योगदानमनमद्वितीयमस्ति। अर्वाचीनकालेऽपि कविषु समाजस्य मूल्याङ्कनं स्वाभाविकमेव। अस्मिन् साहित्यकर्मण्यद्वितीयस्तावद् आधुनिकसंस्कृतसाहित्यजगतः साहित्यनभसि नक्षत्रमिव राराज्यमानाः वरेण्याः महाकवयो रेवाप्रसादद्विवेदिनः। एते सनातनकविरिति विरुदेन कवितल्लजेषु प्रसिद्धा सन्तीति सर्वे अपि जानन्त्येव संस्कृतज्ञाः।

**कवेर्व्यक्तिगतपरिचयः-**

सनातनकविरयं १९३१ ईशवीयसंवत्सरे अगष्टमासस्य द्वाविंशतिदिनाङ्के भाद्रशुक्ल-एकदशीतिथौ भारतवर्षस्य मध्यप्रदेशस्य सीहोरजिलायां नर्मदानद्यास्तटस्थे नाँदाराख्ये ऐतिहासिकग्रामे जनिं लेभे। तस्य पितामहः खलु श्रीजगन्नाथद्विवेदी पिता च पण्डितो नर्मदाप्रसादद्विवेदी। तस्य पितृचरणाः संस्कृतज्ञा ज्योतिर्विद आसन्। ते महता पाण्डित्यपूर्णविधिना स्वयमेव पुत्राय रेवाप्रसादाय श्रीविष्णुसहस्रनामस्तोत्रं पाठयित्वा पुत्रस्य संस्कृतशिक्षायाः सूचनामकुर्वन्। नर्मदाप्रसादस्य सहधर्मिणी लक्ष्मीदेवी तस्मै रेवाप्रसादाय लिपिज्ञानं प्रददौ। रेवाप्रसादस्य अष्टमवयःक्रमे तातचरणा दिवंगताः। ततः मासपञ्चकादनन्तरं जननी अनन्तलोकमगात्। तत्परं बालोकोऽसौ रेवाप्रसादः संस्कृतज्ञस्य मातुलस्य श्रीशालिग्रामपरसाइवर्यस्य गृहं गतवान्। तत्रैवास्य

संस्कृताध्ययनं प्राचलत्। सम्पूर्णमध्यमकक्षायाः परीक्षां प्रदाय मध्यप्रदेशस्य नरसिंहपुरनगरात् रेवाप्रसादः १९५० ख्रीष्टाब्दे संस्कृताध्ययनाय काशीमगात्।

काशीनगरीमागत्य स काशीहिन्दुविश्वविद्यालयस्याधीने संस्कृत-विद्यालयस्य साहित्यविभागे शास्त्रीकक्षायां लब्धप्रवेशः। तत्र साहित्यादिशास्त्रस्य मूर्धन्यभूतस्य पण्डितमहादेवशास्त्रिणः कवितातार्किकचक्रवर्तिनः शिष्यत्वं प्राप्नोति बालकोऽसौ द्विवेदी। १९५३ संवत्सरे तत्र शास्त्रिपरीक्षायां प्रथमस्थानं तेनैवाधिगतम्। ततः १९५६ संवत्सरे तत्रैव शास्त्राचार्यपरीक्षायामपि प्रथमस्थानं लब्धवान्। प्रथमस्थानमुपलभ्य स 'विश्वेश्वरनाथचौबे' इति नामाङ्कितं स्वर्णपदकं प्राप। अतः परं विश्वविश्रुतविदुषां वासुदेवशरणाग्रबालानां प्रेरणया आचार्यो द्विवेदी वेदविज्ञानाद्यध्ययनार्थं जयपुरस्थं मानवाश्रमं जगाम किन्तु तस्माद् एकवर्षात्परं काशीनगरीमागत्य १९५७ वर्षे संस्कृतविषय एम्.ए. इत्यस्यां कक्षायां कलासंकायस्य संस्कृतविभागे काशीहिन्दुविश्वविद्यालये प्रवेशं प्राप्तवान्। तत्रापि प्रथमस्थानमधिकृतं तेन। कविरयं स्वकृतौ असकृत् स्वगुरूणां श्रीमहादेवशास्त्रिणां श्रीरामकुबेरमालवीयमहोदयानां च नामोच्चारणं करोति। कविना द्विवेदिना छात्रावस्थायां प्राच्यपद्धत्या समम् आधुनिकविधिनापि संस्कृतविषयाणां शिक्षा सम्प्राप्ता। आंग्लभाषामधिकृत्यानेन अंग्रेजीविभागस्य बि.ए. कक्षाप्यासीत् समुत्तीर्णा। त्रिष्वपि भाषासु आसीदेतेषां समानाधिकारः।

पण्डितप्रवरोऽयम् आचार्यरेवाप्रसादद्विवेदी ९१ वर्षाणि यावत् भूधाम्नि सारस्वतलीलां निरवच्छिन्नत्वेन कृत्वा अतिसाम्प्रतं मेईमासस्य एकविंशतिदिनाङ्के शुक्रवासरे २०२१ संवत्सरे इहलोकं परित्यज्य अमरलोकं गतः।

## कवेः कर्मजीवनम्

काशी-हिन्दु-विश्वविद्यालये स्वकीयमध्ययनं समाप्य कविना मध्यप्रदेशस्य रायपुरस्थस्य दूधाधारी-श्रीवैष्णवसंस्कृतमहाविद्यालयस्य साहित्य-विभागे व्याख्यातृरूपेण अध्यापकपदे (१९५९-१९६५ पर्यन्तम्) नियुक्तिः

सम्प्राप्ता। ततः १९६५-१९७० वर्षाणि यावत् मध्यप्रदेशे नरसिंहगढ़महाविद्यालये इन्दौरमहाविद्यालये च क्रमेण पदोन्नतमवाप्य सहायकप्राध्यापकपदे कार्यनिर्वाहं कृतवान्। ततः १९७७ पर्यन्तं काशी-हिन्दुविश्वविद्यालयस्य प्राच्यविद्याधर्म-विज्ञानसंकायस्य साहित्यविषयस्य प्रवाचकः (रीडर) आसीत्। तत्रैव च साहित्यविभागाध्यक्षोऽप्यासीत्। ततस्तत्र प्रफेसरपदं (१९७७-१९९०पर्यन्तम्) तेनार्जितम्। अष्टादश वर्षाणि यावत् साहित्याध्यक्षपदेन साकं वारत्रयं सङ्कायस्यास्य संकायप्रमुखपदम् (डीन) वर्षद्वयात्मकावधिपरिमितं अलंकृतं तेन। पुनः तत्र १९९५ वर्षपर्यन्तं सेवानिवृत्ताध्यापकरूपेण कार्यनिर्वाहं कृतवान् कविः द्विवेदी। प्रो.द्विवेदीमहोदयः अध्यापनकाले सप्तदशसंख्यकान् विद्यार्थिनो विद्यावारिधिप्राप्तौ (पि.एच्.डी) इत्युपाधये शोधनिर्देशकरूपेण मार्गनिर्देशनम् अकरोत्। एवम्प्रकारेण कविरयं संस्कृतस्य माहात्म्यं सर्वतोभावेन सर्वत्र सम्बर्धयतीति।

कविरयं हिन्दु-विश्वविद्यालयस्य १९८१ वर्षे समायोजितस्य पञ्चम-विश्वसंस्कृतसम्मेलस्य आयोजकः संयोजकश्चासीत्।

कर्मजीवनेन सह हेमाद्रिकृतायाः 'रघुवंशदर्पणः' इत्यस्याः टीकायाः त्रयोविंशतिहस्तलेखान् आश्रित्य रघुवंशटीका इदंप्रथमतया कविना सम्पादिता। अनेन शोधकार्येण कविः १९६५ संवत्सरे रायपुरस्य रविशंकर-विश्वविद्यालयात् पी.एच्-डी. इत्युपाधिं लब्धवान्। टीकेयं तदुत्तरकाले १९७३-१९७४तमे वर्षे बिहारप्रदेशस्य पाटनामण्डलस्य काशीप्रसाद-जायसवाल-शोधसंस्थानतः प्रकाशितासीत्। ततः परं आनन्दवर्धनकृतो ध्वन्यालोकः, रुय्यकाचार्यस्य अलंकारसर्वस्वम् विमर्शिनीसहितं प्रकाशतामगात्। ग्रन्थस्यास्य पाण्डित्यपूर्ण-पर्यवेक्षमभिकृत्य अयं विद्वत्प्रकाण्डो जबलपुरस्थस्य रानीदुर्गावती-विश्वविद्यालयस्य १९७३ईशवीयाब्दे डॉक्टर.ऑफ.लिटरेचर् (डी.लिट्) इत्युपाधिना विभूषितः। १९८५ संवत्सरे काव्यशास्त्रे अभिनवसिद्धान्तानां प्रवर्तकत्वेन महद्योगदानविधानार्थं रायल-एशियाटिक-सोसायटी (मुम्बई) प्रो.द्विवेदीमहाभागाय म.म.पी.वी.काणे इति स्वर्णपदकं प्रादात्।

कवेर्भाषाज्ञानं लिपिज्ञानमतीव प्रौढमासीत्। न केवलं संस्कृते, हिन्दीभाषायाम् आङ्गलभाषायाञ्च कवेरस्य दक्षता अनन्या। तस्य ब्राह्मी-शारदादिलिपिज्ञानं प्रशंसनीयम् आसीत्। नागरीलिपिद्वारा कालिदासस्य महाकाव्यद्वयं रघुवंशं कुमारसम्भवञ्च, नाटकत्रयम् अभिज्ञानशकुन्तलं विक्रमोर्वशीयं मालविकाग्निमित्रं चेति, खण्डकाव्यद्वयम् ऋतुसंहारं मेघदूतञ्च आनन्दवर्धनस्य धन्वालोककारिका इत्येतेषां ग्रन्थरत्नानां स्वहस्तलेखेन पाण्डुलिपिनिर्माणं विधाय एतेषां क्रिटिकलसंस्करणानि प्रकाशितवान्।

## कवेः विदेशयात्रा

कविः आ शैशवात् भ्रमणं कुर्वन्नासीत्। अध्ययनजीवने विशेषेण कर्मजीवने भ्रमणकाले कविना स्वदेशात् बहिर्भारतगमनास्वादोऽनुभूतः। अधः कवेः विदेशगमनवृत्तं समुल्लिख्यते -

१९८४ संवत्सरे आचार्य-द्विवेदी भारतसर्वकारस्य प्रतिनिधिरूपेण अमेरिकाराष्ट्रस्य फिलाडेल्फिया इत्यत्र अनुष्ठिते षष्ठ-विश्वसंस्कृत-साहित्यसम्मेलने योगदानाय अमेरिकां गतवान्। पुनरपि १९९५ संवत्सरे २००१ संवत्सरे च मासचतुष्टयं यावत् तत्रैव व्यक्तिगतरूपेण स्वज्येष्ठपुत्रस्य साहाय्येन विदेशयात्राया अनन्यास्वादः अनुभूतः कविवरैः।

१९८८ संवत्सरे आचार्य-द्विवेदी वाराणसी-हिन्दुविश्वविद्यालयस्य प्रतिनिधिरूपेण हालैण्डराषट्रस्य आमस्टर्डम् इत्यत्र अनुष्ठिते सप्तम-विश्वसंस्कृतसाहित्यसम्मेलने योगदानाय गतवान्।

१९९४ ईशवीयाब्दे विशेषामन्त्रितसदस्यरूपेण संस्कृतविद्वान् कविः आचार्य-रेवाप्रसादद्विवेदी नेपालदेशस्य काठमाण्डूनगरं गतवान्।

## कवेः पुरस्कारप्राप्तिः

संस्कृतशास्त्रसाहित्याब्दौ अशेषयोगदानाय कविवरेण शास्त्रतात्त्विकेन चानेन अमलं यशः अर्जितम्। बहूनि शिक्षाप्रतिष्ठानानि तस्मै बहुप्रशंसापरकाणि

पुरस्काराणि प्रददति स्म। कवेः पुरस्कारभाण्डे अनेकानि पुरस्काराणि संगृहीतानि सन्ति। तेषु सम्मानेषु कानिचन आन्तर्जातीयकानि, जातीयपुरस्काराणि, चान्यानि स्थानीयकपुरस्काररूपाणि। अधः कानिचन उल्लिख्यन्ते -

- राष्ट्रपतिपुरस्कारः, भारतसरकारपक्षतः (राष्ट्रपतिः नीलम-संजीव-रेड्डीहस्तात्) (१५.८.१९७८)
- पी.वी.काणे-स्वर्णपदकपुरस्कारः, दि. एशियाटिक. सोसाइटी, मुम्बई (१९८३)
- साहित्य-अकाडेमीपुरस्कारः, साहित्य-अकादेमी, दिल्ली (१९९१)
- कल्पवल्लीपुरस्कारः, भारतीय-भाषा-परिषद्, कलकाता (१९९३)
- वाचस्पतिपुरस्कारः के.के.बिरला फाउडेशन, नई दिल्ली (१९९७)
- श्रीवाणी-अलंकरण-पुरस्कारः, रामकृष्ण-जयदयालडाल्मिया, श्रीवाणीन्यासः, नई दिल्ली (१९९९)
- राष्ट्रीयसंस्कृतवेदभाष्यपुरस्कारः, दिल्ली, (२००५)
- सम्मानित-फेलोशिप-एशियाटिक-सोसाइटी, मुम्बई (१९९५)
- विश्वभारतीपुरस्कारः, उत्तरप्रदेश-संस्कृतसंस्थानम्, लखनऊ, (२००५)
- साहित्य-एकाडेमी, नई दिल्ली, (१९९१)
- वाल्मीकिपुरस्कारः, उत्तरप्रदेश-संस्कृतसंस्थानम्, (२००४)
- करपत्रस्वामिपुरस्कारः, सम्पूर्णानन्द-संस्कृतविश्वविद्यालयः, वाराणसी, (२०१८)
- विशिष्टपुरस्कारः, उत्तरप्रदेश-संस्कृतसंस्थानम्, लखनऊ, (२००२)
- महर्षिवेदव्याससम्मानम्, दिल्ली संस्कृत अकाडेमी, दिल्ली, (२०१२)
- सौहार्दसम्मानम्, उत्तरप्रदेश-हिन्दीसंस्थानम्, लखनई, (२०१५)
- राष्ट्रीय-संस्कृत-वेदव्यासपुरस्कारः, २००५, दिल्ली, (२०१०)

- नाना-साहेव-पेशवा-धार्मिक-आध्यात्मिकपुरस्कारः, देवदेवेश्वरसंस्थानम्, पुणे, (२०१०)

अपि च, मध्यप्रदेशस्य प्राशासकैः मित्र-भोजव्यासपुरस्कारेण, उत्तरप्रदेशप्रशासकैश्च पञ्चपुस्कारैः पुरस्कृतोऽयम् कविः रेवाप्रसादद्विवेदी इति। दिल्ली-साहित्यपुरस्कारः, २०१० संवत्सरे पण्डितराजजगन्नाथपुरस्कारश्च सम्प्राप्तौ। साहित्यरत्नः (२०१०), पण्डितरत्नः (२००८), रत्नसदस्यः (२००७), शास्त्रकलानिधिः (२००६), महामहोपाध्यायः (२००९), प्रज्ञाभारती (२०११), संस्कृतविद्वद्गौरवम् (२०१९), व्यायोगसम्मानः (२०१२), महामहाध्यापकः, विद्याश्रीः, अभिनवकालिदासश्चेत्यादिभिः सम्मानैः विभूषितः अयं विद्वान्।

**कवेः साहित्यकृतयः**

कविवरैः अध्ययनाध्यापनादिभिः समं विविधग्रन्थरचनाः विविधग्रन्थसम्पादनानि च कृतानि। कवेः मौलिककृतयः त्रिंशत्, सप्त शास्त्रीयग्रन्थानां भाष्याणि, विंशतिः (२०) समीक्षात्मकसम्पादनानि, अष्टादश (१८) स्वहस्तलिखितहस्तलेखाः सन्ति। तदुल्लिख्यन्ते एवम् -

**महाकाव्यम् -** 'उत्तरसीताचरितम्', 'स्वातन्त्र्यसम्भवम्', 'कुमारविजयम्' चेति।

**काव्यग्रन्थः** – 'शतपत्रम्', 'श्रीरेवाभद्रपीठम्', 'संस्कृतहीरकम्', 'शकटारम्', 'शरभङ्गम्', 'मतान्तरम्', शरश्या', 'अमेरिका', रामपरिसंख्या', 'अयि नीलनदि', 'हरिहरावदानम्', 'रत्नस्वरूपावदानकाव्यम्', 'अवदानलतिका' चेति।

**प्रशस्तिकाव्यम्** – 'श्रद्धावाष्पम्', 'नमो निर्वाचनं' चेति।
**नाटिका** – 'यूथिका', 'सप्तर्षिकांग्रेसम्' चेति।
**कथा** – 'त्रिपादी', 'कोऽसौ', 'कस्य दोषः' चेति।

**नवीनकाव्यशास्त्रम्** - 'काव्यालङ्कारकारिका', 'नाट्यनुशासनम्', 'साहित्यशारीरक' 'अलं ब्रह्म' चेति।

**मनोग्राफ** – 'आनन्दवर्धनः', 'भारतीय काव्यसमीक्षा में अलंकारसिद्धान्त', 'कालिदासः - मानवशिल्पी महाकविः', 'संस्कृत इतिहासः - काव्यशास्त्र का आलोचनात्मक इतिहास'।

**हिन्दीभाष्यम्** – 'व्यक्तिविवेकः', 'अलंकारसर्वस्वम् अलंकारविमर्शिनीसहितम्', 'अभिधावृत्तमातृका', 'शब्दव्यापारविचारः', 'काव्यालंकारकारिका' (आङ्ग्लभाषानुवादेन सह)

**सम्पादितग्रन्थाः-** 'आनन्दवर्धनः', 'महिमभट्टः', 'हेमचन्द्रः' चेति प्रमुखानाम् आचार्याणां ग्रन्थाः, व्यक्तिविवेकव्याख्यानम्' 'साहित्यसन्दर्भः', 'रघुवंशदर्पणः', 'शब्दव्यापारविचारः', 'रसार्णवसुधाकरः' चेत्यादिग्रन्थाः।

कवेरस्य शताधिकाः हिन्दी-आङ्गल-संस्कृतभाषाश्रिताः शोधप्रबन्धाः प्रकाशिताः। कवेः 'सत्यनारायणव्रतकथा', 'शिवमहिम्नस्तोत्रम्' चेत्यनयोः हिन्दीभाषानुवादोऽपि अतीव जनप्रियोऽस्ति। कालिदास-ग्रन्थावल्याः वारत्रयं सम्पादनं कृत्वा स आन्तर्जातिकसम्मानम् अधिगतवान्।

**कवेः काव्यपरिचितिः**

**महाकविरूपेण आचार्यः द्विवेदी** –

आधुनिकाः सनातनमहाकवयो रेवाप्रसाद-द्विवेदिनः प्रत्नपरम्पराम् अनुसृत्य नवपरम्परामङ्गीकृत्य च सहृदयहृदयहारि महाकाव्यं प्रस्तुवन्ति। कवेरस्य वर्णने चिन्तने कथने सर्वत्रैव चार्वाचीनत्वं प्रकाशते। कविना विरचितैस्त्रिभिः महाकाव्यैः संस्कृतसाहित्यमृद्धमभूदिति नास्ति सन्देहः। महाकाव्यान्तेतानि सन्ति -

- **उत्तरसीताचरितम् -**

महाकाव्यमिदं महाकवेः सर्वप्रथमा मौलिकी कृतिः। १९५६ संवत्सरस्य प्रारम्भे विरचितस्य महाकाव्यस्य पूर्वं नामासीत् 'सीताचरितम्' इति। भगवत्याः सीतायाः उत्तरजीवनवृत्तान्तान्वितत्वात् संशोधनद्वारा षष्ठसंस्करणे 'उत्तरसीताचरितमि'ति नूतननामकरणं कृतं कविना रेवाप्रसादद्विवेदीमहोदयेन। महाकाव्यस्य प्रथमं प्रकाशनं (पञ्चसर्गात्मकम्) डॉ. हरिसिंहगौरविश्वविद्यालयस्य (सागरः, मध्यप्रदेशः) 'सागरिका' इत्यस्यां पत्रिकायाम् (सागरिका, अंक-७, संख्या-१) अभवत्, १९६८ संवत्सरे। द्वितीयं प्रकाशनं स्वतन्त्रग्रन्थरूपेण (दशसर्गात्मकम्) सीताचरितमहाकाव्यम् १९७५ वर्षे मनीषाप्रकाशनतः सञ्जातम्। तृतीयं प्रकाशनं चौखम्बासंस्कृतसंस्थानतः अभूत्। महाकाव्यस्यास्य चतुर्थं पञ्चमं च संस्करणद्वयं कानपुरतः प्रकाशितमासीत्। ततःपरं षष्ठं संस्करणं १९९०संवत्सरे हिन्दीभाषानुवादेन सह कालिदाससंस्थानतो (वाराणसी) 'उत्तरसीताचरित'मिति नाम्ना प्रचरद्रूपताम् गतम्। महाकाव्येऽस्मिन् रामस्य राज्यारोहणात् सीतायाः मुक्तिं यावद् वृत्तान्तजातं ६९४ पद्यैः दश सर्गैरुपनिबद्धं महाकविना। उत्तरसीचाचरितमिति सम्पूर्णकाव्यनिर्माणे कवेः द्वादशवर्षाणि (१९५६-१९६८) व्यतीतानि सन्ति। महाकाव्यवैशिष्ट्यानुसारं सर्गनाम्ना अध्यायविभाजनं तेषाञ्च नामकरणं कथावस्तुदिशा कविना कृतमस्ति। काव्यस्यास्य दशसर्गाणां नामान्यत्रोल्लिख्यन्ते -

प्रथमसर्गः - राष्ट्रपतिनिर्वाचनम्
द्वितीयसर्गः - जानकी-कौलिनी
तृतीयसर्गः - जानकी-परित्यागः
चतुर्थसर्गः - साकेत-परित्यागः
पञ्चमसर्गः - कुमारप्रसवः
षष्ठसर्गः - जानकीमुनिवृत्तिः
सप्तमसर्गः - विद्याधिगमः
अष्टमसर्गः - कुमारायोधनम्
नवमसर्गः - मातृप्रत्यभिज्ञानम्
दशमसर्गः – समाधिमाङ्गल्यम्

वाल्मीकिरामायणमाश्रित्य रचिते महाकाव्येऽस्मिन् कविना नायिकायाः सीतायाः ओजस्विता दृढता च प्रकाशिते। पात्रचयनेऽत्र कवेः कल्पनायाः आवश्यकता नैव दृश्यते। प्रत्नचरित्राणां नवीनरूपं प्रदत्तमत्र कविना। काव्ये

मुख्यरूपेण सीता, मातृरूपेण कौशल्या, उर्मिला, श्रुतकीर्तिः तथा माण्डवी चेत्यादीनि स्त्रीपात्राणि चित्रितानि। अपि च, मुख्यरूपेण रामः, वाल्मीकिः, वशिष्ठः, जनकः, भरतः, लक्ष्मणः, लवकुशौ, चन्द्रकेतुः चेत्यादीनि पुरुषपात्राणि कविना उल्लिखितानि।

अस्मिन् महाकाव्ये राष्ट्रदेवीरूपेण सीतायाश्चरित्रं वर्णितमस्ति। सीतायाः धैर्य्यं नारीत्वञ्च कविना उत्तमरूपेण उपस्थापितम्। अत्र सीतायाः स्फूर्तिमतीं छविं सर्वोच्चोपमानैः बिम्बैश्च निर्माति कविरयम् –

'सा कापि पत्नी पुरुषोत्तमस्य सा कालरात्रिर्दशकन्धरस्य।
भूर्जे हृते स्थण्डिलमण्डलेऽस्मिन् राष्ट्रस्य देवी च पुनर्व्यलोकि'[1]।।

महाकाव्येऽस्मिन् आसन्नप्रसवागर्भगुर्विणी स्वयमेव अयोध्यां परित्यजति। न सा ततः बहिष्कृता कौलीनमाश्रित्य अयोध्याधिपतिना रामेण। महाकाव्येऽस्मिन् सैषा तेजस्विनी सीता राजसभायां सर्वेषामेव उपस्थित्याम् अभ्युत्थानसमाधिना देहत्यागं करोति मुक्तिं न लभते। नासौ भूमिप्रवेशं प्रार्थयति कौलीनाक्रान्तमना। दाम्पत्यं क्विन् उपवर्ण्यते एवम् –

पुरुषः पुरुषार्थचत्वरे पदवीं ज्ञातुमितोऽभिष्यति।
महिला समयं परीक्ष्य तां दिशतीत्येवभुमौ महाव्रतौ।।३.५३।।

महाकाव्येऽस्मिन् सीताचरिते महाकविः दैन्यं न प्रदर्शयति कथमपि वाल्मीकि-कालिदास-भवभूत्यादिवत्। भावती अत्र वीरपुत्री, वीरपत्नी, वीरमाता रूपेण प्रतिपदमुपवर्णिताऽस्ति।

- **स्वातन्त्र्यसम्भवम्**

सनातनमहाकवेः (१८५७-२०१९ पर्यन्तम्) देशस्य स्वातन्त्र्यताप्राप्तिम् आधारीकृत्यापरं महाकाव्यमस्ति स्वातन्त्र्यसम्भवमिति। उत्तरसीताचरित-महाकाव्यरचनाद् द्वाविंशतिवर्षेभ्यः परं काव्यमिदं कविना व्यरचि। आदौ

अष्टविंशतिसर्गात्मकं काव्यमिदं कालिदाससंस्थानतः १९९० संवत्सरे प्रकाशितमभूत्, तत्र झाँसीनगरस्य राणी लक्ष्मीबाई इत्यतः श्रीमत्या इन्दिरा-गान्धिनः हत्याकाण्डं यावत् भारतीयेतिहासवृत्तं वर्णितमासीत्। तत्पश्चात् २००० वर्षे पुनरपि साकल्येन ३३ सर्गा प्रकाशिताः, अन्तिमे पञ्च सर्गा सन्ति, यत्र भारतवर्षस्य प्रधानमन्त्रिणः श्रीनरसिंहरावस्य शपथग्रहणात् आरभ्य तत्कालिनः प्रधानमन्त्रि-अटलविहारी-वाजपेयीकालं यावत् भारतवर्षस्य राजनैतिकघटनावली क्रमानुसारेण वर्णिता कविना। वर्तमाने प्रस्तुतमहाकाव्ये ७५ प्रकाशिताः सन्ति ३५ सर्गाश्च प्रकाशमाना वर्तन्ते। ३३ सर्गात्मकम् महाकाव्यमेतत् काशीहिन्दुविश्वविद्यालयात् (वाराणसी) २००१ वर्षे प्रकाशितम्। अस्मिन् हिन्दीभाषानुवादोऽप्यस्ति। प्रो. सदाशिकुमारद्विवेदिनः कनिष्ठपुत्रस्य महाकवेर्महाकाव्यस्य सर्गानां नामानि अधः प्रदर्श्यन्ते - पीटिकाबन्धः, स्वातन्त्र्यसंकल्पोदयः, जनविद्रोहः, कमलापरिग्रहः, कमलादोहदलक्षणः, गर्भमङ्गलः, दोहदपूरणम्, ग्रामटिकादर्शनम्, जनान्दोलनम्, इन्दिरासम्भवम्, काव्यमङ्गलः, कमलामहाप्रयाणः, जवाहरपरिवेदनम्, भारतविभाजनम्, परिवेदनम्, चीन-पाक-अभिद्रोहः, महापुरुषपरिनिर्वाणम्, भारत-पाक-सन्धिः, शास्त्रिदेहविसर्गः, मातृप्रतिष्ठा, पाक-बङ्गविजयः, आपत्कालसंहारः, अन्तःकलहः, जनाक्रोशः, शक्तिलाभः, प्राधान्यसंक्रमः, जवाहरमुक्तिः, प्राधान्य-संक्रमः, मतिभेदः, राजीवहत्या, नरसिंहरावस्य सम्भावना, सौराज्यशंसनम्, वाजपेयी-प्राधान्यम् चेति।

२०१९ वर्षपर्यन्तं रामजन्मभूमिवादनिर्णयं यावदस्ति भारतवर्षस्य ऐतिह्यमुपवर्णितम्।

२०११ संवत्सरे महाकाव्यस्यास्य ७५सर्गात्मकं ६०८४ पद्यसमन्वितं नवीनं संस्करणं प्रकाशितम्। काव्यस्यादौ कवेः श्लेषप्रधानविस्तृतं मङ्गलाचरणं प्राप्यते-

'वन्दामहे पद्मदलाभिरूपां पञ्चप्रशाखीं कविनायकानाम्।
विवर्त्ततेऽर्थात्मतया स्वयं वै यामाश्रिता काचन सूक्तिदेवी'[2]।। इति

अपि च दृश्यते,

'नमामि तां निर्झरिणीं कवीनामाकाशगङ्गां नु विशुद्धिमुद्धाम्।
यत्कुक्षिसूताऽक्षरपद्यमालां वाग्देवता श्रीरिव मूर्ध्नि धत्ते'[3]।। इति

महाकाव्येऽस्मिन् पात्रनिर्वचनं न सुस्पष्टमस्ति। पात्राणां व्यक्तित्त्वं महत्त्वपूर्णं योगदानं चोपनिबद्धं दृश्यते। महाकाव्ये सर्वाणि राजनीतिकचरित्राणि सैनिकाश्च स्वतन्त्रतालाभाय ये जनाः कृतयत्नास्ते एव वर्णिताः। तथापि वर्णितेषु बहुचरित्रेषु मुख्यरूपेण रानी लक्ष्मीबाई, महात्मागाँधी, जवाहरलालनेहरू, इन्दिरागाँधी, लालबहादुरशास्त्री, अटलबिहारीवाजपेयी, नरोन्द्रमोदी इत्यादयः उपवर्णिताः सन्ति। एतदतिरिक्तानां बहूनां पात्राणां सन्निवेशोऽत्र दृश्यते। स्त्रीपात्रेषु आदौ लक्ष्मीबाई, कमलानेहरुः, इन्दिरागान्धी, श्रीमती ललिताशास्त्री, कस्तूरबा, दुर्गावती, चेन्ना-अम्बा, द्रौपदी, धूमावती, मन्दोदरी, राजमाता, सीता, स्वरूपरानी, सोनियागान्धी चेत्यादीनि प्रमुखानि सन्ति। अनेकेषु पुरुषचरित्रेषु नायकरूपेण पण्डित-जहवारलालनेहरुः, चन्द्रशेखर-आजादः, मोतिलालनेहरुः, फिरोजगान्धी, मदनमोहनमालव्यः, सरदार-वल्लभभाइ-पटेल्, महात्मागान्धी, नाथूरामगोडसे, श्रीलालबाहादुरशास्त्री, डॉ. राधाकृष्णन्, ड.जाकिरहोसेनः, राजनारायणसिंहः, बालगङ्गाधरतिलकः, श्री-अरविन्दघोषः, रवीन्द्रनाथठाकुरः, राजीवगान्धी, सञ्जयगान्धी, श्रीनरसिंहरावः, श्रीलालकृष्ण-आडवाणी, श्रीलालुप्रसादयादवः, श्रीशङ्करदयालशर्मा, श्रीकमलापतित्रिपाठी, श्रीमलायनसिंहयादवः, श्रीचन्द्रशेखरसिंहः, श्री-अटलविहारीवाजपेयी चेत्यादीनि पुरुषचरित्राणि चारुतया कविना चित्रितानि।

अनेन विलक्षणग्रन्थरचनेन कविरयं चत्वारः पुरस्कारान् लब्धवान्-

**अकादेमीपुरस्कारः** - साहित्य-अकादेमी-परिषद्, नई दिल्ली (१९९१)
**कल्पवल्लीपुरस्कारः** - भारतीयभाषापरिषद्, कलकाता (१९९३)
**वाचस्पतिपुरस्कारः** - के.के.विरला फाउडेशन, नई दिल्ली (१९९७)

श्रीवाणी-अलंकरण-पुरस्कारः- रामकृष्ण-जयदयालडाल्मिया, श्रीवाणीन्यास, नई दिल्ली (१९९९) सम्प्रति महाकाव्यमेतत् दशोत्तरशतसर्गात्मकं (११० सर्ग) कविना उपनिबद्धं महत्तमं महाकाव्यरूपेण शताब्द्याः प्रतिष्ठां लभते।

- **कुमारविजयम्**

आचार्यस्य द्विवेदीमहाकवेरन्यतमं महाकाव्यम् 'कुमारविजयमि'ति। पौराणिकवृत्तस्य नवरूपं प्रददाति काव्येऽस्मिन् अयं कविवरः। काव्यमिदं २००० संवत्सरे कालिदाससंस्थानतः (वाराणसी) प्रकाशितम्। काव्यस्य द्वितीयसंस्करणमपि पुनः तस्मादेव संस्थानतः २००७ संवत्सरे प्रकाशितमभूत्। अत्र काव्ये एकादश सर्गास्तथा च ८३२मितानि पद्यानि सन्ति, यत्र सप्तत्रिंशदधिकानि पद्यानि संयोजितानि सन्ति। काव्यस्यास्य सर्गनामानि अधः उल्लिख्यन्ते-

प्रथमसर्गः - तारकशक्तिप्रभावः
द्वितीयसर्गः - कार्त्तिकेयाग्निरूपः
तृतीयसर्गः - अग्निमूर्त्तिस्तुतिः
चतुर्थसर्गः - पवमानमूर्त्तिसमुद्रेकः
पञ्चमसर्गः - व्योममूर्त्तिस्तुतिः
षष्ठसर्गः - चिदीश्वरस्तुतिः
सप्तमसर्गः - तारकविलयः
अष्टमसर्गः - कुमाराभिनन्दनः
नवमसर्गः - शिवोपस्थानः
दशमसर्गः - ब्रह्मदेवस्मितिः
एकादशसर्गः – शान्तिलाभः

महाकाव्येऽस्मिन् कालिदासकृतस्य कुमारसम्भवस्य सर्वाणि पात्राणि उल्लिखितानि सन्ति। अत्र प्राधान्येन पार्वती, कार्त्तिकेयपत्नी देवसेना मैना चेति चरित्राणि विद्यन्ते। तदतिरिक्तानि भगवती-गङ्गा-षट्-कृत्तिकादीनि स्त्रीपात्राणि सन्ति। पुरुषचरित्रेषु खलु अन्यतमाः सन्ति भगवान् शिवः, कार्त्तिकेयः, तारकासुरः, अग्निदेवः, ब्रह्मा, पर्वतराजो हिमालयः, वायुः, इन्द्रः, रुद्रः, मरुत् चेति। अत्र नायकः कार्त्तिकेयो धीरोदात्तः सर्वगुणोपेतो वर्तते। देवकल्याणाय शान्तिस्थापनाय च मातृपितृभक्तः अनन्योऽद्भुतो बालकोऽयं झटित्येव युवकत्वं प्राप्नोतीति तदेव काव्ये वर्णितमासीत्-

ववृधेऽनुदिनं स कोऽप्यसौशिशुरिन्दुः सितपक्षगो यथा।
परिपूर्त्तिमवाप पञ्चभिर्दिवसैरेव तु युद्धकौशले[4]।। इति

काव्येऽस्मिन् भगवता कार्त्तिकेयेन तारकासुरविजयो वर्णितः। न केवलं कार्त्तिकेयस्याविर्भावः, परन्तु तस्य अतीतजीवनवृत्तमपि सनातनमहाकविः द्विवेदी अत्र वर्णयति। महाकवेः कालिदासस्य कुमारसम्भवमिति महाकाव्यस्याख्यानस्य सम्पूर्णत्वं सम्पादयितुं वृत्तमेतदाधारीकृतं कविना। अस्मिन्नेव काव्ये वस्तुनिर्देशपूर्वकं मङ्गलाचरणं प्रस्तौति महाकविरेवम्-

'शिवयोः रमणोत्सवो य आसीत् रमणार्थं न स केवलं बभूव।
मरणार्थमिदं तु तारकस्य विधिमार्गेण सनातनात्मना।। इति

काव्यस्य मङ्गलाचरणांशे पीठिकाबन्धे कविना सुन्दरतया कुमारशब्दस्य व्युत्पत्तिः प्रतिपादिता। तद्यथा -

'क्रीडन् कुमारयसि कुत्सयसे च मारं
तारात्मकं भवसि तेन कुमारसंज्ञः।
कुञ्चार यत्त्वमसि तेन कुमार एवं
व्युत्पत्तयस्त्वयि कुमार समा यथार्थाः'[5]।। इति

महाकाव्येऽस्मिन् विवाहानन्तरं सपरिवारं कन्यायाः पितृकुलागमनस्य भावपूर्णं लालित्यपूर्णं च वर्णनमुपलभ्यते। भगवती पार्वती आशुतोषेण अनुगता पुत्रद्वयं पुरस्कृत्य पितृसद्म समाप्नोति हिमाच्छादितम्। हिमवानपि स्वागतं विदधाति समेषां अत्यन्तं भावपूर्णेन विधिना एवम् –

इदं प्रथमतः सुता पतिगृहादुपेतेति तौ
सुतद्वयसमागतेत्यथ च भर्तृसङ्गत्यथो।
स्तरान् परपरात्पराननुबभूवतुर्वै मुदां
स ईदृगिह सङ्गमो भवति गेहभाजां कदा।।

## काव्यकृद्रूपेण आचार्यः रेवाप्रसादद्विवेदी

काव्यजगति कवेरवदानं न केवलं महाकविरूपेण, अपि तु महाकाव्येतरसाहित्यविरचने निपुणतां विदधाति। कविना स्वाभिनवप्रज्ञया ऐतिहासिककाव्यम्, चरितकाव्यम्, खण्डकाव्यम्, कवितासंग्रहश्चेति विरचितानि। एतेषां विंशतिखण्डकाव्यानि सन्ति। तेषु अनेकानि साम्प्रतिकं विश्वमुपरिकृत्य प्रवर्तन्ते।

- **शतपत्रम्**

महाकवेरेकं खण्डकाव्यं शतककाव्यं शतपत्रमिति कवितायाः स्वरूपविषयकम्।। अत्र पञ्चादशाधिकैकशतसंख्यकानि पद्यानि सन्ति। काव्यस्य विषयो मुख्यतः रूपकालंकारैरुपस्थापितोऽस्ति। रेवाप्रसादद्विवेदीकृतेन हिन्दीभाषानुवादेन समं खण्डकाव्यमिदं १९८७ वर्षे कालिदाससंस्थानतः (वाराणसी) प्रकाशितोऽभवत्।

अत्र कविः कवितायाः निगमागममूलकत्वमुद्घोषयत्येवम् –

निगमागमसंज्ञकौ सुतौ द्वौ प्रतिभा पुंसविनी पुरः प्रसूय।
प्रवयास्तपसा तु यां विलेभे तनयां तां कवितेति भावयामः।।

प्रतिभारूपिणी नायिका कवितां सूते। संस्कृतकवितायाः पुत्रीत्वेन लाभो निगमागमयोः सिद्ध्यन्तरं भवतीति सनातनी परम्परा।

- **प्रथमः**

आचार्यस्य द्विवेदीकवेरेका विशिष्टा कृतिः ‘प्रथमः’ नाम कवितासंग्रहः। अस्मिन् कवितासंग्रहे नव स्फुटकाव्यानि परिलसन्ति। अत्र च साकल्येन ३५३ पद्यानि लभन्ते। काव्यमेतत् १९८८ संवत्सरे कालिदाससंस्थानतः प्रकाशितः।

कवितासंग्रहस्य प्रथमकवितायाः नाम ‘प्रमथः’, अत्र महादेवस्य प्रबोधनाय परमाणुशक्तित्वेन प्रमथोऽस्ति तद्गणः आत्मरक्षायै स्वीकृतः। अत्र विंशतिः पद्यानि विरचितानि सन्ति। कथयति कविरत्र –

भावन् परमाणुभिस्त्वदीये
रचितं भस्म ललाटचत्वरे यत्।
तदिदं परिकर्म रोचतां ते
ननु विज्ञानमिदं तवैव भूतिः।।४।।

द्वितीयकविता ‘चतुर्दशी’ति वैराग्यमयी। अत्रापि १४ कविताभिः शिवस्य स्तुतिः विहितास्ति। तृतीयकविता ‘प्रलापाः’ इति, अत्र धिक्करोति लक्ष्मीं कविः ययासौ अपाकृतः। अत्र आर्थिकं वैषम्यं प्रकटितोऽभूत्। चतुर्थकविता ‘निसर्गः’, मात्सर्यप्रतिशोधनविमर्शिनी पञ्चमकविता च ‘किं न करोमि’ इत्यत्र नियतिचक्रस्य वैपरीत्यमुपरि क्रियते महाकविना। ‘नमो विषाय’ इति षष्ठकवितेयं समाजसमीक्षापरका। सप्तमकविता ‘मृत्यो!’ इति दार्शनिकभावमयी कविता। अष्टमकविता ‘कस्त्वं काम’ इति मनोवैज्ञानिकी कामप्रभावप्रतिपादिका। नवमकविता ‘भावाः’ इति आन्तरिकद्वन्द्व-विनाशपरकेति।

- **रेवाभद्रपीठम् -**

कवेरस्य अपरा कृतिः ‘रेवाभद्रपीठम्’ इति। अत्र १५२ पद्यानि सन्ति। काव्यमिदं १९८८ वर्षे कालिदाससंस्थानतः प्रथमप्रकाशितमभवत्, ततः हिन्दीभाषानुवादेन सह द्वितीयसंस्करणमपि २००३ वर्षे प्रकाशितं कालिदासप्रकाशनतः।

अस्मिन् काव्ये कविना स्वकीयजन्मभूमेः काव्यात्मकं वर्णनं विधीयते। कवेः जन्म अभवद् भारतवर्षस्य मध्यप्रदेशस्य पवित्रधाराया नर्मदायास्तटस्थे नादनेराख्ये ग्रामे। कविना काव्यस्य पीठिकांशे षष्ठश्लोके स्वग्रामस्य नर्मदायाश्च कृते उदारहृदयेन श्रद्धाप्रणामाञ्जलिर्ज्ञापिता -

'सर्वं तदत्र कृपणेतरभावबन्ध-
मादाय वाक्षु हृदयदुहितासु रेवाम्।
श्रीनादनेरसहितां प्रणमन् भवामि
धन्यश्रमः समुपहृत्य विदां वरेभ्यः'[6]॥

काव्येऽस्मिन् आदावेव द्वितीये श्लोके स्वजन्मभूमेः परिचयः एवंप्रकारेण प्रदत्तः कविवरैः -

'अस्ति श्रीनर्म्मदायाः सलिलवति तटे नादनेराभिधानो
ग्रामो भोपालभुक्तौ बुधनिजनपदे शाहगञ्जे च थाने।
यत्पृष्ठे बोरणाऽऽस्ते लसति च पुरतः खर्वटः कोऽपि ढाना।
पूर्वस्यां वामभागे कुसुमपदयुतः खेटको जोन्तलावत्'[7]॥

कविरस्यां कृतौ मातृभूमेर्मनोरमं सौन्दर्यं प्रकटीकर्तुम् उपमाप्रपूरितां रसयुक्तां कवितां कौति। अत्र सुन्दररमण्यः कामदेवं प्रति प्रणयप्रार्थनां कविना इत्थमकारि -

'मारो यत्र पुरन्ध्रिषु स्तुतिशतैः संतिष्ठते दीयतां
मह्यं कुक्षिषु रत्नधातृषु कृपां कृत्वाऽवकाशः क्षणम्।
नो चेद् वः खलु तुल्यकुल्यचरिता सृष्टिः कथं भाविनी
स्वाहाभिः स्वधया च तर्पितुमलं भावी च कः प्राग्भवान्'॥ इति

एवञ्च काव्ये रेवानद्या धाराप्रवाहितस्य भारतवर्षस्य ग्रामाणां व्याप्तिः, सामाजिक-सांस्कृतिकदृश्यं मनोहारितया उपनिबद्धं कविना। काव्येऽस्मिन् सम्पूर्णस्यापि नर्मदांचलस्य सांस्कृतिकं, सामाजिकं, आध्यात्मिकं, धार्मिकञ्च स्वरूपं लालित्यपूर्णेन विधिना उपवर्णितमुपलभ्यते।

- **संस्कृतहीरकम्-**

कवेः एकमैतिहासिकं काव्यं 'संस्कृतहीरक'मिति। अत्र ५६० कविताः सन्ति। काव्यमिदं १९८९ संवत्सरे काशि-हिन्दु-विश्वविद्यालयतः प्रकाशितम्।

अत्र काशी-हिन्दु-विश्वविद्यालयस्य संस्कृतसाहित्यविभागस्येतिहासो वर्णितः कविना। अष्टत्रिंशदभिनन्दनपत्राणि। ऐतिह्योपपादकान्यत्रोपपादकान्यत्रोपनि-बद्धानि। संस्कृतविद्याधर्मविज्ञानसङ्कायस्य इतिहासः कविना उपस्थाप्यते। सङ्कायोऽसौ काश्याः विदुषामासीत् कश्चन तीर्थभूतः आकरः। समेषामेषां विदुषां वैदुषीमवलम्ब्य सनातनकविना स्वकीया काव्यात्मिका वाणी विस्तरेणोपस्थापिताऽस्ति।

- **शकटारम्**

कवेः खण्डकाव्यमेकं 'शकटार'मिति। १२१मितपद्यात्मकं काव्यमिदं २००० वर्षे कालिदाससंस्थानतः (वाराणसी) प्राकाशि। साउथअफ्रिकाराष्ट्रस्य प्रकाशितमभवत्। नेल्सन-मण्डेलामहोदयस्य पञ्चविंशत्यधिकवर्षेभ्यः परं कारावासजीवनान्मुक्तिमुपलक्ष्य स्वान्तःकरणभावेन उद्वेलितः कविः काव्यमिदं प्रस्तौति। कारागारान्मुक्तो नेल्सनमण्डेला अस्य युगस्य शकटाररूपेण चित्रितोऽस्ति। परिवर्तमानमाधुनिकविश्वं प्रति कवेर्जागरूकता संवेदनशीलता च प्रकटिते आस्ताम्। ग्रन्थादौ कविना विषयेऽस्मिन् कथितं यत् -

'शकटार उदित्वारोऽद्य गर्त्तात् प्रविभिद्यावनिमीक्ष्यते करालः।
करयोरिह पिक्ततैव किन्तु भयमस्मात् समुदेति भैरवा स्यात्'[8]।। इति

अस्मिन् खण्डकाव्ये कविः नेल्सनमण्डेलां प्रति अत्याचारिणां बर्बरात्याचारं दृष्ट्वा वर्तमानकालस्य समाजवादिनां प्रति तीक्ष्णकषाघातं करोति। विषयेऽस्मिन् कविः स्पष्टरूपेण कथयामास -

'शकटारशवे समाजवादव्रतिनो हन्त भवन्ति जागरूकाः।
न तु ते शकटारजठराग्निज्वलिते वारिधरायितुं क्रमन्ते'[9]।।

काव्येऽस्मिन् कविः चतुर-दुष्टबुद्धिमतां जनानां अपकार्यकरणे प्रवृत्तिमुपलक्ष्य तीव्रव्यङ्ग्यविद्रुपशाणितवाचः प्रयुनक्ति।

- **शरभङ्गम्**

कालिदासंस्थानतः (वाराणसी) २००१ संवत्सरे प्रकाशितमेतत् खण्डकाव्यं 'शरभङ्गमि'ति। शरभङ्गं नाम ऋषेर्नामानुसारेण प्रस्तुते काव्ये १०८ पद्यानि लभन्ते। कविः काव्येऽस्मिन् परमार्थवादिनः भारतीयदर्शनस्य अध्यात्मरहस्योद्घाटनं सारल्येन प्रकाशयति।

महर्षिः शरभङ्गः यज्ञाग्नौ देहं तत्याज। परब्रह्मणः भगवतो रामस्य दर्शनाकांक्षायां दण्डकारण्ये स्वदेहं धारयामास। देवेन्द्रस्तं सशरीरं स्वर्गप्राप्तिं प्रार्थयति। शरभङ्गऋषयः नानुमोदन्ते ताम्। तैः यत्सात्त्विकमाचरितं तत्सर्वं भगवद्भक्तिभावेन समर्प्य यज्ञाग्नौ मुक्तिः सम्प्राप्ता।

ममता शरभङ्गचित्तकोषे निभूता चेदियमस्ति रामकाये।
स उपस्थित आनिशाम्य तं वै मुनिरेषोऽनल आक्षिपत्स्वदेहम्।।४५।।

- **मतान्तरम्**

'मतान्तर'मिति एकादशैकशतसंख्याकं पद्यात्मकं खण्डकाव्यमेकं कालिदाससंस्थानतः २००१ संवत्सरे प्रकाशितम्। काव्येऽस्मिन् कविना समाजस्य विकृतेस्तथा व्यक्तेर्यथार्थमूल्यमुपस्थापितम्। वर्तमाने समाजे मनुनिरूपितधर्मव्यवस्थायाः आवश्यकता न दृश्यते, स्वार्थान्वेषणाञ्जनाः न विरम्यन्ते। विडम्बनेयं कविना काव्येऽस्मिन् सुष्ठुतया उपस्थापिता। पाषाणहृदयाः पुरुषाः अत्र बहुत्रैव निन्दिताः कविना। कविरत्रोद्घोषयति –

अहमस्मि मतान्तरस्य गाता ननु पौलस्त्यवधोऽस्ति रामदोषः।
क्व नु दानवंशसर्वनाशः क्व नु पत्न्याः पुनराप्तिरिन्द्रियार्थाः।।१।।

'हृदयस्य समाधिना विना यो निजधर्मं वपुषैव संपिपर्त्ति।
अयसा घटितं तदीयमन्तःकरणं नो विभवे प्रियत्वमेति'[10]।। इति

- **शरशय्या**

‘शरशय्या’ इति कवेः खण्डकाव्यमेकम्। काव्यमिदं कालिदाससंस्थानतः (वाराणसी) २००२ वर्षे प्रकाशितम्। अत्र त्रीणि खण्डकाव्यानि संगृहीतानि सन्ति – ‘सुगतो ब्रव्रीति’, ‘वृद्धकुमारी’ तथा ‘शरशय्या’ चेति। सप्तदशाधिकशतसंख्याकैः पद्यैः प्रस्तुते अस्मिन् काव्ये आफगानिस्थानप्रदेशे हिंस्रशासकद्वारा बुद्धमूर्तिध्वंसप्रसङ्गम् आदाय कविना तस्मिन् काले बुद्धदेवस्यान्तःकरणे समुद्भासितो भावावेगः प्रकटीकृतः इह कवितायाम्।

भावान् सुगतो ब्रवीति कण्ठ-ध्वनिमुद्वास्य तु मौनिना स्वरेण।
शृणुते तदिदं सनातनोऽयं वचनस्तस्य महात्मनस्तदित्थम्।।१।।

ऊनत्रिंशच्छलोकैः प्रपूरिते ‘वृद्धकुमारी’ इत्यस्मिन् खण्डकाव्ये अविवाहितानां मुगलशासकानां युवतीनां करुणातिकरुणहृद्ध्वनिः स्थानं लसति।

अयि मानवदेहवल्लरि! त्व प्रसृता च प्रथिता च पुष्पिता च।
त्वयि किन्तु कुतोऽपि दिग्विभागान्निपतत्यत्र मुधुब्रतो न कस्मात्।।१२।।

त्र्यधिकशतसंख्यकैः श्लोकैः ग्रथिते शरशय्येति खण्डकाव्ये पितामहस्य भीष्मस्य जीवनपरिवेदना प्रतिध्वनिता। यस्य जीवनं बाल्यकालान्मृत्यपर्यन्तमासीच्छरशय्यागतमेव –

नो केवलेऽत्र विषमे क्षण एव मह्यं शय्यां शरस्य चरयध्व हमे मदर्थम्।
युष्माभिरत्र गमितः क्व नु कालखण्डे शय्यां शरैर्विरचितां न विचित्ररूपैः।।

- **अमेरिका**

२००८ संवत्सरे कालिदाससंस्थानतः (वाराणसी) प्रकाशितमपरं संस्कृतकाव्यम् ‘अमेरिका’ इति। अत्र त्रिस्रः दीर्घकविताः राजन्ते। प्रथमकविता

'अमेरिका' इति। षड्चत्वारिंशद्द्विशतसंख्याकैः (२४६) पद्यैः कवेः अमेरिकादेशस्य प्राकृतिकसौन्दर्यवर्णनम्, लोसएञ्जलस्-नगर्य्या वर्णनञ्चेत्यत्र जनसाधारण-जलवायु-वेशभूषा-संस्कृति-भव्यानां काव्यात्मकं काव्यिकवर्णनं नयनपथं सुतरामेव नन्दयति। कविरत्रालोचयति तेषां जीवनपद्धतिम् -

अस्या ये वै जनास्तेषां गैरन्वे चन्द्रवर्णता।
कृष्णत्वे तु करालत्वं कालाय समलीयसम्।।

द्वितीयकविता 'एतत्तु याचामहे' इति। अत्र पञ्चपञ्चाशत्संख्याकैः पद्यैः सरस्वतीवन्दना-मयूरनृत्यादिविषयाः सुचारुतया कविना चित्रिताः सन्ति।

एवञ्च समकालिनस्य समाजजीवनस्य विसंगतेस्तीक्ष्णकटाक्षाः महाकविना अत्र साधु उपस्थापिताः सन्ति। तृतीयकविता 'विधेर्होमो निषेधानले' इति। अत्र कवितायां ११.९.२००१वर्षे न्युयार्कनगरे विश्वव्यापारेन्द्रध्वंसनाय वायुयानघर्षणेनातङ्कवादिभिः कृतमाक्रमणं विध्वंसात्मकं वर्णितमस्ति। कवेर्विधेरदृष्टनियमानां विवेचनं दृश्यते।

- **रामपरिसंख्या**

प्रस्तुतोऽयं कवितासंग्रहः २००८ संवत्सरे कालिदाससंस्थानतः (वाराणसी) प्रकाशितः आसीत्। अत्रापि तिस्रः दीर्घकविताः वर्तन्ते – 'रामपरिसंख्या', 'अहमस्म्यहमेव', 'अयि शकुन्तिके!' इति। 'रामपरिसंख्ये'ति कवितायां २२१ पद्यानि सन्ति। अत्र रामायणकाव्यस्य राम-सीता-दशरथ-भरत-रावणादिचरित्राणि सम्बोधितानि। प्रसङ्गतस्तत्र बाबरीमस्जिदवृत्तं दार्शनिकभावनया कविनात्र चित्रितम्। रामस्य वा स्तविका आराधका के इत्येतदत्र कविः वैपरीत्यमपाकृत्य विस्तारयति एवम् –

रामः कस्य! न तस्य यस्य भवने चौर्यार्जितं वैभवं
धर्मिष्ठान् परिचेरिपदीति गृहिणो नीवारमुष्टिम्पयान्।

एके ये धृतराष्ट्रतामुपगता रामो न तेषां स वै
भूत्वा काल उपादधाति विषमामेभ्यः करालां क्रियाम्।।२।।

'अहमस्याहमेव कालिदासः' इति कवितायां द्व्यधिकद्विशत-संख्यकानि पद्यानि परिलसन्ति। अत्र काव्ये सनातनकविः मनुष्याणां साम्प्रतिकीं एकाकिनीं विपरीतां स्थितिं वर्णयत्येवम् –

अहमस्म्यहमेव केवलो वै सविधे मे न हि विद्यते द्वितीयः।
कृष्णास्ति न चित्कला मदीया जादेतत् कृपणायतां प्रकामम्।।१।।

सम्प्रति अर्थस्य साम्राज्यं वरीवर्ति। साम्प्रतिके समाजे स्थितानां जनानां शरीरम्, भोजनम्, चरित्रम् परम्परादीनाञ्च अपाकृतिं न पश्यन्ति जनाः धनदासत्वेन प्रवृत्ताः जीवनस्य यापनाय कालिदासस्योद्भुता प्रतिभा वर्णिता कविना। कवितेयम् आत्मावलोकनपरका रेवाप्रसादस्य।

तृतीयायाम् 'अयि शकिन्तिके / शकुन्तले!' इत्यस्यां कवितायां १२४ पद्यानि सन्ति। अत्र कविना कालिदासकृतस्य शाकुन्तलस्य पुनःसंविधानं कृतं वर्तमानकालदृष्ट्या। शकुन्तलायाः कण्टकाकीर्णं जीवनमुपदीकृत्य तद्रसणे असमर्थान् कण्वादीन् आंगुलीयकमक्षणकर्तारं रौहितमत्स्यमपि उपालम्भयति। कविः कथयत्यत्र –

परितापप्रिय एष कवीन्द्रो यरिवा प्रणयिजनेषु।
निबबन्ध त्वयि कथां प्रकरुणां हन्त हन्त निर्ष्मथकम्।।६।।

- **अयि नीलनदि!**

चतुर्विंशत्यधिकैकशतपद्यात्मिका कवितेयं 'अयि नीलनदि!' इति पाश्चात्यानां देहात्मवादस्य प्रत्याख्यानात्मिका कालिदाससंस्थानतः २००९ संवत्सरे प्रकाशिता। अत्र सनातनकविना द्विवेदिना आफ्रिकामहादेशस्य दीर्घतमा

नीलनदी सप्रशंसनं भारतीयगङ्गा-यमुनानदीभ्यां च समं तुलना विधीयते। नीलनदीतटस्था विविधक्रिया सुचारुतया वर्णिताः सन्ति। यत्र राजन्तेतरां तेषां नूतनरवामनादीनां शवरवाताः न पुनः देवस्थानानि गङ्गातदवदिति। तद्यथा –

तदभूमिषु भारते नदीनां निवसन्त्यार्थमहत्तमाः महार्हाः।
श्रुतयः स्मृतयश्च येषु मार्गान् रचयन्त्याप्ततमाश्चतुष्पुमर्थान्।।१।।

- **हरिहरावदानकाव्यम् (करपात्रस्वामिचरितम्)**

चरितकाव्यमेकं 'हरिहरावदानकाव्य'मिति २००९ तमे वर्षे कालिदाससंस्थानतः (वाराणसी) प्रकाशितम्। अत्र कविः एकषष्ट्युत्तरद्विशतं पद्यैर्महापुरुषस्य करपात्रस्वामिनो जीवनवृत्तं तथा च तस्य सामाजिक-राजनैतिकाध्यात्मिक-साहित्यिकयोगदानञ्च वर्णितवान्। ग्रन्थेऽस्मिन् खण्डद्वयं वर्तते – 'वैभवखण्डम्', 'वंशखण्ड'ञ्चेति। अत्र विशेषगौरवास्पदं यत् ग्रन्थस्य प्रकाशकीयवक्तव्यं डॉ. सदाशिवद्विवेदिना तथा नान्दीवाक् अभिराजराजेन्द्रमिश्रेण च विलिखितम्। तदुदितम् -

'पाण्डित्यस्य परा स्थिती रसिकतोत्कर्षस्य रासोत्सवो
नेत्रोन्मीलनसद्व्रतस्य पृथुता श्रौतस्थितेः सौभगम्।
कान्तासम्मितदेशना प्रभुसुहृत्सम्भावनापद्मयोः
स्वच्छाच्छेदसरः कथा हरिहरानन्दप्रभोर्द्योत्यते'।। इति ।

- **रत्नस्वरूपावदानकाव्यम् (श्रीस्वरूपानन्दावदानम्)**

'रत्नस्वरूपावदानकाव्य'मिति प्रस्तुतं काव्यमिदं हिमालयस्थ-वदरिकाश्रमज्योतिर्मठतः २०१० संवत्सरे प्रचरद्रूपताम् गतम्। अस्मिन् काव्ये सप्ताधिकत्रिशतसंख्यकैः पद्यैः कविना जगद्गुरोः पीठद्वयाधीश्वरस्य स्वामिस्वरूपानन्दसरस्वतीमहाराजस्य जीवनवृत्तमुपजीव्य तद्वर्णनं विधीयते।

- **अवदानलतिका**

अवदानलतिका इति त्रिंशदधिकद्विशतसंख्याकैः पद्यैः प्रस्तुते इह काव्यग्रन्थे षड्जैनधर्मावलम्बिनां तथा च षण्णां ब्राह्मणानां वर्तमानस्थितिः सरलतया सुचारुतया च वर्णितास्ति। अप्रकाशितमेतत्खण्डकाव्यं सम्प्रत्यपि।

- **श्रद्धावाष्पम्**

'श्रद्धावाष्प'मिति प्रशस्तिकाव्यं २००९ संवत्सरे प्रकाशितम्। काव्येऽस्मिन् उज्जयिन्यामनुष्ठिते कालिदाससमारोहे समुपस्थितसंस्कृतपण्डितानां यशस्विनां रङ्गकर्मिणाञ्च च कृते पञ्चाशीतिमितैः पद्यैः कवेरावेगान्विता प्रशस्तिर्वर्तते।

- **नमो निर्वाचनम्**

२०१४ संवत्सरे कवेः प्रकाशितमिदं प्रशस्तिकाव्यं नमो निर्वाचनमिति। अत्र कविः रेवाप्रसादद्विवेदी नवनिर्वाचितस्य जनप्रतिनिधेः नरेन्द्रमोदिनः लोकसभानिर्वाचनावसरे समुपस्थितां राजनीतिकिं परिस्थितिं सुचारुतया सरलतया याथार्थ्येन च वर्णयति।

**नाट्यकाररूपेण आचार्यः द्विवेदी**

नाट्यं हि नाम सहृदयमनोहारि अतीव चमत्कारि साहित्यम्। साहित्यस्यास्याकर्षणाक्षमता प्रशंसार्हा। कवेर्योगदानं श्रव्यकाव्यानि अतिरिच्य दृश्यकाव्येषु विशेषेण नाट्यसाहित्ये प्रसारितमस्ति। कवेरस्य नाटकद्वयं सहृदयानां नयनपथे पान्थायते।

- **यूथिका**

१९७६ ईशवीयाब्दे कालिदाससंस्थानतः (वाराणसी) प्रकाशिता चतुरङ्किका तावन्नाटिका 'यूथिका' इति। आङ्ग्लसाहित्ये प्रभूतयशोभाजः शेक्सपीयरस्य आङ्गलनाटकम् 'रोमियो जुलियट्' इत्यस्य काव्यस्य कथावस्तु

आधारीकृत्य तस्य संस्कृतनाट्यरूपान्तरं यूथिका इत्यनेन प्रस्तौति महाकविः। प्रस्तुतमिदं नाटकम्। नाटकार्थम् उत्तरप्रदेशसर्वकारैः रेवाप्रसादः सभाजितः।

- **सप्तर्षिकांग्रेसम्**

२००० संवत्सरे प्रकाशितं 'सप्तर्षिकांग्रेस'मिति नाटकं कालिदाससंस्थानतः (वाराणसी) प्रचरद्रूपताम् इतम्। काव्येऽस्मिन् १९७७ वर्षे लोकसभानिर्वाचने सर्वभारतीय (जातीय) कांग्रेसदलस्य शोचनीयपराजयस्य सुस्पष्टमैतिहासिकवृत्तं कविनोपस्थापितम्। नाटकमिदं दशाङ्कोपेतम्। सनातनकविः द्विवेदी नाटकस्य वृत्तं मनोहारिवार्तालापेन सहृदयानां समक्षं प्रस्तौति। वीररसप्रधाने दृश्यकाव्ये अस्मिन् कविना अटलविहारीवाजपेयस्य उत्तमप्रशासकत्वात् अटलविहारी वाजपेययज्ञसंज्ञया विभूषितः। अत्र काव्ये कांग्रेसदलस्य नीतयः दलस्य वैफल्यं च सुष्ठु वर्ण्यन्ते।

## कथाकृद्रूपेण आचार्यो द्विवेदी

कवेर्मौलिकरचनाभाण्डे तिस्रः कथा राजन्ते। ताः खलु 'त्रिपादी', 'कस्य दोषः' तथा 'कोऽसौ' चेति। सर्वाः कथाः दिल्लीस्थसाहित्य-अकादेमीतः 'संस्कृतप्रतिभा' इत्यस्यां पत्रिकायां प्रकाशिताः जाताः।

## आलंकारिकरूपेण आचार्यो द्विवेदी

आचार्यद्विवेदी न केवलं समालोचकः काव्यनिर्माता शास्त्रसम्पादकश्च। साहित्यशास्त्रे कवेरस्यावदानमनन्यमिति। तेन अलंकारशास्त्रे 'काव्यालंकारकारिका', 'नाट्यानुशासनम्', 'साहित्यशारीरकम्', 'अलं ब्रह्म', 'सौन्दर्यपञ्चाशिखा', 'क्रमोपञ्चाशिखा', 'साहित्यालंकारः' चेति अलंकारग्रन्था विरचिताः।

महाकविना रेवाप्रसादद्विवेदिना संस्कृतसाहित्यशास्त्रे 'अलं ब्रह्म' इत्येकं नवीनं सनातनवाक्यं साहित्यशास्त्रस्य प्रदायि। तन्मते, अलं

भावात्मकोऽलंकारो हि काव्यस्यात्मेति। अत्र अलमिति पदं ब्रह्मवाचकम्। कविप्रदत्तं महावाक्यमिदं बहुभिरालंकारिकैर्बहुधा चर्चितम्। वैयाकरणदृष्ट्या प्रयुक्तं अलम् इति पदम् तत्परं च द्विवेदिना ब्रह्मेति पदं संयोजितम्। आसीत् तार्किकदिशा ब्रह्मपदस्यार्थप्रतिपादनाय कृतप्रयत्नः प्रो.भगवत्-शरण-शुक्लः। आचार्यद्विवेदी साहित्यशास्त्रस्यागमरूपेणाग्निपुराणं स्वीचकार। तेन योगसूत्रानुसारं काव्यलक्षणमकारि। योगशास्त्रे यथोक्तम् 'शब्दज्ञानानुपातिवस्तुशूण्यः विकल्पः' इति, तथैव 'शब्दज्ञानानुपाति-वस्तुशूण्यश्चमत्कारी विकल्पः काव्यमि'ति। काव्यस्य लक्षणमिदं साहित्यशास्त्रे अभिनवमेव दृश्यते। न केवलं काव्यलक्षणे, काव्यात्मानुसन्धाने, सौन्दर्यसम्पादने च भावकस्यास्य अभिनवत्वमुल्लेखार्हमिति। प्रो.द्विवेदिना संस्कृतालंकारशास्त्रेतिहासे विस्तृतचर्चा कृता। कविना समग्रसाहित्यशास्त्रपरम्परा पञ्चकल्पैर्विभज्यते। यथा-

प्रथमः पूर्णताकल्पः - दोषाभावः।
द्वितीयः गुणकल्पः - वर्णधर्मात्मकः काव्यगुणात्मकश्च।
तृतीयः लक्षणकल्पः - भरतमुनिस्वीकृतः अस्फुटालंकारः।
चतुर्थः अलंत्वरूपकल्पः - स्फुटालंकारः।
पञ्चमः साहित्यकल्पः - आचार्यभोजराजसम्मतः शब्दार्थयोः द्वादशरूपसम्बन्धश्चेति।

पुनः समस्तसाहित्यशास्त्रस्य परम्परा पञ्चक्रान्तिद्वारा विभज्यते-

प्रथमा कान्तिः - ध्वनिवादः।
द्वितीया क्रान्तिः - अभिनकैशक्तिवादः।
तृतीया क्रान्तिः - द्वादशशक्तिवादः।
चतुर्थी क्रान्तिः - संशोधनात्मकसाहित्यागमरूपी।
पञ्चमा क्रान्तिः - विकल्पवादः

आलंकारिकप्रवरैः ग्रथितानि प्रधानसाहित्यशास्त्रग्रन्थाः मौलिकाः -

- **काव्यालंकारकारिका**

कविः भावयितृप्रतिभया 'काव्यालंकारकारिके'ति अलंकारग्रन्थं रचितवान्। ग्रन्थोऽयं हिन्दी-आङ्गलभाषानुवादेन सह १९७६ संवत्सरे चौखम्भासंस्कृतप्रतिष्ठानतः प्रकाशितः। ग्रन्थस्य द्वितीयसंस्करणं २००१ तमे वर्षे केवलमेव हिन्दीभाषानुवादेन सह प्रकाशितं जातम्। पद्यशैल्या रचिते ग्रन्थेऽस्मिन् पञ्चदशाधिकरणानि प्राप्यन्ते, तत्र २६३ पद्यानि सन्ति।

ग्रन्थानुसारेण 'अलंकार' एव काव्यस्यात्मा'। अलंकारदिशा काव्यस्य सर्वं तत्त्वमुपस्थापितम् कविना। 'अलंकारः काव्यस्य मौलं तत्त्वं भवति'। कविना उक्तमेवमेव -

'काव्यं ज्ञानमलङ्कारस्तस्यात्मा मध्यमाभिधा।
संविदव्यभिचारेण तत्रोपाधिश्च वाग्विदे'।। इति।

ग्रन्थे 'रसोऽपि अलंकार एव'। अलम्भावात्मके अलंङ्काके सर्वाण्यपि काव्यतत्त्वानि समाविशन्ति –

अलम्भावो ह्यलङ्कारः स च सौन्दर्यतत्कृतौ।
विभन्तात्मा विभुर्जीवब्रह्मणः चिद्धनो यथा।।

अलङ्कारः काव्यात्मतां बिभर्ति काव्ये स्थितत्वात् न पुनः रसो यः सहृदयैकनिष्ठः। अन्यकाव्यस्थितः धर्मः यद्यन्यस्य आत्मतां भजेत् तर्हि कोऽपि लोकेऽस्मिन् मृतो न स्यात्। प्रतिभैककारणतां स्वीकुर्वन्ति आचार्याः काव्यनिर्माणविषये। धर्मस्य रक्षा युगावश्यकतापूर्तिः राष्ट्रदेवप्रबोधनम् इत अभिनवप्रयोजनानि काव्यस्यास्य प्रवर्तितानि। अलङ्कारस्य अवाच्यता वाक्यार्थरूपत्वात् भवतीति सिद्धान्तितमत्र आचार्यैः। काव्यं भवति ज्ञानैकरूपं

तस्य कारणस्य प्रतिभाया ज्ञानैकरूपत्वात्। दोषाभावः प्राग्भावो भवति। आचार्योऽत्र कथयति -

वृष्टिः काव्यं कविर्मेघः सस्यसंपद् रसा इमे।
वृष्टिमात्रैकविज्ञानं वयं चातकचञ्चवः।।२५३।।

मध्यप्रदेशसर्वकारेण पुरस्कृतोऽयं ग्रन्थः आधुनिककाव्यशास्त्रचर्चायाम् अतीव महत्त्वपूर्ण आसीदिति।

- **नाट्यानुशासनम्**

मुनीनां मुनिं भरताचार्यमाश्रित्य आचार्य-द्विवेदी 'नाट्यानुशासनम्' नाम नवीनतमं नाट्यशास्त्रं रचितवान्। शास्त्रमिदं १९८६, १९९० तथा १९९६ तमे वर्षे कालिदाससंस्थानतः प्रकाशितम्। पद्यशैल्या रचिते शास्त्रे ४११ पद्यानि ग्रथितानि सन्ति। सुविस्तृते शास्त्रे पञ्चविभागाः सन्ति। ते यथा - नाट्यानुशासनम्, भारतदर्शनम्, नाट्यशारीरकम्, कलासमाधिः तथा रसभोगप्रकरणञ्चेति। अस्मिन् नाट्यतत्त्वग्रन्थे शास्त्रकृता नाट्यस्य नियमाः नाटकस्य सङ्गताः वेदिनिर्माणविधयश्चोपस्थाप्यन्ते। शास्त्रस्यादावेव उन्मेषे प्रथमश्लोके कविना उच्यते-

'दृष्ट्वा योगेन सांख्यस्य नाट्यवेदे विपर्ययम्।
सनातनो युगायाऽस्मै कुर्वे नाट्यानुशासनम्'।। इति

- **साहित्यशारीरकम्**

कवेः 'साहित्यशारीरकम्' नाम अलंकारग्रन्थः १९९८ संवत्सरे सम्पूर्णानन्द-संस्कृतविश्वविद्यालयात् (वाराणसी) प्रकाशितः। कविना भारतवर्षस्य धामचतुष्टयस्य नामान्याधृत्य ग्रन्थस्य चत्वारो विभागाः निर्दिष्टाः - काञ्चीधाम, शारदाधाम, धाराधाम, काशीधाम चेति।

काञ्चीधामनाख्ये प्रथमाधिकरणे विद्वज्जनानां तथा देवतानां स्तुतिर्विहितास्ति, शारदाधामनामके द्वितीयाधिकरणे काव्यशरीरमालोचितमस्ति। धाराधामाख्ये तृतीयाधिकरणे काव्यस्य अलंकारः, गुणः रीतिः, लक्षणा, शब्दशक्तिपाकः, ध्वनिः, रसश्चेत्यादिविषयाः सुष्ठुतया वर्णिताः। काशीधामाख्ये चतुर्थेऽधिकरणे प्रस्थानभेदः, काव्यालंकारकारिका, नाट्यानुशासनम्, भारतदर्शनम्, नाट्यशारीरकं, रसभोगश्चेत्यादिविषयाः संकलिताश्चर्चिताश्चेति।

- **अलं ब्रह्म**

'अलं ब्रह्म' इति काव्यशास्त्रीयग्रन्थः कवेरपरोऽलंकारग्रन्थः। ग्रन्थोऽयं कालिदाससंस्थानतः (वाराणसी) २००५ संवत्सरे प्रकाशितः। ग्रन्थे खण्डद्वयं वर्तते - काव्यखण्डम्, नाट्यखण्डञ्चेति। प्रथमे खण्डे किं नाम काव्यम्, काव्यनिष्पत्तिः, शब्दत्वविचारः, साहित्यतत्त्वविमर्शः, साहित्यदर्शनम्, काव्यतत्त्वे ध्वनेः संज्ञा, रसनिष्पत्तिप्रक्रिया, भुक्तिवादः, स्थायिभावः, लक्षणायाः षड्विधत्वम्, व्यञ्जनाविचारः, जगन्नाथस्य काव्यलक्षणविचारश्चेत्यादिकालंकारशास्त्रसम्बन्धीयतत्त्वानि समुल्लिखितानि सन्ति।

द्वितीये खण्डे नाट्ये भरतनाट्यशास्त्रस्य सम्पादनम्, रूपकस्य वस्तुविभागः, अवस्थार्थप्रकृतिसन्धिभेदाश्चेत्येताः विषयाः सुविन्यस्ताः। काव्यतत्त्वात्मके शास्त्रेऽस्मिन् कवेः मौलिकी कृतिरियमनन्यैव दृश्यते।

## मनोग्राफ्-निर्मातृरूपेण कविः द्विवेदी

कविः रेवाप्रसादद्विवेदी कश्चन मनोग्राफ्-निर्मातृत्वेन प्रसिद्धः। 'आनन्दवर्धनः' शीर्षको ग्रन्थः ध्वनिसिद्धान्तसमीक्षात्मकाः हिन्दीभाषायां हिन्दी-अकादेम्या भोपालतः १९७३ संवत्सरे प्रकाशितः। अत्र नवीनध्वनिसम्प्रदायस्य अवधारणं प्रकटितमासीत्।

उत्तरप्रदेशसर्वकारेण पुरस्कृतोऽयं 'भारतीय काव्यसमीक्षा में अलंकार सिद्धान्त' इति मनोग्राफजातीयग्रन्थः १९८० संवत्सरे दिल्लीस्थात् म्याकमिलन-एण्ड-कम्पनीत्यतः प्रकाशितः। अत्र अलंकारराद्धान्ताः प्रतिपादिताः। अपि च, 'कालिदास - मानवशिल्पी महाकवि' इति ग्रन्थे कालिदासस्य काव्यकला आलोचितास्ति। ग्रन्थोऽयं १९७३ संवत्सरे कालिदाससंस्थानतः (वाराणसी) प्रकाशितः। 'संस्कृत काव्यशास्त्र का आलोचनात्मक इतिहास' नाम्नि ग्रन्थे प्राचीनकालादारभ्य वर्तमानकालं यावत् काव्यशास्त्रीयग्रन्थानां प्रमेयात्मकं सारगर्भं पर्यालोचनं कृतं कविना। काव्यशास्त्रालोचनापरम्परा चतुर्धामानुसारं परिकल्प्य काञ्ची-शारदा-महाकालेश्वर-काशीधामभेदैरालोच्यविषयः समुपस्थापितः। तत्र भरतमुनिः दण्डी चेति काञ्चीधामपरम्परायाः, भामह-वामन-आनन्दवर्धन-कुन्तक-मम्मटाः शारदाधामपरम्परायाः, धनञ्जय-धनिक-भोजाः महाकालेश्वरधामपरम्परायास्तथा च अप्पयदीक्षित-जगन्नाथ-विश्वेश्वर-रेवाप्रसादाः काशीधामपरम्परायाः आचार्याः इति ग्रन्थे इह वर्णितम् आश्चर्यजनकतया। ग्रन्थोऽयं कालिदाससंस्थानतः (वाराणसी) प्रकाशालोकं प्राप्तः। ग्रन्थे धामचतुष्टयं तथा पञ्च कल्पानि सन्ति।

## कोशनिर्मातृरूपेण रेवाप्रसादः

कविस्तथा समालोचकः प्रो.द्विवेदी कालिदासस्य सर्वेषां ग्रन्थानाम् वर्णनानुसारं (अ इत्यतः हपर्यन्तम्) शब्दानुक्रमणिकाया निर्माणं कृतवान्। कोशग्रन्थोऽयं 'कालिदासशब्दानुक्रमकोशः' इत्यभिधया कालिदाससंस्थानतः २०१७ संवत्सरे प्रकाशितः आसीदिति।

## शोधप्राबन्धिकरूपेण रेवाप्रसादः

आचार्यो रेवाप्रसादद्विवेदी कश्चन प्रख्यातः शोधप्रबन्धकारः समासीत्। संस्कृत-हिन्दी-आङ्गलभाषासु नूनाधिकाः दशाधिकशतसंख्यकाः (११०) शोधप्रबन्धाः कविवरैस्तथा समालोचकैरालिखिताः। ते च प्रबन्धाः न केवलम् अस्मद्देशे, विदेशेष्वपि विविधपत्रिकासु प्रकाशिताः जाताः।

## भाष्यनिर्मातृरूपेण आचार्यः द्विवेदी (शास्त्रीयग्रन्थानां हिन्दीभाष्यम्)

आचार्यैर्द्विवेदीमहाभागैर्मौलिकरचनया समं बहूनां शास्त्रीयग्रन्थानामपि भाष्याणि विरचितानि। अधस्तेषां परिचयः प्रदीयते -

- महिमभट्टकृतस्य 'व्यक्तिविवेकः' इत्यस्य हिन्दीभाषानुवादेन सह हिन्दीभाष्यम् लिखितं रेवाप्रसादेन। कार्यमिदं १९६४ संवत्सरे चौखम्भासंस्कृतसीरीज् (वाराणसी) इत्यतः प्रकाशितमासीत्।
- आचार्यद्विवेदी 'रुय्यककृतम् अलंकारसर्वस्वम् तथा अलंकारविमर्शिनी' इति ग्रन्थस्योपरि हिन्दीभाष्यं रचितवान्। भाष्यमिदं १९७१ संवत्सरे चौखम्भासंस्कृतसीरीज् (वाराणसी) इत्यतः प्रकाशितमासीत्।
- मुकुलभट्टस्य 'अभिधावृत्तमातृका' इति ग्रन्थस्य हिन्दीभाष्यं प्रस्तुतं अलंकारशास्त्रकृता रेवाप्रसादद्विवेदिना। भाष्यमिदं १९७३ संवत्सरे चौखम्भासंस्कृतसीरीज् (वाराणसी) इत्यतः प्रकाशितमासीत्।
- मम्मटभट्टस्य 'शब्दव्यापारविचार' इति ग्रन्थस्य हिन्दीभाष्यं निर्मितं कविना। तद्भाष्यं १९७४ संवत्सरे चौखम्भासंस्कृतसीरीज्, वाराणसी इत्यतः प्रकाशितमभवत्।
- 'काव्यालंकारकारिके'ति ग्रन्थस्य हिन्दीभाषानुवादेन सह हिन्दीभाष्यं २००१ संवत्सरे कालिदाससंस्थानतः (वाराणसी) इत्यतः प्रकाशितमासीत्।
- भावप्रकाश इत्यस्मिन् शारदातनयस्य ग्रन्थे हिन्दीभाषानुवादः २०१९वर्षे इन्दिरागाँधीराष्ट्रीयलोकेन्द्राय कृतः। सम्प्रति २०२२वर्षे प्रकाशितः। सम्पादनमपि कृतं ग्रन्थस्यास्य आचार्यवर्यैः।

## सम्पादकरूपेण आचार्यः द्विवेदी (सम्पादितग्रन्थाः)

कविर्नैकान् ग्रन्थान् सम्पादितवान्। ते च सम्पादितग्रन्थाः निम्ने उल्लिख्यन्ते-

**क). रघुवंशदर्पणः -** १९७३ तमे वर्षे हेमाद्रिकृता 'रघुवंशदर्पणो' नाम टीका तेन सम्पादिता प्रकाशिता च। ग्रन्थोऽयं पाटनामण्डलस्य काशीप्रसाद-जायसवालशोधसंस्थानतः प्रकाशितः।

**ख). कालिदासग्रन्थावली** – 'ऋतुसंहारम्', 'मेघदूतम्', 'कुमारसम्भवम्', 'रघुवंशम्', 'मालविकाग्निमित्रम्', 'विक्रमोर्वशीयम्', 'अभिज्ञानशकुन्तलम्' चेति कालिदासकृतीनां समाकलनं 'कालिदासग्रन्थावली'त्यभिधया सम्पादितम् रेवाप्रसादेन। सम्पादनस्यास्य प्रथमसंस्करणं १९७६ संवत्सरे, द्वितीयसंस्करणं १९८६ संवत्सरे, तृतीयसंस्करणमपि प्रकाशितमभूत्।

**ग). ऋतुसंहारम्-** १९९० ईशवीयाब्दे दिल्लीस्थ-साहित्य-अकाडेमीतः कालिदासस्य ऋतुसंहारम् नाम खण्डकाव्यस्य सम्पादनं विहितमनेन।

**घ). कुमारसम्भवम्-** अरुणगिरिनाथ-नारायणटीकासमेतं कालिदासस्य कुमारसम्भवम् इत्याख्यं महाकाव्यं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयात् कविना सम्पादितं प्रकाशितञ्च।

**ङ). रघुवंशम्-** १९९३ संवत्सरे दिल्लीस्थ-साहित्य-अकाडेमीतः कालिदासस्य रघुवंशसमिति महाकाव्यस्य नवीनस्वहस्तलिखितपाण्डुलिपिना सह सम्पादितं प्रकाशितमिति।

**च). काव्यप्रकाशः -** मम्मटस्य 'काव्यप्रकाशः' इत्यलंकारग्रन्थः साहित्यचूडामणिः विवरणसमेतः काशीहिन्दुविश्वविद्यालयतः सम्पादितः प्रकाशितश्च। कवेरस्य मम्मटीयकाव्यप्रकाशस्य मूलपाठः टिप्पनीसमेतः अपरं सम्पादनं काशीहिन्दुविश्वविद्यालयात् प्रकाशितमभूत्।

**छ). रसार्णवसुधाकरः** – 'रसार्णवसुधाकरः' इति ग्रन्थोऽयं १९७० संवत्सरे संस्कृतपरिषदः (सागरः) संशोधनेन प्रकाशितः।

**ज). भारतीयकाव्यमीमांसा -** कवेः 'भारतीयकाव्यमीमांसा' इति ग्रन्थः १९८७ संवत्सरे राजस्थानविश्वविद्यालस्य दर्शनविभागतः प्रकाशितः।

**झ). शृङ्गारप्रकाशः-** सम्पूर्णः 'शृङ्गारप्रकाशो' नाम ग्रन्थः कालिदाससंस्थानतः (वाराणसी) २००७ संवत्सरे रेवाप्रसादेन सम्पादितः। अस्मिन् ग्रन्थे भागद्वयं वर्तते। प्रथमे भागे १-१४ प्रकाशाः लभ्यन्ते, द्वितीयभागे च १५-३६ प्रकाशाः लभ्यन्ते। प्रकाशितग्रन्थोऽयं २०६८ पृष्ठात्मकः आसीत्।

**ञ). सत्यनारायणव्रतकथा -** आचार्यो रेवाप्रसादद्विवेदी मूलपाठेन सह हिन्दीभाषया सत्यनारायणव्रतकथां १९९९ तमे वर्षे कालिदाससंस्थानतः समपादयत्।

**ट). शिवमहिम्नस्तोत्रम् -** १९९९ संवत्सरे कालिदाससंस्थानतः (वाराणसी) मूलपाठेन हिन्दीभाषानुवादेन च सह 'शिवमहिम्नस्तोत्रम्' प्रकाशितम्।

**उपसंहृतिः**

आधुनिकसंस्कृतसाहित्यजगति स्वाधीनभारतवर्षस्य लेखकेषु अन्यतमस्तावदाचार्योः रेवाप्रसादद्विवेदी। यद्यपि प्रो. द्विवेदिनो जन्म पराधीनभारतेऽभवत्, तथाप्यसौ कविः स्वाधीनभावेन स्वाधीनभारते साहित्यसाधनामकरोत्। काव्येषु कवेः अनन्या प्रतिभा श्रूयते दृश्यते च। स्वजीवनदशायां कविना त्रयोदशसहस्राधिकमौलिकश्लोकरचनानां प्रयत्नः कृतः।

कवेः लेखनशैलीं पर्यवेक्ष्य केचन समीक्षकाः वदन्ति यद् आधुनिकसंस्कृतसाहित्यजगति आधुनिकबाणो भवति आचार्यः रेवाप्रसादद्विवेदी। कवेः रचनायां काठिन्यं वर्तते बाणस्य काव्यशैलीवत्, परन्तु काव्यान्ते काव्यावबोधे चामृतरससिञ्चनस्य वर्षणं संघटते सहृदयहृदयमनसि। साहित्यरचनापरिसरे साहित्यपर्यवेक्षणक्षेत्रे च सर्वत्रैव कवेः सुदृढा विचारणा लक्षणीया। कारयितृ-भावयितृप्रतिभयोः सम्मेलनं संलक्ष्यते कविद्विवेदिहृदये।

कवेरस्य रचना भाविकालस्य छात्रसमाजे सहृदयमनसि च नितरां प्रभावं विस्तारयेदिति आशां मनसि निधाय परिशेषे शक्यवचं यत् आधुनिकसंस्कृतसाहित्यनभसि कविरूपेण तथा नाट्यकाररूपेण च आचार्यस्य रेवाप्रसादद्विवेदिनो नाम चिरं स्मरणीयमभवत् भवति भविष्यतीति शिवम्।

## सहायकग्रन्थपञ्जी

उपाध्याय, रामजी- *संस्कृत साहित्य का आलोचनात्मक इतिहास*, चौखम्बा, वाराणसी, १९९३।

उपाध्याय, वलदेव और राधावल्लभ त्रिपाठी – *संस्कृत वाङ्मय का बृहत् इतिहास*, उत्तरप्रदेश संस्कृत संस्थान, लक्ष्मौ, १९९७।

चट्टोपाध्याय, ऋता - *आधुनिक संस्कृत साहित्य १९१०-२०१०, छोटगल्प ओ नाटक*, प्रोग्रेसिभ पावलिशार्स, कलकाता, पुनर्मुद्रण, २०१९।

चट्टोपाध्याय, जयश्री – *अलंकार साहित्येर समृद्ध इतिहास*, संस्कृत पुस्तक भाण्डार, कलकाता, १४२० बङ्गाब्द।

त्रिपाठी, राधावल्लभ– *संस्कृतसाहित्य : बीसवीं शताब्दी*, राष्ट्रियसंस्कृतसंस्थान, दिल्ली, १९९९।

त्रिपाठी, राधावल्लभ - *संस्कृतसाहित्य का अभिनव इतिहास*, विश्वविद्यालय प्रकाशन, वाराणसी, २०१३ (चतुर्थसंस्करणम्)।

त्रिपाठी, राधावल्लभ और पाण्डेय, रमाकान्त - *आधुनिक संस्कृत साहित्य*, प्रतिभा प्रकाशन, दिल्ली, २००१।

दाधीच, रामकुमार - *आधुनिकसंस्कृतसाहित्येतिहासः*, हंसा प्रकाशन, जयपुर, २०१८।

दाशः, नारायणः - *संस्कृतसाहित्ये पश्चिमबङ्गस्यावदानम्*, कथाभारती, कलिकाता, प्रथमसंस्करणम्, २०१३।

द्विवेदी, रहसविहारी (प्रणेता सम्पादकश्च) - *साहित्यविमर्शः*, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी, २००२ (प्रथमं संस्करणम्)।

द्विवेदी, रहस विहारी - *अर्वाचीनसंस्कृतमहाकाव्यानुशीलनम्*, संस्कृत परिषद्, सागर, मध्यप्रदेश।

द्विवेदी, रहसविहारी - *संस्कृत साहित्य का अभिनव इतिहास*, विश्वविद्यालय प्रकाशन, वाराणसी, २००५ (प्रथमं संस्करणम्)।

पाठक, जगन्नाथ - *संस्कृत वाङ्मय का बृहद् इतिहास* (सप्तम खण्ड) *आधुनिक संस्कृत साहित्य का इतिहास*, उत्तरप्रदेश, संस्कृत संस्थान, लखनउ, २०००।

प्रीतिप्रभा, गोयल - *संस्कृत साहित्य का इतिहास* (लौकिक खण्ड), राजस्थानी ग्रन्थागार, जोधपुर, २००६ (द्वितीय संस्करण)।

मुखोपाध्याय, अञ्जलिका - *देशे विदेशे संस्कृत चर्च्चा*, संस्कृत पुस्तक भाण्डार, कलकाता, २०२१ (प्रथम प्रकाश)।

मुसलगाँवकर, केशवराव - *आधुनिक संस्कृत काव्य परम्परा*, चौखम्बा विद्याभवन, वापाणसी, २००४।

वन्द्योपाध्यायः, धीरेन्द्रनाथः - *संस्कृतवाङ्मयस्य इतिहासः*, संस्कृतपुस्तकभाण्डारः, कोलकाता, २०१४ (प्रथमसंस्करणम्)।

शर्मा, मञ्जुलता - *अर्वाचीन संस्कृत साहित्य दशा एवं दिशा*, परिमल पाब्लिकेशन, दिल्ली, २००४।

शुक्ल हीरालाल - *आधुनिक संस्कृत साहित्य*, चरना प्रकाशन, इलाहाबाद, १९७१।

श्रीवास्तव, आनन्द कुमार - *आधुनिक संस्कृत काव्यशास्त्र*, इस्टर्न वुक लिंकर्स, दिल्ली, २००५।

शुल्क, विजय शंकर और सदाशिव कुमार द्विवेदी - *संस्कृत साहित्य के वटवृक्ष (सनातनकवि महामहोपाध्याय रेवाप्रसाद द्विवेदी)*, इन्द्रिरा गाँधी राष्ट्रीय कला केन्द्र, नइ दिल्ली, २०१८।

सदाशिवकुमार द्विवेदी – *सनातनस्य काव्यवैभवम्,* राष्ट्रियसंस्कृतसंस्थानम्, नई दिल्ली, २०१३।

सेनः, शुभ्रजित् - *भारतवर्षे आधुनिकसंस्कृतसाहित्यम् : विहङ्गमदृष्ट्या परिशीलनम्* (Modern Sanskrit Literature in India : A Bird's eye view), संस्कृतपुस्तकभाण्डारः, कोलकाता, २०१९ (प्रथमसंस्करणम्)।

## तथ्यसूत्राणि

[1] *उत्तरसीताचरितम्* (९.५४)

[2] *स्वातन्त्रसम्भवम्* (सर्गः-१, श्लोकः-१)

[3] तत्रैव, श्लोकः-२

[4] *कुमारविजयम्* (सर्गः-१, श्लोकः- २४)

[5] तत्रैव (१.१)

[6] *रेवाभद्रपीठम्* (पीठिका, श्लोकः ६)

[7] तत्रैव (श्लोकः २)

[8] *शकटारम्* (श्लोकः -1)

[9] तत्रैव (श्लोकः 9)

[10] *मतान्तरम्* (पुटम् ४५)

# प्रोफेसर हरिराम आचार्य

**डॉ. भावना आचार्य**

सारस्वत साधनानिष्ट राष्ट्रपति सम्मानित डाँ. हरिराम आचार्य का जन्म पं. गणेशदत्त आचार्य के सुपुत्र के में 21 जून, 1936 को जैसलमेर में हुआ। एम्. ए., साहित्यरत्न, पी.एच्.डी. जैसी उच्च सारस्वत उपाधियाँ प्राप्त कर राजस्थान विश्वविद्यालय में संस्कृत के प्रोफेसर के रूप में अपनी सेवायें दीं। आचार्य ने संस्कृतकाव्य, साहित्यशास्त्र, नाट्यशास्त्र, भारतीयदर्शन, भारतीय संस्कृति, भाषाविज्ञान, आधुनिक संस्कृतसाहित्य आदि विषयों का अध्यापन किया है।

**शिक्षा दीक्षा -**

आपकी प्रारम्भिक शिक्षा राजस्थान के सीमान्त एवं पिछड़े क्षेत्र जैसलमेर के एकमात्र दरबार काँल्विन हाइस्कूल में हुई। उन दिनों वहाँ कहावत भी कि जैसलमेर में सूर्य और ज्ञान का प्रकाश अत्यन्त देर से पहुँचता है किन्तु बालक मन्नू ने अपनी लगन और परिश्रम से इस मिथक को झुठला दिया। मात्र स्वयं ही ज्ञान प्राप्त नहीं किया वरन् समय आने पर जैसलमेरीय पुष्करणा ब्राह्मण समाज को ज्ञान रूपी प्रकाश-पुंज से आलोकित कर दिया। घर में वल्लभ संप्रदाय की पुष्टिमार्गीय सेवा की परम्परा थी, उसी भक्तिपूर्ण अष्टयाम आराधना के माहौल में, अष्टछाप के कीर्तनों  के संगीतमय वातावरण में बालक मन्नू का बालमन विकसित हो रहा था। अपनी माता सीतादेवी से कृष्ण की लीलाओं की कहनियां सुनते हुए बचपन परवान चढ़ रहा था।

माता-पिता से प्राप्त इन्हीं संस्कारों का प्रस्फुटन शीघ्र हुआ और मात्र 12 वर्षकी वय में किशोर हरिराम की साहित्य-साधना एक शिशु-गीत से हुइ, जो तत्कालीन 'शिशु' नामक बाल-पत्रिका में छपा।

इण्टर में काँलेज में प्रथम स्थान पाने के बाद जयपुर के महाराजा काँलेज में प्रवेश लिया। छोटे कस्बाई रहन सहन से निकल कर बड़े नगर की

जीवनशैली से संघर्ष प्रारम्भ हुआ। संस्कृत के साथ दर्शन विषय चुनकर अपने छात्र जीवन के अगले चरण की यात्रा प्रारम्भ की। संस्कृत, दर्शनशास्त्र और हिन्दी विषयों के साथ स्नातक और तत्पश्चात् राजस्थान विश्वविद्यालय से संस्कृत में एम्.ए. तथा हिन्दी के समानान्तर सृजन का क्रम भी चलता रहा। विश्वविद्यालय तक आते आते योग्य और मेधावी विद्यार्थी के साथ साथ आपकी ख्याति सुकण्ठ सरस गीतकर के रूप में प्रतिष्ठित हो गई।

अपनी सृजनशीलता एवं काव्यरचना के प्रति विशेष आग्रह के कारण ही आपने दक्षिण भारत के महाकवि हाल की प्राकृत गाहा सत्तसई को शोध के लिए चुना। अपने गुरु संस्कृत मनीषी प्रोफेसर पुरुषोत्तम लाल भार्गव के मार्गदर्शन में इस अनूठे ग्रन्थ की विवेचना कर राजस्थान विश्वविद्यालय में अपना शोध प्रबन्ध प्रस्तुत किया और पी.एच.डी. की उपाधि प्राप्त की।

बचपन  से अपनी मातृभाषा जैसलमेरी मारवाड़ी बोलते सुनते आये कवि हरिराम आचार्य का सृजन भाषाओं की सीमा में नहीं बंधा। हिन्दी से प्रारम्भ हुई काव्य यात्रा संस्कृत, प्राकृत, उर्दू, फारासी, राजस्थानी और ब्रज भाषा की ओढ़नी ओढ़कर बढ़ चली थी। बीच बीच में अवधी, भोजपुरी, गुजराती, मराठी, और पंजाबी में भी रचना प्रयोग किये।

आपकी पहचान भले ही एक सरस गीतकार के रूप में रही हो – किन्तु भाषा की विविधता की तरह काव्य की किसी एक विधा तक आपकी कलम सीमित नहीं रही। पारम्परिक कविता हो या मुक्त छन्द के प्रयोग, मंचन योग्य नाटक हो या रेडियो पर प्रसारित ध्वनिरूपक, मन के क्रन्दन को स्वर देते गीत हों या युगबोध को समर्पित प्रयाण गीतिकाएं। मुक्तक, रुबाई, गजल, दोहे, सेवैये, नज्म के साथ साथ फिल्मों के लिए गीत रचना, स्क्रिष्ट-संवाद लेखन, दूरदर्शन धारावाहिकों - वृत्तचित्रों के आलेख, शोधपरक लेख, नृत्य नाटिकाएं एवं प्रख्यात कवियों की रचनाओं का अनुवाद – अर्थात् साहित्य के प्रत्येक अंग से आपकी अन्तरङ्गता थी।

## आदर्श गुरु के रूप में हरिराम आचार्य

विषयगत ज्ञान के साथ साथ प्रेरणा, प्रोत्साहन व सरलता से प्रश्नों का समाधान पल भर में कर देना भी आपकी एक विशिष्ट कला थी, जिस का स्मरण आज भी अनेक शिष्य करते हैं। ऋषितुल्य निःस्पृह जीवन, प्रेरित करने वाला व्यक्तित्व, उत्तोरोत्तर आगे बढ़ने के लिए उत्साह संवर्धक गरिमामय वन्दनीय शिक्षक के रूप में आप अपने समस्त विद्यार्थियों में सर्वदा लोकप्रिय रहे हैं। यही कारण है कि संस्कृत साहित्य के गहन और व्यापक ज्ञान की शिक्षा और प्रेरणा प्रदान करने वाले डाँ. आचार्य के अनेक शिष्य उच्च पदों पर आसीन है और वे सभी निश्छल भाव से अपने जीवन की सफलता का श्रेय अज्ञानरूपी अंधकार को दूर करने वाले गुरु 'आचार्य जी' को प्रदान करने हैं।

श्रेष्ट योग्यता के साथ ही उसे शिष्यों में संक्रमित करने की अपनी विशेषता के कारण ही आप सच्चे अर्थों में 'गुरु' अर्थात् अज्ञानरूपी अन्धकार को दूर करने वाले श्रेष्ट शिक्षक सिद्ध हुए हैं।

एम.ए. की कक्षा में 'मेघदूत' पढ़ाते हुए अपने सरस, सुमधुर कण्ठ से मन्दाक्रान्ता छन्द में श्लोकों का सस्वर पाठ कर, कालिदास के भावोद्गारों के साथ विद्यार्थिनों की एकाग्र तन्मयता को स्थापित करने हुए, कवि की काव्य-कला को मुखरित कर ऐसा सजीव चित्रांकन होता कि मेघ के साथ साथ उड़ते हुए रामगिरि से अलका तक के प्राकृतिक स्थलों की सौन्दर्यानुभूति विद्यार्थिनों को भाव-विभोर कर देती। वहीं मुद्राराक्षस का अध्ययन-अध्यापन नहीं, जैसे अभिनय के साथ नाटक ही कक्षा में प्रदर्शित होता और कलांश पर कब विराम आता, विद्यार्थिनों को पता ही नहीं लगता। अपनी धीर गम्भीर आवाज में जब आप साहित्य पढाते थे तो विद्यार्थी किसी नई यात्रा पर होते थे। बीच-बीच में परिहास का पुट आपके अध्यापन को और अधिक रुचिकर बना देता था।

निष्कपट और शिष्य हितचिन्तक गुरु डाँ. आचार्य शिष्यों को हितकारी बातें प्रेमपूर्वक व्यङ्ग्यवाणी में सहजरूप से सूचित भी करते और अध्ययन-अध्यापन के बीच हास्य की ठण्डी फुहारों से विद्यार्थियों के आह्लादित भी करते।

कैंठीन में विद्यार्थियों के साथ मित्रवत् चाय पीते हुए उनकी बहुत - सी समस्याएं चुटकी में हल करने और उत्साह बढ़ाते हुए प्रेरित करना – इस विलक्षण सहजता से आप संस्कृत विभाग के ही नहीं, अपि तु विश्वविद्यालय के अन्य विभागों के विद्यार्थियों के बीच भी प्रसिद्ध रहे।

वात्सल्य समृद्ध व्यवहार और सशक्त सम्प्रेषण कला के अनूठे अन्दाज से सभी विद्यार्थी प्रथम दिन से ही इतने अभिभूत हो जाते थे कि उनकी कक्षा में अध्ययन करने को प्रतिदिन लालायित रहते थे। अनेक विद्याथी ऐसे भी होते थे जो अन्य संकायों से कला संकाय में प्रवेश लेते थे और उसमें भी सर्वथा नया विषय संस्कृत अध्ययन के लिए चुनते थे। ऐसे ही बहुत से विद्यार्थीयों ने आचार्य जी की विशिष्ट अध्यापन-शैली को ही श्रेय दिया है कि उनके जैसे संवेदनशील गुरु के सान्निध्य ने जीवन की दिशा ही बदल दी। बहुत रोचक व सरस ढंग से कालिदास और भवभूति जैसे महान् लेखकों की रचनाएँ तल्लीनता के साथ आप पढाते थे, वहीं व्याकरण के जटिल सूत्रों को भी सरलता से समझाकर कण्ठस्थ करवा देना विद्यार्थी अभी भी नहीं भूले हैं। कक्षा में आपकी विनोदप्रियता भी सभी विद्यार्थीयों को सदा आकर्षित करती हैं।

कवि हृदय होने के साथ-साथ भाषाओं के ज्ञान में रुचि होने के कारण आपने अपना शोध 'महाकवि हाल और गाहासत्तई' विषय पर किया और इस प्राकृत भाषा की प्रसिद्ध पुस्तक का हिन्दी काव्यानुवाद कर संस्कृत जगत् को चमत्कृत करने में आप सफल रहे और सहृदयों की प्रशंसा का पात्र भी बने।

सुरभारती संस्कृत के अप्रतिम साधक डाँ. आचार्य ने भारत के लगभग प्रत्येक राज्य में संस्कृत संगोष्ठियों में अपने वैदुष्य की अमिट छाप छोड़ी। आँल इण्डिया ओरिएण्टल काँन्फ्रेन्स, शान्तिनिकेतन, मुम्बाई, उज्जैन, सागर, दिल्ली तथा देश के अनेक नगरों में आयोजित संस्कृत अधिवेशनों में विभिन्न विषयों पर मौलिक शोधपत्रों को प्रस्तुत किया। संपूर्ण भारतवर्ष की अनेक शोध-पत्रिकाओं में संस्कृत व हिन्दी के प्रासंगिक विषयओं पर आपके असंख्य शोध-लेख प्रकाशित हुए हैं। 1978 से शोध-निर्देशक कार्य सम्पादित करते हुए आपने

लगभग 26 स्नातकोत्तर के तथा 30 एम.फिल. के विद्यार्थीयों को लघुशोध प्रबन्धहेतु निर्देशित किया। 22 से अधिक छात्र-छात्राओं को शोधपरक व्यापकदृष्टि से उत्साहित एवं प्रेरित कर पी. एच.डी. उपाधि हेतु शोधकार्य पूर्ण करवाया।

## साहित्यिक एवं सांस्कृतिक यात्रा

कला संस्कृति और साहित्य के आलोक-पुरुष तथा आजीवन सक्रिय सारस्वत-साधना में गतिशील डॉ. आचार्य की राष्ट्रव्यापी पहचान हैं। संस्कृत, हिन्दी, ब्रजभाषा, राजस्थानी, प्राकृत तथा उर्दू में मौलिक चिन्तन के साथ काव्य-लेखन आपकी विलक्षण प्रतिभा को दर्शाता है। अपने विभिन्न आयामी ज्ञान को 'हस्तामलक' सहेज कर नितान्त विनयशीलता के साथ चलते हुए आपने गीत-रचना भी की, नाटक-लेखन भी किया। ललित निबन्धों की रचना भी की और पुस्तक समीक्षा लेखन भी किया। मानवीय संवेदनाओं के साथ जीने के कारण वही संवेदना आपके विभिन्न साहित्यिक सृजन-रूपों में अभिव्यक्त होती रही हैं।

जीवनधारा की त्रिवेणी में कला और संगीत का आनंद साहित्य-सारिता की सुधा के सिञ्चन के विना अधूरा ही है। अत: जब तक कला और संगीत में साहित्य का सम्पुट न लगे तो बेचैनी ही बनी रहती है और आत्मसंतोष प्राप्त नही होता। इसी उद्धेश्य को दृष्टिगत रखते हुए डॉ आचार्य ने साहित्यसारिता में अवगहन किया और अनेक अनमोल मोती साहित्य जगत् को दिये।

1966 में आपके द्वारा संस्कृत के सरल व स्तुतिपरक शब्दों में माँ सरस्वती की प्रार्थना की रचना की गई। अपने सहज गेय स्वरूप और अभिनव प्रयोग के कारण यह वन्दना राष्ट्रीय स्तर पर विद्यालयों में प्रार्थना सभाओं में गाई जाने लगी। आज भी ये वन्दना विभिन्न मंचों पर अलग अलग कलाकारों द्वारा गाई जा रही हैं, नृत्य समारोहों में कोरियोग्राफर नृत्य के माध्यम से इसकी प्रस्तुति कर सरस्वती की आराधना कर रहे हैं। कम्प्यूटर के अन्तर्जाल पर देश विदेश के कलाकारों और विद्यार्थीयों द्वारा वनाए गए इसके असंख्य वीडियो देखे जा सकते हैं –

जय-जय हे भगवति सुरभारति
तव चरणौ प्रणमामः।
नादब्रह्ममयि जय वागीश्वरि
शरणं ते गच्छामः॥

विद्यार्थी जीवन से सतत मौलिक लेखन करने वाले कवि हृदय डाँ आचार्य ने स्वान्त: सुखाय तो असंख्य कविताएं लिखीं, वहीं परिचितों के या मित्रों के प्रेमिल अनुरोध के वशीभूत होकर अथवा उनके आग्रह को स्वीकार कर आपने अपने सशक्त चिन्तन से व्यावसायिक लेखन भी किया।

प्रचार-पिपासा से इस युग में डाँ. आचार्य नितान्त प्रचार परांगमुख रहकर आकाशवाणी के लिए संगीत-रूपक, नाटक, ध्वनि रूपकों की रचना करते रहे, जिनका 1955 से लेकर आज तक राष्ट्रीय स्वर पर प्रसारण होता रहा हैं। विविध भारती के कार्यक्रमों में आपके द्वारा लिखे गए हिन्दी, संस्कृत एवं राजस्थानी भाषायों के नाटकों, कविताओं का निरन्तर प्रसारण होता रहा है। आकाशवाणी से "ए" श्रेणी कलाकार के रूप में चयनित, ए.अई.आर. 64 तथा 65 अनुबंध पर गीतकार के रूप में अनुबंधित आप राष्ट्रीय एवं सांस्कृतिक समारोहों के सजीव प्रसरण हेतु चयनित उद्घोषक भी रहे हैं।

१९६० में डाँ. आचार्य को महाकवि कालिदास के नाटक "विक्रमोर्वशीयम्" के रेडियो रूपान्तरण के अखिल भारतीय प्रसारण से विशेष ख्याति मिली। इसके पश्चात् तो आकाशवाणी के प्रतिष्ठित लेखकों की अग्रपंक्ति में आपकी गणना होने लगा।

गणतन्त्र दिवस की पूर्वसन्ध्या पर आयोजित होने वाले आकाशवाणी के राष्ट्रीय सर्वभाषा कवि-सम्मेलनों में मौलिक संस्कृत काव्यपाठ तथा अनेक बार संस्कृत एवं अन्य भारतीय भाषाओं के कवि-अनुवादक कवि के रूप में भी आमन्त्रित डाँ. आचार्य ने राष्ट्रीय गीत-शृंखला में गीतकार के रूप में चयनित एवं अनुबंधित होकर अपनी प्रतिभा को देश में प्रशंसनीय बनाया है।

१९५५ से लगभग ७५ ध्वनि-नाटक. ३० वृत्तरूपक, २५ संगीत-रूपक एवं शताधिक वार्ताएं, कविताएं निरन्तर प्रसारित होना आपकी विशिष्ट उपलब्धि है। आकाशवाणी से प्रसारित होने वाले प्रमुख संस्कृत नाटकों में पूर्वशाकुन्तलम्, मेघदूतम्, गंगालहरी, नेत्रदानम् आदि आज भी पुन: प्रसारित होने वाले नाटक है। आपके द्वारा लिखे गए हिन्दी नाटक यथा – भद्रपुरुष, विद्रोहिनी, रेत का आंचल, एक भिखारी की वसीयत, रेत का दर्द, रामायण के तीन नारी पात्र (शृंखला नाटक) आदि श्रोताओं के अभिभूत कर श्रवणानन्द प्रदान करने वाले नाटक रहे हैं। हिन्दी संगीत रूपकों में महात्मा गांधी की जन्म शताब्दी के अवसर पर राष्ट्रीय प्रसारण के लिए लिखा 'समाधि के स्वर' जहाँ करुण रस का उद्रेक करता है, वहीं 'शत-शत तुम्हें प्रणाम शहीदों, 'अमर रहे गणतंत्र हमारा' आदि विशेष पर्वों पर प्रसारित होकार देशभक्ति की भावना को प्रबल करने वाले रूपक हैं।

**पुरस्कार एवं सम्मान -**

डाँ. आचार्य को उनके उल्लेखनीय कृतित्व के लिए अनेकश: पुरस्कृत एवं सम्मानित किया गया है, जिनमें संस्कृत जगत में योगदान के लिए 'राष्ट्रपति सम्मान', मानव संसाधन विकास मंत्रालय द्वारा 'अखिल भारतीय विद्वत्सम्मान', राजस्थान सरकार द्वारा सर्वाच्च संस्कृत साधना 'शिखर-सम्मान', आकाशवाणी द्वारा 'स्वर्ण जयन्ती सम्मान', राजस्थान साहित्य अकादमी द्वारा 'मीरा पुरस्कार', कालिदास अकादमी, उज्जैन द्वारा 'विशिष्ट कवि सम्मान', राजस्थान संस्कृत अकादमी द्वारा 'माघ पुरस्कार' एवं भट्ट मथुरानाथ शास्त्री 'साहित्य सम्मान', राजस्थान संगीत नाटक अकादमी द्वारा 'कला पुरोधा सम्मान', बालाहख्श शोध संस्थान, जयपुर द्वारा 'सर्वोच्च महर्षि पुरस्कार', मारिशस सरकार द्वारा 'विशिष्ट सम्मान' एवं विश्व संस्कृत सम्मेलन, क्योटो (जापान) मे 'सारस्वत सम्मान' एवं सवाई मानसिंह ट्रस्ट द्वारा 'सवाई प्रतापसिंह अवार्ड' विशेष रूप से उल्लेखनीय है।

## प्रकाशित कृतियां

### (क) पूर्वशाकुन्तलम्-

विभिन्न कथानकों पर १९५६से १९६२ तक लिखित सप्त संस्कृत ध्वनि-रूपकों का संकलन। इसका नामकरण इसमें सम्मिलित प्रथम ध्वनि-रूपक के आधार पर किया गया है, जो विश्वामित्र- मेनका प्रसंग में शकुन्तला के जन्म से संबद्ध है। शेष ध्वनि-रूपक विभिन्न प्राचीन ग्रंथों में उल्लिखित प्रख्यात प्रसंगों के रेडियो नाट्यरूप हैं 1. पूर्वशाकुन्तलम् 2 . गंगालहरी 3. न हि भोजसमो नृपः 4. आषाढस्य प्रथमदिवसे 5. सत्यमेव जयते 6. वेतालकथा 7. नेत्रदानम्। राजस्थान संस्कृत अकादमी, जयपुर से १९९८में 'पं. हरिजीवन मिश्र नाट्य पुरस्कार' इस नाट्य संकलन को प्रदान किया गया।

### (ख). मधुच्छन्दा –

नूतन भावबोध से परिपूर्ण गेय-गीतियों का संग्रह। सरस, , सुमधुर अभिनव गीतिपुष्पों के इस स्तबक में परंपरागत छंदों में रचना कुशल होते हुए भी डॉ. आचार्य ने युगबोध परक एवं अधुनातन विषयों पर भावप्रवण प्रयोगधर्मी नवगीतों के सृजन से संस्कृत-साहित्य की श्रीवृद्धि की है। इनमें मांगल्य, वैदिकीय, ऋतुचक्रीय के साथ-साथ राष्ट्रिय पर्यावरणीय और नवोन्मेषीय विषय भी सम्मिलित हैं। सर्वप्रथम सुरभारती की प्रशस्ति में जो गीत है, उसे राष्ट्रिय स्तर पर प्रसिद्धि प्राप्त है -

जय जय हे भगवति सुरभारति
तव चरणौ प्रणमामः ।

इसमें संकलित गीतियाँ अतियथार्थ धरातल पर सहृदय को गुदगुदाने और उसे युग सत्य से परिचित कराने में समर्थ है। राजस्थान संस्कृत अकादमी, जयपुर से 2001 में 'सर्वोच्च माघ पुरस्कार' इस कृति को प्रदान किया गया।

**(ग) नाचिकेतकाव्यम्**

परम्परागत शास्त्रीय छंदों में कठोपनिषद् के उपाख्यान पर रचित सर्गबद्ध कृति। कठोपनिषद् में वर्णित महर्षि वाजश्रवा के पुत्र नचिकेता और यमराज के संवाद पर लिखित इस प्रबंध काव्य रचना में ७ सर्ग हैं। ३६८ संस्कृत पद्यों में वैदिक युगीन परिवेश तथा भारतीय सांस्कृतिक मूल्यों का काव्यमय चित्रण इसमें किया गया है। पारंपरिक संस्कृत छन्दों के अतिरिक्त नवीन छन्दों के प्रयोग से संपूर्ण कथाप्रसंग को डॉ. आचार्य ने अपनी काव्यमय लेखनी से सरस, सुग्राह्य व रोचक बनाया है।

**(घ). कलकली -**

संस्कृत बाल-कविता संग्रह। संस्कृत भाषा को लोकप्रिय बनाने और बालपन से ही उसमें रुचि जाग्रत कर ने के उद्देश्य से देववाणी संस्कृत में शिशुगीत के नवाचार का प्रयोग कर एक अनूठी शिक्षाप्रद भेंट डॉ. आचार्य ने प्रदान की है। ३२ संस्कृत शिशुगीतावलि से सुसज्जित और स्वतः कंठस्थ होने योग्य लिखी गई बालकविता ओं में संस्कृत भाषा का बोध, नैतिक आचरण, अङ्गबोध, आकार-बोध, स्वाद-बोध, वर्ग-बोध का ज्ञान शिशुओं की आयु के अनुरूप लेखन किया गया है।

**(ङ). नैवेद्यम् –**

संस्कृत गीत संग्रह। वैदिकसूक्तों के लौकिक संस्कृत में गीत, प्रकृति चित्रण, आधुनिक हायक, ग़जल, तुक्तक चतुष्टकम्, उल्लापन (लोरी) विधाओं के गीत व कविताएँ सरलतम संस्कृत भाषा में रच कर सहृदयों को समर्पित की गई हैं। इनके साथ ही साथ व्यंग्य और प्रशस्ति गीत भी इस संग्रह में समाहित हैं। सत्याग्रह, लोकतंत्र, मातृभूमि वन्दन, जल की महत्ता, पर्यावरण तथा वर्तमान सामाजिक दशा विषयक गीतों का सरस व सुगम्य काव्य-लेखन इस कृति में उपलब्ध है।

**(च) अनुपमेय कवि कालिदास** –

विश्वसाहित्यके अद्भुत कवि और – मर्मज्ञ अनुपम रचनाकार, भारतीय संस्कृति के उद्गाता –महाकवि कालिदास को विनम्र काव्यबद्ध श्रद्धांजलि के रूप में डॉ. आचार्य के पार्थिव जीवन की अन्तिम कृति। कालिदास की कृतियों को गाथा रूप में एकसूत्र में पिरोकर उन्हीं के चरणों में अर्पित कर रससिद्ध वागर्थ का दर्शन इस अनुपम महाकाव्य में वर्णित है।

**(छ) गीतगोविन्द** -

संस्कृत साहित्य की युगप्रवर्तक रचना महाकवि जयदेव विरचित गीतगोविन्द का सांगीतिक काव्यमयी प्रतिभा से डॉ. आचार्य ने ऐसा अनूठा समगीतलयात्मक हिन्दी अनुवाद किया है कि संगीत के आनन्द के साथ अर्थबोध भी स्वतः होने लगता है।

**(ज) संगीतदामोदर** –

श्री शुभङ्कर विरचित संगीत और नाट्यशास्त्र के सभी संबद्ध विषयों के उत्कृष्ट संकलन "संगीत दामोदर'' का हिन्दी अनुवाद। संगीत व नाट्य कला की बारीकियों को समझने के इच्छुक पाठकों, अभिनेता ओं वस हृदयों के लिए ये हिन्दी अनुवाद कोश के समान है।

**(झ) आगमतीर्थ** –

भगवान् महावीर द्वारा उद्बोधित जैन विचारधारा एवं दर्शन आगम साहित्य के रूप में उपलब्ध है। 232 सूत्रों का अनुवाद सरल एवं प्रबोध शैली में काव्यमय रूप में प्रस्तुत किया गयाहै, जो मंगल, धर्म, आधार, चिन्तन और दर्शन नामक पाँच पर्वों में विभाजित है।

**(ञ). संस्कृतनाट्य : प्रस्तुतिपक्ष** -

साहित्यिक एवं कलात्मक नाट्य प्रस्तुति की परम्परा का क्रमिक इतिहास इस पुस्तक में सप्रमाण लेखबद्ध है। सीमित कलेवर में संस्कृत नाटक

एवं राजस्थान के विशेष सन्दर्भ में उसके लेखन एवं प्रस्तुतिपक्ष की ऐतिहासिक जानकारी इसमें प्रस्तुत की गई है।

**(ट) महाकवि हाल और गाहासत्तसई** –

प्राकृत भाषा की इस प्रसिद्ध कृति का भूमिका, मूल व सुगम्य हिन्दी काव्यानुवाद संस्कृत जगत् के सहृदयों के लिए इस पुस्तक में उपलब्ध है।

आपकी विशिष्ट पहचान पूरे देश में एक लोकप्रिय कवि, गीतकार, नाटककार एवं बहुभाषाविज्ञ (हिन्दी, संस्कृत, प्राकृत, उर्दु, राजस्थानी एवं अंग्रेजी) के रूप में रही है। रंगमंच, आकाशवाणी, दूरदर्शन व फिल्म जगत में आपका सृजनात्मक योगदान नाटक, संगीतरूपक, पटकथा, गीत एवं संवाद-लेखन, अभिनय और निर्देशन के रूप में रहा है।

संस्कृत नवोन्मेषी प्रयोग करना आपकी रूचि का विषय रहा है – संस्कृत में बाल कविताएं, कठपुतली नाट्य, चत्वर नाट्यों का लेखन एवं उनका प्रस्तुतिकरण उनकी कलात्मकता के परिचायक है।

जयपुर के जन्तर मन्तर एवं अमर जवान ज्योति पर नियमित रूप से प्रदर्शित होने वाले ध्वनि एवं प्रकाश कार्यक्रमों के साथ साथ आपने कुंभलगढ़ दुर्ग, जयपुर के अढ़ाई शाती समारोह एवं जवाहर कला केन्द्र हेतु 'गाथा राजस्थान की' ध्वनि एवं प्रकाश कार्यक्रमों का लेखन किया है। राजस्थान विश्वविद्यालय का कुलगीत एवं इन्दिरा गांन्धी नहर का स्वागत गीत शिलालेख के रूप में डाँ. आचार्य की कीर्ति पताका फहरा रहे है।

उनकी विभिन्न भाषाओं में 24 पुस्तकें प्रकाशित हो चुकी हैं – जिनमें कुछ प्रमुख हैं गीतगोविन्द समगीतात्मक अनुवाद, नाचिकेतकाव्यम्, मधुच्छन्दा, नैवेद्यम्, अनुपमेय कवि कालिदास, आदिम राग, कलकलि, आगम तीर्थ, गाथा सप्तशती, खुले किरण पाल, पूर्वशाकुन्तलम्, अन्तर्यात्रा, घणै मान सूं, और अबन बबौआ।

15 दिसम्बर 2018 की संध्या अपनी जीवन यात्रा के विराम देने से ठीक पहले अपनी अन्तिम एवं महात्वाकांक्षी कृति 'अनुपमेय कवि कालिदास' का प्रूफ देख कर उसे छपने हेतु तैयार किया। पीछे छोड गये स्मृतियों की पिटारी, अपनी कलम से निकले शब्द और तिरासी वर्षो की अमूर्त सृजन यात्रा के पदचिह्न - संयोग यह भी कि उन्ही के अमृत महोत्सव पर प्रकाशित ग्रंथ टेबिल पर खुला पडा था और उसे खुले पृष्ट पर छपा था उनके लिखा यह मुक्तक -

मरुथल के मृगजल में मन को अव मत और छलो,
जग विदेस है इसके सांचे में मत और ढलो।
काली बाड़ी का इक जोगी अब तो यही चितारे,
यात्रा शेष हुई मोरे चितो अब घर लौट चलो॥

**सहायकग्रन्थपञ्जी**

*अनुपमेय कवि कालिदास महाकाव्य* – चिरमी प्रकाशन, जयपुर, 2019।

*अन्तर्यात्रा* (खलील जिब्रान की कविताओं का कायानुवाद) – चिरमी प्रकाशन, जयपुर, 2018।

*अबन बबौआ* (हिन्दी बालगीत) – चिरमी प्रकाशन, जयपुर, 2018।

*आगम तीर्थ* - प्राकृत भारती, जयपुर, 1980।

*आदिम राग* (हिन्दी काव्यसंग्रह), चिरमी प्रकाशन, जयपुर, 2003।

*ऋतुरागिनी* (नृत्य-नाटिका संग्रह) – जवाहर कलाकेन्द्र, जयपुर, 2009।

*ऑथेलो* (शेक्सपियर के नाटक का हिन्दी रूपान्तरण) - चिरमी प्रकाशन, जयपुर, 2019।

*कलकली* (संस्कृत बाल-गीति संग्रह) - चिरमी प्रकाशन, जयपुर, 2018।

*खुले किरण पाल* (हिन्दी काव्य संग्रह) - वन्दना प्रकाशन, जयपुर, 1971।

*गाथा सप्तशती* (हिन्दी काव्यानुवाद). प्राकृत भारती, जयपुर, 1989।

*गीतगोविन्द* (समलयात्मक अनुवाद) - चिरमी प्रकाशन, जयपुर, 2019।

*घणे मान सूं* (राजस्थानी काव्यसंग्रह) - चिरमी प्रकाशन, जयपुर, 2002।

*नाचिकेतकाव्यम्* – लिट्रेरी सर्किल, जयपुर, 2008।

*नैवेद्यम्* – (संस्कृत गीतसंग्रह) – चिरमी प्रकाशन, जयपुर, 2017।

*पूर्वशाकुन्तलम्* (संस्कृत ध्वनि-रूपक संग्रह) - हंसा प्रकाशन, जयपुर, 2002।

*मधुच्छन्दा* (संस्कृत काव्यसंग्रह) - जगदीश संस्कृत पुस्तकालय, 2000।

*महाकवि हाल और गाहासत्तसई* - शरण बुक डिपो, जयपुर, 1982।

*संगीतदामोदर* – व्याख्यानुवाद।

*संस्कृतगद्यगरिमा* - पंचशील प्रकाशन, जयपुर, 1998।

*संस्कृतगद्यगुच्छम्* - आलोक प्रकाशन, जयपुर, 1998।

*संस्कृत नाटक : प्रस्तुति पक्ष* - जवाहर कलाकेन्द्र, जयपुर, 2005।

*संस्कृत नाटकों का हास्यसर्जक पात्र* : विदूषक - व्यास बालाबक्ष शोध संस्थान, जयपुर, 2012।

*संस्कृतरूपकरत्नालोक* - जयपुर पब्लिशिंग हाउस, जयपुर, 1998।

# संस्कृतसाहित्ये श्रीसुन्दरराजस्य अवदानम्

डा. नारायणदाशः

**उपक्रमः**

श्रीसुन्दरराजः १९३६ ईशाब्दस्य सितम्बरमासस्य त्रिंशत्तमे दिनाङ्के (30.09.1936) स्वजनुषा श्रीनिवासराघवाचार्य-वञ्जुलावल्लीत्यनयोः क्रोडं तामिलनाडुप्रदेशे कुम्भकोणजनपदेताञ्जोरस्य देवर्णविलाग इति ग्रामभुवं व्यभूषयत्। दक्षिणभारतीयपरम्परानुसारं तस्य जन्म मातामहस्य गृहे आसीत्। तस्य पितामहः धनाढ्यः भूस्वामी आसीत्। स वात्सायनगोत्रीयः प्रसिद्धः नडादूराम्मलि-श्रीवत्स्यवरदगुरोः वंशस्य महान् श्रीवैष्णवाचार्यः आसीत्। तस्य पूर्णनामासीत् तिरुवेंगीमलाईसेशा - सुन्दरराजन् इति। सुन्दरराजस्य पिता श्रीनिवासराघवाचार्यः संस्कृतस्य प्रसिद्धः कविः विद्वान् आसीत्। स मुम्बाईनगरे वेदान्तदेशिकसंप्रदायसभातः "आशुकविसार्वभौमः" इति उपाधिं प्राप्तवान्। सुन्दरराजः अपि संस्कृतस्य अप्रतिमः कविः वर्तते। आधुनिकसंस्कृतसाहित्ये व्याकरणे तथा साहित्ये प्रकाण्डः पण्डितः चासीत् श्रीसुन्दरराजन् महोदयः। स तस्य पाण्डित्यस्य कृते भारतस्य राष्ट्रपतिना 1986 संवत्सरे सम्मानितः बभूव। अस्य महोदयस्य प्रारम्भिकी शिक्षा पितुः पार्श्वे गुरुकुलरीत्या जाता। स बाल्यकालात् संस्कृतश्लोकरचनायाः अभ्यासं कृतवान्। काव्यनाटकादीनि पठित्वा स व्याकरणसिद्धान्तकौमुदीं समापितवान्। काञ्चीकामकोटि-पीठाधीश्वरस्य जगद्गुरुचन्द्रशेखरेन्द्रसरस्वतीवर्यस्य आदेशेन दर्शकानां समक्षं द्वादशवर्षवयसि एव श्रीरामस्य विषये श्लोकं विरचितवान्। तेन प्रसन्नः स्वामिवर्यः तम् ऊर्णावस्त्रेण सत्कृतवान्। 1956 संवत्सरे पाणिपञ्चाशत् प्रथमश्लोकसंग्रहः प्रकाशितः। श्रीसुन्दरराजः उच्चमाध्यमिकपरीक्षां लिखित्वा कुम्भकोणस्थितात् महाविद्यालयात् इन्टरमिडिएट-परीक्षायाम् उत्तीर्णो जातः। स चेन्नाइ-प्रेसिडेन्सीमहाविद्यालयात् रसायनशास्त्रे बी. ए. परीक्षोत्तीर्णः ततः एम्. एस्. सी.सम्मानेन सम्मानितो बभूव। स कृष्णस्वामि-कावेरी-इत्यनयोः सुपुत्र्या सुधया

विवाहितः। तस्य पुत्रस्य नाम श्रीकान्तः, कन्यायाः नाम सीता चासीत्। तदनन्तरं श्रीसुन्दरराजन्वर्यः १९५३ ईशाब्दात् १९५८ ईशाब्दपर्यन्तम् अनेकेषु महाविद्यालयेषु रसायनविद्यां पाठितवान्। ततः भारतीयप्रशासनिकसेवायां (I.A.S) नियुक्तः। प्रशिक्षणानन्तरम् ओडिशाराज्यश्रेण्यां नियुक्तः 1993 संवत्सरं यावत् तत्रैव कार्यं कृत्वा राजस्ववोर्डसदस्यरूपेण डेपुटिसेक्रेटारीसमानपदात् सेवानिवृत्तः। तदनु स षड्वर्षाणि यावत् व्याकिंनियुक्तिवोर्डकमिशनर-रूपेण नियुक्तः। सेवाकाले वारद्वयं स केन्द्रसर्वकाराधीने पेट्रोलियममन्त्रालयस्य सहसचिवरूपेण, योजनायोगस्य सचिवरूपेण कार्यं कृतवान्। मध्ये 85-86 वर्षे स केम्ब्रिजस्थात् एम्. आइ. टि. इत्यस्मात् स योजनाविषये पदवीं प्राप्तवान्।

## कृतित्वम्

आधुनिकसंस्कृतसाहित्ये रुचिमतः अस्य महाकवेः संस्कृतस्य विविधक्षेत्रे योगदानम् अस्ति। श्रीजगन्नाथसुप्रभातम्, श्रीजगन्नाथस्त्रोत्रम्, श्रीजगन्नाथशरणागतिस्तोत्रम्, श्रीजगन्नाथमङ्गलशासनम्, बदरीशतरङ्गिणी, सुरश्मिकाश्मीरमादीनितस्य महाकवेः प्रसिद्धानि स्तोत्रकाव्यानि सन्ति। स्वरचनोद्देश्यविषये सुन्दरराजः १९८४ ईशाब्दस्य फेरवरीमासस्य २१तमे दिवसे देहल्यां देववाणीपरिषदि उक्तवान्। पुनश्च स्वरचनाविषये तेनोच्यते-

‘छन्दसैव कवितां सृजाम्यहं
स्यन्दितेन निहितैः पदैस्स्वयम्।
स्पन्दिताधरपुटेन नन्दितो
विन्दतां बुधजनस्ततो मुदम्’[1]॥

सुन्दरराजः भुवनेश्वरस्थितानां जगन्नाथस्वाध्यायमण्डलः, “प्राच्यविद्यानुष्ठान-लिङ्गराजवैदिकशिक्षानुष्ठानादिसंस्थानाम् अध्यक्षरूपेण नियुक्तः। स स्वयमेव छात्रान् शुक्लयजुर्वेदस्य काण्वशाखायाः अध्यापनम् अकरोत्। अस्य महाकवेः काव्ये यथा अनुप्रासादि-यमक-श्लेष-उपमा-उत्प्रेक्षादीनाम् अलंकाराणां समावेशः दृश्यते तथा अनुष्टुप्-उपजाति-मालिनी-

वियोगिनी-छन्दसां सुन्दरप्रयोगः दृश्यते। अयं कविः ओडिशाप्रदेशस्य कविभूषणसम्मानेन सम्मानितः। अयं विख्यातमहाकविः भुवनेश्वरस्थितवासभवने २००५ ईशाब्दे पञ्चत्वं प्राप्तवान्।

## नाटकानि

अस्य महाकवेः "स्नुषा विजयम्", "हनुमद्विजयनाटकम्", "वैदर्भीवासुदेवः", "पद्मिनीपरिणयः" चेति नाटकानि प्रसिद्धानि। नाटिकाद्वयम् अस्ति – 'अखण्डभारतम्', 'करुणा' इति। "स्नुषाविजय" इति नाटकं सामाजिकसमस्याधारितम् अस्ति। "वैदर्भी वासुदेव" इति शृङ्गाररसप्रधानं पौराणिकं कृष्णभक्तिपरकं लोकप्रियं नाटकम्। अस्य नाटकस्य प्रकाशकालः १९८८ ईशाब्दः।

## काव्यानि

- **श्रीजगन्नाथसुप्रभातादिस्तोत्रम्**

श्रीजगन्नाथसुप्रभातादिस्तोत्रम् आङ्ग्लानुवादेन सह कविना 1980 संवत्सरे प्रकाशितमासीत्, यस्य परिवर्धितं द्वितीयसंस्करणं देववाणीपरिषदा 1998 संवत्सरे प्रकाशितम्।

- **श्रीबदरीशतरङ्गिणी**

1980 संवत्सरे कवेः सुन्दरराजनस्य अन्यतमा कीर्तिः वर्तते श्रीबदरीशतरङ्गिणी। आङ्ग्लानुवादेन सह देववाणीपरिषदा 1983 संवत्सरे इदं प्रकाशितम्। अत्र द्वादशाधिकशतसंख्यकानि पद्यानि सन्ति। अतः एतच्छतककाव्यं खण्डकाव्यं वा वर्तते। अस्मिन् काव्ये श्रीबद्रीनाथस्य साक्षात्कारः काव्यमयेन वर्णितोऽस्ति। बद्रीनाथे केदारनाथे च स्थिताः नद्यः,

मन्दिराणि, पुराणप्रसिद्धानि बहूनि स्थानानि वर्णितानि यानि भौगोलिकस्य स्थानस्य क्षेत्रे प्रसिद्धानि। बदरीशस्येच्छां विना कोऽपि दर्शनं न प्राप्नोति -

'न कामकारेण न वा बलेन न वेदशास्त्रादिषु कौशलेन।
उत्पेत्य यं शक्यमुपासितुं नः ऋते तदिच्छां बदरीशमीडे'[2]॥

भगवतः गुणगणगणने शतमुखस्य भक्तस्य लेखनी स्मरणीया -

'अखिलभुवनसृष्टिस्ते तु लीलाविभूतिः
अपि च विविधयोनौ क्षेपणं तत्र पुंसाम्।
अविरतभवतान्तं मां तया लीलया त्वम्
अलमिति बदरीश क्षिप्रमेवोद्धरस्व'[3]॥

श्लेषानुप्रासमिश्रितैः पदैः कविः काव्यमुपसहरतीत्थम् -

'जिगमिषन् बदरीं श्रयति यो बदरीशतरङ्गिणीम्।
पठति वा बदरीशतरङ्गिणीं स लभते बदरीं शतरङ्गिणीम्'[4]॥

- **सुरश्मिकाश्मीरम्**

अयं कविः तामिलभाषया विविधग्रन्थान् संस्कृतभाषया अनूदितवान्। तेषु "सुरश्मिकाश्मीरम्" इति अत्युत्तमं लघुकाव्यम्। १०८ संख्यकानि पद्यान्यस्य महाकाव्यस्य सौन्दर्यं वर्धयन्ति। तत्र सर्वाणि पद्यानि उपजातिच्छन्दसैव विरचितानि। १९८३ ईशाब्दः अस्य लघुकाव्यस्य प्रकाशकालः। अस्मिन् महाकाव्ये काश्मीरप्रदेशस्य नैसर्गिकरमणीयता सांस्कृतिकगौरवं तथा प्राचीनवैभवम् अद्यतनसौन्दर्यं च कविः वर्णयति। द्व्यधिकैकशत-संख्यकोपजातिभिः अत्र काश्मीरस्य चारुचित्रं वर्णितमस्ति। अस्य महाकवेः विषये भारतसर्वकारशिक्षासंस्कृतिमन्त्रालयस्य संयुक्तपरामर्शदाता श्रीरामकरणशर्मा उक्तवान् - "अनन्यसामान्यः खलु रामणीयकसमवायः सुरश्मिकाश्मीरीयः। एकतस्तु श्रमरम्य एष भारतदेशः। अपरतश्च तदीयरम्यतायाः

सारभूतो गिरिनिर्झरवनद्रुमपुष्पफलमालालङ्कृतः कविकुलकुमुदकलधरः परमरमणीयो भूस्वर्गः काश्मीरप्रदेशः। क्षणे क्षणे नवतामुपेयुषी पुनः पुनर्जायमाना पुराणी च गीर्वाणवाणी कोमलकान्तपदध्वनिः परमरमणीया। तदेत्त्रितयमपि रामणीयकमेकत्र सङ्गमयति यथार्थनामा कविरेष श्रीसुन्दरराजः। अष्टोत्तरंशतमुपजातयः सुरश्मिकाश्मीरीयाः कस्य वा न हरति मनः सहृदयस्य?" इति। विश्वबन्धुत्वस्य भावना तस्य "सुरश्मिकाश्मीरम्" इत्यस्य प्रथमपद्यादेव दृश्यते-

'सख्येन विख्यातिमुपागतेषु देशेषु मुख्ये किल भारताख्ये।
प्रदिक्षु काश्मीर इति प्रसिद्धः प्रभाति कौबेरदिशि प्रदेशः'[5]॥

काव्यस्य विषये कविः प्रशंस्य वदति -

'आमोदवाही रसिकाननानामयं रसानां रुचिरः प्रवाहैः।
सुवर्णपूर्णस्सुमनोमनोज्ञः कवेर्नवः कश्चिदिव प्रबन्धः[6]॥

काश्मीरस्य विशेषता तस्य रुचिरताएकत्र श्लोके समुपलभ्यते -

'क्वचिन्नतश्च क्वचिदुन्नतश्च क्वचिज्झरीणां मुखरो रवैश्च।
क्वचित्प्रशान्तैर्भरितो वनान्तैः क्वचित्तुषारावृतपर्वतैश्च॥
कान्तारशान्तः कुलशैलकान्तः कासारकूलैः करणानुकूलः।
कालो वसन्तः कविकोकिलानां काश्मीरसंज्ञो विषयो मनोज्ञः॥
विज्ञानिभिस्तत्र विचारणीयं विवस्वता विस्फुरता विनैव।
विकासमायान्ति विचित्रमत्र विलासिनीनां वदनाम्बुजानि॥
काश्मीरनाम्नी तरुणी किमेषा हेमन्तशीतौ किमृतुनिशीथः।
किं कम्बलोऽयं धवलस्तुषारः शेते यमावृत्य नतोन्नताङ्गी॥
एवं सनाथोऽमरनाथधाम्ना प्रान्तः प्रशान्तोऽमरराजहृद्यः।
काश्मीरनामा कविकामसीमा विद्योतते द्युद्युतिरद्वितीया॥
काश्मीरलावण्यगुणैः कवीन्द्रः कान्तैरयं सुन्दरराजनामा।

आकर्षितोऽवर्षदपास्ततर्षं हर्षेण काव्याम्बुमुचो घटायाः[7]॥

- **अभागभारतम्**

'अभागभारतम्' इति लघुकाव्यम् इन्दिरागान्धिसमये तात्कालिकं भारतं विषयीकरोति। देववाणीपरिषदा 1985 संवत्सरे इदं प्रकाशितम्।

- **श्रीहनूमत्पञ्चाशत् शरणागतिषोडशी च -**

आर्षकवेः प्रत्ययेन लिखितं वर्तते कविना 'श्रीहनूमत्पञ्चाशत्काव्यम्'। 'श्रीहनूमत्पञ्चाशत् शरणागतिषोडशी' चेति काव्यद्वयम् आङ्ग्लानुवादेन सह देववाणीपरिषदा 1985संवत्सरे एकत्र प्रकाशितम्। परिवर्धितं द्वितीयं संस्करणं प्रकाशितं जलहनुमत्-ट्रष्टद्वारा राउलकेलानगरात् 1999 संवत्सरे। "श्रीहनूमत्पञ्चाशती" इत्यस्य विषये डाँ. रमाकान्तशुक्लः लिखति - "अस्य वैशिष्ट्यमिदं यदत्र स्रग्धरावृत्तेन अतुलितबलधामा, हेमशैलाभदेहः, दनुजवनकृशानुः, ज्ञानिनामग्रगण्यः, सकलगुणनिधानं, वानराणामधीशः, रघुपतिवरदूतः, वातजातः श्रीहनूमान्सभक्तिभावं स्तूयते। केनापि रोगेणाक्रान्तः कविः एतद्रचनया द्रागेव स्वास्थ्यमलभतेति तेनाहं स्वमुखेन सूचितः। भगवता श्रीहनुमता रचनायामपि साहाय्यं कृतमिति कवेरनुभवः। भक्तिरसपरीतानां रचनानां कवन-श्रवण-पठन-मननादिभिः प्राणिनां कल्याणं भवत्येव"[8] इति।

कविः कश्चित् यदा किमपि वृत्तमवलम्ब्य भगवन्तं स्तौति तदा वृत्तफलानुसारेण अप्रार्थितेनापि भगवता तस्मै अनुगृह्यते। एतादृशं भवति खलु संस्कृतवृत्तमाहात्म्यम्। स्रग्धरावृत्तेन स्तुतौ कृतायां स्तोतुः निवारणं भवति इति खलु सम्प्रदायः। 'आरोग्यं भास्करादिच्छेत्' इति शास्त्रोक्तिः। शापग्रस्तः कुष्ठरोगपीडितः कविः मयूरः स्रग्धरावृत्तविरचितेन श्लोकशतयुतेन सूर्यशतकेन भगवन्तं रविनारायणं संस्तुत्य रोगानिस्तीर्णः इति जानीमो वयम्। विषधरव्याधिदैवाधिपीडानिवारणाय कवितार्किकसिंहैः श्रीनिगमान्तमहादेशिकैः गरुडपञ्चाशदाख्या स्तुतिः विरचिता। रोगनिवारणाय परमवैष्णवेन

श्रीकूरनारायणेन हेतिराजस्य श्रीसुदर्शनस्य स्तुतिः स्रग्धरावृत्तेन विहिता। तत्स्तोत्रं श्रीसुदर्शनशतकमिति सर्वरिपुनाशकत्वे प्रसिद्धं जातम्।

तथैवं 'श्रीहनूमत्पञ्चाशत्' इति स्तोत्रकाव्यस्य आमुखे कविः काव्यलेखनप्रयोजनं प्रतिपाद्य वदति - "अखिलभुवनजन्मस्थेमभङ्गादिलीलस्य भगवतः श्रीमन्नारायणस्य लीलाः देवैरपि दुर्विज्ञेयाः अतिसीमितबोधशक्तयः केवलं मनुष्यभूताः वयं कथं वा ताः अवेतुं शक्नुयाम ? तस्य लीलास्वियमन्यतमा यत् भक्तंमन्येन क्षुद्रकविना निमित्तभूतेन मया स स्वेनानन्यस्य स्वस्मिन्ननन्यसाधारणभक्तिभावभरितस्य पवननन्दनस्य स्तोत्रमिदं स्वस्मै स्वप्रीतये स्वयमेव कारितवान्।

कथमिदं जातमिति ज्ञातुं भावुकाः अवश्यं कुतुकाः स्युः। द्वित्रवर्षेभ्यः प्राक् केनाप्यपरिच्छिन्नेन रोगेणाक्रम्यमाणोऽहमतीव अस्वस्थोऽभूवम्। बहुधा प्रयतमानैः बहुभिरपि भिषाग्भिः न रोगस्य निदानमवगतम। तेषां चिकित्साऽपि ततः फलप्रदा नाभूत्। वर्धमानरोगव्यथोऽप्यहं भगवति श्रीमन्नारायणे समर्पितभरः तस्यैव संकल्पेन लोकानां सर्गस्थितिप्रलयाः संभवन्तीति जानानः तत एव मद्रक्षणभरो मद्रक्षणफलमपि तस्यैव धुरो न ममेति दृढमतिः तिष्ठामि।

एकदा कश्चन योगी महापुरुषः परिपक्वमतिः तेजस्वी ज्ञानशीलवयोवृद्धः श्रीसीतालक्ष्मणहनुमत्समेतवीरघुनन्दनपरब्रह्मणि न्यस्तात्मा तदनन्यः परमवैष्णवो भुवनेश्वरमागतो मम मित्रस्य कस्यचन सदने कंचित्कालमतिष्ठत। तस्य दर्शनं प्राप्तुं मित्रेण चोदितस्सन् रुग्णोऽप्यहं गतवान् । प्रणिपतनपरोऽहं प्रसादसुमुखेन तेन स्पृष्टो मार्जितोऽनुगृहीतश्च। क्षीयमाणरोगवेगेन मयाऽप्यनुपदमगवतं यत् भक्तपराधीनः प्रभुः सुविदितमदस्वस्थावस्थः देशिकादेशकाक्षित्वं स्वं प्रकटयन् तस्य महात्मनः प्रार्थनया मम रक्षायै कृतसंकल्यः। अल्पेनैव समयेन कमपि श्रीहनुमद्भक्तं स एव एव साक्षात् श्रीहनुमन्तमिव मत्सकाशं प्रेषितवान्। स च श्रीमान् आञ्जनेयोपासकः अञ्जसा मां रोगशान्तये श्रीमारुतिपूजादिकमन्वष्ठापयत्। मयाऽपिकालक्रमेण रोगनिवृत्तिः उल्लाघत्वं, यथापूर्वं स्वास्थ्यमपि प्राप्यन्त। परमकारुणिकस्य परब्रह्मणः श्रीमन्नारायणस्य तथा तदादेशवशेन मां परित्रातवतो

वायुपुत्रस्य प्रतिपदम् अञ्जलिं तथा स्तवनमन्तरेण अन्यत् किं वा प्रत्युपकर्तुं मया शक्यते।"[9]

अस्य स्तोत्रकाव्यस्य फलश्रुतौ कविरेव मन्त्रयते इत्थम् -

> 'एतां पञ्चाशतं यः पठति हनुमतः प्रश्रितो वा शृणोति
> भक्त्या तात्पर्यमस्य प्रवचनविधिना श्रावयत्यन्यभक्तान्।
> तद्दृष्ट्या कुष्ठयक्ष्मोदरहृदयशिरःकर्कटादीन् स रोगान्
> उल्लंघ्योल्लाघभूतः सुखमनुभविता शश्वदुल्लासशीलः'[10]॥

अस्मिन् स्तोत्रे प्रभुभक्तेन हनुमता प्रभुनिमित्तं कृतानि आश्चर्यमयानि कृत्यानि भृशं वर्णितानि सन्ति। तस्य वाक्कौशलं, वीर्यं, तेजः, शौर्यं, कार्यसिद्धिपरत्वं राजनीतिचणत्वं, कर्तव्यपरायणत्वं, स्वामिभक्तिः, ब्रह्मचर्यं, नयः, विनयः इत्यादीनां गुणानां पृथक् पृथक् वर्णनं कृतमस्ति कविवरेण। अत्र कविः विचित्रकर्मणः कृतिभिः प्रभुचरितमेव वैचित्र्यमयं जातमिति सम्यक् प्रतिपादितवान्। श्रीहनुमत्पञ्चाशतः शब्दार्थगम्भीराधारा रमणीया दर्शनीया चास्ति। लङ्कापुरीतः समागतः मारुतिः श्रीरामाय स्वविवरणमित्थं वर्णयति-

> 'दृष्टा सीतेति सा त्वामिदमवददिति श्रोत्रपीयूषमुक्त्वा
> रामात् सर्वस्वभूतं रघुकुलतिलकाद्यः परिष्वंगमाप ।
> विक्रान्तं यं समर्थं कपिमतिमुदिता मैथिली प्राज्ञमूचे
> शृण्वन् रामायणं यो विचरति भुवनेऽद्यापि सत्रायतां नः॥
> यः शत्रोः रावणस्य स्वयमयमनुजोऽदेशकालागतोऽत्र
> निग्राह्यो ग्राह्यतां न व्रजति कथमपीतीतरेषूचिवत्सु |
> धर्मात्मा देशकालागत इति वचनैर्हेतुमद्भिर्य ऊचे
> चित्तं रामस्य जानन्नवतु हनुमान् धर्मवित्कर्मभिर्नः॥
> कैलासंकम्पयित्वा वरमथतपसाशम्भुमाराध्य लब्ध्वा
> दम्भोलिं जन्भशत्रोःशलभमिव नयोलक्षते वक्षसि स्म।

मुष्टिं तस्य प्रपात्योरसि दशशिरसस्तेन सद्योऽपनुद्यात्
साधु त्वं श्लाघनीयो रिपुरिति कथितो मारुतिर्भीरुतां नः'[11]॥

सप्तविंशश्लोके अक्षवधं वर्णयता कविना अक्षविपरीतं क्षकारप्राचुर्णेण अनुप्रासः साधितः। यथा-

'अक्षं दक्षं समक्षं क्षतिकरविशिखान् लक्षयित्वा क्षिपन्तं
वक्षस्यक्ष्णोः क्षणाय क्षयमयमनयन् सक्षमस्स क्षमोऽपि।
रक्षो दक्षं विपक्षक्षपण इदमुपेक्ष्यं नहीत्यक्षिणोत्तं
क्षिप्रं क्षिप्त्वाऽन्तरिक्षात्क्षितिमधि हनुमान् विक्षताद्रक्षतान्नः'[12]॥

कविना स्वोपज्ञः आङ्ग्लानुवादोऽपि योजितः। उदाहरणार्थं कानिचन पद्यानि यथा -

'क्रव्यादानां विभाव्यं पुरवरमखिलं हव्यवाहेन दग्ध्वा
देव्यास्संसेव्य नव्याम्बुजसदृशपदं सेव्यमाधाव्य भूयः।
अभ्यर्णे वर्णयिष्यंस्तदथ रघुपतेः तीर्णवन्नर्णवं भोः
तूर्णं कर्णावतीर्णं कुरु सुत मरुतस्तोत्रमुद्गीर्णमेतत्'[13]॥

'O son of Marut (Wind God)! who burnt the beautiful city of demons completely with fire and who after worshipping the hallowed and lotus like feet of Devi ran up and crossed the ocean to describe the whole story to Lord Rama. Please allow this Stotra to enter your ears quickly'.

'श्रीहनुमत्पञ्चाशत्' इति सुन्दरस्य काव्यस्य पारायणेन पण्डितजनोऽपि नन्दिष्यतीति, सर्वंशुभं प्राप्स्यति। सर्वेषां सज्जनानां समस्तकल्याणप्राप्तिरस्तु परमप्रीतेन पवनतनयेन इति विभाव्य काव्योपसंहारं करोति कविः।

शरणागतिषोडशीति काव्यमपि अत्रैव संयुतं वर्तते। भगवति श्रीमन्नारायणे न्यस्तभारा न्यासविद्यावेदिनः शरणागतरक्षणे तस्यतत्परत्वं जानन्तः श्रीमद्भगवद्गीतायां शरणवज्याविषये तेनैव श्रीमन्तमर्जुनं प्रति कृतस्य अन्तिमोपदेशस्य सूक्ष्मार्थः अत्र प्रतिपादितः।

'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः'।।

भगवतः प्रहरणादियोगः निरर्थकः तद्धारणंतु प्रपन्नरक्षणायै वेति श्रीमता निगमान्तदेशिकन अभीतिस्तवे प्रतिपादिकम्-

'अपार्थ इति निश्चितः प्रहरणादियोगस्तव
स्वयं वहसिनिर्भयस्तदपि रङ्गपृथ्वीधर।
स्वरक्षणमिवाभवत्प्रणतरक्षणं तावकं
यदात्थपरमार्थविनियमन्तरात्मेति ते।।
इयं शरणागतिः सर्वेषामपि प्रपन्नानां भवेदिति विश्वसिमः'।

- **अन्यापदेशकाव्यानि**

'अन्यापदेशकाव्यानि' इति काव्यं हिन्द्याङ्ग्लानुवादाभ्यां सह देहलीस्थेन नीताप्रकाशनेन 2003 संवत्सरे महादेवीट्रष्टस्य अर्थसाहाय्येन प्रकाशितम्।

**श्रीसुन्दरराजरचनावली**

"श्रीसुन्दरराजरचनावली" इत्यत्र सुन्दरराजस्य सर्वाः रचनाः निबद्धाः सन्ति। इयं रचना देववाणीपरिषद्, देहलीतः प्रकाशिता। श्रीसुन्दरराजरचनावली इत्यत्र त्रयोदश विभागाः सन्ति, यत्र सुन्दरराजस्य सप्ताधिकैकशतसंख्यकानि काव्यानि लसन्ति। प्रथमखण्डे नव यात्राकाव्यानि सन्ति। यथा – 'बदरीशतरङ्गिणी', 'सुरश्मिकाश्मीरम्', 'मसूरीमाधुर्यम्', 'आवूवर्णनं'

(मौण्टआबूवर्णनं), 'निदाघशमनं' (शिमलावर्णनं), 'कुलुकुतूहलम्' (कुलूतप्रदेशवर्णनं), 'यमुनाञ्जलिः', 'त्रैस्त्रोतसम्' (गङ्गोत्तरीतः हरिद्वारपर्यन्तं वर्णनम्), 'उत्थानभूतानम्' इत्यादिरचनाः उल्लेखनीयाः सन्ति। 'मसूरीमाधुर्यम्' इति षोडषवसन्ततिलकाभी रचितं काव्यम्। यथा -

'उच्चावचं पदमवाप्य जनोऽवलिप्तः
पश्येद्यथा सकलमन्यदधस्तथैव।
कृच्छ्रेण सर्पकुटिलेन पथा मसूरीं
प्राप्यावलोकयति लोकमधो मनुष्यः'[14]॥

'एवं मया बहुविधं रमणीयचित्रं
शृङ्गारवीरकरुणादिरसावसिक्तम्।
तत्रावलोकितमविस्मरणीयभावं
तस्मादगायि कविता ननु तन्मयीयम्'[15]॥

आवूवर्णनं ( मौण्टआबूवर्णनं) यथा -

विभ्राम्यन्तो वियति विबुधा विश्रम्यत्यावतीर्णाः
एनं देशं गिरिवरशिरोभूषणं तोषणं नः।
पुण्यं जैनालयपरिसरं रम्यमालोक्य तृप्ता
आ भूः आ भूरिति यदवदन् एष आभूरभूत्तत्[16]॥

निदाघशमने कविः अष्टभिः श्लोकैः  शिमलावर्णनं करोति-

उन्नताः पुरुषा लोके नियतं शीतमस्तकाः।
इत्येभिरुन्नतैश्शीतैः गिरिकूटैर्निरूप्यते[17]॥

'कुलुकुतूहलम्' इत्यत्र पञ्चश्लोकैः कुलूतप्रदेशवर्णनंकरोति। यमुनाञ्जलिः सप्तविंशतिसंख्यकैः मालिनीश्लोकैः प्रदत्तः। 'त्रैस्त्रोतसम्' इत्यत्र कविः गङ्गोत्तरीतः हरिद्वारपर्यन्तं वर्णनं विदधाति गङ्गायाः महिमानं प्रख्याप्य

चतुर्दशमितैः पृथ्वीच्छन्दोभिः। उत्थानभूतानम् इत्यत्र द्वादश श्लोकैः भूटानस्य वर्णनं करोति। एवमत्र नवकाव्येषु नवस्थानानां भव्यवर्णनं चेतो हरति। द्वितीयखण्डे द्वाषष्ठिः लघुकाव्यानि सन्ति। यथा – 'अन्यापदेशरत्नाकरः', 'सूर्योपाख्यानम्' (द्वादशाधिकद्विशतश्लोकैः उपजातिच्छन्दसा), 'ऋतुमञ्जरी' (नवाधिकैशतश्लोकैः), 'यमुनातटे' (ऊनाशीतिश्लोकैः), 'कामनिवृत्तिः' (दशश्लोकैः), 'भग्नकुटीरम्' (द्विचत्वारिंशत् श्लोकैः), 'आम्रप्रिया' (पञ्चविंशतिश्लोकैः), 'त्वमेव गङ्गा कृतभारतैक्या' (एकादशश्लोकैः), 'वनविलासिनी' (षड्श्लोकैः), 'अभिनवमोहमुद्गरम्' (षड्विंशतिसंख्यकैः श्लोकैः), 'शान्तेर्निशान्तम्' (पञ्चविंशतिसंख्यकैः श्लोकैः), 'पत्नीभक्तिः' (दशश्लोकैः), 'वदान्यदैन्यम्' (विंशतिश्लोकैः), 'राधाकृष्णचित्रम्' (सप्तश्लोकैः), 'तस्याः स्मरामि' (नवश्लोकैः), 'एको रसः करुण एव' (विंशतिः), 'अमेयसारो मम सारमेयः' (दश), 'लोभदशकम्' (दश), 'यमुनाभ्यर्थना' (चत्वारः), 'नैराश्यम्' (दश), 'कालिदासोऽहं च' (एकादश), 'जनप्रियो जोगाजलप्रपातः' (पञ्चदश), 'खनिनिखननिन्दा' (चत्वारः), 'रामस्वामिषष्ठिपूर्त्तिः' (षोडश), 'किं तव जातमद्य' (दश), 'रमाकान्तशुक्लालोचनम्' (त्रिंशतः श्लोकैः), 'मातुलदशकम्' (दश), 'काव्यसमर्पणम्' (दश), 'माता शिशुश्च' (सप्तदशश्लोकैः), 'मेघयाञ्चा' (विंशतिश्लोकैः), 'प्रणयप्रवाहः' (चतुर्दशश्लोकैः), 'जगद्गुरुषोडशी' (अष्टादशश्लोकैः), 'मन्दस्मितकारणम्' (एकादशश्लोकैः), 'आयातबालः' (त्रयोदशश्लोकैः), 'महनीयं महानदी' (6श्लोकैः), 'विधवाष्टकम्' (अष्टभिः श्लोकैः), 'रजकस्य भाग्यम्' (चतुर्दशश्लोकैः) इत्यादीनि काव्यानि अत्र स्थानितानि। सुन्दरराजविरचितं "रजकस्य भाग्यम्" इति काव्यम् अवलोक्य पण्डितप्रवरश्रीनिवासाचार्यद्वारा प्रदत्तम् अभिनन्दनपत्रम् उल्लेखनीयमस्ति-

'श्रीनिधिसुनुः सुन्दरबाहुः संस्कृतकविताश्रेणिनिविष्टः।
वैदिकलौकिकमार्गगतिस्सन् भ्राजति सर्वश्रेष्ठवरिष्ठः'॥

अन्यापदेशरत्नाके नवाधिकैशतं शार्दूलविक्रीडितानि सन्ति।

ऋतुमञ्जरी काव्यं नवाधिकैशतश्लोकैः षड्तूनां वर्णनं करोति। बहुत्र कालिदासीयप्रभावः परिलक्ष्यते। यथा-

‘प्रवृष्य कामं विरताः पयोधराः
प्रकाशते निर्मलनीलमम्बरम्।
प्रसन्नतोयाः प्रवहन्ति निम्नगाः
प्रवर्तते पश्य सखे ऋतुश्शरत्’[18]॥

कृतभारतैक्या इत्यस्य देशभक्तिपरकाः श्लोकाः दर्शनीयाः सन्ति। सुन्दरराजः गङ्गाभक्तिप्रदर्शनपूर्वकं वदति-

‘आचारभाषाविषयेषु भिन्नाः
अनेकभूता अपि भारतीयाः।
त्वया सनाथास्त्वयि विश्वसन्त
सूत्रे निबद्धा मणयो यथा वा’[19]॥

अभिनवमोहमुद्गरम् काव्ये मा कुरु वृक्षनाशमिति सुन्दरमुपदिशति कविः।

तृतीयखण्डे अष्टादशसंख्यकानि स्तोत्रकाव्यानि सङ्कलितानि। तद्यथा – ‘पाणिपञ्चाशत्’, ‘अनन्तचिन्ता’, ‘काञ्चिश्रीवरदराजयात्रा’, ‘विल्लुरमालोलदोलत्सवः’, ‘श्रीजगन्नाथसुप्रभातम्’, ‘श्रीजगन्नाथस्तोत्रम्’, ‘श्रीजगन्नाथशरणागतिस्तोत्रम्’, ‘कलहस्तवः’, ‘श्रीजगन्नाथमङ्गलशासनम्’, ‘श्रीजगन्नाथपञ्चकम्’, ‘देवस्नानपञ्चदशी’, ‘वस्त्रसमर्पणस्तोत्रम्’, ‘श्रीजगन्नाथनामाक्षरस्तोत्रम्’, ‘हेरापञ्चमीस्तोत्रम्’, ‘शरणागतिषोडशी’, ‘श्रीहनूमत्पञ्चाशत्’, ‘देवीदशकम्’ चेत्यादीन्यत्र सन्ति। श्रीजगन्नाथसुप्रभातम् इत्यत्र प्रातः कमनीयवर्णनेन सह प्रभोराह्वानं यथा -

‘उन्मीलितानि नलिनानि सरोवरेषु
पश्याद्य कैरववनानि निमीलितानि।
मुक्ताफलायिततुषारकणास्तृणाग्रे
श्रीमन्ननन्त पुरुषोत्तम सुप्रभातम्॥

ये नर्तयन्ति भुति भावुकरञ्जनाय
नृत्यप्रवीणरमणीस्त इमेऽभ्युपेताः।
गायन्ति हृद्यमधुरं जयदेवपद्यं
भोः श्रीधर श्रितपुरीवर सुप्रभातम्'[20]॥

श्रीजगन्नाथनामाक्षरस्तोत्रे यथा-

'गन्तापुरीं यदि कदाचन कोऽपि जन्तुः
नन्ता पुराणपुरुष पुरुषोत्तमं त्वाम्।
यन्तारमेकपदि सर्वचराचराणां
सन्तापमेव स पुमान् न भजेत्कदापि॥

नामानि नारायण ते सहस्रं
धामानि दामोदर ते सहस्रम्।
तथाऽप्यसाधारणधाम
नामा पुरीजगन्नाथ इति त्वमेकः ॥

थय् थयीति तनुते मनोहरं
नर्तनं कृतंकरप्रसाराणम्।
नाथ एष जगतां त्वरान्वित-
न्यासहेतुदृगगोचरांघ्रिणा'[21]॥

चतुर्थखण्डे राष्ट्रसम्बन्धीनि ऊनविंशतिसंख्यकानि काव्यानि सन्ति। यथा – 'स्वातन्त्र्यप्रशस्तिः', 'जय त्रिवर्णध्वज भारतस्य', 'भाव्यं शुभं भावि हि भारतस्य', 'भारतं नाम विश्रुतम्', 'चिन्ता निकृन्तति मनो मम सा दुरन्ता', 'कथञ्चिदस्तु भारते स्वतन्त्रता सुरक्षिता', 'आह्वानम्', 'रामनाममारणं कथं जनप्रतारणम्', 'पण्डितनेहेरुश्रद्धाञ्जलिः', 'अभागभारतम्', 'आम्बेदकरशतवार्षिकी', 'गोपबन्धुस्मृतिः', 'श्रींमहतावचरितम्', 'राधानाथश्रद्धाञ्जलिः', 'विनिपातः' चेत्यादीनि। यथा पण्डितनेहेरुश्रद्धाञ्जलौ-

'देशास्यास्य यशो दिशासु दशसु व्यापय्य येनामुना
देवानांप्रियमौर्यभूमिपतिना तेनापि नासादितम्।
भाषाजातिकलामतादिषु मिथः कामं विभिन्नेष्वपि
सत्यं भारतबासिनां मनसि नः सौभ्रात्रमुत्पादितम्[22]॥

पञ्चमखण्डे नाटिकाद्वयम् अस्ति – 'अखण्डभारतम्', 'करुणा' इति देशमाहात्म्यं प्रस्तुवत्। षष्ठे भागे एकं चम्पूकाव्यं 'श्रीनिधिवैभवम्', 'वीरभारतम्' 'विजयीभारतम्' इति कथे सन्ति। सप्तमे खण्डे पञ्च आचार्यवन्दनस्तोत्राणि सन्ति। 'श्रीनिधिपाद्यम्', 'आचार्यषष्ठिपूर्त्तिः', 'आचार्यमङ्गलशासनम्', 'श्रीनिधिशताभिषेकोत्सवः', 'श्रीपितृपादप्रणतिः' इति।

अष्टमे पञ्चदश पत्रकाव्यानि सन्ति। यथा –

1) जगद्गुरुभ्यः श्रीपुष्पगिरिशंकराचार्येभ्यः श्रीमुखम्
2) बलंगीरसंस्कृतपरिषदि क्षमायाचना
3) कविकेशवचन्द्रदाशप्रशंसा
4) श्रीकरुणाकरस्य कविताकौशलं प्रति
5) श्रीगौरीकुमारब्रह्मणे पत्रम्
6) कनिष्ठमातुलं प्रति मातुर्देयं संस्मार्य
7) मातुलेन व्यवहारं प्रति पित्रे पत्रम्आचार्यसप्तत्युत्सवाय प्रणतिपत्रम्
9) अध्यापककमलेशमिश्रेभ्यः प्रत्युत्तरम्
10) भागीरथीनन्दशर्मण: नववर्षाभिनन्दनस्य प्रत्युत्तरम्
11) भागीरथीनन्दशर्मणे 1996नववर्षाभिनन्दनम्
12) आचार्यविवाहसप्ततिमह:
13) श्रीसदाशिव संस्कृत विद्यापीठ-नूतनभवनशीलान्यासाय संदेशः
14) डा. सीतानाथाचार्यशास्त्रिणः काव्यस्य प्रशंसा
15) श्रीरमाकान्तशुक्लमहाभागानां पुत्रस्य विवाहे इति।

नवमे नव अनूदितकाव्यानि सन्ति। दशमे खण्डे द्विचत्वारिंशतः समस्यापूर्त्तयः लसन्ति। एकादशे ऊनविंशतिः स्वागताभिनन्दनपत्राणि सन्ति। द्वादशे खण्डे द्व्यधिकशतसंख्यकानि सङ्कीर्णपद्यानि सन्ति। त्रयोदशे खण्डे ऊनविंशतिः पण्डिताभिनन्दनानि सन्ति।

**उपसंहारः**

सत्काव्यसाधकस्य सुन्दरराजमहोदयस्य सकलाः काव्यकविताः रमालये प्रायशः कविताकान्तेन शुल्करमाकान्तेन देववाणीपरिषदा प्रकाशिताः। अत्र सप्ताधिकैशतसंख्यकानि काव्यानि, शतसहस्त्रप्रकीर्णकाव्यानि तस्य महाकवित्वं प्रमाणयन्ति। भौतविद्यायामधीतिरयं भारतीयप्रशासनिकसेवायां दक्षप्रशासकोऽयं पूर्वजानां प्रेरणया स्वकाव्यप्रतिभया च समर्च्चितवान् वाग्देवताम्। काव्येन स अम्लानं यशः कीर्त्तिं च प्राप्य एव ब्रह्मलोकं गतः। अस्य साधकोत्तमस्य काव्येषु यथा छन्दसां नैपुणी, तथैव अलङ्काराणां चारुसन्निवेशः यथा पौराणिकीं काव्यप्रतिभां घोषयति, स्तोत्रकाव्येषु यथा साधनायाः पराकाष्ठां द्योतयति, तथैव प्रत्यग्रसामाजिकविषयेषु लेखनीव्यापारेण सहृदयत्वं प्रमाणयति। सत्यमेवोक्तमासीत् तेन-

‘नाहं धनं वा स्वर्णं वा गेहं वा देहिनां प्रियम्।
ईहे कवितया जेतुं स्नेहं हि विदुषां परम्’॥

### सहायकग्रन्थपञ्जी

*अन्यापदेशकाव्यानि*, नीताप्रकाशनम्, नवदेहली, प्रथमसंस्करणम्, 2003।

*आधुनिकसंस्कृतसाहित्यम्*, नारायणदाशः, वि.एन्.पाब्लिकेशन्, कलिकाता-2020।

*आधुनिकसंस्कृतसाहित्यसन्दर्भसूची*, सि.गिरि. (कुलसचिव), राष्ट्रियसंस्कृतसंस्थानम्, ५६५७-, इन्स्टीट्यूशनल एरिया, जनकपुरी, नवदेहली, २०१०।

*विंशशताब्दीसंस्कृतकाव्यामृतम्*, सम्पादकौ राजेन्द्रमिश्रः चन्द्रभूषणझा, दिल्लीसंस्कृताकादेमी, २०००।

*श्रीजगन्नाथसुप्रभातादिस्तोत्रम्*, देववाणीपरिषद्, नवदेहली, प्रथमसंस्करणम्, 1980, द्वितीयसंस्करणम् 1998।

*श्रीबदरीशतरङ्गिणी*, देववाणीपरिषद्, नवदेहली, प्रथमसंस्करणम्, 1983।

*श्रीहनूमत्पञ्चाशत्शरणागतिषोडशि* च, देववाणीपरिषद्, नवदेहली, प्रथमसंस्करणम्, 1985।

*संस्कृतसाहित्य : विसवीँ शताब्दी,* राधावल्लभ त्रिपाठी, दिल्ली, राष्ट्रियसंस्कृतसंस्थान, १९९९।

## तथ्यसूत्राणि

---

[1] *रचनावली* (४९४/ ९३)
[2] *श्रीबदरीशतरङ्गिणी* (15)
[3] तत्रैव (93)
[4] *श्रीबदरीशतरङ्गिणी* (110)
[5] *सुरश्मिकाश्मीरम्* (१)
[6] तत्रैव *(7)*
[7] तत्रैव (3-6-29-33-107-108)
[8] *श्रीसुन्दरराजरचनावली*, प्रास्ताविकम्
[9] *श्रीहनूमत्पञ्चाशत्* , आमुखम्
[10] तत्रैव (५१, पृ.17)

[11] *श्रीहनुमत्पञ्चाशत्*, (३१-३३, पृ.11)
[12] तत्रैव, (27, पृ.9)
[13] तत्रैव (४९, पृ.17)
[14] *श्रीसुन्दरराजरचनावली* (3, पृ. 27॥
[15] तत्रैव (16, पृ. 29)
[16] तत्रैव (3, पृ. 30)
[17] तत्रैव (8, पृ. 32)
[18] तत्रैव *(92)*
[19] तत्रैव (10)
[20] तत्रैव (2, 23, पृ. 224-227॥
[21] तत्रैव (2-३-४, पृ.25)
[22] तत्रैव (4, पृ. 302)

# काव्यस्य लोकोन्मुखः पन्था वीरभद्रश्च

**डा. महराजदीनपाण्डेयः**

**कवेर्जीवनवृत्तम्** –

मणीषिणः कवेर्वीरभद्रस्य जन्म 1942 तमे ख्रीष्टाब्दे सीतापुरजनपदस्य सिधौलीतहसीलान्तर्गते बौनाभारीनाम्नि ग्रामे अभवत्। श्रीसुधाकरमिश्रात्मजस्यास्य पितामहः पण्डितो गयाप्रसादमिश्रः संस्कृतस्य प्रतिष्ठितो विद्वान् आसीत्, यस्य सन्निधावस्य महाभागस्य प्रारम्भिकी शिक्षा सम्पन्ना। नवमीतो द्वादशकक्षापर्यन्तमस्याध्ययनं लखनऊनगरस्य कान्यकुब्जविद्यालये अभवत्। ततश्च बी. ए. उपाधिम् आगराविश्वविद्यालयात् एम. ए. उपाधिश्च लखनऊतः अवाप्नोत्। शिवस्वामिनः कप्फिणाभ्युदयमहाकाव्यमधिकृत्य पी. एच. डी. उपाधिहेतोरयं लखनऊविश्वविद्यालय आचार्यस्य डा. शिवशेखरमिश्रमहाभागस्य पर्यवेक्षणे शोधकार्यं समपादयत्। ततो लखनऊ नगर एव बप्पाश्रीनारायण वोकेशनल महाविद्यालये प्राध्यापकत्वेन चितः। अस्मिन् महाविद्यालये अध्यापयन्नयं संस्कृतजगति बहुश्रेयः समाचरत्। संस्कृतविषयकासु नैकासु योजनासु व्यापृततया स्वकुटुम्बधर्माचरणविषयकनिष्ठया च विवशीकृतोऽयं 1998 तमे ख्रीष्टवर्षे द्विवर्षाभ्यां प्रागेव स्वैच्छिकीं सेवानिवृत्तिमागृह्णात्।

सेवालाभादनन्तरं पूर्वपरिणीतस्यास्य जीवने पाण्डेयोपाह्वा डा. अनिता पत्नीत्वेनागता। अनेन श्रीमत्यामनितायां पुत्री संस्कृता सर्वज्ञसुविज्ञौ च द्वौ पुत्रावजायन्त। वीरभद्रदम्पती पुत्रपुत्रीणां पालनं कुटुम्बे संस्कृतमयं परिवेशं सम्पाद्याऽकुरुताम्। बालाः खेलन्तः कूर्दमाना हसन्तो रुदन्तो संस्कृतभाषां निसर्गेण मातृभाषात्वेनात्मसादकुर्वन्। गोपालो वार्तापत्रवाहो निर्णेजकोन्ये च नैका नैत्यिकाः सहकर्मिणस्तयोः कुटुम्बस्य सम्पर्कमधिगम्य तत्र कार्यसाध्यां वाग्व्यवहारदक्षतामलभन्त। उपक्रान्तान् संस्कृतसम्बन्धान् बहून् प्रकल्पान् पत्नीं चतुर्दशवर्षदेशीयामात्मजां दशद्वादशवर्षीयावात्मजौ सुविशालं सर्वगन्धाकुटुम्बं

स्वीयं मधुमेहक्षीणं कायञ्चापहाय 2000 तमे ख्रीष्टवर्षे जुलाइमासस्य विंशे दिनाङ्के क्रान्तद्रष्टा वीरभद्रश्चरमां शान्तिमभजत।

1977 तमात् वर्षात् प्राक् वीरभद्रस्य चत्वारः काव्यग्रन्थाः प्रकाशिताः। ते च ग्रन्था यथा – 'पीडा' (हिन्दीगीतिकाव्यम्), 'भूलों की छाँव में' (हिन्दीगीतिसंग्रहः), 'अनुनयः' (संस्कृतगीतिकाव्यम्) 'अट्टहासश्च' (संस्कृतकाव्यसंग्रहः), 'सामान्यज्ञानं' 'पत्रलिखन-कला' चेत्यादयः केचिच्छात्रोपयोगिग्रन्थाश्च। 1977 तमेऽब्दे मार्चमासतोऽस्य सर्वगन्धाख्यायाः संस्कृतमासपत्रिकायाः प्रकाशनं प्रावर्तत। अस्यानन्तरीणाः सर्वा रचना अस्यामेव प्रकाशिताः। सर्वगन्धा ग्राहकाणां कादाचित्केन प्राप्यमाणेन शुल्केन मिश्रमहोदयस्य वेतनधनेन च 1989तमं ख्रीष्टाब्दान्तं प्रकाशं गता। मध्ये विरम्य 1997 तमात् ख्रीष्टाब्दात् पुनः प्रकाशयितुं प्रारब्धा किञ्च 2001 तमे वर्षे प्रकाशनाद् व्यरमत्।

वीरभद्रस्य काव्यानां नवतिप्रतिशतमंशः, एकः स्त्रैभाषिकः कोशो वेदवाङ्मयगुटिका च वीरभद्ररचनावलीति नाम्नि द्विभागात्मके ग्रन्थे राष्ट्रिय-संस्कृतसंस्थानस्य दिल्ली मुख्यालयात् 2017 तमे वर्षे प्रकाशितो जातः। तत्र अनुनयः, युगधर्मः (महाकाव्यम्) लघुवंशम् (महाकाव्यम्) चतुर्दशरूपकाणि, अस्तव्यस्तपुराणं, धृतराष्ट्रोपनिषद्, विनोदाय (हास्यव्यंग्यसंग्रहः) गन्धवहः (सर्वगन्धासम्पादकीयानां संग्रहः) च संकलिताः।

'भद्रपाणिनीयं' (पाणिनीयव्याकरणपरिष्कारग्रन्थः) भद्रकौमुदी भद्रकोषश्चाप्रकाशिताः सन्ति बहवो व्याकरणालंकारशास्त्रीया निबन्धाश्च। भवतां पत्राणि किं भवान् जानातीति ग्रन्थद्वयं प्रकाशनाधीनम्।

**वीरभद्रस्य कवित्वम्**

वीरभद्रो विंशस्य शतकस्य रचनाकृत्। स सुचिरं स्वातन्त्र्योत्तरप्राजातान्त्रिक-समाजस्यानुभवं प्राप्तवान्सीत्। द्विदशकादधिकव्यापि जीवनं तस्य संस्कृतपत्र-कारस्य जीवनमासीदतस्तस्य कविकर्म आलोचनाभिव्यक्त्योराह्वानानां मध्ये

रूपाकारावाप्तवत्। तस्य सर्वगन्धा पत्रस्य आदौ धुष्टाः तस्य सिद्धान्ता विकीर्णा दृश्यन्ते। ते चैते – भाषारूपेण संस्कृतसंवर्धनं, समाजे प्रगतिशीलविचारप्रतिष्ठा, धर्माडम्बरविरोधः, अनुशासनेन कर्तव्यपालनमेव धर्म इति विचारप्रतिष्ठा, स्वर्गौ मिथ्याभक्तिश्च वृथा इति सिद्धान्तव्यवस्था चेत्यादयः।

स संस्कृतं राष्ट्रभाषात्वेन प्रतिष्ठितां दिदृक्षुरासीत् तेन तां सर्वग्राह्यां सर्वसम्प्रेषणक्षमाञ्च द्रष्टुं साग्रहमभिषन्ति स्म। विकटाक्षरसंघटितदुरूहपद-घटितदुर्भेद्ययमकश्लेषितशब्दचमत्कारमात्रविश्रान्तभयङ्करदैर्घ्यजृम्भमाणसमास वेष्टितमहायासोपपद्यमानान्वयसाधितरक्तबीजवत्परिवर्धमानविशिष्टविशेषणोपहि ताऽनन्तायमानवाक्यावली येषां रसाय ते.....। न तेषां पाठनेन कोऽपि लाभः। तानि न काव्यानि न साहित्यं न कला केवलं स्वपाण्डित्यख्यापनपर-बुद्धिघूर्णनकार्येण स्वदर्पदर्शनम्। अनेन प्रभाविता गद्यकाराः प्रायः पाण्डित्यप्रदर्शकाः।[1] इति तस्याभिमतम्। सोऽवोचत् – "समर्थः पदविधिः इत्यधुना समर्थः भाषाविधिः बोद्धव्यः। विश्वेऽधुना विषयाणां संख्यावधीनात् आंग्लादिषु 'विषयविशेषावबोधानुकुला भाषा (Functional language)' इति सिद्धान्तः स्फुरति। तदनुसारं संस्कृतज्ञैरपि चेष्टितव्यम्। भाषा केवलं भावसंङ्क्रमणमाध्यमम्। तन्निरपेक्षा भाषाशुद्धिर्बुद्धिभाररूपा।[2] संस्कृतं केनचित् धर्मेण जात्या वा संयोज्य विमर्शनं विरूणद्धि सः।[3]

संस्कृतं जनोपयोगि राष्ट्रभाषापदभाजं च विधातुमुद्युक्तः सः पात्रकारितया सह 1986 तमेऽब्दे सप्ताहान्तं संस्कृताक्रीड इत्यभिधेयमुत्सवं लखनऊनगरे समायोजयत्, यस्मिन् विविधखेलासु संस्कृतस्यानुप्रयोगः, संस्कृतकाव्यस्पर्धा, संस्कृतसङ्गीतरूपकाभिनयः, चित्रवीथी, गीतं नृत्यञ्च, तादृशः कार्यकलापः प्रदर्शितो जातो, येन सामान्यजनस्तां प्रति निसर्गेणाकृष्येत। शासनस्य ध्यानमाक्रष्टुं संस्कृतविकासं जनान्दोलनेन योक्तुं स लखनऊनगरात् दिल्लीं यावत् सकुटुम्बः सहचरैः समं पदयात्रामकरोत्। तस्य संस्कृतविकासस्य भावियोजनासु संस्कृतकलापः (Club) संस्कृतचलच्चित्रनिर्माणञ्चास्ताम्।

वीरभद्रस्य कृतित्वं प्रगतिशीलं यदनुसारं रचनाकारः स्वान्तः सुखाय न रचयति। रचनाया अनैः सर्वैः प्रयोजनैः[4] समं समष्टिगतस्य शिवेतरस्य क्षतिरिति प्रयोजनं रचनाकृतां मनांसि दृढं प्रतिबध्नाति। तादृश्या रचनायाः सामाजिकोऽपि तद्रचनायाः कलाबहुलरस्यतातोऽधिकं किञ्चिदपेक्षते। रचनाकारस्य च रसभावसंवलितान् कांश्चनैहिकान् लोकहितान् विचारान् प्रति समादरो भवति। परं तेन साहित्यं तस्य प्रचारैकप्रयोजनम्। अगम्भीरं लोकप्रियसाहित्यपदमेव बिभर्तीति भ्रमो न भवेत्। समकालिकता सम्वेदोवतो रचनाकृतः केवलमतीतोन्मुखतां प्रति नात्यभिनिवेशो भवतीत्येव तेन व्यज्यते। तद्विपरीतमन्ये बहवः शाश्वततैकमोहमूढाः सद्यः सम्पन्नं सम्पाद्यमानं वा विषयीकृत्य कृतं काव्यमस्माकं कालजयितां प्राप्तुं न पारयेदिति भिया तां दिशं प्रति नोत्सहन्ते। परं स्वस्य कालं प्रति चेतनावान् समालोचकोऽन्यदेव वदति – "जो लेखक अपनी रचनाओं में शाश्वत सत्य से कम कुछ भी स्थापित नही करना चाहते है, वे अपनी रचनाओ की तात्कालिक प्रासंगिकता भी खो देते है"[5]।

लोकतान्त्रिकता नाम स्वतन्त्रभारतस्योपलब्धिः। तया राजनीतिर्मानव-जीवनस्य पोषणी तोषणी सञ्चालिका नियामिका च शक्तित्वेन प्रतिष्ठापिता। वीरभद्रस्य रचनायाः पुष्कलोंऽशो राजनीतिं लक्षयति। राजनीतेर्विरूपणं प्रति कुर्वन्तीनां तस्य रचनानां निदर्शनम् –

राजनीतेरिन्द्रजालम्
चलति चित्रं सर्वकालं, पश्य निःशुल्कं रसालम्
राजनीतेरिन्द्रजालम्।
X X X
दुर्व्यवस्था दृश्यते या, दुर्दशा संभुज्यते या
साऽस्मदीयपदस्थितेः प्राक्, नः पदच्युतितः परा वा।
दलैः सर्वैरयं मन्त्रो गीयते हा दत्ततालम्।
राजनीतेरिन्द्रजालम्।।"[6]

अपि च – "शपथं कृत्वा नहि पालयिता
स्वार्थे प्रतिपक्षं लालायिता
लज्जा तस्य न पार्श्वेव गन्त्री
किं सखि धूर्तो? नहि सखि मन्त्री"[7]

राजसत्तायाः प्रतिपलं भ्रंसस्याशंका विद्यते निरंकुशकर्मचारिवर्गस्य चोद्भवोऽपि तथैव। वीरभद्रस्यात्र सोत्प्रासवचनम् –

"आशु वर्धय वेतनं नः
कर्म नो कुर्मस्ततः किं योग्यताहीनस्ततः किम्?
कार्यसमये होटलादौ रासकं कुर्मस्ततः किम्?
स्वार्थसिद्धिस्तथोत्कोचो नित्यनित्यं पूजनं नः।
आशु वर्धय वेतनं नः।"[8]

एतदतिरिच्य भ्रष्टराजसत्तामाधिकृत् नैकत्र वचांसि कवेः।[9]

राजनीतिमधिकृत्य काव्यसर्जनं न सुकरमिति समालोचका निगमयन्ति –...."राजनीतिककविता कविता के रूप में अपेक्षया ही नहीं बल्कि अशक्यतया सपाट होती है।"[10] परं तत्रापि विश्वसाहित्ये राजनीतिकं काव्यं विरच्यत एव। कथामिति प्रश्ने समालोचका वदन्ति यत् तादृशस्य काव्यस्य सत्ता विडम्बनवचो भङ्ग्या नाटकीयतया चाक्षता प्रत्युताधिकं मर्मस्पर्शिनी सिध्यति। [11]

वीरभद्रस्य काव्येष्वैतत् प्रचुरं द्रष्टुं शक्यते।

केषुचिच्च तात्कालिकराजनीतिकचरित्राणां व्यातिकराणाञ्च सनामग्राहं प्रवेशात् किञ्चिदुत्फुल्लकरी रस्यता साक्षात्क्रियते। तानि चैतानि – 'यतोऽहं पूजारी', 'अहं भारतीयः', 'संसदि संस्कृता', 'किं सखिमन्त्री', 'नेता जी रजकः', 'अर्जुनोऽहम्', 'दिल्ली पश्यति', 'राजदेवो भव', 'अटलजी', 'विहार भगवन् किं भविता', 'विधायकेभ्यः संस्कृतकक्षा', 'महायादवीयम्', 'अटलकल्याणीयम्' इत्यादीनि।

कोऽपि कविर्यस्मिन् समये समाजे च जीवति ताभ्यां पराङ्मुखतामवाप्य कवयितुं नार्हति। स देशकालयोः स्पन्दनं वैक्लव्यं मौनं कोलाहकं चानुभवन् कवयेदित्येव क्षेमेन्द्रस्य देशकालौचित्यस्य[12] सारः। आम्, तादृशं काव्यं रसभावभरितं स्यान्न तु कस्यचिद् विचारस्य घोषः केवलम्।

1982 तमेऽब्दे आचार्यस्य नामवरसिंहस्य 'दुसरी परम्परा की खोज' ग्रन्थः प्रकाशमायातः। ततश्चाचार्यकमलेशदत्तत्रिपाठी, डा. राधावल्लभत्रिपाठी चोभौ विद्वांसौ संस्कृतकविताया द्वितीयस्याः परम्परायाः किं वा धारायाश्चर्चां प्रारभेताम्। 1987 तमे वर्षे पुनः आलोचनापत्रिकायां नामवरसिंहः 'कविता की दुसरी परम्परा' इति शीर्षके निबन्धे रुद्रट-वामनादीनामुल्लेखपुरःसरमसाधयत् – "काव्यशास्त्र में प्रधानता वस्तुतः स्वभावोक्ति विरोधी परम्परा का ही है।...... काव्यशास्त्र के आचार्यों की यह महान् परम्परा आपाततः तो स्वभावोक्ति का विरोध अलङ्कार के स्तर पर ही कर रही थी, किन्तु वस्तुतः इस प्रक्रिया में स्वभावोक्ति की अन्तर्वस्तु भी तिरस्कृत हो रही थी। यह अन्तर्वस्तु है लोकजीवन का चित्रण। कविता का लोक धर्म।"[13] एतामेव दिशं प्रति डा. देवदत्तकौशिकमहोदयेन 'संस्कृतकाव्यशास्त्र में व्यावहारिक समीक्षेति' ग्रन्थेन 1940 तमेऽब्दे एव ध्यानाकर्षणं कृतमासीत्। तेनोक्तं यन्नाट्यशास्त्रे भरतप्रोक्तेषु षट्त्रिंशल्लक्षणेषु दृष्टमन्यतमं, यत् परतोऽलङ्कारशास्त्रिभिः स्वभावोक्त्यलङ्कारत्वेन शास्त्रे निवेश्य कश्चिन्महत्त्वावहः काव्यविशेषस्तिरस्कृतः[14]।

वीरभद्रोऽस्या एव द्वितीयस्याः संस्कृतकाव्यधारायाः कविः, यो वर्तमानयुगस्य विकृतराजनीतेः संघटितधर्मस्य वर्चस्विन्याः सत्तायाः प्रतिपक्षं रचयति। अत एव समकालीनैः समालोचकैः संस्कृतकविताया द्वितीयस्या धाराया ध्वजोत्तोलकैश्चापि तथैवोपेक्षितो यथा धर्मकीर्तिः कस्मिंश्चिद् युग आसीत्। तस्य सम्पूर्णं काव्यं सर्वगन्धायां तस्य प्रकाशितानि पत्रोत्तराणि चैतस्य प्रमाणम्। 'को ब्रुते जगतोऽस्ति नियन्ता', 'शेते क्व ते स भगवान्?' इत्यादि कवितासु स ईश्वरनामधेयां कामपि परमां सत्तां न्यक्करोति। सर्वगन्धायाः सम्पादकीये स लिखति – "समाजकल्याणाय सज्जनैः स्थापिता ईश्वरभक्तिरूपा

संस्थाऽधुनाऽकल्याणाय कल्पते। सा अधुना परिवर्तनीया। इयं प्रगतिशीलता"।[15] आर्थिकेऽस्मिन् समये मन्दिरे प्रभूतस्वर्णराशेः का नामौचितीति तस्य स्पष्टमभिमतम्।[16]

कवेः 'युगधर्मः' पञ्चसर्गात्मकमपूर्णं महाकाव्यम्। अस्य नायकोऽद्यतनस्य समाजस्यैकः साहसिको युवा य आडम्बररहितस्येश्वरविहीनस्य सत्यपरायणस्य कस्यचिद् धर्मस्य प्रवर्तकः।

'लघुवंशम्' अस्य द्वितीयं त्रिसर्गात्मकमपूर्णं महाकाव्यम्। अस्मिन्नस्य युगस्य परप्रत्ययनेयबुद्धीनां स्वसंस्कृते वैदेशिकीं संस्कृतिं श्रेयसीं मन्यमानानां प्रतिनिधिभूतो लघुनामा नायकः। काव्यमिदमाद्यन्तं छन्दोवस्तुसंघचनादृशा कालिदासस्य रघुवंशमहाकाव्यस्य विडम्बनकाव्यम् (Parody)। महाकाव्यस्य निशितव्यंग्यस्यैकं निदर्शनम् –

"क्व कूटप्रभवो वंशः क्व संस्कृतगता मतिः।
पुपूषुर्दूषितां जाड्यात् काव्येनास्मि जाह्नवीम्।।
X X X
सोहमाजन्मधूर्तानामाफलोदयधर्मणाम्।
आसमुद्रपिपासानाम् आनाकधनखोजिनाम्।।[17]
X X X
एकातपत्रं जगतो गुरुत्वं चकास्ति वेदोपनिषत्सु यत्र[18]
विगर्हयंस्तं पदकत्रयार्थं विचारमूढः प्रतिभासि मे त्वम्।।"

"अनुनयः" काव्येष्वन्यतमो यो युवकवेः शृङ्गारभावोच्छ्वासः। तस्मादेकं पद्यम् –

"अनुनयाय न यायतलोचना
कलमदाऽलमदाद् विषलान्यपि।
सपदि सापदिशा कविवर्षकै
रसमयैः समयैरनुनीयते।।[19]"

वीरभद्रस्य चतुर्दशरूपकेष्वैकं त्र्यङ्कमन्यानि एकाङ्करूपकाणि। तेष्वैकं प्रहसनं परं सर्वेष्वन्येष्वपि मर्मस्पर्शि हास्यं-तीक्ष्णं व्यंग्यञ्चानुभूयेते। 'सुल्तानादस्यु'र्नाम रूपकं पारसीकरङ्गप्रविधेः साङ्गीतरूपकम् (नौटङ्की) अन्यानि सर्वाणि दृश्येषु विभक्तानि पाश्चात्य रङ्गप्रविधिप्रभावितानि सन्ति। एतेषु रूपकेषु पाषाण्डिधर्माचार्याणामल्पशिक्षितानां दर्पोद्धतानां पुरोहितानां चरित्राणि शासकीयाशासकीयसेवासु, नियोगोपचारस्य विकृतयो विषयीकृताः। अत्र 'वेतालकथा' इत्येका प्रलापिकाख्या नूतनतमा नाट्यरचना।

षट्सर्गात्मकम् 'अस्तव्यस्तपुराणं' नाम विडम्बनकाव्यम्। निदर्शनत्वेनास्यैकं पद्यम् –

"सैषा सर्वज्ञता श्रेष्ठा सैषा सर्वज्ञता परा।
अज्ञातेषु विषयेषु यदुच्चैर्भाषणं मुहुः।।"[20]

धृतराष्ट्रोपनिषदेकं समकालिकीघटनाश्रितं भगवद्गीतोपनिषद्विडम्बन-काव्यम्। अस्यैकं पद्यम् –

"न त्वेवाहं सती साध्वी न त्वं नेमे विरोधिनः।
न चैव न भविष्यामो भ्रष्टा वयमितः परम्।।"[21]

'विनोदाय' इत्यैको गद्यमयो हास्यव्यंग्यसंग्रहः। अस्मिन्नातिदीर्घाणि हाय-व्यंग्यानि संकलितानि।

'वेदवाङ्मयगुटिका' पद्यमयो वैदिकवाङ्मयस्य परिचयात्मको ग्रन्थः। 'भद्रकोषः' अमरकोषसदृशः पद्यात्मकः कोषः। 'दैनिकोपयोगे संस्कृता' ऊनाशीतिपृष्ठात्मकोऽपूर्णः संस्कृत-अंग्रेजी-हिन्दीभाषामयस्त्रैभाषिकः कोशः। सर्वगन्धायाः प्रत्यकं मुखपृष्ठे किमपि सामयिकव्यतिकरमधिकृत्य किमपि रेखाभि रचितं व्यंग्यचित्रमस्य चित्रकारकौशलं व्यनक्ति।

काव्यनाट्यकोशश्चनापत्रकारिता चित्राङ्कनव्याकरणेत्यनेकविधसर्जन-प्रतिभावान् महाकविर्वीरभद्रः संस्कृतकाव्यपरम्परायास्तस्या धाराया रचनाकृद्,

यस्यां कोऽपि जीवनमूल्येन लेखनसाहसं कर्तुमर्हति। वीरभद्रस्य सम्पूर्णं कविजीवनं लोकहितसंवादि परमतीतैकनिष्ठानां रूढिमूढानां कृतेऽसंतुदमस्ति। तेन समकालिकैर्नैकै रचनाकृद्भिरालङ्कारिकैश्चाकृतमूल्याङ्कनं कृतमद्यावधि।

"दाक्षीसुतग्रथितशास्त्रपुमास्य सम्यग्यः प्रक्रियानिगमनं स्वयमुज्जहार।
तं वीरभद्र इति सार्थकनामधेयं ब्राह्मी सुतश्रुतमुदारधियं नमामः।।"

(आचार्य बच्चुलालोऽवस्ती 'ज्ञान')

## तथ्यसूत्राणि

---

[1] डा. वीरभद्रमिश्रः – '*सर्वगन्धा*'- 6/11-12/2-3/1983

[2] तदेव -2/3/5-6/1978

[3] तदेव – 5/1/4/1981

[4] आचार्यः मम्मटः – काव्यप्रकाशः 1/2

[5] निर्मलवर्मा – 'कलाका जोछिम', पृ. 58

[6] डा. वीरभद्रमिश्रः – 'सर्वगन्धा' – 1/6/5-9/1977

[7] डा. वीरभद्रमिश्रः – 'सर्वगन्धा' – 1/6/5-9/1977 अक्टूबर, 1980

[8] तदेव – 1/5/7-8/1977

[9] तदेव – अहं मन्त्रिपुत्रः 2/6/8-9/1978, ससखेत्यागपत्रं नोदेयम् – 2/8/10-11/1978, राजनीतिमहिमा – 5/2/5/1981, जय हे – 8/3-4/6-7/1984, नटः पूज्यते – 8/10/1/1985, को भ्रष्टः – 10/3-4/8/1986, दिल्ली पश्यति – 10/10/1/187, अहं मन्त्री -10/11/2/1987

[10] ए. अलवारेज – उद्धृतम् 'वादविवादसंवाद' (प्रो. नामवरसिंह), पृ. 114

[11] प्रो. नामवरसिंह - 'वादविवादसंवाद' पृ. 118

[12] आचार्यः क्षेमेदन्द्रः - 'औचित्यविचारचर्चा' 26,27

[13] प्रो. नामवरसिंह – 'कविता की जमीन और जमीन की कविता', पृ. 29

[14] ड. देवदत्तकौशिकः – 'संस्कृतकाव्यशास्त्र मे व्यावहारिक समीक्षा', पृ. 254-56

[15] डा. वीरभद्रमिश्रः – 'सर्वगन्धा' 2/6/8-9/1978

[16] तदेव -6/8-9/11-01-1982-83

[17] तदेव लघुवंशम् 1/ 2,5 (सर्वगन्धा -10/9-1986)

[18] तदेव – लघुवंशम् 2/47 सर्वगन्धा – 11/11-12/1988

[19] डा. वीरभद्रः – 'अनुनयः' -2

[20] तदेव –'अस्तव्यस्तपुराणम्' -4.6 (सर्व. 2/8/10-11/1978)

[21] तदेव – 'धृतराष्ट्रोपनिषद्' – 8/3-4/6-71984

टिप्पणी – सर्वगन्धा (सम्पादकः - वीरभद्रमिश्रः) मासिक्या अग्रे लिखितानामङ्कानां तात्पर्यमस्ति – पत्रिकावर्षसंख्या/ मञ्जरीसंख्या / ख्रैष्टवर्षस्य माससंख्या/ख्रैष्टवर्षसंख्या।

# वाचस्पत्युपाध्यायमहोदयस्य संस्कृतसाहित्यं प्रति योगदानम्

**डा. भारतभूषणरथः**

**उपक्रमः –**

विस्तृतं संस्कृतवाङ्मयम्। अत्युपादेयानां शास्त्राणां समाहारत्वात् समाजे अस्य स्थानं सर्वोत्कृष्टम्। संस्कृतभाषा देवैः व्यवहृता, ऋषिभिः उपासिता, साधुभिः सेविता तथा विद्वद्भिः संरक्षिता वर्तते। अनेके विद्वांसः अस्याः भाषायाः प्रचारप्रसाराय च प्रयत्नं कृतवन्तः। तेषु विद्वत्सु आचार्यः वाचस्पतिः उपाध्यायः अन्यतमः। संस्कृतक्षेत्रे अपरैकः महावृक्षः अयं महानुभावः। आचार्यः वाचस्पतिः उपाध्यायः बहुकालपर्यन्तं संस्कृतमातुः सेवां कृतवान्। वाचस्पत्युपाध्याय-महोदयः द्रष्टुं यथा सुन्दरः तस्य शास्त्रपाण्डित्यमपि तथैव प्रतिभामयम् आसीत्। व्याकरण-दर्शन-साहित्य-धर्मशास्त्रप्रभृतिषु विविध संस्कृतशास्त्रेषु उपाध्याय-महोदयस्य अनन्या गतिः आसीत्। विशेषतया मीमांसाशास्त्रे अस्य पाण्डित्यं प्रखरमेव। न तु केवलं शास्त्रे अपि च प्रशासनकर्मणि अयं विचक्षणप्रतिभा-सम्पन्नः कुशलशिक्षाप्रशासकश्चासीत् । अतः भारतवर्षस्य राजधान्यां नवदेहल्यां अवस्थापितस्य लब्धप्रतिष्ठितस्य श्रीलालबहादुरशास्त्रीराष्ट्रीयसंस्कृत-विद्यापीठस्य कुलपतिरूपेण प्रायः विंशतिः वर्षाणि प्रशासनकार्यं ससम्मानं निरूढवान् उपाध्यायमहोदयः।

**वाचस्पत्युपाध्यायमहोदयस्य बाल्यजीवनम् –**

आचार्यः वाचस्पत्युपाध्यायः उत्तरप्रदेशे सुलतानपुरजनपदे झुआरा इत्यस्मिन् ग्रामे जन्म लब्धवान्। गोमतीनद्याः पवित्रे कूले जन्म लब्ध्वा उपाध्यायवर्यः आत्मानं पवित्रीकृतवान्। शुक्लयजुर्वेदस्य माध्यन्दिनशाखायां भरद्वाजगोत्रे एकस्मिन् ब्राह्मणकूले अस्य जन्म। कूलभूषणरूपेण अयं नित्यसन्ध्यावन्दनादिकार्यं कृत्वा आत्मानं देवकार्येषु नियोजितवान्। उपाध्यायमहोदयस्य पूर्वजाः विविध शास्त्रेषु पण्डिताः आसन्। अस्य पूर्वजाः एव

झुआरा ग्रामस्य स्थापनं कृतवन्तः यत्र वाचस्पतिमहोदयः जन्म अलभत। प्रयागदत्तोपाध्याय इति नाम्ना उपाध्यायवर्यस्य पितुः प्रपिता आसीत्, यः तदानीन्तन समयस्य महान् शास्त्रवेत्तारुपेण गण्यो भवति। प्रयागदत्तोपाध्यायः त्रयाणां पुत्ररत्नानां जनकः आसीत्। तेषु ज्येष्ठो भवति सीतारामोपाध्यायः, मध्यमः नागेश्वरोपाध्यायः कनिष्ठश्च अच्युतानन्दोपाध्यायः। एते त्रयः स्वसंस्कारवलेन सुलतानपुरजनपेदे बहुमान्या आसान्। एतेषु तृतीयस्य नागेश्वरोपाध्यायवर्यस्य पुत्रः रमाकान्तोपाध्यायः वेदे व्याकरणे तथा कर्मकाण्डे लब्धप्रतिष्ठितो विद्वान् आसीत्। अयमेव रमाकान्तोपाध्यायः वाचस्पत्युपाध्यायमहोदयस्य पिता आसीत् । तपेश्वरी देवी उपाध्यायमहाभागस्य माता। माता तपेश्वरी देवी स्वनाम्नः सार्थकं कृत्वा आजीवनं तपोमयजीवनमेव आचरितवती। वाचस्पत्युपाध्यायस्य पत्नी शारदाउपाध्यायः। पुत्र लोकेशः तथा पुत्री सुजाता।

**वाचस्पत्युपाध्यायमहोदयस्य अध्ययनकालः –**

वाचस्पत्युपाध्यायस्य जीवने स्वपितुः रमाकान्तोपाध्यायस्य प्रभावः विशेषतया परिलक्षते। पिता रमाकान्तोपाध्यायः महान् शिवभक्तः आसीत्। परन्तु कालान्तरे कोलकतानगरं गत्वा आर्यसमाजस्य साधुभिः सह सत्सङ्गप्रभावात् स्वामिनः दयानन्दसरस्वतीवर्यस्य मार्गमन्विष्टवान् रमाकान्तोपाध्यायः । शरीरे एव भगवान् तिष्ठति न तु पाषाणे इति दार्शनिकं मतं श्रुत्वा अयं प्रभावितो जातः। अतः तदारभ्य आर्यसमाजस्य प्रचारकत्वेन अयं वहु प्रसिद्धिं प्राप्तवान्। वेदाः सकलशास्त्राणाम् आधारस्वरूपाः इति सम्यग् ज्ञातवान् आसीत् रमाकान्तोपाध्यायः। अतः स्वपुत्रं वाचस्पतिमपि वेदाध्ययनाय प्रचोदितवान् । वाल्यकालादेव वाचस्पत्युपाध्यायः कोलकतायां स्वपितुः सन्निधे आसीत्। पिता एव वाचस्पत्युपाध्ययवर्यस्य आद्य गुरुः। पितृसन्निधौ विविधशास्त्राणाम् अध्ययनं कृत्वा बाल्यकालादेव शास्त्रपाण्डित्यं प्राप्तवान् आसीत् बालकः वाचस्पतिः। स्वयं वाचस्पत्युपाध्यायमहोदयः स्वमीमांसादर्शनविमर्शग्रन्थस्य प्रारम्भे पितुः मातुश्च स्मरणं कृत्वा प्रमाणयति यद् पिता एव तस्य सर्वविधविकाशाय कारणभूतः। अतः काव्यकुसुमसमर्पणपूर्वकं कविवाचस्पतिः अलिखत् –

विद्वन्मान्यतमं वदान्यचरितं शास्त्राब्धिपारङ्गतं
कान्तं भव्यगुणैः कवीश्वर 'रमाकान्तं' स्वतातं मुदा।

नत्वाम्बाञ्च 'तपेश्वरी' कृतिमिमां श्रद्धानतो बालक –

तद्हस्ताब्जयुगेऽर्पयत्यभिनवां वाचस्पतिः सादरम्॥
*मीमांसादर्शनविमर्शः* – समर्पणम्

इतः ज्ञायते लेखकस्य पिता रमाकान्तोपाध्यायः न केवलं शास्त्रवेत्ता अपि च महाकविः आसीत्। रमाकान्तोपाध्यायेन प्रणीतं श्रीदयानन्दचरित-महाकाव्यं तस्य काव्यप्रतिभायाः अन्यदेकं प्रमाणं वर्तते। वाचस्पतिमहाभागस्य कनिष्ठपिता उमाकान्तोपाध्यायः अपि महान् विद्वान् आसीत्। पिता कनिष्ठपिता चोभौ वाचस्पत्युपाध्यं विविधविषयेषु मार्गदर्शनं कृतवन्तौ।

1958 तमे संवत्सरे कोलकतायाः सर्वकारीय संस्कृतकलाशालायां (Government Sanskrit College) संस्कृतं सम्मानितविषयरूपेण स्वीकृत्य बि.ए (B.A, Hons.) Sanskrit) कक्षायां प्रविष्टवान् वाचस्पतिमहोदयः। तदानीं कलाशालायाः अध्यक्षरुपेण प्रसिद्धाः विद्वांसः गौरीशङ्करशास्त्रीपादाः सेवां कृतवन्तः। एतेषाम् पार्श्वे शास्त्राणि सम्यग् अधीत्य प्रेसिडेन्सी कलाशालायां ये विद्वासः आसन् तेषां पार्श्वे अपि अध्ययनं कृतवान् वाचस्पतिमहोदयः। प्रेसिडेन्सीकलाशालायाः ताराप्रसादमुखार्जी, अमलभट्टाचार्यः तथा सुबोधचन्द्र-सेनगुप्तप्रभृतयः विद्वांसः वाचस्पत्युपाध्यायं स्नेहेन पाठितवन्तः। छात्रस्यास्य विद्वत्तां श्रद्धां सम्मानं च दृष्ट्वा सर्वेऽपि अध्यापकाः तदुपरि दत्तचित्ताः आसन्। कोलकताविश्वविद्यालये 1962 तमे संबत्सरे संस्कृते एम्. ए (M.A in Sanskrit) इत्युपाधिं लब्ध्वा तस्मिन् एव विश्वविद्यालये पि.एच.डि उपाधिं प्राप्तवान् 1967 तमे संबत्सरे। एतदभ्यन्तरे वेद,व्याकरण,दर्शन,धर्मशास्त्र,पुराण तथा समसामयिकसमये संस्कृतविषयकं ज्ञानं सम्यग् प्राप्तवान् विभिन्नेभ्यः गुरुभ्यः। कालान्तरे वारणास्यां डि.लिट् इति उपाधिं संप्राप्य स्वविद्वतायाः विकाशं कृतवान् विद्यावाचस्पतिः वाचस्पतिः। अनेन क्रमेण सर्वदा पठनशीलः अयं

योगीवत् जीवनम् यापितवान्। उपाध्यायमहोदयः स्वजीवने वहुनां गुरुणां समीपे अध्ययनं कृतवान्। परन्तु स्वाभीष्टं शास्त्रं मीमांसाशास्त्रं महामहोपाध्यायानां पट्टाभिरामशास्त्रीणां सन्निधौ अधीतवान्। अतः स्वग्रन्थे गुरुं स्मृत्वा लिखति –

पट्टाभिरामो नयनाभिरामः
विनाशयन् यो जगतोऽन्धकारम्।
विभाति विद्यामणिदीपभासा
भद्राय तस्मै गुरवे नमोऽस्तु।।

*मीमांसादर्शनविमर्शः* – समर्पणम्

**छात्रवत्सल-अध्यापकरूपेण आचार्यः वाचस्पत्युपाध्यायः –**

आचार्यवाचस्पत्युपाध्यायस्य अध्यापनकर्मणि महती रुचिरासीत्। कोलकतायां पि.एच.डि उपाधिप्राप्तिसमनन्तरमेव वारणास्यां प्रतिष्ठिते सम्पूर्णानन्दसंस्कृतविश्वविद्यालये अध्यापकरूपेण उपाध्यायवर्यस्य नियुक्तिः अभवत्। तत्र 1967 तः 1970 संबत्सरं यावत् अध्यापकत्वेन सेवां कृत्वा तदनन्तरं देहल्लीविश्वविद्यालयस्य संस्कृतविभागे अध्यापकपदं प्राप्तवान्। तत्रैव देहल्लीविश्वविद्यालये 1980 तमे संबत्सरे आसोसिएट् प्रेफोसररुपेण तथा 1984 तमे संबत्सरे प्रेफेसररूपेण पदोन्नतिं सम्प्राप्य 1994 तमं संबत्सरपर्यन्तं निरवच्छिन्नतया च्छात्रान् अध्यापितवान्। तदनन्तरं विभिन्नविश्वविद्यालयेषु प्रशासकरूपेण कार्यं निरुढवान्। अस्य महोदयस्य मार्गदर्शने षष्ठिसंख्याकाः शोधच्छात्राः पि.एचडि उपाधिं सम्प्राप्य सम्प्रति देशे विदेशे च संस्कृतेवायै नियुक्ताः सन्ति। सप्ततिः संख्यकाः गवेषकाः एम्.फिल् उपाधिम् अस्य महाभागस्य अधीने संप्राप्ता इति अपरः कश्चन वैशिष्ट्यविशेषः। अध्यापनकर्मणि व्यापृते सति अयं महोदयः विविध राष्ट्रीयान्तराष्ट्रीयचर्च्चासत्रेषु भागं गृहीतवान्।

**कुशलप्रशासकत्वेन आचार्यः वाचस्पत्युपाध्यायः -**

आचार्यः वाचस्पत्युपाध्यायः 1994 तमे संबत्सरे नवेम्बरमासस्य चतुर्दशे दिनाङ्के नवदेहलीस्थिते श्रीलालबहादुरशास्त्रीराष्ट्रीयसंस्कृतविद्यापीठे

कुलपतिरूपेण नियुक्तिं प्राप्तवान्। अस्य विद्यापीठस्य सर्वतोमुखविकाशाय वाचस्पत्युपाध्यायः निरन्तरं प्रयत्नरतः आसीत्। अनुष्ठानस्य शैक्षिकविकाशः तथा पारिपार्श्विकविकाशः कथं समुन्नतरूपेण भवेत् तदर्थम् चिन्तनशीलः आसीत्। न तु केवलं विकाशः अपि च च्छात्र-अध्यापक तथा शिक्षणेतर-कर्मचारिषु शृङ्खलायाः निबन्धनं सम्यक् विचारितवान् उपाध्यायमहाभागः। अस्य महाभागस्य साधनया एव विद्यापीठमिदं कालान्तरे केन्द्रीयसंस्कृत-विश्वविद्यालयत्वेन भारतसर्वकारेण स्वीकृतमस्ति।अयमेव विश्वविद्यालयः उपाध्यायवर्यस्य साधनाक्षेत्रमासीत्। अत्रत्यान् च्छात्रान् श्रद्धया परिपोषयति स्म कुलपतिरयम् । अतः अस्मिन् एव विद्यापीठे प्रायः विंशतिःवर्षाणि कुलपतिरुपेण सावां कृत्वा सेवाकाले एव परिसरेऽस्मिन् देहत्यागं कृतवान् अयं महोदयः। इतः ज्ञायते संस्कृतमातुः कृते वाचस्पत्युपाध्यायवर्यः कथं दत्तचित्तः आसीदिति।

वाचस्पत्युपाध्यायमहोदयस्य प्रशासनकौशलं कार्यदक्षता च तस्य युवावस्थायामेव परिदृष्टा आसीत्। अतः यदा सः सम्पूर्णानन्दसंस्कृत-विश्वविद्यालये अध्यापकरुपेण नियुक्तिं प्राप्तवान् तदा तस्यैव विश्वविद्यालयस्य कुलसचिवरुपेण परीक्षानियन्त्रकरूपेण च कार्यभारं स्वीकृतवान् आसीत्। एतन्मध्ये हरिद्वारस्थस्य गुरुकुलकाङ्गडिविश्वविद्यालयस्य उपकुलपतिरुपेणापि कार्यं कृतवान्। परन्तु शैक्षिक तथा अनुसन्धानकार्येषु अत्यधिकरुचिरासीदीति हेतोः अयं शैक्षिककार्ये एव विशेषरुपेण मनोनिवेशं कृतवान्।

विधेः निर्देशानुसारं कालान्तरे प्रशासनमेव तस्य जीवनमभवत्। अतः उज्जयिनीस्थस्य सान्दिपनीराष्ट्रीयवेदविद्याप्रतिष्ठानस्य सचिवरुपेण, राष्ट्रीय-संस्कृतसंस्थानस्य निदेशकरुपेण, भारतीय विश्वविद्यालयसंघस्य अध्यक्षरूपेण च भिन्नभिन्न समयेषु कार्यभारं निरूढवान् उपाध्यायमहोदयः। एतेन सह देशे विदेशे च विविध विश्वविद्यालयेषु तथा अनुष्ठानेषु निर्णायकसमितिसदस्यरुपेण स्वप्रशासनपाटवतां प्रदर्शितवान्। शिमलास्थितस्य भारतीयविशेषाध्ययनकेन्द्रः (Indian Institute of Advanced Studies) इति सुप्रसिद्धानुष्ठानस्य सदस्यरुपेण भारतसर्वकारपक्षतः नियुक्तिं प्रप्तवान् आसीत् इति अपरैकः विशेषविषयः।

**लेखक तथा संपादककार्येषु आचार्यः वाचस्पत्युपाध्यायः –**

वाचस्पत्युपाध्यायवर्यः उत्तमः ग्रन्थलेखकरुपेण विद्वत्समाजे सम्मानितो वर्तते। मीमांसाशास्त्रे अस्य पाण्डित्यं विद्वज्जनादृतमस्ति। मीमांसाशास्त्रमधीकृत्य उपाध्यायवर्यस्य द्वौ ग्रन्थौ प्रसिद्धौ । यथा – मीमांसादर्शनविमर्शः तथा शेश्वरमीमांसा चेति । एवमेव अनेन विरचितः धर्मशास्त्रसंग्रहः इतैकः ग्रन्थः सुप्रसिद्धो वर्तते। तत्र विशेषतया पाठकैः आदृतत्वात् मीमांसादर्शनविमर्शग्रन्थस्य वहुल प्रचारः जायते।मीमांसाशास्त्रस्य लोकोपकारितां वर्णयित्वा ग्रन्थलेखकः लिखति – 'मीमांसा' पदं पूज्यविचारपरमिति श्रीमन्तो वाचस्पतिमिश्रा अभिवदन्ति। विचारे पूज्यत्वञ्च पक्षपातरहितत्वमेव विषयं संशयं पूर्वपक्षं तद् युक्तीः, उत्तरपक्षं तद् युक्तीः, प्रयोजनञ्च प्रतिपाद्य याथातथ्येन विदवाक्यार्थनिर्णयाय प्रवृत्तमिदं शास्त्रम्। अतएवेदं वाक्यशास्त्रमित्यपि प्रथते। 'तस्यनिमित्तपरीष्टिः' इति सूत्रयन् भगवान् जैमिनिः परीक्षाशास्त्रम् इत्यप्यवद्योतयति। परीक्षा च पक्षपातरहितैव भवतीति सर्वसंविदितम्। 'मीमांसाख्या तु विद्येयं बहुविद्यान्तराश्रिता' इति कथयन् भट्टपादशास्त्रस्यास्य महत्त्वं प्रतिपादयति। प्रमाणानां प्रमेयानाञ्च यथायथं स्वरूपं निरूपयितुं गौतमीयं काणादञ्च शास्त्रं प्रवृत्तम्। तत्प्रतिपादने न मीमांशाशास्त्रस्य व्यापारः, तथापि वेदवाक्यार्थनिर्णयाय नूतनः पन्था आश्रयणीय इति शबर-भट्टपादप्रभृतयस्तानि निरूपयाम्बभूवुः।

एवमेव न्याय-मीमांसकयोः मतं विचारपूर्वकं स्वग्रन्थे उल्लिखति उपाध्यायवर्यः –

परस्परं विरोधे तु वयं पञ्च शतञ्च ते।
अन्यैः सह विरोधे तु वयं पञ्चोत्तरं शतम्।। इति

ग्रन्थारम्भो शास्त्रीयरीत्या शास्त्रचर्च्चया एव अध्यायारम्भः जायते। यथा - "कस्याञ्चन परिषदि समवेतास्तपोनिष्ठा महर्षयः पूर्वजाः, जगत्युष्कृष्टतमं तत्त्वं निर्णेतुं प्रवृत्ताः। तत्र स्वस्वाभिमतं निरूपयितुं प्रवृतेषु नाम्ना राथीतरः

सत्यमुत्कृष्टतमं तत्त्वमिति प्रतिपादयामास। पौरुशिष्टिनामा महर्षिः तपः तदित्यब्रवीत्। मौद्गल्यस्तु स्वाध्यायप्रवचने एवेत्यभिप्रैति स्म। ”

एवं क्रमेण अत्यन्तं सावलीलया शैल्या एकैकं मतमालोचयन् कठिनमीमांसातत्त्वानां सरलरूपेण प्रकाशनं एतैः कृतमस्ति। ग्रन्थेऽस्मिन् सप्त परिच्छेदाः शोभन्ते। यत्र प्रथमे परिच्छेदे वेदस्वरूपविचारः, द्वितीये वेदपौरुषेयत्वविचारः, तृतीये प्रमाणलक्षणपरीक्षणम्, चतुर्थे मीमांसकसमतानि प्रमाणानि तद्विभागश्च, पञ्चमे ख्यातिनिरूपणम्, षष्ठे ज्ञानस्य प्रत्यक्षानुमेयत्वविमर्शः, सप्तमे परिच्छेदे प्रामाण्यस्य स्वतस्त्वपरतस्त्वविचारश्च वर्तते।

स्वरचितग्रन्थान् विहाय संपादकरुपेणापि अस्य नाम्ना दशाधिकाः ग्रन्थाः वर्त्तन्ते। एते ग्रन्था विविध भाषासु विरचिताः सन्ति। यथा – शतकत्रयम्, भारतीय संस्कृति के नये आयाम, ब्रह्मसिद्धिः, भोजप्रबन्धः, रामायण और भारतीयसंस्कृतिः, संस्कृतस्य भारतीयभाषासाहित्येषु अन्तःसम्बन्धविमर्शः, Sanskrit Studies in India तथा Sanskrit Studies in Abroad. एवमेव शोधप्रभा इति तदीय विश्वविद्यालयस्य शोधपत्रिकायाः संपादकरुपेण विविध गवेषणात्मकलेखानां प्रकाशनमनेन कृतं वर्तते।

**विविधपुरस्कारग्रहीता आचार्यः वाचस्पत्युध्यायः –**

स्वसारस्वतसाधनायाः कृते वाचस्पत्युपाध्यायमहोदयः वहुषु अनुष्ठानेषु पुरस्कृतो वर्तते। तत्रापि भारतस्य राष्ट्रपतिपुरस्कारः, बनारसहिन्दुविश्वविद्यालयस्य महामहोपाध्यायोपाधिः, उत्तराखण्डसंस्कृतविश्वविद्यालयस्य महामहोपाध्यायोपाधिः, कोलकतास्थितस्य सीतारामदाश ओम्-कारनाथसंस्कृतशिक्षासंसदपक्षतः महामहोपाध्यायः, हरिद्वारस्थस्य अवधेशानन्दगिरिणां करकमलात् विद्वत्भास्करसम्मानं, मेलकोटनगरस्य संस्कृतानुसन्धानकेन्द्र (Academy of Sanskrit Research) द्वारा ज्ञाननिधिसम्मानं, उत्तरप्रदेशसंस्कृतसंस्थानस्य विशिष्टसंस्कृतपुरस्कारसेवा,

पूर्वाञ्चलप्राच्यविद्याध्ययनसंस्थया विद्यालङ्कारनाम्ना पुरस्कारः (Life Time Achievement Award), महाराष्ट्रसर्वकारपक्षतः महाकविकालिदाससंस्कृत-साधनापुरस्कारः, नासिक् कैलासमठपक्षतः सरस्वतीपुरस्कारः तथा कुन्दकुन्द-भारतीपक्षतः एकलक्षरुप्यकै स्सह आचार्य-उमास्वामीपुरस्कारः प्रधानतया परिगण्यते।

**भिन्नभिन्न कार्यक्रमाणां सञ्चालकरूपेण आचार्यः वाचस्पत्युध्यायः** –

आचार्यः वाचस्पत्युपाध्यायः कुशलसंञ्चालकरूपेण विविध आन्तराष्ट्रीय तथा राष्ट्रीयकार्यक्रमाणां संचालनं कृतवान्। भारतसर्वकारस्य विविध परियोजनायाः विकाशाय अयं महोदयः वहुबारं भरतसर्वकारैः नियोजितः आसीत्। अस्माकं देशस्य अन्य देशैस्सह सुसम्पर्क स्थापनायै विविध सांस्कृतिक तथा भाषाभित्तिककार्यक्रमेषु उपाध्यायमहोदयः बहुवारं विदेशमपि गतवान्। तत्रापि विशेषतया जर्मनी, स्वीजरलेण्ड, नेपाल, इंलण्ड, मरिसस्, थाइलाण्ड, सिङ्गापुर, अष्ट्रेलिया तथा मालेसिया प्रभृति देशं भ्रमणं कृत्वा संस्कृतस्य महत्वं प्रभावीरुपेण प्रतिपादितवान् । विशेषतया उपाध्यायवर्यः प्रभावी वक्तारुपेण विद्वद्भिः परिचितः। संस्कृत, आङ्ग्ल, हिन्दी तथा वङ्गभाषायां महोदयस्यास्य शास्त्रीयभाषणं श्रोतान् सर्वथा आमोदयति स्म। विविध आन्तराष्ट्रीयसम्मेलनानाम् आयोजनं कृत्वा भारतस्य गौरवं वर्द्धितवान् अयम्। विश्वविद्यालयेषु भिन्नभिन्न कार्यक्रमाणाम् अतिथिरूपेण अस्य व्याख्यानं सर्वोत्कृष्टमासीत्।

**उपसंहारः -**

वस्तुतः आचार्यः वाचस्पत्युपाध्यायः देवपुरुषः आसीत्। एकाधारेण वहुनां गुणानाम् अधीकारी आसीत् अयं विद्वान्। संस्कारवान्, अध्ययनशीलः, संस्कृतिसम्पन्नः, भविष्यद्रष्टा, कुलभूषणः, दिव्यद्रष्टा, अध्यापने रुचिः, निरवच्छिन्नतया पूज्यपूजा प्रभृतयः गुणाः वाचस्पत्युपाध्यायमहोदयस्य जीवनं शृङ्खलितं कृतवन्तः। अन्यदेकं वैशिष्ट्यं यत् आचार्यः वाचस्पत्युपाध्यायः स्वजीवने वहुनां कृते उद्योगं दत्तवान्। अतः अन्येषां जीवने सुखं दातुं तस्य

वरदहस्तः वहु उपयोगी आसीत्। स्वविश्वविद्यालये कुलपतिरूपेण तथा अन्यत्र चयनसमितेः अध्यक्षरुपेण सदस्यरुपेण च अयं महोदयः शताधिकानां जीवने आलोकस्य शिखां प्रदर्शतवान्। अतः सः जीवदशायां यथा सम्मानितः आसीत् मृत्योः अनन्तरमपि जनैः स्मर्यन्ते। द्वादशाधिकद्विसहस्रतमे संवत्सरे जुलाईमासस्य एकादशदिनाङ्के आचार्यः वाचस्पतिः उपाध्यायः शरीरं त्यक्त्वा स्वर्लोकं प्राप्तवान्। श्रीमद्गीतोक्तवचनानुसारम् –

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः।। *श्री.भ.गी* – 2.23

एतदनुगुणं यद्यपि वाचस्पत्युपाध्यायमहोदयः सर्वं सांसारिकं बन्धनं परित्याज्य भगवतः धाम्नि स्वस्थानं प्राप्तवान् तथापि अयं महोदयः संस्कृतस्य कृते यत् कार्यं सम्पादितवान् तत् सर्वथा संस्मरणीयं वर्तते।

## सहायकग्रन्थपञ्जी

*श्रीमद्भगवद्गीता* – गीताप्रेस् - गोरखपुरम्

*वाचस्पतिवैभवम्* – लोकेशोपाध्यायः – डि.के.प्रिण्टवार्ल्ड – श्रीकुञ्ज, वालिनगर - नवदेहल्ली

*मीमांसादर्शनविमर्शः* – वाचस्पति उपाध्यायः - भारतीयविद्याप्रकाशनम् - नवदेहल्ली

*धर्मशास्त्रसंग्रहः* - वाचस्पति उपाध्यायः - भारतीयविद्याप्रकाशनम् - नवदेहल्ली

# Name of Contributors


**Taranath Tarkavachaspati**

**Dr. Sudip Mandal**

HoD, Dept. of Sanskrit,

University of North Bengal

Email Id. – sudiprkmvu@gmail.com

**Ishwar Chandra Vidyasagar**

**Shankar Mondal**

Ph.D. Scholar

Ramakrishna Mission Vidyamandira

Belur Math, West Bengal

Email. Id. – sankarmondal109@gmail.com

**Bapudev Shastri**

**Vivekananda lakshman**

Ph.D. Scholar

National Sanskrit University, Tirupati

Email Id. – lakshmanvivekananda@gmail.com

**Dayananda Saraswati**

**Dr. Dilip Panda**

Assistant Professor, Dept. of Sanskrit,

Hiralal Mazumdar Memorial College,

Dakshineshwar, West Bengal.

Email Id. – dlpkmrpanda@gmail.com

**Ishwar Kaul**

**Professor Satyabhama Razdan (D.Litt.)**

Former HoD of Sanskrit Dept.

&
Ex. Dean, Faculty of oriental learning,
University of Kashmir
Email Id. – srazdankaul1000@gmail.com

### Ramgopal Bhandarkar

**Supriya Goswami**
Ph.D. Scholar
National Sanskrit University, Tirupati
Email Id. – sgoswami2804@gmail.com

### Satyabrata Shamashrami

**Dr. Kalyan Panda**
Assistant Professor,
A B N Seal college,
Cooch Behar, West Bengal
Email Id. - kpandacu1986@gmail.com

### Anandaram Barua

**Dr. Sanjay Bhattacharya**
Ex. Research Scholar
University of Gour Banga
Malda, West Bengal
Email Id. – sanjoybhattacharyya5@gmail.com

### Sudharkar Dwivedi

**Dr. Madhusudan Mishra**
Dept. of Jyotish,
Sampurnanand Sanskrit University, Varanasi
Email Id. – msmishraastrobhu@gmail.com

**Baman Shivram Apte**

**Madhumita Ghosh**
Guest Teacher in School
Hooghly, West Bengal
Email Id. – madhumita89.mg@gmail.com

**Ambikadatta Vyas**

**Dr. Sanjay Kumar**
Assistant Professor, Dept. of Sanskrit,
Dr. Harisingh Gour University,
Sagar, Madhya Pradesh
Email Id. – drkumarsanjaybhu@gmail.com

**Ganapati Shastri**

**Rajesh Adhikari**
Research Scholar (M.Phil.),
Ramakrishna Mission Vivekananda
Educational and Research Institute,
Belur Math, West Bengal.
Email Id. – mail.adhikarirajesh@gmail.com

**Swami Vivekananda**

**Somnath Saha**
Ex. Research Scholar (M.Phil.)
Ramakrishna Mission Vidyamandira,
Belur Math, West Bengal
Email Id. – sahasom1993@gmail.com

**Madhusudan Ojha**

**Dr. Praveen pandya**
Critic and Principal
Govt. SR Sec School,

Sanchore, Rajsthan
Email Id. - praveenpandya1979@gmai.com

## Yamuna Prasad Tripathi

**Ramakrishna Pandey 'Paramahans'**
Professor, Dept. of Dharmashastra
Ganganath Jha Campus, Central Sanskrit University
Prayagrag, Uttar Pradesh
Email Id. – paramhansrk@gmail.com

## Panchanan Tarkaratna

**Dr. Annadashankar Pahari**
Retd. Professor,
Midnapore, West Bengal
Emai Id. – a.s.pahari56@gmail.com

## Rishi Aurobindo

**Aneesh Raghavan**
Ph.D. Scholar
Pondicherry University, Pondicherry
Email Id. – dhauli@gmail.com

## Haridas Siddhantabagish

**Dr. Amal Kumar Bhattacharyya**
Retd. Professor, Dept. of Sanskrit,
K. N. College, Beharampur, West Bengal.
Email Id. – amalkumarbhattacharyya7@gmail.com

## P V Kane

**Dr. Santu Singha**
Assistant Professor, Dept. of Sanskrit,
Bankura University, West Bengal
Email Id. – santusingha03@gmail.com

## C. D. Dalal

**Dr. Sweta Prajapati**
Director (I/c), Oriental Institute
Baroda,
E-mail ID. sprajapati22@yahoo.com

## Kalipada Tarkacharya

**Dr. Subhrajit Sen**
Assistant Professor
Department of Sanskrit
University of Gour Banga
Malda; West Bengal
Email Id. – ssubhrasen@gmail.com

## Bhatt Mathurath Shastri

**Dr. Saroj Kaushal**
Professor, Department of Sanskrit
&
Director, Pandit Madhusudan Ojha Research Cell
Jaya Narayan Vyas University, Jodhpur, Rajasthan
Email Id. – saroj.kaushal64@gmail.com

## Kshama Rao

**Mithu Biswas**
Assistant Professor, Department of Sanskrit,
Balurghat University, Balurghat, West Bengal
Email Id. – biswasuhtim@gmail.com

## Sukhdev Shastri

**Professor Sushma Devi Gupta**
HOD, Department of Sanskrit,
University of Jammu, Jammu
Email Id. – sushmadevigupta@gmail.com

**Charudev Shastri**

**Radhavallabh tripathi**
Former Vice Chancellor,
Rashtriya Sanskrit Sansthan, New Delhi.
Former Professor of Sanskrit,
Dr. Harisingh Gour University, Sagar.
Formerly Scholar on Karnatak Chair of Orientology,
Bhandarkar Oriental Research Institute)
Email Id. – radhavallabh2002@gmail.com

**Kshitish Chatterjee**

**Professor Pradyot Kumar Datta**
Retd. Prof., Department of Sanskrit,
Jadavpur University, West Brngal
Email Id. – kumardatta2013@gmail.com

**Yatirajacahrya**

**Tapan Kumar Das**
Research Scholar, Department of Sanskrit,
Pali and Prakrit, Visva Bharati,
Santiniketan, West Bengal
Email Id. – tapankumardas533@gmail.com

**Ananta Tripathi Sharma**

**Sourav Pal**
Research Scholar, Department of Sanskrit,
Pali and Prakrit, Visva Bharati,
Santiniketan, West Bengal
Email Id. – souravpal257@gmail.com

**Pattabhiram Shastri**

**Dr. Pradip Kumar Mahapatra**

Assistant Professor,
Dept. of Sanskrit,
Raja Peary Mohan College,
Uttarpara. Hooghly, West Bengal
Email-mahapatrapk1989@gmail.com

## R.N. Dandekar

**Dr. Chirashree Mukherjee (Bandyopadhyay).**
Asst. Professor (Dept. of Sanskrit)
Ramananda College (Bankura University),
Bishnupur, Bankura, West Bengal
Email: Chirashree.B@gmail.com

## Narayan N. Pillai

**Lt. Lisha C R**
Assistant Professor, Dept. of Sanskrit General,
Sree Sankaracharya University of Sanskrit,
Kalady, Kerala,
E-Mail: crlisha@ssus.ac.in

## J. B. Choudhury

**Dr. Tanmay Bhattacharya**
Assistant Professor (Senior Grade)
The Sanskrit College and University,
Kolkata, West Bengal
Email Id. – tanmaykumar2015@gmail.com

## N. Ranganathan

**Dr. Udayana Hegde**
Assistant Professor, Department of Vyakarana,
Central Sanskrit University, Tirupari.
Email Id. - udayanahegde@gmail.com

## Anantalal Thakur

**Ujjval Sardar**
Assistant Professor, Deshbandhu Mahavidyalaya
Chittaranjan, West Bengal
Email Id. - ujjwalsardar88@gmail.com

## Vishwabandhu Nyayacharya

**Professor Mrinalkanti Gangopadhyay**
Asutosh Chair Professor, Department of Sanskrit,
University of Calcutta, West Bengal
Email Id: sargan19@gmail.com

## Durgadutta Shastri

**Dr. Manjusha Channe Themdeo**
Assistant Professor, Department of Sahitya,
Central Sanskrit University, Ekalavya Campus,
Agartala, Tripura,
Email Id: manjushasanskrit@gmail.com

## Dr. K.V. Sharma

**Sreevidya G.**
Assistant Professor of Sanskrit General,
Sree Sankaracharya University of Sanskrit, Kalady
Email Id. - sreevidyag@ssus.ac.in

## Ramprasad Tripathi

**Dr. Ramakant Pandey**
Professor in Sahitya,
Central Sanskrit University
Jaipur Campus, Jaipur, Rajasthan
Email Id. - ramakantpandey2010@gmail.com

## Kunjaniraj

**Dr.Athira Jathavedan**
Assistant Professor, Dept. of Sanskrit General
Sree Sankaracharya University of Sanskrit,
Kalady, Kerala
Email Id. – athira@ssus.ac.in

## Raghavan Tirumalpad

**Dr. K. Murali**
Professor of Kayachikitsa &
Medical Superintendent (Rtd.)
Rajavihar, Kerala
Email Id. - muralisudha1993@gmail.com

## Prof. S. A. Dange

**Dr. Madhavi Narsalay**
Assistant Professor,
Dept. of Sanskrit, University of Mumbai,
Email Id. - madhavinarsalay@yahoo.com

## Mm. Ramanuja Tatacharya

**Samir Saha**
Ph.D. Scholar
National Sanskrit University, Tirupati
Email Id. - samskritsahasamir@gmail.com

## Ramaranjan Mukherjee

**Dr. Sukanya Bhattacharyya**
Assistant Professor, Department of Sanskrit
Dumdum Motijheel College, Kolkata
Email Id. - bsukanya213@gmail.com

**Satya Vrat Shastri**

**S. Ranganath**
Member Sanskrit Advisory Board,
Sahitya Academy, Delhi
Email Id. - ranganath.sampatoor@gmail.com

**Vishvesha Teertha Svamiji**

**Veeranarayana N. K. Pandurangi**
Registrar, (I/c), Dean, Vedanta Faculty,
Karnataka, Sanskrit University, Bengaluru
Email Id. – veerankp@gmail.com

**Tapasvi Nandi**

**Dr. Preeti R. Pujara**
Dept. of Sanskrit, DCM Arts & Commerce College,
Viramgam, Ahmedabad
Email Id. - Preetirpujara@gmail.com

**K. C. Acharya**

**Dr. Paramba Shree Yogamaya**
Assistant Professor,
P. G. Teaching Department of Veda,
Shri Jagannath Sanskrit University,
Puri, Orisha,
Email Id. - parambasam@gmail.com

**Mukunda Madhav Sharma**

**Shrutidhara Chakravarty**
Professor, Dept. of Sanskrit,
Gauhati University,
Guwahati, Assam,
Email Id. – shrutidhara@gauhati.ac.in

### Revaprasad Dwivedi

**Jhantu Das**
Ph.D. Scholar of Sanskrit Department,
Raiganj University, Raiganj, West Bengal
Email Id. - jhantudas231291@gmail.com

### Harirama Acharya

**Dr. Bhavana Acharya**
Associate Professor, Dept. of Sanskrit
Government Meera Girls' College, Udaipur, Rajasthan
Email Id. – acharya.bhavana@yahoo.in

### S. Sundar Rajan

**Dr. Narayan Dash**
Assistant Professor, Department of Sanskrit,
Ramakrishna Mission Residential College,
Narendrapur, West Bengal
Email Id. - dashnarayana72@gmail.com

### Veerbhadra

**Dr. Maharjdeen Pandeya 'Vibhasa'**
Associate Professor, Dept. of Sanskrit,
Acharya Narendra Dev Post Graduate College,
Gonda, U.P.
Email Id. - mdvibhash1956@gmail.com

### Bachaspati Upadhyay

**Dr. Bharat Bhushan Rath**
Assistant Professor, Dept. of Sahitya,
Central Sanskrit University, Tirupati
Email Id. - paramatmabharat@gmail.com